श्री :

उभय वेदान्त ग्रन्थमाला

---

कवितार्किकसिंह–सर्वतन्त्रस्वतन्त्र–

श्रीमद्वेंकटनाथार्य–श्रीमद्वेदान्तदेशिक–

विरचिता

# न्यायपरिशुद्धिः

परमहंसपरिव्राजक–

श्रीमद्रंगरामानुजमहादेशिक पदपद्म परिचरण–

प्रापित वेदार्थ अभिनवदेशिक श्रीवात्स्य–

वीरराघवाचार्य विरचितया न्यायतत्त्वप्रकाशिकया

परिष्कृता

# NYAYAPARISUDDHI

BY

**Sri Vedanta Desika**

*WITH A NEW COMMENTARY*

1978

Price: Rs. 25

7, Nathamuni Street, T. Nagar, MADRAS-600 017.

श्री :

उभय वेदान्त ग्रन्थमाला

---

कवितार्किकसिंह–सर्वतन्त्रस्वतन्त्र–

श्रीमद्वेंकटनाथार्य–श्रीमद्वेदान्तदेशिक–

विरचिता

# न्यायपरिशुद्धिः

परमहंसपरिव्राजक–

श्रीमद्रंगरामानुजमहादेशिक पदपद्म परिचरण–

प्रापित वेदार्थ अभिनवदेशिक श्रीवात्स्य–

वीरराघवाचार्य विरचितया न्यायतत्त्वप्रकाशिकया

परिष्कृता

# NYAYAPARISUDDHI

BY

**Sri Vedanta Desika**

*WITH A NEW COMMENTARY*

1978 Price: Rs. 25

7, Nathamuni Street, T. Nagar, MADRAS-600 017.

श्रीः

# न्यायपरिशुद्धिभूमिका

न्यायविस्तर इति प्रथां गते न्यायदर्शन उदीरितं बहु ।
शोधयन् स निगमान्तदेशिको वैदिकांगगतिमप्यशिक्षयत् ॥

प्रमाणप्रकाण्डानां चतुर्णां वेदानां परमोपकारकतया परिगणितेषु दशसु विद्यास्थानेषु न्यायविस्तराख्यमेकमिति निश्चप्रचम् । तत्र वर्णमधिकृत्य प्रवर्तते शिक्षा; वर्णसमुदायविशेषरूपं पदं व्याकरणम् ; पदसमुदायसंहिताविशेषं छन्दः ; पदार्थं निरुक्तम् ; कर्मोपयोगिपदार्थविशेषं कालं ज्यौतिषम् ; वाक्यार्थभूतकर्मप्रयोगं कल्पः, वैदिकमर्वर्णाश्रमधर्मं धर्मशास्त्रम्, तत्त्वप्राधान्येन वेदार्थं पुराणम्, वेदवाक्यार्थनिर्णयकारिमीमांसोपयोगितर्कप्रयोगरीतिशिक्षणाय अनुमानादिप्रमाणनिरूपणं न्यायविस्तर इति सर्वसंमतम् । "छन्दः पादौ शब्दशास्त्रञ्च वक्त्रं कल्पः पाणी ज्यौतिषं चक्षुषी च । शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं वेदस्याङ्गान्याहुरेतानि षट् च" इति षण्णां वेदरूपावयविनोऽवयवरूपांगतामप्याहुः । एवं सपरिकरवेदार्थतत्त्वनिर्णयविषयायाः विंशतिलक्षण्या मीमांसायाः अपेक्षितप्रमाणतत्त्वशिक्षणात् न्यायविस्तरः सपरिकरवेदोपकारकः इति सर्वव्यापनात्, 'प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् आश्रयः सर्वधर्माणामिति प्रशस्यते । वेदांगभूतेन चानेन वेदसंमतप्रमाणप्रमेयप्रदर्शिना तत्स्थापकतर्कप्रतिपादकेन च भाव्यम् । साम्प्रतं सर्वपरिगृहीतं न्यायदर्शनं यदि तथा स्यात्, अंगभूतन्यायविस्तरोऽयमेवेति निर्विवादं सर्वैः समान्येत ॥ कथं नु तर्कपादे भगवता बादरायणेन प्रत्याख्यातेषु दर्शनेष्वन्यतमस्यास्य मीमांसाशास्त्रापेक्षिततर्कममर्पकता वेदोपकारकता चेति चेत्—तत्र महद्दीर्घाधिकरणे वैशेषिकदर्शनमेव सामग्र्येण सूत्रैरखण्डि । न्यायदर्शनप्रस्तावश्च न लक्ष्यते न्यायदर्शने नूनं काणादप्रमेयगत्यनुवर्तनदर्शनात् आक्षपादमपि तत्र भाष्यकारा एव सर्वे खण्ड्यत्वेन गणयन्तीति सुवचम् । इदमेवात्र शोधयेम, यदीदं न्यायदर्शनं वैदिकपथाविभ्रष्टतया समर्थ्येत, तदैवाखण्ड्यं स्यात् । अन्यथा पुनरनादरणीयमेवेति ।

तत्रायं सर्वतन्त्रस्वतन्त्रस्तार्किककेसरी निगमान्तदेशिकः एतदर्थे न्यायपरिशुद्धिं प्रारभ्य प्रथममेव गौतमसूत्राणां कात्स्न्र्येन बहिष्कारः, कात्स्न्र्येन परिग्रहः, अंशत उभयमिति पक्षत्रयं प्रतिपादयामास । सर्वेष्वपि दर्शनेषु मूलभूतसूत्राणां प्रामाणिकार्थाविरोधाय तत्रतत्रान्यथानयनं भाष्यवार्तिकादिव्याख्याकाराणामिष्टमेव लक्ष्यते इति अत्रापि तथा करणे परिग्राह्यता भवितुमर्हतीति विभाव्य नानासूत्रनिर्वाहरीतिमपि न्यदर्शयत् । कीदृशत्वे न्यायदर्शनं सामग्र्येण परिग्राह्यं स्यादिति प्रश्ने वेदसंमतप्रमाणप्रमेयाविरोधेन प्रवृत्तत्वे इति समाधिरिष्टः । एवमविरोधेन न्यायविस्तरस्याऽऽकारः परिकल्पनीयः इति विशदयितुं तथाविधमाकारं दिदर्शयिषुरिमां न्यायपरिशुद्धिं निबबन्ध । एतावन्ति प्रमाणानि श्रुत्यनुरोधाय परिगणनीयानि, न न्यूनाधिकानि, प्रमेयाण्येतावद्विधमिति ग्रन्थेऽस्मिन्नुपपाद्यते । तत्राऽऽदौ प्रमाण-

सामान्यं प्रस्तुत्य प्रत्यक्ष-अनुमान-शब्दरूपप्रमाणत्रयनिरूपणायाध्यायत्रयं, शिष्टस्मृतिरूपप्रमितिनिरूपणाय चतुर्थं प्रमेयसंग्रहाय पञ्चमञ्चाध्यायमकल्पयत् । तत्र न्यायपदार्थस्य प्रतिज्ञाहेत्वादिसमुदायरूपतया अनुमानविषयत्वात् अवयव-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानामनुमानभागे निरूपणं प्राप्तम् । प्रत्यक्षप्रमाणस्य तदुपजीव्यतया प्रथमं निरूप्यता । गौतमर्षिप्रथमसूत्रोक्तषोडशपदार्थेष्वन्तर्गतानां संशयप्रयोजनदृष्टान्तसिद्धान्तानां यथायथं तत्रतत्र निरूपणं संभवतीति तेषामपि परिगणनं नैच्छत् । स्वाभिमतरीत्या प्रयोजनदृष्टान्तयोः पृथगुपन्यासयोग्यताऽपि नास्तीति तत्रोदास । सर्वनिरूपणोपयोगितया सूत्रनिर्माणस्य दिक्प्रदर्शनमप्यादावकार्षीत् । तदत्र गौतमदर्शनबहिष्काराबहिष्कारविचारानन्तरं शास्त्रस्यानुबन्धिचतुष्टयमुपन्यस्य सामान्यतः प्रमाणाप्रमाणव्यवस्थां विधाय प्रमालक्षणं निरुच्य तच्छेषतया ख्यातिवादान् प्रस्तुत्य अख्यात्यन्यथाख्यातिपरिशेषणेन प्रथमाह्निकं समाप्य, द्वितीयमारभमाणः पूर्वाह्निकावसानोक्तायथार्थज्ञानावान्तरभेदं संशयं विपर्ययञ्च प्रपञ्चेन निरूप्य, प्रत्यक्षं लक्षयन् कार्याकार्य-निर्विकल्पकसविकल्पकभेदान् योगिप्रत्यक्षसत्तां वेदान्तिमते मानसप्रत्यक्षविशेषस्याभावञ्च विशदयामास ।

प्रत्यध्यायमाह्निकद्वयमिति विभागः अनुमानाध्यायं विना । तत्र निरूपणीयांशाधिक्यात् मुख्यामुख्यभेदेन आह्निकचतुष्टयमकल्पि । तत्र प्रथमे अनुमानप्रामाण्यं चार्वाकमतनिरसनेन तस्यातिरेकः, व्याप्तिनिष्कर्षः तद्ग्रहोपायः, उपाधितत्त्वम्, केवलान्वय्यन्वयव्यतिरेकिभेदेन हेतुद्वैविध्यं केवलव्यतिरेक्यसंभवः सामान्यतो दृष्टादिभेद इत्यादयोऽर्था विशदं व्युदपादिषत ।

अनुमानाध्याये द्वितीय आह्निके न्यायनिरूपणम् । परार्थानुमानरूपतार्किकविभागासामञ्जस्याभिधानानन्तरं न्यायस्य पञ्चावयवत्वादि विचार्य, परस्परप्रतिबोधनार्थे न्यायद्वये एकविषयके प्रसक्ते वादजल्पवितण्डारूपकथात्रयमिति विशिष्य कथाङ्गानि कथाप्रयोगरीतिञ्च प्रदर्श्य तत्र निग्रहस्थानानामवकाशमदर्शयत् । गौतमेन हेत्वाभास-च्छल-जाति-निग्रहस्थानानि पृथक् परिगणितानि । अत्र तु तद्व्याख्यानगतीः उदयनाचार्यकृतन्यायपरिशिष्टाख्यग्रन्थपर्यन्तानिरीक्षणेन परिशील्य निग्रहस्थानावान्तरभेदान् एकोनविंशतिमत्रैवाह्निके परिष्कृत्य प्रादर्शयत् । तत्रापसिद्धान्तरूपनिग्रहस्थाननिरूपणावसरे प्रसंगात् सिद्धान्तशब्दार्थ-तदवान्तरभेदांश्च दर्शयन् तस्य पृथक्परिगणनमुपैक्षिष्ट ।

अवशिष्यते निग्रहस्थानद्वयम्—निरनुयोज्यानुयोगः प्रमाणाभासश्चेति । तत्र निरनुयोज्यानुयोगं चतुर्धा विभज्य छलजात्योरत्रैवाऽन्तर्भाव इति तन्निरूपणमत्रैवाद्रियत । जातिलक्षणविचारः जातिविभागेषु समशब्दप्रयोगौचित्यमित्यादिविमर्शोऽत्राधिकः । जातेश्चतुर्विंशतिधा विभक्ता न्यायदर्शने । चतुर्दशधा विभागः सिद्धान्त्येकदेशदर्शितः एवमपि जातीनामानन्त्यं सर्वसंमतम् । सामान्येन जातेर्द्वैधा विभागः स्वयमदर्शि । जातिदूषणप्रसक्ति-तदुद्धारप्रकारौ चात्र विशदमदर्शिषाताम् । एवमाह्निकद्वयेन कृतः निग्रहस्थानानां जातीनाञ्च प्रपञ्चः अद्यत्वेऽस्य ग्रन्थोपयोगाभावेऽपि अन्येषामनेकेषामर्थानामिव विमर्शकबुद्धिवैशद्य

विधायितया समादरणीय एव भवेत। आचार्याणामेषां न्यायाचार्योदयनादितोऽतिशयितं शोधननैपुणमत्रातीव व्यक्तम्। गौतमेन हेत्वाभासः पृथगुक्तः। तुल्यनयात् प्रत्यक्षागमादिप्रमाणाभासस्यापि संभवात् सामान्यतः प्रमाणाभास इति विभागं निग्रहस्थान एव विधाय तदभिमता हेत्वाभासा अपि तत्रैवान्तर्भाविताः। एतत्प्रमाणाभासनिरूपणमत्र चतुर्थे आह्निके। प्रतिज्ञाभास—दृष्टान्ताभासादीनामप्यत्र विचारोऽन्तर्भावप्रकारोक्तिश्च। अत्रैव तर्कशास्त्रमिति नामघटकतर्कशब्दतार्किकाभिमतमुख्यार्थशोधनम्, तस्यानुमानान्तर्भावानन्तर्भावचिन्ता च तर्कांगपञ्चक-तर्कप्रभेदादिनिरूपणम् अनुमानप्रथमाह्निके व्याप्तिज्ञानोपयोगितया व्यभिचारशंकानिवर्तकतया चोक्तस्यापि तर्कस्य विशेषतः आत्माश्रयान्योन्याश्रयादिविभागेन सह प्रपञ्चनमत्रैवाकारि।

अथ तृतीये शब्दाध्याये तस्य लक्षणं तस्य बोधकत्वम् अन्विताभिधानाभिहितान्वयविवेकः विशिष्टे शक्तिः पौरुषेयापौरुषेयभेदः वृत्तिभेदः स्वतःप्रामाण्यमित्यादिकमाद्ये आह्निके। वेदपौरुषेयत्वनिरासः, ईश्वराज्ञारूपता, विध्यर्थविवेकः, पौरुषेये स्मृत्यादिभेदः, सात्त्विकराजसादिभेदः सांख्यादिदर्शनस्य धर्मशास्त्रान्तर्भावः, पञ्चरात्रस्य कार्त्स्न्येन प्रामाण्यम् वैखानसशास्त्रस्य विशिष्टाधिकारिसंबन्धित्वमित्यादि द्वितीये।

अथ चतुर्थोऽध्यायः। स्मृतेरपि याथार्थ्यरूपप्रमितित्वस्थापनं प्रथमे। द्वितीये तत्तन्मतस्वीकृतानां प्रमाणानामुक्तेष्वेवान्तर्भावचिन्ता। पञ्चमेऽध्याये प्रथमे प्रमाविषयसामान्यं प्रमेयमपि तद्विभागचिन्तायां गौतमादृत-काणादसप्तपदार्थीरूपप्रमेयस्याप्रामाणिकत्वम्, प्रायेण तदुक्तानां शशशृंगायमाणता च न्यरूपि। द्वितीये गौतमोक्तं मोक्षोपयोगि द्वादशविधं प्रमेयं स्वीकृत्य तत्रैकैकस्य तत्कृतलक्षणविभागादिकमनादृत्य प्रकारान्तरेण वेदान्ताविरोधेन व्युत्पादनम्। नो बहुप्रकारान्तरप्रतिपादनञ्च। यद्यपि न्यायविस्तरे प्रमाणशोधनमेव कार्यम्, तथाऽपि कीदृशप्रमेयसाधकतया आवश्यकत्वमभिसंधायेदं विद्यास्थानमारभ्यतेत्यत्र वैदिकप्रमेयजातस्यैवेति ज्ञापनाय संग्रहेण तत्कीर्तनमत्र स्थाने। तत्र काणादखण्डनं तु गौतमोक्तेषु परिहरणीयांशेषु अस्य प्राधान्यसूचनाय।

एवमत्र ग्रन्थे प्रतिपादितानामर्थानां संग्राहकाणि सूत्राणि यादृशानि कार्याणि, यथा चाध्यायाह्निकविभागः कार्यः, तत् सर्वमालोड्य, अत्रैव प्रारम्भे दर्शितया दिशा न्यायसूत्राणि प्रणीय निबन्धमेकं निबध्य न्यायविस्तर इति वा न्याय इति वा नाम्नैव यदि व्यवहरेयु, ततो न कश्चिद् दोषः। न सर्वं पुराणं साधु; न वा साधु सर्वं पुराणम्। "तदात्वे नूतनं सर्वमायत्यांञ्च पुरातनम्। न दोषायैतदुभयं न गुणाय च कल्पते" इति चाचार्यैरेवाभाणि (यादवा-)।

अथ गौतमीये न्यायदर्शने इयं रीतिर्न भवति, किन्त्वन्यथेति संग्रहेण प्रदर्शयेम। आदौ, "प्रमाणप्रमेययोस्तत्त्वज्ञानान्निश्रेयसाधिगमः" इत्येतावदेवालम्। प्रमाणविभजनेन अनुमाननिरूपणावसरेऽन्येषां तदुक्तानां सर्वेषां विशिष्य निर्देशसंभवात्। वैशद्यार्थं तदुक्तिः। उद्देशो लक्षणं परीक्षा चेति त्रिविधा भवत्यस्य शास्त्रस्य प्रवृत्तिः। आद्यसूत्रे षोडशानामुद्देशः। तेषां लक्षणञ्च प्रथमाध्याये यथावदकारि। तत्र वादात्

**विद्यास्थानेषु धर्म्येषु गण्यते न्यायविस्तरः । स च विप्लावितस्तैस्तैस्ततोऽत्र परिशोध्यते ॥ २ ॥**

---

पादितप्रमाणप्रमेयप्रतिपादकतया तदुक्तचविशिष्टाभिरुक्तिभिः क्रियमाणस्य शुद्धत्वमेव । अत एव शुभत्व-मपि । **श्रीमान्** बादरायणाद्युक्तियथावस्थितार्थज्ञानं यतिराजमहितगुरुपंक्तिसंप्रदायतः प्राप्तवान् **नीतेः** न्यायस्य **स्थितिपदं** स्थानं न्यायविद्यास्थानं निर्माति । स्थानशब्दस्य स्थाधातोरधिकरणार्थे ल्युटि निष्पन्नत्वात् स्थित्यधिकरणमित्यर्थकत्वात् श्लोके वर्णमात्रादिन्यूनतापरिहाराय स्थानपदप्रयोगायोगेन पर्यायपदस्यास्य प्रयोगः । **उदयनाचार्यै**रपि, 'लक्ष्यं लक्षणमुत्थितिः स्थितिपदम्' इति प्रयुज्यते । स्थितिपदं=स्थापकमिति तत्र व्याख्यानात् स्थापकवाक्यराशिर्वा तदर्थः । तदापि विद्यास्थानमेवोक्तं भवति ॥ आचार्यैरप्यन्यत्र, "तं विष्वग्भेदविद्यास्थितिपदविषयस्थेयभूतम्" इति विद्यास्थानेत्यस्य स्थाने विद्यास्थितिरदेति प्रयुक्तमस्ति । तत्र परित्राणे, 'समस्तविद्यास्थान' इति विवरणमस्ति । **'स्थितिः**=मर्यादा ; **पद**—त्राणम' । इत्युक्त्वा मर्यादारक्षकग्रन्थ इत्यप्यर्थमाहुः । तदानीमपि विद्यास्थानमित्युक्तप्रायम् । विद्यास्थानं तदन्तरंगमन्यद्वा तदर्थोऽस्तु । सर्वप्रमाणनिरूपकत्वेऽपि न्यायविस्तर इति नाम्नैवास्यांगस्य प्रसिद्धत्वात् **नीतेः** इति प्रयुक्तम् । अनुमानान्तर्गतन्यायांगभूतसंशयादिनिग्रहस्थानान्तचतुर्दशपदार्थविवेचनेदम्परत्वात् तथा निर्देशो युक्त इति भावः । ननु स्थितस्य न्यायविस्तरस्याशुद्धत्वेऽपि परीक्षकास्तत्तन्मतस्थाः स्वसिद्धान्तानुसारेण परिष्करिष्यन्तीति किं तत्रैकमतपक्षपातिना तच्छोधनेनेत्याशंकां परिहर्तुं विशिनष्टि **शुभ**मिति । यदि न्यायविस्तरस्या-स्याकार्यकरतया तैस्तैः स्वयमेव प्रमाणस्वरूपेयत्तादि स्वग्रन्थ एव निरूपयिष्यते, तर्हि किमित्यस्यांगस्य परिगणनम् । अतो यथावदंगताहेणानेन यथार्थविद्यास्थानेन भाव्यम् । अन्यथा सम्यक्त्वभ्रान्त्या एतदुक्तिश्रद्धया सिद्धान्तत्यागः केषाञ्चिदापद्येतेति भावः । एवमाशंकापरिहारार्थमेव विशेषणोपादानात् नात्र समाप्तपुनरात्तत्वरूपो दोष इति ध्येयम् ॥ १ ॥

ननु किं शुद्धमन्यत् क्रियते, उत तस्य शोधनं क्रियते । बाह्यन्यायग्रन्था इवायमपि न्यायग्रन्थ उपेक्ष्यताम् ; किमिति तच्छोधनमित्यत्राह **विद्ये**ति । "पुराणन्याय....स्थानानि विद्यानां धर्मस्य च" इति यथावस्थितज्ञानमुखेन धर्मोपयोगितया वेदांगत्वेन गणितत्वात् न्यायविस्तरो नाम ग्रन्थो नोपेक्ष्यः । वेदप्रामाण्यमादृतवद्भिरपि कैश्चिदृषिभिः तर्करासिक्येन वैदिकप्रमाणप्रमेयत्यागेनान्यान्यदभ्युपगतम् । वैदि-कोक्तत्वात् तत्र विस्रम्भेण प्रायस्तदनुसारेणैव न्यायदर्शनं निबबन्ध । अविमृश्य तत् अंगभूतन्यायविस्तर एवायमित्यादृतवन्तस्तदनुगुणव्याख्योपव्याख्यादिभिरन्यथयामासुः । अतो मूलभाष्यवार्तिकादिग्रन्थकारापादित-विप्लवपरीहाराय वास्तवो न्यायविस्तर ईदृग्भूत इति ज्ञाप्यते शोधनेनेति । अत्रेदमाकूतम्—एतन्न्यायविस्तर-स्थाने **न्यायतत्त्व**मिति शास्त्रं श्रीमन्नाथमुनयो निबबन्धुरिति वक्ष्यते । तं ग्रन्थं यथावदनुपलभ्यार्वा-ग्भिरन्यथाऽन्यथा कृतमित्यपि । अतस्तत्सत्त्वे ग्रन्थोऽयं तदनुकूलतया न्यायविस्तरशोधनमात्रं भवतु । अत एव न्यायपरिशुद्धिरिति नामेति । शुद्धिः=शोधनम् ॥ २ ॥

एवं न्यायदर्शने प्रमाणानि सामान्यतो विशेषतश्च परीक्षितानि। अथ प्रमेयं तृतीयतुरीययो परीक्षते स्म। तत्र यथास्थानमात्मनो देहाद्यतिरेकस्योपपादनं सर्वप्रशंसनीयम। अथ शरीरस्य पाञ्चभौतिकत्वतदभावविचारः। तत्र कणादसंमत एकभूतोपादानकत्वपक्षो न स्पष्टः। अथेन्द्रियाणां गोलकाद्यतिरिक्तता ज्ञानेन्द्रियाणां बाह्यानां पञ्चत्वम्, एकैकेन्द्रियस्यैकैकभूतोपादानकत्वमित्यादि गदित्वा इन्द्रियार्थाश्च निरूपिता इति चतुर्णां प्रमेयाणामत्र वैशद्यम्। अथ तृतीयद्वितीये बुद्धिमनसोर्द्वयो परीक्षा। अथ चतुर्थे प्रवृत्त्यादि अपवर्गान्त शिष्टं प्रमेयं परीक्ष्यते। अत्र चतुर्थप्रथमे ईश्वरविचारात्मिका त्रिसूत्री। तस्यास्तार्किकाभिमतेश्वरतत्त्व परतया पश्चात्तनैर्व्याख्याने विहितेऽपि वात्स्यायनभाष्यं विलक्षणेश्वरपरं न लक्ष्यते। आत्मसु कश्चिदणिमादिसिद्धिसंपन्न इति कथनात् नित्यज्ञानेच्छाप्रयत्नः निष्काय ईश्वर इति न निश्चीयेत। अत एव सूत्रकारः आत्मनि जीवेश्वरभेदेन द्वैविध्यं नेच्छतीव। वस्तुतो जीवानां फलानुभवो न स्वकृतकर्मकृत, किंतु ईश्वरमात्राधीन इति पक्षनिरास एव तत्र प्रतीयते। सर्वशून्यत्व-सर्वनित्यत्व-सर्वानित्यत्व-अनेकान्त-आकस्मिकत्वादिवादानां निरासस्तत्रोपलभ्यमानः प्रायो वेदान्तिनामनुकूल एव। एवं संख्यैकान्तासिद्धिः सूत्रकारेणोक्ता चतुर्थप्रथमे(41) सर्वमेकमिति, सर्वं द्वेधेति, सर्वं त्रेधेत्येवं विभागेषु एकमात्रादरणेन एकान्तवादी न युक्त इति तेन कथनात् लोके पदार्थास्तैस्तैर्वादिभिर्यथायथं भावाभाव-द्रव्याद्रव्य-द्रव्यगुणादिविभागान्तर्निवेश्येरन्; तथातथा विभज्येरन्; तत्र न कश्चिद् दोष इति सूच्यत इव। अत एव न्यायभाष्येऽपि माता मानं मेयं मितिरित्यादिरूपेण विभागाः प्रादर्शिषत। एवं सर्वस्वीकार्यांशानां दर्शनेऽपि काणादप्रक्रियाादरमूलाः वेदवेदान्तविरुद्धवादाः परिदृश्यमानाः अस्य गौतमीयस्य वेदांगतया परिगणनं प्रति बध्नन्ति। यदि, नोदाहरणमादर्तव्यमिति न्यायेन तदंशोपेक्षया प्रमाणशोधनमात्रे अस्य वेदांगता, तदाऽपि वैदिकानभिमतोपमानपदार्थनिरूपणात् वेदरूपशब्दस्य पौरुषेयत्ववचनाच्चांगत्वासंभवस्तदवस्थः। वेदाविरुद्धेष्वंशेषु अभिप्रायभेदाः अवगम्यमानाः नांगतां वारयेयुः। यथा षोडशपदार्थी गौतमोक्ता; न्यायपरिशुद्धौ तु न्यायस्यानुमानाख्यपरामर्शोत्पादनार्थं प्रयुज्यमानतयाऽनुमानाङ्गत्वात् वादिप्रतिवादिकृतन्यायद्वयरूपकथानां तत्संबन्धि हेत्वाभासच्छलजातिनिग्रहस्थानानाञ्चानुमाननिरूपणेऽन्तर्भावसंभवात् पृथक् परिगणनं नाद्रियते; अनुमानपरिच्छेद एव सर्वमन्तर्भाव्यते। जगतः सर्वस्य दुःखत्वेन भावनीयतया दुःखरूपप्रमेयवचनं दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये पूर्वपूर्वापाय इत्यादिकमविरुद्धत्वादिष्यते। अपवर्गो दुःखात्यन्तविमोक्षमात्रमिति तु नेष्यते, परिपूर्णब्रह्मानुभवश्रुतिविरोधादित्यादिकं भाव्यमित्यलम्।

यन्न्यायविस्तर इतीरितमागमांगं विष्णोः पुराण इदमेव तु मुण्डकान्ते।
न्यायाख्ययाऽप्यगणि सुष्ठु च याज्ञवल्क्ये तन्न्यायरूपमतये परिशुद्धिरेषा॥

शुभमस्तु॥

—०—०—

# न्यायपरिशुद्धिविषयसूची

# ந்யாயபரிசுத்திஸாரம்

—o—o—

ஸ்ரீதேசிகன் அருளிச்செய்த சாஸ்த்ரக்ரந்தங்களில் ந்யாயபரிசுத்தி ஒன்று. இது பதினெட்டு வித்யாஸ்தாநங்களில் ஒன்றான ந்யாய சாஸ்த்ரத்தின் பரிஷ்காரமாகும். உலகில் தத்துவநிர்ணயத்திற்கும் வேதவாக்ய அர்த்த நிர்ணயத்திற்கும் ஸாதகமான ப்ரமாணத்திற்குத் தர்க்கம் துணையாகும். ப்ரமாணமென்றுமென்ன எத்தனை பிரிவுளதென்று தெளிவிப்பதற்காகவும், ஸாதிக்க அனுமானம் எப்படி ப்ரயோகிப்பது, எதிர்வாதம் ஒருவன் செய்தால் எப்படி மறுப்பது என்பனவெல்லாம் விளக்கவும் கௌதமமஹர்ஷி ந்யாயதர்சனமென்ற நூலை வரைந்தார். அதில் சொன்ன 16 பதார்த்தங்களில் அனுமாந ப்ரமாணத்திற்கு ஸம்பந்தப்பட்டவை அதிகம்; ஸாதிப்பதற்காக இவ்வளவு அறியவேணடியிருப்பினும் மோக்ஷத்திற்காக அறியவேண்டும் ப்ரமேயம் பன்னிரண்டென்று காண்பித்தார். இவற்றையறியாமையால், துக்கம், ஜன்மம், செயல், தோஷம், விபரீதஞானம் என்பவை ஸம்ஸாரகாரணமாகும். இவற்றையறிந்தாலெல்லாம் விலகும்; மோக்ஷம் பெறலாமென்றார். இதெல்லாம் ஒருவாறு இசையத்தக்கதே. ஆனால் இவற்றை விளக்கிவரும்போது இவர் கணாதமஹர்ஷி எழுதிய வைசேஷிகதர்சனநூலைத் தழுவித் தத்துவங்களை மொழிந்திருக்கிறார். இவர் முக்யமாகச் சொல்லவேண்டியது ப்ரமாணம். அதைப் பிரிக்கும்போது ப்ரத்யக்ஷம், அனுமானம், உபமானம், சப்தம் என்று நான்காகப் பிரித்தார். கணாதர் ப்ரத்யக்ஷம் அனுமானம் இரண்டையே ப்ரமாணமாகக் கொண்டார். இவற்றில் உபமானமென்பது அதிகம். சப்தம் உள்பட மூன்று ப்ரமாணங்களை வேதவைதிகக்ரந்த ஸம்மதம். ஸ்ம்ருதி என்ற ப்ரமாணமொன்று சேர்ப்பது உண்டு. உபமானத்தை விட்டு ஸ்ம்ருதியைச் சொல்லவேண்டும். இவர் வேதம் ப்ரமாணமென்று ஸ்தாபித்து அதன் உட்பிரிவுகளையும் உரைத்தாரானாலும், வேதம் பௌருஷேயம் ஈச்வரன் செய்தானென்று கொண்டார். இது வேதவிருத்தம், எனவே வேறுவிதமாக ந்யாயநூல் அமைக்கவேண்டும். அனுமானவிஷயத்தைவிஸ்தாரமாக்க வாதம் ஜல்பம் விதண்டை ஹேத்வாபாஸம் ச்சலம், ஜாதி நிக்ரஹஸ்தானம் என்பவற்றை ப்ரத்யக்ஷம். அனுமானம் சப்தம் என்ற பிரிவில் அனுமானபாகத்தில் அடக்கலாம். ஸ்ம்ருதியும் ப்ரமாணமாகத்தகும். ஆக நான்கு ப்ரமாணங்களுக்காக நாலு அத்யாயங்கள், ப்ரமேயத்திற்காக 5வது அத்யாயம் என்று பிரித்து ந்யாய பரிசுத்தியை ஆசார்யன் அருளினார். இதில் அனுமான அத்யாயத்தில் நாலு ஆஹ்னிகங்கள். முதலில் பொதுவாக அனுமானபிரிவுகள்; 2ல் பிறருக்கு அனுமானத்தையுணர்த்த ந்யாய ப்ரயோகம் அதில் சர்ச்சை நேரும்போது வேண்டும் நிக்ரஹஸ்தானம் ஜாதி என்பவற்றிற்கு 3, 4, ஆஹ்னிகங்கள். 5வது அத்யாயத்தில் கணாதரீதியை மறுத்து கௌதமர்கூறிய ப்ரமேயங்களில் உண்மை நிலையும் வேறுவகைகளும் குறிக்கப்பெற்றன. இதன் விரிவுக்காக, ந்யாயஸித்தாஞ்ஜனமென்றக்ரந்தம் அருளினார்.

சுபமஸ்து.

ஸ்ரீ :

# முன்னுரை

ஸ்ரீ தேசிகன் அருளிச்செய்த சாஸ்த்ர க்ரந்தங்களில் ந்யாயபரிசுத்தி என்பதுமொன்று: பதினாறு வித்யாஸ்த்தானங்களில் ஒன்றாக ந்யாய மென்றும் ந்யாயவிஸ்தர மென்றும் புராணப்ரஸித்தமான சாஸ்த்ரம் யாதென்று விசாரிக்கும்போது கௌதம மஹர்ஷி இயற்றிய ந்யாயதர்சநமே என்றது நெடுங்காலமாக ப்ரஸித்தம். வேதத்திற்கு அர்த்தம் அறியவிழிந்த போது வரும் விவாதங்களை மீமாம்ஸையைக் கொண்டே தீர்க்கவேண்டுமாகையால், மீமாம்ஸை யும் யுக்திகளைக்கொண்டு நிர்ணயம் செய்வதால் ப்ரமாணதத்துவம் அறியாதவன் நிர்ணயம் செய்யவியலானென்று ப்ரமாணம் அப்ரமாணம் இவற்றின் சேதனத்திற்காக ஏற்பட்டதாகும் ந்யாய சாஸ்த்ரம். அதில் அநுமாநப்ரமாணம் ப்ரதாநமாகையாலே அதை விரிவாக நிரூபிக்கும். இதெல்லாம் வேதார்த்த தத்துவ ஸ்த்தாபனத்திற்காகவே யாகையால் வேதாந்தத்தில் ஓதும் தத்துவரீதியை யநுஸரித்து கௌதமர் க்ரந்தம் இயற்றியிருக்க வேண்டும். அவ்வாறின்றி தர்க்கசாஸ்த்ர காரரான கணுதமஹர்ஷி சொன்னபடியே தத்துவங்களை யுதாஹரித்து விசாரத்தை கௌதமர் நடத்தியிருப்பதால் இது வேதாங்கமான வித்யாஸ்த்தானமாகா தென்னவேண்டியதாயிற்று. கௌதம க்ரந்தத்தை ஒருவாறு பரிஷ்கரித்துக் கூட்டலாமா, அதை விட்டு வேறொன்றையே வித்யாஸத்தாந க்ரந்தமாக்கலாமா என்ற விசாரம் முதலில் செய்து, எவ்வாறு விசாரங்கள் அடங்கியிருந்தால் ந்யாயசாஸ்த்ரமாகலாமோ அவ்வாறு சோதனம் செய்தருளினார், இங்கு ஸர்வதந்த்ர ஸ்வதந்த்ரரான ஸ்ரீ தேசிகன். நமது ஸித்தாந்தத்தில் ப்ரமாணங்கள் யாவை, ப்ரமேயங்கள் யாவை என்பதை ஸ்ரீ நாதமுனிகளுடைய ந்யாய தத்துவம், ஆளவந்தாருடைய ஸ்ரீ ஸூக்திகள், ஸ்ரீபாஷ்யகார ஸ்ரீ ஸூக்திகள் இவற்றைக் கொண்டு விசாரம் செய்ய ஸ்ரீபாஷ்யகார சிஷ்யப்ரசிஷ்யர்களில் பலர் முன்வந்தனர். ஸ்ரீ தேசிக னுடைய க்ரந்தங்களிலிருந்து—வரதவிஷ்ணுமிச்ரருடையமாநயாதாத்ம்ய நிர்ணயமென்ற க்ரந்தமும் வேறொன்றும், விஷ்ணுசித்தருடைய ப்ரமேயஸங்க்ரஹமும் ஸங்கதிமாலையும், ஸோமாசி யாண்டானென ராமமிச்ரருடைய ஸ்ரீ பாஷ்ய விவரணமும் வேதார்த்த ஸங்க்ரஹ விவரணமும் ஷடர்த்தஸங்க்ஷேபமும், வரதநாராயண பட்டாரகருடைய ந்யாய ஸுதர்சனமும் ப்ரஜ்ஞா பரித்ராணமும், நாராயணார்யருடைய நீதி மாலாதியும், ஸ்ரீ பட்டபாதருடைய சிறந்த தத்துவ ரத்நாகரமென்ற க்ரந்தமும் இவ்விசாரத்திலிழிந்தவை யென்று தெரிகிறது. இவற்றையும், கௌதமஸூத்ரத்திற்கு உரைமேல் உரைகளாக வந்த பாஷ்யம், வார்த்திகம், டீகை, பரிசுத்தி, ந்யாய பரிசிஷ்டம் முதலான உதயநாசார்யருள்பட மஹான்கள் செய்த க்ரந்தங்களையும் பரிசீலநம் செய்து அற்புதமாகப் பரிஷ்கரித்து இந்த ந்யாய பரிசுத்தியை இயற்றி யருளினார். இவ்வாறு அமைந்தால்தான் ந்யாயமென்கிற வித்யாஸ்த்தானமாகுமென்று திருவுள்ளம். மற்ற விரிவு நமது ந்யாயஸித்தாஞ்ஜந பூமிகாதிகளிற் காண்க.

இதற்கு பாரத்வாஜ ஸ்ரீநிவாஸாசார்யரின் ந்யாயஸாரமென்னும் வ்யாக்யானம் அநுமாநாத்யாயம் முடிவுவரையில் அச்சாகியிருக்கிறது. அதைப் பின்பற்றிய ஸ்ரீ காஞ்சீ திருப்புட்குழி மஹாமஹோபாத்யாய கிருஷ்ணதாத தேசிக வ்யாக்யானமும் சிறிது தூரம் அச்சாகியிருக்கிறது. ஒன்றும் முழுமையாயிராமையாலும் சிற்சில விடங்களில் அதிக விரிவாயிருப் பதாலும் முக்கியமான சில அம்சங்கள் விடப்பட்டிருப்பதாலும் வேறு சுருக்கமாக வ்யாக்யானம் இயற்றி இங்கு அச்சிடப்பெற்றது:

**ஸம்பாதகர் உத்தமூர் தி. வீரராகவாசார்யர்**

श्रीः

श्रीमते हयवदनपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तगुरवे नमः

श्रीमान् वेंकटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

# न्यायपरिशुद्धिः

पत्युः संयमिनां प्रणम्य चरणौ तत्पादकोटीरयोः
संबन्धेन समिध्यमानविभवान् धन्यांस्तथाऽन्यान् गुरून् ।
शुद्धं संश्रितबादरायणमुनेर्नारायणस्योक्तिभिः
श्रीमान् वेंकटनायकः स्थितिपदं निर्माति नीतेः शुभम् ॥

---

श्रीः

श्रीमते वरदरामानुजमहादेशिकाय नमः

श्रीगुरुपरम्परायै नमः

श्रीमते श्रीनिवासपरब्रह्मणे नमः

श्रीमते निगमान्तमहादेशिकाय नमः

# न्यायतत्त्वप्रकाशिका

श्रीकान्तोपक्रमां वन्दे श्रुत्यन्ताचार्यमध्यमाम् ।
श्रीरंगलक्ष्मणोदश्चत्प्रान्तां गुरुपरम्पराम् ॥ १ ॥

श्रीमन्नाथमुनीन्द्रनिर्मित.नवश्रीन्यायतत्त्वाभिध-
श्रुत्यन्ताद्यनुरोधिनीतिसरणिस्थाप्यं प्रमेयं विदन् ।
श्रीभाष्यादियतीन्द्रसूक्तिगमितं मानत्रयं स्थापयन्
न्यायं शोधयति स्म यो गुरुवरस्तस्मै परस्मै नमः ॥ २ ॥

मानं मध्यमभिक्षुमध्यमिव यः श्रीगौतमो मानयन्
बाह्यान् जल्पकथादिनाऽपि निगमैकान्तो विजेतुं व्यधात् ।

तर्कैकान्तिषु काश्यपादपथालम्बी बहूदाहृतिं
तस्याप्यन्तरभीष्टमागममिते तत्त्वे नयस्थापनम् ॥ ३ ॥

तत्तत्सैद्धान्तिकाभीष्टलक्ष्योदाहृतिपूर्वकम् ।
न्यायशिक्षाचिकीर्षायां भिद्येत न्यायविस्तरः ॥ ४ ॥

यत्किञ्चिदेकसिद्धान्ते स्थित्वा लक्ष्ये प्रदर्शिते ।
नोदाहरणमादत्यमित्यन्यैरन्यदिष्यताम् ॥ ५ ॥

प्रमाणमात्रं शास्त्रार्थ इत्यमन्यत गौतमः ।
मा भून्न्यायाभासतेति तत्त्वैकोदाहृतिप्रियैः ॥ ६ ॥

प्रमाणाख्यप्रधानार्थनिरूपणपथस्य च ।
परीक्षणीयतां दृष्ट्वा न्यायशुद्धिश्चिकीर्षिता ॥ ७ ॥

श्रुतयस्तर्कसापेक्षाः तर्कः सर्वोऽनुमानभाक् ।
न्यायेनान्यः प्रबोध्योऽस्ति सांगो न्यायो न्यरूप्यतः ॥ ८ ॥

वेदार्थनिर्णयस्य मीमांसाधीनत्वात् मीमांसायाश्च तर्कसहकृतन्यायगर्भत्वात् सदसन्न्यायविवेकमन्तरा निर्णयानिष्पत्तेः, अपेक्षित उपकारो वेदाङ्गभूतेन न्यायविस्तरेण क्रियते। वेदप्रमेयसिद्ध्यर्थो न्यायविस्तरः वेदसंमतप्रमाणविभागदर्शी वेदप्रमेयविषयकोदाहरणभूयिष्ठश्चैव भवितुमर्हतीति विमृश्य गौतमीयस्य न्यायदर्शनस्यान्यादृशत्वात् न्यायं परिशोधयितुं यथार्थोपदेशकसर्वगुरुप्रणामाख्यमंगलपूर्वकं प्रतिजानीते **पत्युरिति**। **संयमिनां**—संन्यासिनां **पत्युः** श्रेष्ठस्य यतिराजस्य भगवद्रामानुजस्य चरणौ **प्रणम्य** तथा **गुरून् प्रणम्य नीतेः स्थितिपदं निर्माति श्रीमान् वेंकटनायकः**=श्रीवेंकटनाथनामा कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्रवेदान्ताचार्यविरुदभूषणं श्रीदेशिक इत्यन्वयार्थः। स्वकीयपरकीयसर्वसंयमिसार्वभौमत्वोक्त्या, "काषायेण गृहीतपीतवसना दण्डैस्त्रिभिर्मण्डिता सा मूर्तिर्मुरमर्दनस्य जयति त्रय्यन्तसंरक्षिणी" इत्युक्त-नारायणावतारदत्तात्रेयसारूप्यात् नारायणरूपबादरायणाभिमतप्रमाणप्रमेयनिर्धारणप्राभवमस्य प्रदर्शितम्। तेन काणादादिगमनिकानां निरसनीयत्वज्ञापनात् बाह्यबौद्धादितर्कवत् वैदिकाभिमततर्कशास्त्रस्याऽप्य-ग्राह्यत्वसिद्ध्या परिशोधनमावश्यकमिति सूच्यते। **गुरूनितिवत्** संयमिनां पतिमित्यनुक्त्वा **पत्युश्चरणा-**वित्यधिकप्रयोगात् "अनुकल्पभूतमुरभित्पदं सताम्" इत्युक्तातिशयशालितया तत्र प्रावण्यातिशयः प्रकाश्यते। **चरणा**विति द्विवचनबलात् तच्छिष्यभूतयोः प्रणतार्तिहराचार्य-कुरुकेशाचार्ययोर्ग्रहणमपि व्यज्यते तेन श्रीभाष्यसिंहासनाधिपतीनां सर्वेषामपि वेदान्तज्ञानातिशयसत्त्वेऽपि रहस्यार्थेष्वसाधारणं ज्ञानं प्रथमस्य दिव्यसूरिसूक्तिषु तत् द्वितीयस्येति तच्छाखाद्वयसंबन्धभाग्यसंपत्त्या स्वस्य सर्वार्थनिर्धारण-नैपुण्यमिति निवेद्यते। अन्यान् **गुरून्** विशिनष्टि **तदि**त्यादिना। तस्य संयमिपतेः पादसंबन्धेन

शिष्यसंततितया विभवसंपत्तिस्तदुत्तरेषां गुरूणाम्, तत्कोटीरसंबन्धात् तदाचार्यभूतानां पूर्वेषाम्। यति-राजत्वात् किरीटौचित्यात् **कोटीरे**त्युक्तम्। तेन शिखया शेखरिणमित्युक्तया यतिलक्षणभूतशिखाविवक्षा।

श्रीकूरेश्वरविषयकं श्रीभट्टारकमुक्तकमिति किञ्चित् पद्यं तत्रतत्र पठ्यमानं श्रूयते, "अर्वाञ्चो यत्पदसरसिजद्वन्द्वमाश्रित्य, पूर्वे मूर्ध्ना यस्यान्वयमुपगताः, देशिका मुक्तिमापुः। सोऽयं रामानुजमुनिरपि स्वीयमुक्तिं करस्थां यत्संबन्धादमनुत कथं वर्ण्यते कूरनाथः" इति। अत्र यतिराजमूर्धसंबन्धलाभानन्तरमेव पूर्वेषां मोक्षप्राप्तिरित्येतत् यथाश्रुतेऽतिवादरूपम्। प्रशंसास्थले कवीनां सहज एवातिवादः। आप्तवाक्यं सर्वं तात्पर्यविषयभूतार्थग्रहणपूर्वकमनुसंधेयम्। न हि 'आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः। वैष्णवो नः कुले जात' इत्युक्ता इव पूर्वे इमे यत्र क्वापि प्रकृतिमण्डले स्थिताः श्रीभाष्यकारावतारतद-न्वयानन्तरमेव मुक्तिं गता इति वक्तुं युज्यते। तेषां स्वप्रचारितसिद्धान्तस्थापकपुरुषदुर्भिक्षेण क्षोण्याः क्षीणता प्राप्तेति निर्वेदादितो मुक्तिः कामं संभाव्यताम्; मा वा। अन्ततो गत्वा तत्र विवक्षितं तेषां सर्वेषां श्रीभाष्यकारसंबन्धात् समिध्यमानविभवत्वम्। गुरुसंनिधौ श्रीभाष्यकारो वाक्यानि शृण्वन् अन्यादृशमप्यर्थं संभावयन्, 'अहो महान्; अयमप्यर्थः प्राक् आचार्यसंनिधौ श्रुत' इति श्लाघित आसीदि-त्याहुः। वस्तुतः प्राचीनाचार्योपदिष्टस्यार्थस्याविचाल्यतया स्थापनस्य श्रीभाष्यकारेण कृतत्वात् तत्र विस्रब्धः सर्वो लोकः पूर्वाचार्याणां निगूढार्थरहस्योपदेशनैपुण्यमन्वीक्ष्य प्रशशंसुः प्रशंसन्ति च; सर्वदैतदनु-वृत्तिरस्तीति तेषां विभवः समिध्यमान एवास्ति। ते च सर्वे भगवदालयेषु प्रतिष्ठाप्यमानाः पूज्यन्ते चेति सर्वमिदं वैभवं यतिराजाधीनमिति भावः। तस्मात् मुक्तिमापुरित्यस्य विभवं प्रापुः प्राप्नुवन्ति चेत्यर्थे पर्यवसानम्। पूर्वाचार्यविग्रहस्तुतिपठनादीनां तु देवालयादितो बहिष्कारान्मुक्तिरेवासीत्। **समिध्य-मानपदस्य** प्रकाशमानेत्यर्थकतया महतो भाष्यकारस्य मुक्तिर्ध्रुवेति निश्चये तत्संबन्धात् तदाचार्यत्वात् तस्मै मोक्षोपायोपदेशकत्वात् अनुमीयते पूर्वेषामपि मुक्तिरित्यप्यस्तु—इत्येवं ज्ञापनाय **समिध्यमान-विभवा**निति शब्दान्तरप्रयोगः। एवमिह भाष्यकारतदितरगणमनवैखर्या च ज्ञाप्यत इदम्, यत् यतिराजस्यान्यादृशत्वात् तत्सूक्तिदर्शित एवार्थोऽस्माभिः सर्वत्राऽऽदर्तव्यः; तदन्येषां सूक्तिषु अर्वाचीन-कृतास्विव पूर्वकृतास्वपि किञ्चिदन्यथाभावो यदि लक्ष्येत, तत्रान्यथैव तात्पर्यं वर्णनीयम्। एवं स्थित्वैव न्यायपरिशुद्धिं प्रणयामः इति। **धन्यान्** प्रागेव प्राप्तानन्तसुस्थिरधनादीन्। **शुद्धमिति**। विद्यमानस्य न्यायविद्यास्थानस्याशुद्धत्वात् अन्यत् शुद्धं निर्माति। तस्याशुद्धत्वं किंरूपम्; तदत्र नास्तीति कथमि-त्यत्राह **संश्रिते**ति। संश्रिता बादरायणस्य तनुर्येन तस्य। 'व्यासरूपाय विष्णवे', 'द्वीपे बदरि-कामिश्रे बादरायणमच्युतम्', 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्। को ह्यन्यो भुवि मैत्रेय महाभारत-कृद् भवेत्' इति नारायण एव बादरायण इति भावः। **संश्रित..तनोः** इत्युक्त्या आवेशावतार इति ज्ञाप्यते। तदुक्तयो भारतब्रह्मसूत्रादयः। ताभिः शुद्धमित्यन्वयः। ताभिर्निर्मातीति वा। काणादोक्ति-घटनया प्रवृत्तस्य न्यायदर्शनस्याशुद्धता। वेदवेदान्तप्रमेयनिर्धारकभारतब्रह्मसूत्रादिसूक्त्युदाहरणेन तत्प्रति-

**विद्यास्थानेषु धर्म्येषु गण्यते न्यायविस्तरः । न च विप्लावितस्तैस्तैस्ततोऽत्र परिशोध्यते ॥ २ ॥**

---

पादितप्रमाणप्रमेयप्रतिपादकतया तदुक्तचवैशिष्टाभिरुक्तिभिः क्रियमाणस्य शुद्धत्वमेव । अत एव शुभत्वमपि । **श्रीमान्** बादरायणाद्युक्तियथावस्थितार्थज्ञानं यतिराजमहितगुरुपंक्तिसंप्रदायतः प्राप्तवान् **नीतेः** न्यायस्य **स्थितिपदं** स्थानं न्यायविद्यास्थानं निर्माति । स्थानशब्दस्य स्थाधातोरधिकरणार्थे ल्युटि निष्पन्नत्वात् स्थित्यधिकरणमित्यर्थकत्वात् श्लोके वर्णमालादिन्यूनतापरिहाराय स्थानपदप्रयोगायोगेन पर्यायपदस्यास्य प्रयोगः । **उदयनाचार्यै**रपि, 'लक्ष्यं लक्षणमुत्थितिः स्थितिपदम्' इति प्रयुज्यते । स्थितिपदं=स्थापकमिति तत्र व्याख्यानात् स्थापकवाक्यराशिर्वा तदर्थः । तदापि विद्यास्थानमेवोक्तं भवति ॥ आचार्यैरप्यन्यत्र, "तं विष्वग्भेदविद्यास्थितिपदविषयस्थेयभूतम्" इति विद्यास्थानेत्यस्य स्थाने विद्यास्थितिपदेति प्रयुक्तमस्ति । तत्र परित्राणे, 'समस्तविद्यास्थान' इति विवरणमस्ति । **'स्थितिः=मर्यादा ; पदं—त्राणम्'** । इत्युक्त्वा मर्यादारक्षकग्रन्थ इत्यप्यर्थमाहुः । तदानीमपि विद्यास्थानमित्युक्तप्रायम् । विद्यास्थानं तदन्तरंगमन्यद्वा तदर्थोऽस्तु । मत्रप्रमाणनिरूपकत्वेऽपि न्यायविस्तर इति नाम्नैवास्यांगस्य प्रसिद्धत्वात् **नीतेः** इति प्रयुक्तम् । अनुमानान्तर्गतन्यायांगभूतसंशयादिनिग्रहस्थानान्तचतुर्दशपदार्थविवेचनेदम्परत्वात् तथा निर्देशो युक्त इति भावः । ननु स्थितस्य न्यायविस्तरस्याशुद्धत्वेऽपि परीक्षकास्तत्तन्मतस्थाः स्वसिद्धान्तानुसारेण परिष्करिष्यन्तीति किं तत्रैकमतपक्षपातिना तच्छोधनेनेत्याशंकां परिहर्तुं विशिनष्टि **शुभ**मिति । यदि न्यायविस्तरस्यास्याकार्यकरतया तैस्तैः स्वयमेव प्रमाणस्वरूपेयत्तादि स्वग्रन्थ एव निरूपयिष्यते, तर्हि किमित्यस्यांगस्य परिगणनम् । अतो यथावदंगताहेंणानेन यथार्थविद्यास्थानेन भाव्यम् । अन्यथा सम्यक्त्वभ्रान्त्या एतदुक्तिश्रद्धया सिद्धान्तत्यागः केषाञ्चिदापद्येतेति भावः । एवमाशंकापरिहारार्थमेव विशेषणोपादानात् नात्र समाप्तपुनरात्तत्वरूपो दोष इति ध्येयम् ॥ १ ॥

ननु किं शुद्धमन्यत् क्रियते, उत तस्य शोधनं क्रियते । बाह्यन्यायग्रन्था इवायमपि न्यायग्रन्थ उपेक्ष्यताम् ; किमिति तच्छोधनमित्यत्राह **विद्ये**ति । "पुराणन्याय....स्थानानि विद्यानां धर्मस्य च" इति यथावस्थितज्ञानमुखेन धर्मोपयोगितया वेदांगत्वेन गणितत्वात् न्यायविस्तरो नाम ग्रन्थो नोपेक्ष्यः । वेदप्रामाण्यमादृतवद्भिरपि कैश्चिदृषिभिः तर्करासिक्येन वैदिकप्रमाणप्रमेयत्यागेनान्यान्यदभ्युपगतम् । वैदिकोक्तत्वात् तत्र विस्रम्भेण प्रायस्तदनुसारेणैव न्यायदर्शनं निबबन्ध । अविमृश्य तत् अंगभूतन्यायविस्तर एवायमित्यादृतवन्तस्तदनुगुणव्याख्योपव्याख्यादिभिरन्यथयामासुः । अतो मूलभाष्यवार्तिकादिग्रन्थकारापादितविप्लवपरीहाराय वास्तवो न्यायविस्तर ईदृग्भूत इति ज्ञाप्यते शोधनेनेति । अत्रेदमाकूतम्—एतन्न्यायविस्तरस्थाने **न्यायतत्त्व**मिति शास्त्रं श्रीमन्नाथमुनयो निबबन्धुरिति वक्ष्यते । तं ग्रन्थं यथावदनुपलभ्यार्वाग्भिरन्यथाऽन्यथा कृतमित्यपि । अतस्तत्सत्त्वे ग्रन्थोऽयं तदनुकूलतया न्यायविस्तरशोधनमात्रं भवतु । अत एव न्यायपरिशुद्धिरिति नामेति । शुद्धिः=शोधनम् ॥ २ ॥

(1) गौतमसूत्रबहिष्कारपक्षः

**यद्यपि कथंचिदाक्षपादं सत्पक्षे निक्षेप्तुं शक्यम् ; न च कणभक्षपक्षनिक्षेपवत् क्लेशः ; नापि तत्कर्ता गौतमस्तामसेषु परिपठ्यते ; नापि च विप्रलम्भकत्वख्यातिः—तथापि ब्रह्मसूत्रकारादिबहिष्कृतत्वान्नातीव वयमाद्रियामहे। न खल्वार्षत्वादिभिस्तदादरः, अतिप्रसङ्गात्।**

**श्लो—प्राज्ञानां प्रथमेनैव गुरुणा हि स्वयं पुरा। लोकायतमतं प्रोक्तं लोकविप्लवकारणम् ॥ ३ ॥**

---

किमेवं यथावत् परिशोधयता गौतमीयन्यायदर्शनं विद्यास्थानत्वेन बहुभिरादृतं अंगनिकुरुम्बात् बहिष्क्रियते। आहो परिष्कृत्य अर्थान्तरवर्णनादिना गण्यत इत्यत्र पक्षत्रयं वक्ष्यन् विपरीतार्थप्रचुरस्य परिष्करणापेक्षया बहिष्करणमेव श्रेय इति प्रथमं ब्रवीति **यद्यपी**त्यादिना। परिष्करणञ्च द्विविधं वक्ष्यति। आदौ, **न वयमाद्रियामहे** इति प्रयोगात्, उपरि **अंगीकारकांक्षिणा**मिति पदेनान्येषामेव तदङ्गीकाराभिलाष इत्यावेदनात् बहिष्कार एव मुख्यः कल्पः। विरुद्धसूत्राणां त्यागेन तत्स्थानेऽन्यनिवेशेन परिष्करणमुत्तमः कल्पः।

बहिष्कारपरेण **यद्यपी**त्यादिना स्वीकारप्रियपुरुषाभिमतमनूद्य **तथापी**त्यादिना निरस्यते। पुनरपि स्वीकर्तुराक्षेपवाक्यम् **अथापी**त्यादि **चे**दित्यतः प्राक्। अथ तन्निरासः। **कथञ्चित्**—विरोधप्रतीतिस्थलेऽर्थान्तरतात्पर्यवर्णनादिना। **आक्षपादम्**। **अक्षपादः** गौतमः; तदीयं न्यायदर्शनम्। **कणभक्षस्य** कणाद इति प्रसिद्धस्यर्षेः पक्षस्य वैशेषिकदर्शनस्य सत्पक्षे निक्षेपे क्लेशः प्रसिद्धः। न तथेह। तस्य पदार्थनिरूपणेदम्परत्वात् तत्प्रक्रियायाश्च 'असद्द्रव्यसृष्टिप्रभृत्यर्थक्लृप्त्या' इत्युक्तरीत्या बाहुल्येनासदर्थत्वात्। अस्य तत्प्रमेयानुवादित्वेऽपि प्रमाणनिरूपणेदम्परत्वात्, शब्दस्य प्रमाणान्तरत्वस्थापनात्। ईषदन्यथाभावस्य च सह्यत्वात्। **तामसेष्वि**ति। "काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः' इति तामसग्रन्थकारतया तामसभूतशाक्यपाषण्डसहपठिततया कणादस्य तामसत्वम्; नास्य। प्रत्युत भगवत्परत्वमेव श्रीमद्रामायणशैवग्रन्थादितोऽप्यवगम्यत इति। ननु सात्त्विकोऽपि मोहशास्त्रप्रवर्तकरुद्रवत् विप्रलम्भदशायामग्राह्यः इत्यत्राह **नापिचे**ति। **ख्यातिः** प्रमाणप्रसिद्धिः। **ब्रह्मसूत्रकारादी**ति। तर्कप्राबल्यवादिसांख्यनिरासनानन्तरं शिष्टापरिग्रहाधिकरणे एककण्ठानेकतार्किकनिरासेऽस्यापि वैदिकतत्त्वरीत्यप्रतिपादकस्य बहिष्कृतत्वावगमादिति भावः। **आदि**ना तद्व्याख्यातॄणां ग्रहणम्। ननु सूत्रकारोऽपि कश्चिदृषिः। स कथमृषिनिरसने प्रभुः स्यात्। अत आर्षत्वात् (परमतभंगोक्तरीत्या) ऋषिभूतपक्षिलवात्स्यायनव्याख्याततत्वात् वैदिकैरधीयमानत्वादिना च प्रामाण्यमित्यत्राह न **चार्षे**ति। **अतिप्रसंगा**दिति। शारीरकादिनिरस्तानां बादरौडुलोमिप्रभृतीनामपि ग्राह्यत्वापत्तेः। 'नैको ऋषिर्यस्य मतं प्रमाणम्', 'मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते' इति चोक्तम्। **प्रथमेन** श्रेष्ठेन **गुरुणा** बृहस्पतिना। **लोकायतमतं** चार्वाकमतम्। तथा च हरिवंशे (26) ते तत् बृहस्पतिकृतं शास्त्रं श्रुत्वाऽल्पचेतसः। पूर्वोक्तधर्मशास्त्राणामभवन् द्वेषिणस्तथा" इति। लोकपदमल्पचेतोजनपरम्, ततोऽप्युत्कृष्टस्य तादृशाप्रामाणिकार्थोपदेशकत्वमाह **अथ-**

अथवा पितामह एवात्र प्रमाणम्; य इन्द्रविरोचनयोश्चार्वाकमतमुपदिष्टवान्। तथा गौतमोऽपि संभाव्यते।

अथापि "काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः। त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी॥" इति स्मृतेः, "बहवः पुरुषा राजन् सांख्ययोगविचारिणः(णाम्)। नैव इच्छन्ति पुरुषमेकं कुरुकुलोद्वह॥ समासेन तु तद्व्यासः पुरुषैकात्म्यमुक्तवान्" इति महाभारतोक्तेश्च [युक्तं] तत्तद्बहिष्कारः। इह तु न तथेति चेत्—न;

तुल्यन्यायतया वचनस्योपलक्षणार्थत्वात्। न खलु तद्वा तादृग्वेति कश्चिद्विशेषः। यद्यपि

---

वेति। पितामह इति। छान्दोग्यान्ते प्रजापतिवाक्यसन्दर्भो द्रष्टव्यः। तत्र प्रजापतिः स्वारस्यात् पितामहश्चतुर्मुख एव; न तु पिता कश्यप इति भावः। 'य एषोऽक्षिणि पुरुषो दृश्यते' इति अक्षिस्थतया आत्मन उपदेशे कृते प्रतिबिम्बस्यैवोपदेश इत्यनयोर्गृहीतवतोः, तथैवेति तदनुमतिर्दत्ता प्रजापतिना। तेन, यस्य प्रतिबिम्बो भवति स देह एवात्मेति तदुपदिष्टमिति स्वदेहं सम्यगलंकृत्योदशरावे तत्प्रतिबिम्बमवेक्ष्य निर्धार्य तत्प्रचारः स्वनगरे विहितो विरोचनेन। अतृप्तमिन्द्रं प्रतिपन्नं प्रति यथावस्थितात्मोपदेशात् स्वोपदिष्टचरमनृतमिति तेनैव ज्ञापितं भवतीति भावः। तथा गौतमोऽपीति। अर्थान्तराभिप्रायेण प्रयोगे श्रोतृभिरन्यथाग्रहणे तन्निरसनं कर्तव्यं न कृतमिति स्यात्। तत्र कारणं किमप्यस्तु। विपरीतज्ञानप्रचारस्तु प्राप्त एवेति भावः। ननु भारते सूत्रकारेण कण्ठतः केषाञ्चिदेव निषेधात् गौतमस्य तत्रानिविष्टतया न्यायविस्तरो न निषेध्य इति शंकते अथापीति। शाक्याः बौद्धाः। पाषण्डाः पाशुपताः। त्रयाणामेषां दण्डनायेव त्रिदण्डग्रहणं दत्तात्रेयेण। अथ काणादग्रहणात् तत्तद्बहिष्काराभिमतिः स्पष्टा; सांख्ययोगतन्त्रबहिष्कारं दर्शयति बहव इति। सांख्यतन्त्रं योगतन्त्रञ्च विचारयन्तः पुरुषाः बहवः। विचारिणामिति पाठे तद्विचारकपुरुषमध्ये बहव एवं सन्तीत्यर्थः। एते तत्तन्मतस्थाः आसुरिपञ्चशिखादयः सांख्याः; पतञ्जलिहिरण्यगर्भादयो योगाः सर्वेश्वरं पुरुषं नेच्छन्ति। श्लोके अनया भंग्या आदौ सेश्वरतयैव तयोरुद्भव इति सूच्यते। समासेन तदुक्तसर्वचेतनाचेतनग्रहणेन व्यासः सर्वत्र पुरुषस्यैकस्यान्तर्यामित्वमुक्तवानित्यर्थः। पुरुषेण पुरुषसूक्तोक्तेनैकात्मकत्वमिति वा। इह गौतमीये न तादृशोक्तिरिति। तुल्यन्यायतया= वेदविरुद्धप्रमेयप्रमाणप्रदर्शकत्वस्य काणादाद्यविशिष्टतया काणादादिशब्दस्य गौतमक्रोडीकारार्थत्वात्। न खल्विति। न खलु व्यक्तिप्रयुक्तो निरासः, किंतु तद्व्यक्तिगतवेदविरुद्धार्थप्रतिपादकत्वरूपधर्मकृतः। अतः साम्यमेव। एवं तर्हि पक्षिलर्षिणा व्याख्यातं वैदिकैश्चाऽऽदृतमिति कथमित्यत्राह यद्यपीति। मानप्रमेदाज्ञाने मेयावधारणं न भवतीति तदर्थशास्त्रग्रहणाय तत्त्वजिज्ञासया च भ्रमन्तः बाह्यतर्कग्रन्थानां बाधकतया तान् अनाद्रियमाणाः सांख्यादि च निरीश्वरत्वमत्या वेदानां महर्षिसंवकृतत्वोक्त्या चोपेक्षमाणाः गौतमस्य स्वभावतो वैदिकत्वात् वेदप्रामाण्यस्य शब्दरूपाधिकप्रमाणस्य चात्र स्वीकारमभिलक्ष्यास्य पक्षान्तरत आधिक्यात एतज्जगृहुः। ततो व्याख्यानप्रवचनादिकं प्रवृत्तम्। तथाचेदं काशकुशावलम्बनमेव।

काशकुशावलम्बनन्यायेन पक्षान्तरादाधिक्यमस्य पक्षस्य—अथापि न तत् वेदान्तसंनिधौ। न खलु मशकाद् बलिष्ठोऽपि मातङ्गः कण्ठीरवमुपरुणद्धि।

"यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद।
कुतार्किकाज्ञाननिवृत्तिहेतुः करिष्यते तस्य मया निबन्धः॥"

इति वाक्यमक्षपादपक्षपातेनोक्तमित्यनास्थेयम्। उक्तं च पूर्वाचार्यैः—

"काणादमाक्षपादं वा कापिलं तन्त्रमेव वा। तन्त्राण्येतानि सर्वाणि न तन्त्राणतत्त्वनिर्णये॥"

इति॥ अत एव हि "एतेन शिष्टापरिग्रहा अपि व्याख्याताः" इति सूत्रे भाषितम्—
"एतेन = वेदापरिगृहीतसांख्यपक्षक्षपणेन, परिशिष्टाश्च वेदापरिगृहीताः कणभक्षाक्षपादक्षपणकभिक्षुपक्षाः क्षपिता वेदितव्याः" इति।

न च सूत्रनिबद्धं सर्वं विद्यास्थानमिति नियमो दृष्टः। न चैक एवैकस्य विद्यास्थानस्य

---

यथा हि कश्चित् प्रवाहे पतितस्तीरमारोढुमवलम्बनाकाङ्क्षी प्रकीर्णतृणकाष्ठादिकमुपलब्धमवलम्बनानर्हमित्युपेक्ष्य, दृढनिष्प्रकम्पवृक्षमूलादिरूपावलम्बनालाभेनागत्या तत्र प्ररूढं कुशराशिं काशराशिं कुशकाशसमुदायं वा रूढमूलमवलम्बते—तथा केचित् गौतमीयं जगृहुः। वृक्षमूलादिदृढावलम्बलाभे काशाद्युपेक्षैव यथा, तथेह वेदान्तव्यक्त प्रमाण तत्त्वलाभे एतदुपेक्षैवेति। **परमतभंगे** कुशकाशावलम्बनन्यायेन गौतमीयग्रह इति पक्षः कश्चिदुक्तः। तस्य गाथायां *குற்றமிலாவகை கூட்டனுமாம்* इति तात्पर्यान्तरकल्पनया विरोधपरिहारेण संग्रहणमिति तत्संग्रहः कृतः। विरुद्धांशत्यागपक्ष उपर्युक्तः। सर्वत्यागपक्षश्च। कुशकाशावलम्बनमित्यस्य कर्माङ्गतया कुशेषु ग्राह्येषु तदलाभे तदात्वे काशग्रहणस्य स्मृतिसंमतत्वात् तदनुसारेण कुशस्थाने काशग्रहणमित्यर्थोऽपि संभाव्यते। परंतु तदा कुशलाभे काशोपेक्षायाः शंकितृसंमतत्वं वाक्यावगतमिति तदा **अथापीत्यादिरीत्या** वाक्यप्रवृत्तिर्न स्वरसा। ननु गौतमः शिष्याणांअवेदान्तित्वात् वेदान्तप्रमेयरूपकुशग्रहणेनोपपादनाशक्त्या काणादप्रमेयरूपं काशं जग्राहेति चेत्-वेदान्तिनं शिष्यं कृत्वैव कस्मान्नोपदेशः कृत इति पृच्छामः। अत्र **काशकुशे**ति मूलपाठः **पक्षान्तरं** बाह्यतर्कादि। **अस्य पक्षस्य** गौतमीयमतस्य। **मशका**दिति। मशकादिर्घटि तत्समुदाये इत्यर्थः। ननु वेदान्तकार्यमेवैतत्कार्यमिति वार्तिककार **उद्योतकर** आहेति शंकां परिहरति **यदि**ति। बाह्यतर्कनिरसनस्यैव तेन क्रियमाणतया तत आधिक्यमात्रेण तत्र पक्षपातो वेदान्तापरिशीलनकृतः। इतरवेदान्तिमतानामनुपादेयत्वावधारणेन वा गौतमीयेऽभिमान इति। अनादरपक्षः सांप्रदायिक इत्याह **उक्तञ्चे**ति। **तन्त्राणि** शास्त्राणि। **न तन्त्राणि** न साधनानि। भिक्षुपदेन बौद्धग्रहणम्; न पाशुपतस्य; परमाणुकारणवादं श्वावराहकलहक्रमेणादृतवतां संभूयोत्थानेऽत्र प्रत्युत्तरमिति भाष्ये उपपादनात्। पाशुपतस्य प्रवृत्त्युपादानवादित्वात्। "सवादादक्षपादक्षपणककणभुग्भिक्षुपक्षेष्वणूनाम्" इति चाधि**करणसारावलिः** (1??)। ननु नेदं बहिष्कार्यं विद्यास्थानत्वात्; विद्यास्थानञ्चेदम् ,सूत्ररूपत्वादित्यत्राह **न चे**ति।

**सूत्रकृदित्यपि वा, ऋषिरित्येव वा, राजाज्ञा ; अन्यैरपि च तत्करणदर्शनात्—**

**प्रमाणशब्दस्य भावे करणे च व्युत्पत्तिः। एवं च प्रमैव प्रमाणमित्येके। प्रमाकरणमेवेत्यपरे नयोरन्यतरदित्यन्ये।**

---

नाख्यपातञ्जलब्राहस्पत्यादीनां सूत्ररूपत्वेऽपि विद्यास्थानत्वाभावात्। नन्वस्य विद्यास्थानत्वेनास्वीकारे न्यायविद्यास्थानमेव नास्तीति स्यात्। पूर्वं सूत्ररूपविद्यास्थानाभावादेव हि तेन सूत्राणि विरचितानि। तेन कृतत्वात् पश्चान्न कश्चिदप्यकरोदित्यत्राह **नचैक** इति। ग्रन्थान्तरानुपलम्भादेव नासीदिति भ्रमः। न च स **इतः** परं क्रियेत, ऋषेरभावादित्यत्रोत्तरम् **ऋषिरित्येव** वेति न च **सूत्रकाल** इति कश्चित् खण्डकालोऽस्ति। **अन्यैरपि**—ऋषिभिन्नैरपि, विद्यास्थानत्वाभिसंधिरहितैरपि वा। वामनालंकार—अलंकारसर्वस्व—प्राकृतसूत्र-बाह्यसूत्रादिकर्तारो ह्यन्य एव सांख्यसूत्रञ्चार्वाचीनमिति प्रसिद्धम्। **अन्यैरपि तत्करणदर्शना**दित्यस्य पूर्ववाक्य इव मूलकदम्बानन्तरस्थिते, **एतादृशानि वाक्यानि किं न सूत्राणि स्यु**रित्यत्राप्यन्वयो घटते। यदि गौतमो वेदांगविद्यास्थानविधानप्रवृत्तः स्यात्, तदा प्रथमाध्याये एवं सूत्राणि प्रणीतवान् स्यादिनि जिज्ञापयिषया च कर्तव्यानि सूत्राणि स्वयं कृत्वा दर्शयति **प्रमाणे**त्यादिना। प्रथमसूत्रं प्रमाण.प्रमेय.संशय.प्रयोजन.दृष्टान्त.सिद्धान्तावयव.तर्क.निर्णय.वाद.जल्प.वितण्डा.हेत्वाभासच्छल.जाति.निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इत्येतदनुसृत्य तल्लक्षणविभजनादौ वक्तव्यं परमत्राह। अत्र **यथावस्थितव्यवहारे**त्यारभ्यैवा पूर्वसूत्रलेखनम्। प्रमालक्षणकथनोपयोगितया तत्पूर्ववाक्यानि गौतमीय-प्रमाणशब्दार्थे स्थितविवादप्रदर्शकानि स्युः। एषामपि सूत्रत्वमेव पूर्वे मन्यन्ते। प्रथमरीतावेवमर्थः—प्रमाणशब्दस्य भावे करणे च ल्युट्सम्भवादर्थद्वयं भवितुमर्हति। तत्र सूत्रविवक्षितोऽर्थः क इति चेत्, प्रमैवेति एके। सकृत्प्रयुक्तस्य शब्दस्यार्थद्वयायोगात्॥ अत एव इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमिति प्रमाया एव प्रत्यक्षपदेन ग्रहणमिति। अपरे तु प्रमेत्येव सुवचे णकारस्याधिकस्य सूत्रे दर्शनात् करणपर्यन्तार्थ एवोचितः ; अनुमानोपमानशब्दा इत्याद्युपरितनशब्दस्वारस्याच्च। प्रत्यक्षे प्रमानिर्देशस्थले तु तत्करणमिति सूत्रे पूरणीयमित्याहुः। अन्ये तु प्रमाप्रमाकरणान्यतरदिति सौत्रप्रमाणशब्दस्यार्थोऽस्तु ; प्रत्यक्षसूत्रे प्रमोक्तेः उपरि करणोक्तेश्च सामञ्जस्य दित्याहुः। तत्रान्यतरत्वेन शब्दार्थत्वाभावात् तृतीयः पक्षः क्लिष्टः। दर्शनस्य माननिरूपणप्रधानतया प्रमाणरूपार्थग्रहणमेव समुचितम्। अथापि प्रमालक्षणे कथिते प्रमाकरणस्य तद्घटिततया सुकरं लक्षणमिति मत्वा प्रमालक्षणमुपरि ब्रूम इति। एषामपि सूत्रत्वमिति पक्षे एवमर्थः स्यात्—प्रमाणशब्दस्यैकस्यानेकार्थकल्पने गौरवात् लाघवात् प्रमैवार्थः। तत्करणे लक्षणया प्रयोग इत्येके। प्रमाशब्दस्य ज्ञाने रूढत्वात् अधिक णकारघटितसमुदायस्य ज्ञानकरण एव रूढिः ; प्रमायां प्रयोगो लक्षणयेत्यपरे। उभयत्र प्रयोगदर्शनादर्थद्वयकल्पने गौरवात् प्रमातत्करणान्यतरत्वावच्छिन्ने रूढिरस्तु, यथायथमर्थग्रहणमित्यन्ये। इदमयुक्तम्। हर्यादिपदानामपि सूर्यभेकाद्यन्यतमत्वेन रूढिप्रसंगात्॥

**यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमा[णम्] ।**

**यदज्ञानात् संसारः, यज्ज्ञानात् तन्निवृत्तिः, तत् प्रमेयम् ; मुमुक्षुभिः प्रकर्षेण मेयत्वात् । सामान्यतो वा प्रमाविषयः प्रमेयम् ।**

अन्यतमत्वेन शाब्दबोधे भानाभावात् तदयुक्तमिति चेत्—तुल्यमत्रापि । सर्वं नाम धातुजमिति व्युत्पत्तिपक्षस्यावयवविभागदुर्ग्रहत्वे त्यागेऽपि प्रपूर्वकधातूपरि किञ्चित्स्थितेः प्रमाणशब्दश्रवणे सुखं गृहीततया व्युत्पत्तिपक्ष एवास्मिन् शब्दे युक्तः । ततश्च सोपसर्गधात्वर्थे धातो रूढिः । प्रत्ययांशस्य पाणिन्यनुसारात् भावे करणे चार्थद्वये रूढिः । अतो यौगिकमेवेदं पदमिति । सन्न्यायदीपिकायां प्रमैवेत्यादिवाक्यासांगत्यमनुचिन्त्य तत्रत्य**प्रमाण**शब्दस्योद्भावनीयार्थकत्वं वर्णितमिव । अत्र तदुक्तेरपि न संगतिः ॥ एवं प्रमाणशब्दार्थशोधनं विधाय प्रकृते प्रमाकरणग्रहणमेवेत्यभिसंधाय तद्घटकप्रमामात्रलक्षणमाह **यथावस्थिते**ति । शुक्तौ इदं रजतमिति व्यवहारः रजतशब्दवाच्यरजतांशभूयस्त्वाश्रयवस्तुविषयको न भवतीति न यथावस्थितः । तत्र प्रवृत्तिरपि **न यथावस्थिता** न तादृशरजतविषयिणी, न च फलवती । एतज्जनकत्वाभावात् तस्मिन् ज्ञाने नातिव्याप्तिः । याथार्थ्यं प्रमात्वमिति दुर्वचमित्यादि स्वावसरे द्रष्टव्यम् । सूत्रे प्रमाणशब्दस्य प्रमाकरणार्थकत्वेऽपि प्रमालक्षणे कथिते तत्करणं प्रमाणमिति स्वयमेव ज्ञायेतेति भावः ।

सूत्रे प्रमाणप्रमेयेत्यत्र प्रमाणतद्विषयेति प्रमातद्विषयेति वा प्रयोगे कर्तुं शक्ये किमिति प्रमेयेति शब्दग्रहणमिति विमृश्य प्रमाविषयेत्येवार्थविवक्षायां तावदेवालम्, तदा प्रशब्दावगतस्य प्रकर्षस्य माधात्वर्थे ज्ञानेऽन्वये याथार्थ्यादिरूपं तद् भवेत् । प्रमेयपदस्यैव प्रयोगे तु मेयान्वयी कश्चित् प्रकर्षोऽपि विवक्षितः स्यात् । तेन मेयेषु केषाञ्चिदेवात्र ग्रहणमिति सिद्ध्यति । तेषां प्रकर्षश्च संसारहेत्वज्ञानप्रतियोगिज्ञानविषयत्वं ज्ञानद्वारा मोक्षहेतुत्वञ्च । इदमेवात्मादिकं द्वादशविधं प्रमेयं गौतमोक्तम् । तेनानुपयुक्तकीटादिव्युदासः । यद्यपि एतन्मेयज्ञाने मोक्षहेतुत्वरूपप्रकर्षसत्त्वात् प्रमापदेन प्रकृष्टं तद्ज्ञानं गृह्यतामिति शंक्येत-तथापि लोके प्रमादिशब्दानां ज्ञानगतयाथार्थ्यादिरूपप्रकर्षविषयतयैव रूढत्वात् तत एतदर्थग्रहणे क्लेश इति भावः । **यदज्ञानात् संसार** इत्यादिकं **वात्स्यायनभाष्ये**ऽप्युक्तम् । आत्मादिविषयेऽज्ञानसत्त्वादेव हि संसारः, तेन तद्विषयज्ञाने सति तन्निवृत्तिरिति सिद्धम् । अत्र मेये प्रकर्षान्वयः, प्रकर्षविशिष्टं मेयमिति ज्ञापनाय **प्रकर्षेण मेयत्वा**दित्युक्तम् ।

अत्र द्वादशविधप्रमेये **अर्थादि**शब्देन सर्ववस्तुक्रोडीकारसंभवात् प्रमेयपदेन सर्ववस्तुग्रहणमेवास्त्विति प्रसिद्धप्रमाविषयः प्रमेयमित्येत्राऽऽहत्याऽऽह **सामान्यत** इति । इदं हि प्रमाविषयत्वं यथार्थज्ञानविषयत्वं सर्वत्रेति **सामान्यत** इत्युक्तम् । अस्य प्रमेयस्य न्यायदर्शनोक्तद्वादशविधत्वरूपेण ज्ञानं संसारनिवृत्तावन्तरंगतयोपयुज्यते । **यज्ज्ञाना**दिति वाक्येनेदं ज्ञापितमेव । जगद्गतसर्ववस्तुग्रहणेन सांख्यकणादादिवत् विभागोऽपि कश्चित् वेदान्तिसिद्धान्तानुसारेण सुकर इति तथा विभागं दर्शयति

**तद् द्विविधं द्रव्याद्रव्यभेदात्। आगन्तुकधर्माश्रयो द्रव्यम्। अतथाभूतम् अद्रव्यम्।**

**(1) द्रव्यं द्वेधा जडमजडमिति। जडं च द्वेधा, प्रकृतिः काल इति। अजडं च तथा प्रत्यक् पराागिति। प्रत्यगपि द्विविधं जीव ईश्वर इति। परागपि तथा धर्मभूतज्ञानं नित्यविभूतिश्चेति॥ (2) अथवा द्रव्यं द्विविधमात्मानात्मभेदात्। (3) त्रेधा वा भोक्तृभोग्यनियन्तृश्रुत्यनुसारात्। (4) षोढा वा त्रिगुणकालजीवेश्वरशुद्धसत्त्वमतिभेदात्। अस्वयंप्रकाशं जडम्। स्वयंप्रकाशमजडम्। मिश्रसत्त्वाश्रयः प्रकृतिः। कालः क्षणलवादिः।**

तदिति। यद्यप्यत्र सूत्रजाले गौतमोक्तानां संशयादीनां लक्षणकथनमेव कृतमिति प्रमेयस्यापि तावन्मात्रकथनं विभागाद्यकरणमेव युक्तम्-अथाप्यास्तिकेन गौतमेनैव विभागे विवक्षणीयेऽन्यदेव तार्किकसंमतमाद्दतमिति बोधनार्थम् वेदान्तानुसारित्वसूचनाय तेनैवं सूत्रणीयमिति सूचनार्थञ्च विभागोक्तिः। संशयादौ गौतमविवक्षित एव विभागोऽस्तु, मा वा। प्रमाणविषये तर्कोक्तं विभागं वेदान्तिसंमतप्रमाणत्रयमात्रतात्पर्यकमेव न्यायभूषणकर्त्रादय एकदेशिन आहुः। प्रमेयविषये तु वैपरीत्यमधिकमिति तद्विभजनमावश्यकमिति भावः। एवं प्रमेयस्य विभागपक्ष इव एकमेव प्रमेयमिति अविभागपक्षोऽप्यस्तीति एतद्विभागावान्तरप्रपञ्चनानन्तरं सूत्रयिष्यति। तावत्पर्यन्तं प्रमेयनिरूपणम्। अथ संशयादि गौतमपरिगणितक्रमेण निरूपयिष्यते। एषां सूत्राणामर्थः एतद्ग्रन्थत एवोपरि ज्ञास्यते। किञ्चिदेवात्र निवेद्यते। गुणक्रियाश्रयत्वं द्रव्यत्वमिति तार्किकाः। लिंगसंख्यान्वयि द्रव्यमिति शाब्दिकाः। स्वसंमतमाह **आगन्तुके**ति। कादाचित्केत्यर्थः। स च धर्मः संयोगशब्दादिः ननु रूपादीनामुत्पद्यमानज्ञानविषयत्वात् इदमस्तीत्यतिव्याप्तिरिति चेत्—रूपादिगतं विषयत्वं न स्वरूपातिरिक्तम्। ज्ञानस्य कादाचित्कत्वेऽपि न रूपादिधर्मतेति न दोषः। गुणेष्वपि शक्तिस्वीकारेऽपि तस्याः धर्मिजननात् पश्चात् धर्मिसंबन्धित्वरूपमागन्तुकत्वं नास्ति। सत्त्वे तु शक्तिभिन्नेति धर्मविशेषणं कार्यम्। **अतथाभूतम्** आगन्तुकधर्मानाश्रयः। उपरि विभक्तविभागधारा। **जडा**दिशब्दार्थः सूत्रयिष्यते। **धर्मभूतज्ञान**मिति आत्मनिष्ठज्ञाने प्रयोगः। आत्मनोऽपि सिद्धान्ते ज्ञानरूपत्वात् तद्भिन्नत्वज्ञापनाय **धर्मभूते**ति। प्रकारान्तरेण द्रव्यस्य द्वैविध्यमाह **अथवे**ति। आत्मानात्मभेदाद्वा द्रव्यं द्विविधमित्यन्वयार्थः। तस्यैव त्रैविध्यं षाड्विध्यञ्चोपरि। भोक्ता भोग्यं प्रेरितारञ्च मत्वेति श्रुतिः। **त्रिगुणं** प्रकृतिः। **शुद्धसत्त्वं** नित्यविभूतिः परमपदम्। **मतिः** ज्ञानम्। सर्वमस्मत्पक्षे द्रव्यम्।

प्रमेयविभाग आसीत्। विभागवाक्योद्दिष्टानामपेक्षितानामर्थं दर्शयति **अस्वय**मित्यादिना। **जड**शब्दः अज्ञपरतया लोकप्रसिद्धः। स्वमते तु न कस्याप्यात्मनो जडत्वम्। अचेतनस्यापि कस्यचित् तन्नेष्यते। अतस्तदनुरूपं लक्षणम् अस्वयंप्रकाशत्वम्। स्वभिन्नज्ञाननिरपेक्षं प्रकाशमानत्वं स्वयंप्रकाशत्वम्; तदभावोऽयम्। स्वभिन्नज्ञानाधीनप्रकाशवत्त्वमिति निष्कर्षो न कार्यः। स्वयम्प्रकाशस्यात्मादेरपि धर्म-

व्यवहारहेतुः। स्वस्मै भासमानं प्रत्यक्। परस्मै भासमानं पराक्। परतन्त्रचेतनो जीवः। स्वतन्त्र ईश्वरः। अर्थप्रकाशो बुद्धिः (धर्मभूतज्ञानम्)। प्रकृतिव्यतिरिक्तत्वे सति सत्त्वाश्रयो नित्यविभूतिः। अद्रव्यमनेकधा सत्त्वशब्दादिवैचित्र्यात्॥ (5) एकं वेतरविशिष्टं प्राधान्यतः मेयं परं ब्रह्म। इतरेषां स्वनिष्ठब्रह्मैकनिष्ठत्वात्। तस्यैव च तथात्वेन मुमुक्षुभिः प्रकर्षेण मेयत्वश्रुतेः।

अव्यवस्थितव्यवहारकारणं ज्ञानं संशयः। अयथाव्यवहारकारणं ज्ञानं विपर्ययः। संस्कारमात्रजं ज्ञानं स्मृतिः। तद्व्यतिरिक्तं ज्ञानमनुभवः।

---

भूतज्ञानाधीनप्रकाशस्यापि सत्त्वात् जडत्वापत्तेः। **मिश्रे**ति। रज[स्तम]स्समानाधिकरणेत्यर्थः सत्त्ववत्त्वं परमपदेपि; तद्वारणाय मिश्रत्वम्। ननु लाघवात् रजोवत्त्वमेव लक्षणमस्तु॥ अस्तु; अथापि यथासंनिवेशे न वैयर्थ्यम्। स्वस्मै=स्वार्थम्। स्वगतफलहेतुप्रकाशवत्त्वं स्वप्रकाशजन्यफलाश्रयत्वं प्रत्यक्त्वम्। **परस्मै**—स्वभिन्नार्थम्। स्वभिन्नगतफलहेतुप्रकाशवत्त्वम्, स्वप्रकाशजन्यफलानाश्रयत्वं पराक्त्वम्। **परतन्त्रे**ति। ईश्वरोऽपि स्वेच्छया कदाचित् परतन्त्रो भवति। अतः स्वेच्छानधीनपारतन्त्र्याश्रयत्वं जीवत्वम्। लक्ष्मीगते भगवत्पारतन्त्र्ये लक्ष्म्यधीनत्वस्यापि सत्त्वात् न जीवत्वप्रसक्तिः। तादृशपरतन्त्र्याभावः ईश्वरत्वम् प्रकृतिव्यतिरिक्तत्वं कालादावपीति सत्त्वाश्रयत्वमप्युक्तम्। रजोगुणामिश्रसत्त्वाश्रय इति यावत्। **अनेकधे**ति। सर्वस्यास्य प्रमेयभेदस्य प्रपञ्चो **न्यायसिद्धाञ्जने**। संक्षेप एतद्ग्रन्थान्तेऽपि। स्वभिन्नसर्वनिरूपितप्राधान्याश्रयस्यैव प्रमेयपदार्थत्वे तदेकमेव परमात्मस्वरूपमिति न विभागस्य प्रसक्तिः, परन्तु प्राधान्यनिरूपकतया चिदचितां स्वीकारात् न तदन्यवस्त्वपलापः। सर्वनिरूपितस्वारसिकविशेष्यत्वाश्रयत्वं हि ब्रह्मण्येव। सर्वेषामपि वस्तूनां नित्यसूरिभिरन्यैश्च योगिप्रभृतिभिः तं प्रति विशेषणतया तस्यात्मतया विशेष्यतया च ग्रहणात्। तस्य धर्मित्वात्। वचसां वाच्यमुत्तममिति च स्मर्यते। प्रत्यक्षमपि तत्तदितरोभयविषयकं येषाम्, तैस्तस्य मुख्यविशेष्यतयैव ग्रहणम्। कारणत्वोपास्यत्वमोक्षप्रदत्वादिप्राधान्यमपि तस्यैव। सर्वमिदमुच्यते **एकं** वेत्यादिना। **स्वनिष्ठे**ति। आधाररहितेत्यर्थः। तस्याधारसत्त्वे हि तस्य मुख्यविशेष्यत्वादिरूपप्राधान्यभंगः स्यात्। **तस्यैव चे**ति। तमेव विदित्वाऽति मृत्युमेतीत्यादिः श्रुतिः।

एवं प्रमेयं निरूप्य संशयादिपदार्थान् सौत्रान् लक्षयति **अव्यवस्थिते**ति। संशयवत् विपर्ययस्यापि शिष्यादिनिष्ठस्य न्यायाधीनानुमानकार्यत्वात् गौतमत्यक्तमपि तमाह। **अयथे**ति। स्मृत्यनुभवावपि सूत्रकारानुक्तौ न्यूनताभंगाय स्वयं गृहीतौ ज्ञानस्य प्रमा अप्रमेति द्वेधाविभागे अप्रमापदेन संशयविपर्ययतर्कग्रहणे स्मृतिस्त्यक्तैव भवति। स्मृतावपि प्रमात्वादिस्वीकारे तु न स दोषः। तर्क उपरि वक्ष्यते। एवमपि प्रमाप्रमाविभागवत् स्मृत्यनुभवरूपविभागोऽप्यस्तीति ज्ञापनाय तदुक्तिः। सूत्रकारेण तु

पुरुषप्रवृत्त्युद्देश्यं प्रयोजनम् । व्याप्त्यधिगमस्थानं दृष्टान्तः । प्रामाणिकत्वाभिमतेः परिगृहीतोऽर्थः सिद्धान्तः । परार्थप्रमाणप्रयोगवाक्यावान्तरवाक्यानि अवयवाः । व्याप्याङ्गीकारेण व्यापकानिष्टप्रसञ्जनं तर्कः । तर्कानुगृहीतप्रमाणपूर्वकतत्त्वावधारणं निर्णयः । वीतरागकथा वादः । पक्षद्वयसाधनवती विजिगीषुकथा जल्पः । प्रतिपक्षस्थापनहीना तु सा वितण्डा हेत्वङ्गैकदेशविकलाः हेत्वाभासाः । अविवक्षितशब्दार्थारोपेण दूषणं छलम् । स्वव्यापिदूषणं जातिः । कथकाशक्तिलिङ्गं निग्रहस्थानम्—

इत्येतादृशानि वाक्यानि किं न सूत्राणि स्युः ? तदिह संक्षिप्तं लक्षणादिवाक्यं सूत्रम् ; तदुदाहरणादिवाक्यं तु भाष्यादिकमिति विभाव्य संतोष्टव्यम् ।

न च पूर्वप्राबल्यव्यवस्था, तत्पूर्वसंभवात् । वार्तिकस्य चानवतारप्रसङ्गात् । व्याकरणा-

---

प्रमाशब्दार्थे भ्रमस्वरूपविवेचने च तान्त्रिकाणामभिप्रायभेदसत्त्वेऽपि स्मृत्यनुभवविषये नैवं भेद इत्याशयेन तदुपेक्षा । केचित् साक्षात्कारमात्रमनुभवं मन्यन्ते । तद्वारणाय तदुक्तिरपि युक्तैव । न च प्रमानिर्णयोरैक्यं मन्तव्यम् । संशयपूर्वकं यत्रार्थावधारणं तत्रैव निर्णयपदस्य सूत्रकृता परिभाषितत्वात्, "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" इति । लोके तु संशयातिरिक्तं सर्वं निर्णय उच्यते अप्रमाभूतमपीति ध्येयम् सूत्रे संशयादिग्रहणं तेषां न्यायविस्तरप्रधानप्रतिपाद्यन्यायांगत्वादिति न्यायभाष्योक्तम् । तथापि स्मृत्यनुभवयोस्तत्र नोपयोगः । अथापि स्मृतेः प्रमान्तर्भावोऽस्ति न वेति प्रमाणनिरूपकेऽत्र शास्त्रे विचार्यतया तया तत्प्रत्यनीकोऽनुभवोऽपि सह विचारमर्हतीति भावः । **प्रामाणिकत्वाभिमतेरिति** शुद्धः पाठः । पञ्चमी । प्रामाणिकत्वबुद्ध्येत्यर्थः । तत्तन्मतस्थेन विप्रलम्भं विहाय यत् यत् प्रामाणिकत्वेनावगतम्, तस्य तस्य तत्तत्सिद्धान्तत्वमस्त्येव । वस्तुतो वाऽन्यथा वेत्यन्यदेतत् । **परेति** । परस्य निश्चयोत्पादनार्थप्रमाणं यत् प्रयोगवाक्यं प्रतिज्ञाहेत्वादिसमुदायरूपम्, तदन्तर्गतवाक्यानीत्यर्थः । अनुमोद्बोधकवाक्यस्य **प्रयोग** इति नाम । अत एव भाष्यादौ **प्रयोगश्चेत्यादि**लेखनम् । अनुमानाध्यायद्वितीये च **भट्टपादवा**क्यमुदाहरिष्यति, "अनुमोद्बोधकं वाक्यं प्रयोगः साधनञ्च तत्" इति । **व्याप्येति** । व्याप्यस्यांगीकारे= इदं वह्न्यभाववत् भवत्वितीच्छायां व्यापकस्य धूमाभावस्य तदनिष्टस्य **प्रसञ्जनम्**आपादनमारोपणं तर्कः । अंगीकृतस्य व्याप्यत्वम् आपाद्यस्य व्यापकत्वञ्चावश्यकम् । तदभावे तर्को न भवति । विजिगीषुकथा= तत्त्वप्रतिपत्तिकामनां विना विजयकामनया वादिप्रतिवादिभ्यां प्रयुज्यमानौ न्यायौ । **हेत्वंगेति** । **हेतोरङ्गम्** उपकारकं व्याप्तिः पक्षधर्मता च ; पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वानि हेत्वपेक्षितानि । तत्रैकांशलोपेऽपि हेत्वाभासतैव । लिंगं सूचकम् अनुमापकम् । एषां सूत्रत्वे किं न स्युः' इति बाधकाभाव उक्तः ; साधकमाह **संक्षिप्तमिति** । अत एव व्याख्यानसापेक्षमिति भावः **लक्षणादीति आदिपदेन विभाग**परीक्षणयोर्ग्रहणम् । लक्षितस्य विभागः, विभक्तानां लक्षणं ततो यथासंभवं परीक्षा च न्यायसूत्रे दृश्यते ।

दिष्वन्यथाकरणस्वीकाराच्च । न च जैमिनेः प्रमाणलक्षणादिष्वौदासीन्यमात्रेण गौतमोक्तेषु काश्यपोक्तेषु वा निश्शेषानुमतिसिद्धिरिति मन्तव्यम्, अन्यपरतया लोकसिद्धोपजीवनात्, परकल्पिततटाकोपजीवनवत् । कर्मकाण्डवृत्तिकारादयोऽपि हि लोकसिद्धां प्रमाणादिव्यवस्थां यथायथमन्यथा संजगृहुः । अतो यावदिह युक्तियुक्तं तावदुपजीव्यते ; न खलु तटाकस्थः पङ्कोऽप्यपङ्किलबुद्धिभिस्तदवगाहिभिरुपजीव्यते । अतः सिंहवनगुप्तिन्यायेन यथावस्थित-न्यायानुगृहीतं वेदम्, वेदानुमतं च न्यायमनुसरामः, न पुनर्न्यायमात्रम् ॥

---

पूर्वोत्तरयोः प्राबल्याव्यवस्थायां व्यवस्थापकं पूर्वत्वमिति शंकां परिहरति **नचे**ति । गौतमीयस्यापि पूर्वत्वमसिद्धमित्याह **तदि**ति । **वार्तिकस्ये**ति । सर्वत्र वार्तिकस्य सूत्रात् परत्वादिति भावः । **अन्यथा-करणे**ति । यथोत्तरं मुनीनां प्रामाण्यमित्युक्त्या पूर्वग्रन्थकर्तुरन्यथाकरणं हि ज्ञापितमिति । **काश्यपः** कणादः । **वे**त्यनेन गौतमोक्तमेवानुमतमिति किम्, कणादोक्तमेवेति किं न स्यादिति सूचितम् । शब्दस्यानुमानान्तर्गतत्वं कणादोक्तं जैमिनेरनिष्टमिति चेत्—वेदस्येश्वरप्रामाण्यात् तत्कृतत्वेन प्रामाण्यं गौतमोक्तमपि नेष्टमेव । अतो वैदिकमहाजनरूपलोकप्रसिद्धग्रहणमेवालम्, कर्मनिरूपणैदम्पर्यात् एतत्परि-शोधनस्य नावसर इति प्रमाणादिनिरूपणे औदासीन्यमिति । गौतमाद्यसंमतिमपि दर्शयति **कर्मे**ति । मीमांसाशास्त्रं त्रिकाण्डी । प्रथमः कर्मकाण्डः । उत्तरौ देवताकाण्डो ब्रह्मकाण्डश्च । तस्य **वृत्तिं** कृतवान् उपवर्षः । **आदि**ना शबरस्वाम्यादयो भाष्यादिकृतो गृह्यन्ते । **अन्यथा** । अर्थापत्ति—अनुपलब्धिरूपा-धिकप्रमाणगणनात् उभयसंमतप्रमाणेष्वपि स्वरूपविभागादौ वैलक्षण्यदर्शनाच्चेति भाव । **अपंकिल-बुद्धिभिः** अकलुषमतिभिः ; यथार्थबुद्धिभिः । **सिंहवने**ति । "सिंहैर्विहीनं तु वनं विनश्येत् सिंहा विनश्येयुः ऋते वनाच्च" इति ह्युक्तम् । न चान्योन्याश्रयः । परिमिते वने पूर्वकालीना सिंहसत्ता वनवृद्धि-हेतुः ; जाता वनवृद्धिः उत्तरकालीनसिंहनिश्शंकसत्ताहेतुरिति । तथेह तर्कनिरपेक्षसुनिश्चितवेदवाक्या-र्थाविरोधितर्कसहकारेण विवादविषयवेदवाक्यार्थनिश्चय इति न दोषः । **न पुनर्न्यायमात्र**मिति । **मात्र**शब्दः कार्त्स्न्ये । यथा पक्षसत्त्वसपक्षसत्त्वाद्यंगसत्तामतावपि मित्रातनयश्यामत्वादौ प्रत्यक्षबाधित-त्वादिबलात् न्यायत्वास्वीकारः, तथा वेदबाधितत्वेऽपि न्यायत्वं न भवतीति परिशिष्टस्यैव न्यायतेति भाव । न च 'न पुनर्न्यायमात्रमिति'वत् न पुनर्वेदमात्रमित्यपि स्यात् ; तथात्र कतिपयवेदाप्रामाण्यापत्तिरिति वाच्यम् ; तथामतिव्युदासायैवैतल्लेखनात् । वेदत्यागस्तु न ; न्यायाननुगृहीतो यो वेदार्थस्तत्त्याग इति तादृशार्थविशिष्टत्वाकारेणास्तु वेदत्याग इति ननु जैमिनीयानां न्यायविस्तरोपजीवित्वमेवास्मत्संप्रदा-यानुमतम् ; श्रीविष्णुचित्तार्यैः, "अनुमानं ज्ञातसंबन्धस्यैकदेशदर्शनादेकदेशान्तरे असंनिकृष्टेऽर्थे बुद्धिः" इत्यनुमाननिरूपकं शाबरभाष्यमुपादाय, 'अग्निधूमयोः संबन्धः=व्याप्तिः ज्ञातो येन पुरुषेण तस्य, तत्रैकस्य धूमस्योक्तसंबन्धस्थानभूतस्येन्द्रियसंनिकृष्टस्य दर्शनात् तत्संबन्धाश्रयेऽन्यस्मिन् असंनि-

यत्तु "ज्ञानसंबन्धस्य" इत्यादिग्रन्थमुपादायानन्तरमुक्तं श्रीविष्णुचित्तैः. "व्याप्तिग्रहगर्भानुभवोऽनुमानमित्यर्थः। न्यायशास्त्रे तु तद्विशेषनिर्णय." इति— तदपि तन्निरूपणाधिकृतविद्यास्थानख्यापनपरम्। प्रमाणादिसूत्रमुपादाय व्याचक्षाणैस्तत्पक्षनिष्ठैरपि पूर्वैः कानिचित् सूत्राणि निराकृतानि। तन्न्यायस्य नास्मासु सर्पमारः ; नापि दण्डनिवारणम्॥ ततश्च, यथालोकं यथावेदं लौकिके वैदिकेऽपि च। यो वक्ता स परिग्राह्यः प्राक्तनोऽद्यतनोऽपि वा॥ विवक्षितार्थवैशद्यं व्याकुलत्वमपूर्णता। उल्लोकतेत्यमी दोषा गुणकोटौ जडैः कृताः॥

---

कृष्टेऽग्नौ बुद्धिर्जायमाना अनुमानशब्दवाच्या इत्यर्थकत्वात् तस्य, 'कथमग्निज्ञानमनुमानं स्यात्। अनुमितिर्हि सा' इत्यालोच्य व्याप्तिगर्भानुभवोऽनुमानमिति तात्पर्यं वर्णितम्। अयं भावः—अग्निधूमयोः संबन्धो व्याप्तिः, तद्विशिष्टधूमे प्रागनुभूते सति धूमदर्शनावसरे एकदेशान्तराग्निव्याप्तिविशिष्टधूमस्मरणादि जायते। तदेवानुमितिकरणत्वादनुमानमिति'। एतत्संबन्धस्वरूपादिज्ञानं किंमूलकमित्यत्रोक्तम्, न्यायशास्त्रात् तन्निर्णयः इति। तेन गौतमीयोपजीवित्वमेष्टव्यमित्याशंकामनुवदति यत्त्विति। परिहरति तदपीति। मीमांसाशास्त्रं न्यायानां लक्ष्येषु प्रवर्तकम्; न्यायस्वरूपलक्षणादिनिर्धारणं न्यायशास्त्रादिति सत्यम्। तावता गौतमीयमेव तदिति नाभिमतमिति। तथाच वृत्तिकारादिभिः स्वयमन्यथा प्रमाणादि-निरूपणात् निश्शेषानुमत्यभावे सिद्धे ग्राह्यांशाल्पतया तद्बहिष्करणम् अन्यादृशस्य कस्यचित् न्यायविस्तरत्वेन ग्रहणञ्च प्राच्यसंमतमिति भावः। तदनुसारिभिरेव तस्मिन् आंशिकत्यागे क्रियमाणे अननुसारिभिः कृत्स्नत्यागे को दोष इत्याशयेनाऽऽह प्रमाणादीति। भासर्वज्ञः न्यायसार-तद्व्याख्यानभूषणग्रन्थ-कारो यथावदिमानि सूत्राणि गृहीत्वा व्याकुर्वन् न्यायसार इति नामानुरोधेन असारत्वेन बहूपेक्ष्य सारं दर्शयन्निव प्रमाणचातुर्विध्ये उपमानमतिरिक्तप्रमाणं निराचकार। प्रमेयविभागे, 'तदत्यन्तविमोक्षोऽपवर्गः' इति दुःखाभावमात्रं मोक्ष इति पक्षमुपेक्ष्य वेदान्तप्रामाण्यात् नित्यसुखाभिव्यक्तिमेव मोक्षमाचष्ट। संशयकारणपरे समानानेकसूत्रे तत्कारणपाञ्चविध्यं सौत्रं भाष्याभिमतं वार्तिककारो नानुमेने। एवमादि द्रष्टव्यम्। उपपत्तिविरुद्धत्वात् त्याग इति चेत्, विरुद्धं त्याज्यमिति न्यायः स्थितः किमस्मिन् काले न जीवति। किं सर्पदष्टः ? किंवा स्थितोऽप्यस्माभिर्न ग्राह्य इति राजशासनमित्याह तन्न्यायस्येति। सर्पमारः सर्पेण मारितत्वम्। दण्डो राजशासनम्। अतो ग्रन्थान्तरसंभवात् गौतमीयमुपेक्ष्यमिति पक्षमुपसंहरति ततश्चेति। वक्तेति पाठः साधुः ; न वेत्तेति। वेदितेति हि तदा भाव्यम्। लौकिके यथालोकं वक्ता वैदिके यथावेदं वक्ता च ग्राह्यः। अयथावक्ता तु अतिप्राक्तनोऽप्यग्राह्य एव। गौतमस्तु अनुभवविदूर—अवयवातिरिक्तावयवितद्गुणाद्यपूर्वानेकोत्पत्तिवादी वैदिकप्रकृत्यादितत्त्वस्थितित्यागी चेति कथं ग्राह्यः। नन्वद्यतनानामीदृशसूत्रनिर्माणसामर्थ्याभावादुपेक्ष्यैव। भवत्कृतानि वाक्यानि हि विशदार्थत्वात् अव्याकुलत्वात् पूर्णत्वादिमत्त्वाच्च न सूत्राणि भवितुमर्हन्तीत्यत्राह विवक्षितेति। उल्लो-

भगवन्नाथमुनिभिर्न्यायतत्त्वसमाह्वया । अवधीर्याक्षपादादि न्यबन्धि न्यायपद्धतिः ॥
तदर्वाग्भिस्तथाऽऽचार्यैर्यथेष्टं मतशास्थितैः । प्रणिन्ये बहुधा तैस्तैः प्रमाणादिविचारणा ॥

तदयं भाष्यस्वरससिद्धो बहिष्कारपक्षः ॥

(गौतमसूत्रस्वीकारपक्षः)

अङ्गीकाराकाङ्क्षिणामक्षपादीयमप्यस्मदुक्तैकान्ततया स्थास्यति; तथैव स्थापयिष्यामः । अतो वयमपि महतामयुक्तार्थतात्पर्यकल्पनेन नापराध्येम । न्यूनाधिकविरुद्धव्यपदेशादी-

---

कृतेति । लोके यथाविधः पदानां प्रयोगः तथा चेत् सूत्रत्वं न भवतीत्येतत् शबरस्वामिनाऽपि निराकृतम्, यदाह भाष्योपक्रम एव, "लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि सति संभवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम्; नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः" इति । तर्हि कस्मात् भवदीयैरेतावत् न्यायदर्शनं न न्यबन्धीत्यत्र न्यबन्ध्येवेत्याह भगवदिति । न्यायतत्त्वमिति शास्त्रमिति च नामकरणात् तस्य विद्यास्थानत्वमभिमतम् । आक्षपादं गौतमीयम् । अत एव भाष्यकारविष्णुचित्तादीनां गौतमीयेऽत्र अविश्वाम इति । तदिति । यथेष्टम्—गौतमीयं स्वकीयपरोक्तं चानुसृत्य । गौतमीये विशेषत आदराभावात् न्यायतत्त्वस्य च ग्रन्थस्य समग्रस्यालाभात् श्रीयामुनभाष्यकारश्रीसूक्तिपरिशीलनेन प्रमाण. प्रमेयनिष्कृष्टवद्भिः विष्णुचित्त,वरदविष्णुमिश्र. वरदनारायणभट्ट-श्रीभट्टपादादिभिः सुबहु भणितम् । न तु न्यायदर्शनमन्यथा व्याख्यातम् । अतो बहिष्कार एवेष्ट इति ॥॥

ननु 'तदधीनत्वादर्थवत्' इत्यादिसूत्रे सांख्योक्तप्रकृत्यादिविषये संमतिप्रदर्शनात्, 'आत्म-प्रमाणान्येतानि न हन्तव्यानि हेतुभिः" इति भारतोक्त्या सांख्यादौ आदरस्याप्याविष्कारात् तुल्यन्यायेन गौतमीयस्यापि बाह्यवत् बहिष्कार्यत्वं न भाष्यकारेष्टम् । अतो विरुद्धार्थकानां सूत्राणामर्थान्तरवर्णनपरिश्रम-मसहमानानां भ्रान्तिहेतुत्वभिया तदुपेक्षायामपि निर्वहणनिपुणाः अन्यथा व्याख्यायाऽऽदर्तुमर्हन्ति इति शंकायां तदभ्युपेत्य बहिष्कारपक्षं त्यजति अंगीकारेति । परमतभंगे बहिष्कारपक्ष एवान्ते उक्तः ; तस्य भंगप्रधानत्वात् । अत्र तु तत्र प्रथमन उक्तः पक्षोऽन्ते वक्ष्यते न्यायपरिशुद्धिरिति नामानुरोधेन । तदंगीकारे तदुक्तरीत्यैवास्मन्मतपरिष्कार इति न मन्तव्यम् । किंतु अस्मन्मताविरोधेन तत्स्वीकरणमि-त्याह अस्मदुक्तैकान्ततयेति । पूर्वं बहुसूत्रप्रणयनादिना दर्शितमस्मन्मतमेव तद्ग्रन्थार्थतया निर्वहणीयमिति भावः । निर्वाहप्रकारस्यान्यैरदर्शितत्वेऽपि वयं तदादृत्योपपादयाम इत्याह तथैवेति । वयमपीति अपिशब्दः तद्दर्शनव्याख्यातृपक्षिलादिसमुच्चये । अयुक्तेत्यत्र युक्तेति केचित् पठन्ति । उक्तेति पाठोऽपि क्वचित् । अस्मदुक्तेति पदोक्तम् उक्तपदग्राह्यम् । अयुक्तेति पाठे यथा पक्षिलादीनामयुक्तार्थकल्प-नमपराधः, न तथाऽस्माकम् । अस्मदुक्तस्यायुक्तत्वाभावादित्यर्थः । पाठान्तरे युक्तार्थ एव तात्पर्यकल्प-नात् महद्विषये नापराधः, किन्तु गौरवितत्वमेवेति भावः । अपिशब्दस्वारस्यम् अयुक्तेति पाठे ।

नामलक्षणलक्षणोक्तीनां चाध्याहार–आन्यपर्याभ्यां तद्भक्तैरपि निर्वाहात् ।

तथाऽस्मिन् यत्र स्फुटः श्रुतिस्मृतिशारीरकविरोधः, स उद्देशतो निरुह्यते—

यत्तावत् सूत्रितं प्रथमाध्याये—"घ्राणरसनचक्षुस्त्वक्छ्रोत्राणीन्द्रियाणि भूतेभ्यः" इति ;

---

**अयुक्ते**त्यस्य स्वरसप्रतीतादन्येत्यर्थः । तादृशार्थकल्पनं तद्व्याख्यातृष्वपि बहुत्रास्तीत्याह **न्यूने**ति । "युगपद्ज्ञानानुत्पत्तिमनसो लिंगम्" (1-1-16) इति सूत्रे एकहेतुमात्रकथनं न्यूनम्—अतो वात्स्यायनः, स्मृत्यनुमानागमेत्यादिना हेत्वन्तराणि प्रदर्श्य तेषु सत्सु इयमपि इत्याह स्म । प्रत्यक्षलक्षणसूत्रे **अव्यपदेश्य**मित्यादीनां लक्षणानिविष्टतयाऽधिकत्वमित्यतः तात्पर्यान्तरमाह । यथा न्यूनव्यपदेशोऽधिकव्यपदेशश्च, तथा विरुद्धव्यपदेशोऽपि । यथा—'साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्' इति साध्येन=पक्षेण साधर्म्यात्=पक्षवत् हेतुमत्त्वात् हेतुसत्त्वे साध्यसत्त्वं यत्र, सोऽन्वयदृष्टान्त इत्युक्त्वा व्यतिरेकोदाहरणमुच्यते, "तद्विपर्ययाद्वा विपरीतम्" (1-1-36) इति । हेत्वभावे साध्याभावो यत्र, स व्यतिरेकदृष्टान्तः इति । अत्र साध्याभावे हेत्वभाव इति वक्तव्ये विपरीतमुक्तम् । अतो विरुद्धव्यपदेशः । अस्य सूत्रस्यायमेवार्थ इति (2-2-25) सूत्रादवगम्यते । तत्र हि, नित्यः शब्दः अस्पर्शत्वादिति पूर्वपक्षे, न तत्रान्वयव्याप्तिः, अस्पर्शत्वमाकाश इव कर्मण्यपि ; न तत्र नित्यत्वमिति, "न कर्मानित्यत्वात्' इत्युक्त्वा, अथ नापि व्यतिरेकव्याप्तिः अस्पर्शत्वं परमाणौ नास्ति ; तत्र न नित्यत्वाभाव इति "नाणुनित्यत्वात्" इत्याह । हेत्वभावे साध्याभाव इत्येवात्राभिमतम् । इदञ्च लोकविरुद्धम् । अथापि साध्यसमव्याप्तहेत्वभिप्रायेणैवमुक्तमिति कथञ्चिन्निर्वाहः क्रियते । **व्यपदेशादी**ति **आदि**पदेन अव्यपदेशः=वक्तव्यानुक्तिर्गृह्यते । यथा प्रथमसूत्रे संशयप्रयोजनेति संशयनिर्देशः कृतः । संशयपूर्वेणैव हेतुना साध्यसाधने स्वयंप्रवृत्तेः । तद्वत् शिष्यादेर्विपर्ययबुद्धौ सत्यां तन्निरासार्थमपि न्यायप्रयोगसंभवात् विपर्ययोऽपि वक्तव्यः । एवंसति तदनुक्तिः सोढव्या । एवं द्वितीयद्वितीये शब्दानित्यत्वविचारे तीव्रत्वमन्दत्वे शब्दस्य स्वाभाविके, न त्वौपाधिके इति स्थापयन् भाष्यकारः, "कस्मात्पुनः सूत्रकारस्यास्मिन्नर्थे सूत्रं न श्रूयते" इति पृष्ट्वा प्रत्याह, "शीलमिदं भगवतः सूत्रकारस्य, बहुष्वधिकरणेषु ....न व्यवस्थापयति । शास्त्रसिद्धान्तात् (न्यायात्=अनुमानात्) तत्त्वावधारणं प्रतिपत्तुमर्हतीति मन्यते" इति । अतोऽनुक्तिर्बहुत्र अलक्षणलक्षणोक्तिश्च—अनुमानवैलक्षण्यमुपमाने विवक्षन् आह "तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः" इति । अनुमानेऽपि 'तथा चायं तस्मात्तथा' इत्युपसंहार ईदृशोऽस्ति । अतो नेदं व्यावर्तकलक्षणम् । अतो व्याप्तिज्ञानानधीनत्वादिरूपविशेष एव वक्तव्यः । एवं पञ्चमाध्याये जातिप्रभेदादीनां लक्षणं कथ्यमानमव्याप्त्यादिदोषदुष्टमिति बहु प्रकारान्तरेण परिष्कुर्वन्ति । तस्मात् तात्पर्यान्तरकल्पनं तेषामपीष्टमिति भावः । **उद्देशतः** । "एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया" इत्यत्रेवोद्देशः=बहुषु कतिपयमात्रस्योद्धृत्य निर्देशः । अवशिष्टमप्येवं द्रष्टव्यमिति भावः । **ताव**दित्यारम्भे । इन्द्रियाण्येकादशेति

**अत्र ज्ञानेन्द्रियपञ्चकोपादानं नेन्द्रियान्तरप्रतिषेधार्थम् ; मनसः पृथक्प्रमेयतया उद्देशात् अनन्तरमेव च, "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इति लक्षणकरणात् । अभ्युपगमसिद्धान्तन्यायेन च तदिन्द्रिय(त्व)(त्वा?)परीक्षणात् ।**

---

वेदान्तसिद्धान्तविरुद्धेयं न्यूनोक्तिः । इन्द्रियेषु पञ्चता न गौतमस्यापीष्टा, मनसोऽपि प्रमेयविभागसूत्रे (1-1-9) प्रागुक्ते कथनात् । पञ्चमात्रकथनं पञ्चभूतोत्पन्नत्वमेषां यथाक्रममिति वैलक्षण्यप्रदर्शनाय । **अनन्तर**मिति । द्वादशं तत् सूत्रम्, षोडशमिदम् । मनः किञ्चिदस्तीत्यस्य लिंगं साधकहेतुः युगपद्ज्ञानानुत्पत्तिः । घ्राणदर्शनश्रवणरसनस्पर्शनरूपाणि तत्तद्विषयकाणि पञ्चेन्द्रियजन्यानि ज्ञानानि युगपन्नोत्पद्यन्ते । आत्मेन्द्रियसंनिकर्ष:—अर्थेन्द्रियसंनिकर्षरूपविशेषकारणयौगपद्यसत्त्वात् कथं नोत्पद्यन्ते ; कारणान्तराभावादिति वक्तव्यम् । तत् मनः । तदभ्युपगमे च मनस इन्द्रियैः संयोगोऽपि कारणमिति अणुभूतस्य मनसो यदिन्द्रियसंयोगो यदा, तदा तदिन्द्रियकार्यं ज्ञानम्, युगपदनेकेन्द्रियसंयोगाभावान्न सर्वज्ञानमिति मनः साध्यते । ननु पदार्थानां परीक्षायाः द्वितीयप्रभृत्येव वर्तनात् कथं प्रथमाध्याये मनस्साधकहेतुप्रदर्शनमित्यत्राह **लक्षणकरणा**दिति । इदं सूत्रं सूत्रान्तराणीव लक्षणपरमेव, न परीक्षणपरमिति भाव. । तथात्र **लिंग**मेवास्य लक्षणमित्यर्थोऽस्तु । इतरसर्वकारणसमवधानकालिक-चाक्षुषोत्पत्तिकालिक-त्वाचादिप्रत्यक्षाभावप्रयोजकाभावप्रतियोगिसंयोगाश्रयत्वं वा सर्वकारणसमवधानकालिकत्वाचाद्यभावकालिक- चाक्षुषोत्पत्तिहेतुसंयोगाश्रयत्वं वा तल्लक्षणमिति भावः । अर्थात् परीक्षणमपि सिद्धम् । एवमुद्देशलक्षणपरीक्षणेषु सत्सु कथं मनसोऽपलापः ॥ न वयं तदपलपामः ; तस्येन्द्रियत्वं न गौतमेष्टमिति ब्रूमः । उपरि तृतीयद्वितीये मनस एकत्वाणुत्वयोरेव स्थापनात् इन्द्रियत्वानुक्तेरित्यत्राह **अभ्युपगमे**ति । मनस इन्द्रियत्व समानतन्त्रसिद्धमागमसिद्धञ्चेति तदभ्युपगम्य तदितरमात्रविचार इति तद्व्याख्यातृभिरप्युक्तमिति भावः । **न्यायसूत्रवृत्तिः सन्न्यायदीपिका**यामभ्युपात्ता । मनस इन्द्रियत्वं स्वयमसूत्रितमप्यभ्युपगतमिति भावः । न्यायभाष्य एव(1-1-4) 'मनसश्चेन्द्रियभावान्न वाच्यं लक्षणान्तरम् । तन्त्रान्तरसमाचाराच्चैतत् प्रत्येतव्यम्' इति भाषितमस्ति । एवञ्च **तदिन्द्रियत्वपरीक्षणा**दिति पाठो न युक्तः । परीक्षितत्वे, असूत्रितस्य परोक्तस्याभ्युपगम इति कथम् । तदिन्द्रियपरीक्षणादिति पाठे तु तदिन्द्रियस्याणुत्वैकत्वरूपविशेषान्तरपरीक्षणादित्यर्थो वर्णनीयः । तदा तदिन्द्रियेति पदं व्यर्थम् ; **उद्देशात् लक्षणकरणादि**त्यत्रैवात्रापि तस्य सिद्धेः । **तदिन्द्रियत्वापरीक्षणा**दिति नञ्घटितं वा पठनीयम् अपरीक्षणञ्च परकृतपरीक्षाप्रकारस्वीकारादिति भावः । अथवा इन्द्रियलक्षणं प्रत्यक्षकरणत्वम् । तत् लक्षणसूत्रे मनसोऽप्युक्तप्रायम् । तदभ्युपगम्य अपरीक्ष्य युगपदनेकप्रत्यक्षकरणत्वं वा एकप्रत्यक्षकरणत्वं वेत्यादितद्विशेषपरीक्षणादित्यर्थोऽस्तु ॥ **अभ्युपगमसिद्धान्तः** 'अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः' इति सूत्रोक्तः । अत्रापरीक्षिताभ्युपगम इत्येवालम् । विशेषपरीक्षणात् एतदपरीक्षणात् अभ्युपगमो

अनश्वोक्तेन समानयोगक्षेमयुक्तिप्रमाणकः कर्मेन्द्रियवर्ग उपलक्षणीयः। "प्रवृत्ति-र्वाग्बुद्धिशरीरारम्भः" इति सूत्रे वाचः कण्ठोक्तेः पाण्यादिचतुष्टयस्य शारीरव्यापारकरणतया सूचनादिति ॥ शारीरके तु, "सप्त गतेर्विशेषितत्वाच्च" इति पूर्वपक्षमुपक्षिप्यासाधयच्च हस्तादीनामिन्द्रियत्वं भगवान् बादरायणः—"हस्तादयस्तु स्थितेऽतो नैवम्" इति।

"भूतेभ्यः" इति च नोपादानाभिप्रायम्, अहंकारोपात्तानामाप्यायकभूतविवक्षयाऽपि तदुपपत्तेः तथा च वेदार्थसंग्रहे, "एवमाहंकारिकाणामिन्द्रियाणां भूतैश्चाप्यायनं महाभारत उच्यते" इति समाधानम् ऋष्यन्तरवाक्यस्यापि समानन्यायस्य निर्वाहार्थम्। परस्परविरुद्धप्रमाणवाक्येषु तात्पर्यविशेषपरिकल्पनया द्वेषु परिहार एव हि पण्डितकृत्यम्। अनित्यमनोवादिभिरपि हि "अन्नमयं हि सोम्य मनः"—इति श्रुतिराप्यायनपरतयैव योज्या।

ज्ञायन इति भावः। अयमस्य सूत्रस्य वार्तिकादिसंमतोऽर्थः। भाष्यकारस्त्वेवमाह—परीक्षायां कृतायामनभ्युपगन्तव्यमेव यद् भवेत्, तस्यापरीक्षयाऽभ्युपगमेन, वस्तु स्थितं कृत्वा तत्र विशेषविचारः। यथा अद्रव्येऽपि शब्दे द्रव्यत्वमारोप्य नित्यानित्यविचार इति। अयमर्थो न प्रकृतोपयोगी।

अतश्चेति। मन इन्द्रियस्योपलक्षणीयत्वादित्यर्थः। समानेति। मनसि युक्तेः प्रमाणवचनस्य च योगः लाभः, क्षेमः अप्रकम्प्यता च यथा, तथा कर्मेन्द्रियवर्गेऽपि तयोस्ताविति। ज्ञानेच्छाकृत्यादिकं करणजन्यं क्रियात्वादितिवत् वचनादिक्रिया करणजन्या क्रियात्वादित्यनुमानम्; इन्द्रियाणि दशैकञ्चेत्यादि प्रमाणम्। ननु गौतमेन मनसो निर्दिष्टत्वात् पाण्यादेस्तथानिर्देशाभावाद्वैषम्यमित्यत्र, एकस्य कर्मेन्द्रियस्य निर्देशं दर्शयति वागिति। प्रमेयविभागसूत्रोक्ता प्रवृत्तिः मनोवाक्कायव्यापार इत्यर्थः। अत्र कायातिरिक्ततया वाग्ग्रहणात् इन्द्रियमेव तत्। समानन्यायात् हस्तादीन्द्रियाभ्युपगमोऽपि। शरीरेति। पाण्यादीन्द्रियव्यापारः शरीरगतव्यापारकारणमित्यर्थः। ननु 'मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति' इति वेदान्तसिद्धान्तेऽपि इन्द्रियषट्कमेवेत्यत्राह शारीरकेत्विति। विचार्य निर्धारितत्वात् तद्विरोधो न शंक्य इति भावः। तुशब्देन इन्द्रियषट्कपक्षः पूर्वपक्षतयाऽपि नाऽऽदृत इति ज्ञाप्यते। सप्तेति पृथक्पदम्। इन्द्रियाणि सप्तेति पूर्वपक्षः। पञ्चेन्द्रियाणि मनो बुद्धिश्चेति सप्त।

इन्द्रियपञ्चकरूपो विरोधः परिहृतः तत्रैव सूत्रे भूतेभ्य इति भूतोपादानकत्वमिन्द्रियाणां गौतमोक्तमाहङ्कारिकत्वसिद्धान्तविरुद्धमित्यत्राह भूतेभ्य इति। अहंकारोपात्तानाम्=सात्त्विकाहंकारोपादानकानामित्यर्थः इति समाधानमित्येकं वाक्यम्। न तु पृथग्वाक्यत्वकल्पनया क्लिष्टार्थः कार्यः। ऋष्यन्तरवाक्यस्यापि। ऋषित्वाविशेषात् व्यासवाक्यस्येव गौतमवाक्यस्यापि। ननु जन्यत्वरूपस्वरसार्थत्यागो न युक्त इति चेत्, तर्हि व्यासस्य श्रुतिविरुद्धवादित्वप्रसंगः। भूतेभ्य इत्यादिपञ्चम्याः नोपादानार्थकत्वनैयत्यम्। यत्र विकारार्थको मयट्, तत्रापि आप्यायनरूपामुख्यार्थः सर्वस्वीकृत इत्याह

तुल्यमिदमन्यत्रापीति ॥

यत्तु—"बाधनालक्षणं दुःखम्", "तदत्यन्तविमोक्षोऽपवर्गः" इति. तत्र दुःखात्यन्तनिवृत्तेरपवर्गत्वं स्वीकृतम् । न च तत्रानन्दः श्रौतः कण्ठोक्त्या प्रतिषिध्यते । तदभिप्राये चानन्यथासिद्धं किमपि न लिङ्गं पश्यामः । अत एव हि भूषणमते नित्यसुखसंवेदनसंबन्धसिद्धिरपवर्गे साधिता । एतेन "तस्मात्सर्वदुःखविमोक्षोऽपवर्गः" इति चतुर्थाध्यायवाक्यमपि निर्व्यूढम्, तत्राप्यानन्दनिषेधाभावात् ॥

---

अनित्येति । अपिशब्दः अन्येषामपि समुच्चये । अनित्यमनोवादिनो वेदान्तिनः नित्यमनोवादिनस्तार्किकादय उभयेऽपि अन्नमयमित्यत्र विकारार्थकमयटोऽपि आप्यायने तात्पर्यं वर्णयन्ति । अनित्यत्वेऽपि अन्नजन्यत्वाभावात्; नित्यत्वे च जन्यत्वस्यैवासंभवात् । एवञ्चानित्यमन इत्यत्र नित्यमन इति पाठेऽपि न दोषः । अपिशब्दादुभयसमुच्चयावगतेः ।

प्रथमाध्याय एव विरोधान्तरं परिहरति यत्त्विति । प्रमेयसूत्रपरिगणितद्वादशप्रमेयान्तर्गतं दुःखरूपप्रमेयं न दुःखात्मकगुणमात्रम्, किंतु सांसारिकसर्वत्रस्त्वपि । तस्य दुःखत्वञ्च बाधकत्वं दुःखहेतुत्वं प्रतिकूलवेदनाहेतुत्वम् । हेतुत्वञ्च जनकत्वप्रयोजकत्वसाधारणं साक्षाद्दुःखेऽन्यत्र चाक्षतमिति । एवं दुःखशब्दार्थमुक्त्वा तेन दुःखेनात्यन्तं विमुक्त्वमेवापवर्ग इति मोक्षलक्षणमाचष्टे । तत् वेदान्तविरुद्धम्; परिपूर्णब्रह्मानुभवरूपानन्दस्यैवास्मन्मते मोक्षत्वादिति चेत्—तन्न; अपवर्गपदमोक्षपदयोर्वाच्यार्थवर्णने गौतमतात्पर्यात् । तदविनाभूतानन्दांशस्तु शब्दार्थत्वाभावात् मतभेदेन भिन्नत्वाच्च तत्रास्यौदासीन्यमिति भावः । श्रौत इति । श्रुतिसिद्धः कथं प्रतिषिद्ध्यत इति भावः । श्रौत इति पदप्रयोगः जीवात्मानुभवमात्रोपगन्तृभूषणादिमतस्याप्यसंमतत्वज्ञप्तये । तदभिप्राये=प्रतिषेधेऽपि तात्पर्ये । भूषणमत इति । गौतमानुयायिना हि भासर्वज्ञेन स्वात्मानुभवरूपत्वं मोक्षस्य साधितम् । तत्प्रतिषेधलिंगं गौतमसूत्रे नास्तीति ततः सिद्धमिति यद्यपि पक्षिलेन भाष्ये स पक्षः क्षिप्तः—अथापि भूषणे तत्परिहारेण न्यायसारान्ते स्वोक्तमेव स्थापितमिति ज्ञापनाय विशिष्य भूषणरूपग्रन्थग्रहणम् । संबन्धसिद्धिरिति । तत्र मूले सुखस्य संवेदनस्य वा जन्यत्वे मोक्षस्यानित्यत्वं स्यादित्युभयोर्नित्यत्वमिष्ट्वा, तर्हि संसारदशायामप्यनुभवापत्तिरित्याशंक्य संवेदनसत्त्वेऽपि तत्संबन्धः संसारेण प्रतिबद्धः । प्रतिबन्धकापाये संबन्धादनुभव इत्युक्तम् । तस्य ज्ञापनायैवमुक्तिः । भूतलघटात्यन्ताभावयोः सत्त्वेऽपि तत्संबन्धाभावोक्तिवदेवं वक्तुं शक्यत इति भावः । ननु चतुर्थान्ते मोक्षपरीक्षास्थलेऽपि "तदभावश्चापवर्गः" (4-2-45) इत्येव सूत्रितम् । नानन्द इत्यत्राह एतेनेति । तस्मादित्यादिकं भाष्यवाक्यम् । अत एव वाक्यपदप्रयोगः । सौत्रतच्छाब्दार्थविवरणमेव तत्र कृतम्, दुःखतद्बीजदुःखायतनरूपसर्वाभाव इति । आनन्दस्याप्यभिमतत्वे चकारः सौत्रस्तदर्थः सुवचः । तथा नोक्तमिति शंकिताभिप्रायः । भाष्ये तथासत्यपि सूत्रे तदनिषेधात्, न्यायसारेऽपि श्रुतिप्रामाण्येनैव तदुक्तेः अभ्युपगमसिद्धान्तेन तदिष्टिसंभवात् । दुःखोच्छेदः सर्वात्मना

यच्च शारीरकद्वितीयाध्यायविरुद्धमिह द्वितीयाध्याये अवयविसमर्थनमिवाऽऽभाति, तदपि तदेकार्थं योजयितुं शक्यम् । तथा हि— 'न चैकदेशोपलब्धिरवयविसद्भावात् । साध्यत्वादवयविनि संदेहः । सर्वाग्रहणमवयव्यसिद्धेः । धारणाकर्षणोपपत्तेश्च । सेनावनवद्ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम् ।"

इत्येतानि हि तत्सूत्राणि । न तानि विरुध्यन्ते, सेनावनादिव्यावृत्तः अवयव्यार-

---

न भवतीत्याशंकायां तत्परिहारार्थं तावन्मात्रोपसंहारात् । तदुपरि वक्ष्यमाणस्योपायस्यापि तावन्मात्रोपयोगितया तदधिकानुक्तिसंभवात् । प्रथमाध्यायापवर्गसूत्रभाष्येऽपि अन्ते श्रुतिबलादानन्दतीर्थकारानुगुणवाक्यदर्शनादिति भावः ।

तृतीये प्रत्यक्षरूपप्रमाणसदसद्भावविचारस्थलं विमृशति **यच्चेति** । **तदेकार्थम्** शारीरकसमानार्थकम् । आरम्भणाधिकरणे अवयवि निषिद्ध्य संघातरूपसंश्लेषमात्रेण सर्वनिर्वाहात् तादृशसंघाताभिप्रायेणैवैतत्सूत्रनिर्वाह इति भावः । **न चेति** । प्रत्यक्षमिति न किञ्चित्; सर्वत्रानुमानमेव । वृक्ष इति ज्ञानं हि मूले अग्रे वा इन्द्रियसंनिकृष्टे भवति । न सर्वांशेन संनिकर्षः । वृक्ष इति बुद्धिश्च सर्वांशविषयिणी कथं प्रत्यक्षं स्यादिति प्रश्नः । तत्रोत्तरमुक्तम् 'यावत्तावदप्युपलम्भात्' पूर्णसंनिकर्षाभावेऽपि एकदेशस्य संनिकर्षः प्रत्यक्षञ्च भवत्येवोच्यत इति न सर्वात्मना प्रत्यक्षापलाप इति । अथ **नचैकदेशे**ति सूत्रेण हेत्वन्तरमुच्यते, नैकदेशमात्रप्रत्यक्षम्; तदतिरिक्तकिञ्चित्प्रत्यक्षमप्यस्तीति । तच्च वृक्षरूपमवयवीत्युक्तम् । तस्य पूर्वमनिश्चितत्वात्साध्यत्वैवेति पुनश्शंका । अथ साध्यते—यदि अवयवमात्रं स्यात्, लोके किमपि न गृह्येतेति सर्वाग्रहणमेव स्यात्; त्वन्मते अवयविनोऽसिद्धेः=अभावात् त्रसरेणुप्रभृतिसर्वकार्याभावात् परमाणुमात्रसत्त्वात् तेषाञ्चातीन्द्रियत्वादिति । अथ साधकान्तरोक्तिः **धारणे**ति । तन्तुसमुदाय एव पटश्चेत्, यथा—तन्तुरोतप्रोतभावानापन्नो न धार्यते, नापि एकदेशाकर्षणे पूर्णाकर्षणं भवतीति, तथा पटेऽपि स्यात् । पटभावे तु धार्यते आकृष्यते च । अतोऽवयव्यस्तीति । अथ पुनः शंकते, सत्यं धारणाकर्षणे उपपादनीये । तत्र तन्तुषु राशिभूतेष्वविद्यमानः संघातविशेषः गाढः संश्लेषः=अवयवानां विलक्षणः संयोगोऽस्ति । तद्बलादेवाकर्षणादीति । अतः प्रत्यक्षं कथमिति प्रश्न एवावशिष्यते । तत्रोत्तरं **सेनावनव**दिति । यथा रथगजादिसमूहः सेना, वृक्षसमूहो वनम्; तत्र दूरे एकैकवस्तुप्रत्यक्षाभावेऽपि समुदायस्य प्रत्यक्षम् । न च सेनादौ अतिरिक्तोऽवयवी तार्किकेणापीष्यते, तद्वदेव परमाणुसमूहप्रत्यक्षं भवत्विति, तत्र प्रत्याह—**अतीन्द्रियत्वादणूना**मिति । सेनावनप्रत्यक्षमपि न त्वन्मते भवितुमर्हति । समीपे एकरथवृक्षादिप्रत्यक्षमपि न भवेत्; तस्यापि परमाणुसमुदायत्वात् । संनिकर्षे एकगजप्रत्यक्षात् दूरे गजसमुदायप्रत्यक्षम् । तद्वत् समीपे एकपरमाणुप्रत्यक्षे सति किल दूरे समुदायप्रत्यक्षं भवेत्; तदेव नेति ॥ एवमवयविसाधनात् विरुद्धवादी गौतम इति ।

विरोधं परिहरति **न तानी**ति । अयमर्थः—वस्तुतोऽवयवि न वेदान्तिनेष्टम् । कस्मात् ?

म्भकतया तदसमवायिकारणत्वाभिमतावस्थाविशेषापन्नः संघातविशेष एवावयविशब्देन निर्दिश्यत इत्यविरोधात्। तावतैव उपलम्भव्यवहारविशेषादेश्चरितार्थत्वात्। अतीन्द्रियाणुवचनमपि प्रदीपावयवानामैन्द्रियिकाणामेवावस्थाविशेषेणातीन्द्रियत्वाभ्युपगमादविरुद्धम्। अव्यक्तमेव हि त्रिगुणद्रव्यमवस्थाविशेषाद्व्यक्तं भवतीत्यागमिकाः। प्रत्येकमुपलम्भायोग्यानामपि संहतिविशेषरूपावस्थाभेदादैन्द्रियकत्व–तत्तारतम्यादिकं च हिमानीचूर्णपुञ्जा-

---

घटपटादौ संघातस्थल एवाव्यविव्यवहारात्। ननु यदि संघातोऽतिरिक्त इष्यते, अवयव्येवेष्यतामिति चेन्न; वैषम्यात्। द्रव्यान्तरोत्पत्तिस्वीकारे तत्र गुणादीनामप्युत्पत्तेः कल्प्यतया बहुगौरवात्। किञ्च संघातो हि विलक्षणः संयोगः, तार्किकस्यापीष्टः। तदभावेऽवयव्यनुत्पत्तेः। पटावयवि प्रति तन्त्वाद्यवयवसंयोगोऽसमवायिकारणमिति तदुक्तेः। एवञ्चोभयसंमतसंयोगरूपावस्थामादायैव पटव्यवहारादिसर्वनिर्वाहे किमधिकेनावयविना। अतीन्द्रियाणुसंघातः कथमुपलभ्यत इति चेत्—अतीन्द्रियाणुजन्यो घटादिः कथमैन्द्रियकः। महत्त्वरूपकारणबलादिति चेत्—तुल्यम्। अत उपलम्भादिकमुपपन्नम्। ननु सिद्धान्ते त्रसरेण्वतिरिक्ताणुस्वीकाराभावात् त्रसरेणूनाञ्चेन्द्रियग्राह्यत्वात् तदतीन्द्रियत्वसूत्रणं विरुद्धमिति चेत्—अतीन्द्रियत्ववचनमपि इन्द्रियजन्यग्रहणानर्हत्वाभिप्रायकं न भवति। तार्किकैरेव परमाणूनां दृश्यत्वमदृश्यत्वं वेति विमर्शे, 'न वयं दृश्यत्वमदृश्यत्वं वा स्वभावादाचक्ष्महे, किंतु महत्त्वादिकारणसदसद्भावात्' इति गुरुत्वादिवदयोग्यत्वास्वीकारात् दर्शनयोग्यवस्थैव परमाणूक्तेः। त्रसरेणवोऽपि सूर्यमरीचिसंपर्करूपविशेषसहकारबलादेव दृश्यन्ते; अन्यथातीन्द्रिया एव। प्रदीपे निर्वाणे तदवयवाः गृह्यन्ताम्, तद्विषये मरीचिरूपकारणानपेक्षणादिति चेत्—सत्यम् प्रदीपतादशायामिव न दृश्यन्ते, ग्राह्यस्याप्यवस्थाविशेषे अग्राह्यत्वसंमतेः। तथाऽत्रापि स्यन्नम। अवस्थाविशेषात्। तेजस्त्वावस्थाप्राप्तेः प्राक् सृष्टौ वायुपर्यन्तं महत्प्रभृति सर्वं प्रकृतिवत् अचाक्षुषमेव हि। वायुत्वावस्थायां त्वाचत्वं स्यात्। ततः प्राक् तदपि नेति॥ संघातविशेषे सत्येवोपलम्भ इत्यपि नास्तीत्याह **प्रत्येकमिति।** **हिमानी** हिमकणसंहतिः। **चूर्णपुञ्जः** सक्तुराश्यादिः। अनारब्धावयविष्विति संघातविशेषोऽपि नास्तीत्यभिमतम्। नन्वेवं वेदान्तरीत्या सर्वोपपादनेऽपि गौतमसूत्रस्य तदविरोधेनाऽऽशयः को वर्णितो भवतीति चेत्—उच्यते—वृक्षदर्शने नाणुमात्रदर्शनम्, नापि साधारणसंयोगदर्शनम्; किंतु संघातविशेषात्मकधर्मदर्शनम्। अत एकदेशसंघतोभयदर्शनात् तेन संघातेन वृक्षत्वानुमानं काममस्तु। यदि युगपत् सर्वावच्छेदेन चाक्षुषप्रसरो वृक्षे स्यात्—तदा पूर्णप्रत्यक्षमेवेति विवक्षितम्। सेनावनसूत्रार्थस्तन्मतेऽप्यन्यः। **तत्र ग्रहण**मित्यस्य एकत्वग्रहणमित्यर्थः। तथैव भाष्यम्। अवयव्यस्वीकारे वृक्षादौ एकमिदमिति एकत्वव्यग्रहणादि कथमित्याशंकातत्परिहारार्थं सेनादिदृष्टान्ते कथिते, तत्र एका सेना एकं वनमिति व्यवहारः दूरात् रथगजादिगतपृथक्त्वांशाग्रहणात् वृक्षलतादिगतपृथक्त्वांशाग्रहणाच्च धर्मिमात्रग्रहणादेकमिति प्रत्ययादस्तु, अत्र

दिभिरनारब्धावयविषु लोकसिद्धम् ।

उपमानस्य प्रमाणान्तरत्वसमर्थनं तु न्यायैकदेशिभिरेवोपमानस्यानुमानान्तर्भावप्रतिक्षेपमात्रपरतया निर्व्यूढम् ।

अत्र— 'पूरणप्रदाहपाटनानुपलब्धेश्च संबन्धाभावः" (2-1-52) इति शब्दार्थसंबन्धाभावमुत्क्षिप्य परिहरता "शब्दार्थव्यवस्थानादप्रतिषेधः" (53) "न सामयिकत्वाच्छब्दार्थ(दर्थ)संप्रत्ययस्य' (54) इत्यादिना सामयिकत्वमुक्तम्—

---

त्वगिन्द्रियतया धर्मिणोऽपि ग्रहणासंभवात् कथमेकत्वप्रत्यय इत्याक्षेपः । एवं वक्तुरयमाशयः — सेनादिस्थले एकत्वव्यवहारो न मुख्यः, घटादौ तु मुख्यः, एकावयव्यस्वीकारे तन्निर्वाहो न भवतीति । अत्र एकसंघातस्वीकारे न निर्वाह इत्येवाभिमतम् । अतः संघातोऽपि प्रत्यक्षगोचर इति प्रकृतनिगमनम् । चतुर्थद्वितीयेऽपि पुनरवयविविचारः । तत्रावयवेषु अवयवि कार्त्स्न्येन वा स्यात् एकदेशेन वेति विकल्पे, तस्य कृत्स्नैकदेशरूपभागाभावात् प्रश्न एवानुपपन्न इति प्रदूष्य, केशसमूहे तैमिरिकोपलब्धिवत् तदुपलब्धिरित्याशंक्य, एकस्यापि केशस्य योग्यत्वमस्ति ; इन्द्रियापाटवादग्रहणम् ; अत्र परमाण्वग्रहणं तु अयोग्यत्वादिति यदुक्तम्,—तदपि दृष्टान्तवैषम्यमात्रपरम् ; इन्द्रियपाटवेऽपि परमाण्वग्रहणात् कारणान्तरमेव वक्तव्यमिति भावः । तदुपरि अवयव्यपलापे सर्वापलाप इत्याशंक्य सूक्ष्माणूनां सर्वदा भावान्न सर्वापलाप इत्येव कथनम् । अतो नावयवीति ॥

अथोपमानप्रमाणसदसद्भावविचारेऽतिरिक्तत्वस्थापनं विरुद्धमिति शंकां परिहरति **उपमानेति** । उपमानस्य प्रमाणत्वमेव नेत्याशंकां परिहारञ्च सूत्रद्वयेन कृत्वा प्रमाणत्वेऽप्यनुमानेऽन्तर्भाव इत्याशंक्य सूत्रद्वयेन तत्परिहारः कृतः । तत्रान्ते, 'तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः' इति अनुमानोपमानयोराकारभेदात्, अनुमानस्य व्याप्तिसापेक्षत्वात् उपमानस्य सादृश्यविषयकत्वात् नानुमानान्तर्भाव इत्युक्तम् । पृथक्परिगणनं कथमिति चेत्—उपमानमेवानुमानान्तर्भूतञ्चेत् शब्दस्य किंपुनरिति शब्दस्यातिरिक्तप्रमाणत्वव्यवस्थापनशेषतया तथोक्तिः ; न पार्थक्यनैर्भर्यादिति भावः । **न्यायैकदेशिभिरिति** । **न्यायसारे** गौतमानुयायिना **भासर्वज्ञेन** उपमानपार्थक्यं पराकृतम् । तदेतत् **एकदेशीति** शब्दप्रयोगेण **तार्किकरक्षायामनूदितं** सांख्यवत् प्रमाणत्रित्ववादित्वकथनेनेति भावः ।

ननु ततः शब्दप्रमाणपरीक्षायां तस्यानुमानानन्तर्भावः साधितः । स इष्टः । शब्दार्थयोः कः संबन्ध इत्यत्र कणादेन संबन्धान्तराणां निषेधेन "सामयिकः शब्दादर्थप्रत्ययः" इति संकेतः संबन्ध इत्युक्तमेव तत्प्रत्यभिज्ञापनेनानेनाप्यनुमन्यते, "न सामयिकत्वात् शब्दार्थसंप्रत्ययस्य" इति । तत् वेदान्तसिद्धान्तविरुद्धमित्यत्र तन्निर्वहति **यच्चेत्यादिना** । तत्र सूत्रे नञ्पदप्रयोगस्य नावश्यकता । पूर्वसूत्रे संबन्धावश्यकत्वोपपादनात्, स संबन्धः क इत्यत्र तद्विशेषस्यैवात्र प्रदर्शनात् । एवमपि नञ्प्रयोगः **पूरणेति** सूत्रदर्शितशंकापुनरुन्मेषे तत्परिहारायेति मन्तव्यम् । तज्ज्ञापनाय **पूरणे**त्यादिकमुपादाय परिहरतेत्युक्तम् ।

**तदपि संप्रतिपन्नसामयिकत्वद्वारा अनुमानादिविलक्षणसंबन्धविशेषख्यापनार्थमिति योज्यम्; अनादिनिधनाविच्छिन्नसंप्रदायवेदवर्तिनां पदानां मन्वादिवचनाविरुद्धसांकेतिकत्वोपपादनक्लृप्त्यसंभवात्।**

---

सूत्रार्थस्तावत्—शब्दार्थयोः संबन्धोऽस्तीति वदन् तादात्म्यं वा संयोगं वा, समवायं वा सामानाधिकरण्यं वा सामानाधिकरण्यनियमं वा संबन्धं ब्रूयात्। शब्दस्य गगनगुणत्वात घटपटाद्यर्थस्य चान्यद्रव्यत्वात् संयोगसमवायतादात्म्यानामसंभवात्। क्वचित्सामानाधिकरण्यसंबन्धमात्रे स्वीकृते च नियमेनार्थप्रतीतिर्न सिद्ध्यति। नियतसामानाधिकरण्यस्वीकारे तादात्म्यादिस्वीकारे च पूरणादिदोषः प्राप्नोति। तथा हि—मोदकेति शब्दप्रयोगे मुखान्तर्गताकाशे तच्छब्दस्येव तदर्थस्यापि स्थित्यवश्यम्भावात् मोदकेन मुखं पूरितं स्यात्। न चैवमुपलभ्यते। अग्निशब्दप्रयोगे अर्थोऽप्यग्निस्तत्रेति मुखं दग्धं भवेत्। असिशब्दप्रयोगे चासिरूपार्थसंबन्धस्यापि जिह्वायां भावात् सा पाट्येत। अतः संबन्ध एव नास्तीत्युक्तम्। तत्परिहारः कृतः **शब्दार्थव्यवस्थानादिति**। संबन्धाभावेऽस्मात् शब्दादस्यार्थस्य प्रतीतिरिति व्यवस्था कथमिति। अथ तर्हि पूरणाद्यापत्तिरिति शंकोन्मेषः। तं **नेत्यनेन** निरस्य स्वाभिमतं संबन्धमन्यमाह **सामयिकेति**। **समयः** संकेतः इच्छा। यथा डित्थदेवदत्तादियदृच्छाशब्दाः पित्रादिकृतसंकेतवशात् कचिदेवार्थे व्यवस्थिताः, तथा सर्वशब्दा इति। इदं न सिद्धान्तिसंमतम्। वैदिकशब्दानामपौरुषेयत्वात् अनादित्वात्। आदिमतामेव सांकेतिकत्वसंभवात्। भाषान्तरशब्दानां वैदिकापभ्रंशतया भ्रान्तिमूलव्यवहारात् तत्रापि संकेताप्रसक्तेः। नन्वीश्वरेच्छैव शक्तिः संकेतस्तार्किकैरिष्यते। वैदिकशब्दे तदिष्टौ को दोष इति चेत्—निरीश्वरवादिमीमांसकादीनां तादृशशक्तिग्रहासंभवात् कथं बोधः। अतः संबन्धान्तरायोगात् बोध्यबोधकभाव एव दृश्यमानः संबन्ध इति वक्तव्यम्। एवञ्च गौतमवचनं, डित्थादिसंज्ञाशब्दप्रदर्शनेन तद्वत् व्यवस्थापकसंबन्धविशेषः पूरणाद्यापादानप्रसक्तिरहितोऽस्तीत्येतावन्मात्रपरम्। इदम् आरम्भे सूत्रे 'आप्तोपदेशसामर्थ्यात्' इति **सामर्थ्य**पदज्ञापितमेवेति भावः। **अनुमानादिविलक्षणेति**। अनुमानादिस्थलसंप्रतिपन्नव्याप्त्यादिसंबन्धविलक्षणेत्यर्थः। **अनादिनिधनेति**। **आदिः**=आरम्भः। **निधनं**=नाशः, तद्रहितेत्यर्थः। 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः' इति मनुवचनस्मारकमिदम्। पूर्वपूर्वकल्पस्थितस्यैव प्रचारणात् ईश्वरोऽपि कदा संकेतं कुर्यादिति भावः। ननु सर्वस्यापीश्वरसंकल्पाधीनत्वात्, अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरसंकल्पं विना कथं बोध इति चेन्न; तस्य संकल्पस्य स्थितस्यापि सर्वकार्येष्विवात्रापि ज्ञातव्यत्वाभावात्। अत्र तु संबन्धग्रहरूपव्युत्पत्त्यभावे बोधासंभवात् ज्ञायमानः संबन्धः क इत्येव विमर्शः। स न संकेतरूप इति। ननु मन्वादीनां प्रवाहनित्यवेदवादित्वेऽपि गौतमः वेदस्येश्वरकृतत्वं प्रतिकल्पं विभिन्नत्वञ्च स्वीकरोतीति वक्तव्यम्। "बुद्धिपूर्वा वाक्यकृतिर्वेदे" इति कणादसूत्रानुसारित्वात् तस्य। अत एवात्रान्ते मन्त्रायुर्वेदप्रामाण्यदृष्टान्ती-

यच्च "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" ([illegible]) इति, तदप्यध्ययनादिनि-धनस्यैव वेदस्य प्रतिकल्पमीश्वरेणाऽऽप्ततमेन यथापूर्वं प्रवर्तनाभिसंधयेति सुवचम् ॥

वर्णानित्यत्ववर्णनं तु न श्रुत्यादिविरुद्धम्; प्रत्युतानुकूलमेव। शारीरकदेवताधि-करणे वर्णानित्यत्वमभ्युपगम्यैव हि "अत एव च नित्यत्वम्", "समाननामरूपत्वाच्चाऽऽ-वृत्तावप्यविरोधो दर्शनात् स्मृतेश्च" इति वेदनित्यत्वं साधितम् ॥

यत्तु जैमिनीये शब्दाधिकरणे वर्णनित्यत्वसमर्थनं कथं ब्रवीषि; न तु कथाखशातॄणामेवा-पराधः, असांकेतिकवाचकाकारनित्यत्वपरत्वेनान्यपरत्वात् तस्याधिकरणस्य ॥

---

करणम्। यथा मन्त्रशास्त्रानुरोधेन तत्तत्पुरुषकल्पितानां मन्त्राणां तथा पूर्वप्राज्ञकृतानामायुर्वेदानाञ्च प्रामाण्यं वक्तृणामाप्तत्वात् तद्गतगुणविशेषादेव, तद्वत् तत्प्रामाण्यं वेदप्रामाण्यं=वेदस्य प्रमाकरणत्वमपि आप्तप्रामाण्यात् आप्तस्येश्वरस्य प्रमित्ययोगव्यवच्छेदरूपनित्यप्रमावत्त्वाधीनमेवेत्युक्तमित्यत्राह यच्चेति। आप्तगुणकथनं न वेदप्रामाण्योत्पादकत्वाशयेन; किंतु तत्कृतप्रवचनबलेन प्रामाण्यं वेदस्य ज्ञाप्यत इति महाजनपरिग्रहस्येव ज्ञापकत्वमात्रेण। एतावन्मात्रेणापि दृष्टान्तघटना देति भावः। नन्वपौरुषेयत्वस्य गौतमाभिमतत्वे आदिमत्त्वादित्यादिना शब्दानित्यत्वकथनं कथं घटते, वर्णानित्यत्वे वेदानित्यत्वध्रौव्या-दित्यत्र, यादृशं वेदनित्यत्वं सिद्धान्त्यभिमतं तादृशस्य वर्णानित्यत्वं न बाधकमित्याशयेनाह वर्णेति। श्रुतावेव प्रतिसर्गं शब्दतन्मात्रतद्गुणादीनामुत्पत्तिकथनादिति भावः। तत्रापि वेदनित्यत्वसिद्धिं बादरायणसूत्रोक्तां दर्शयति अत एवचेति। इन्द्रादीनामिव वसिष्ठविश्वामित्रादीनां वेदप्रवर्तकानामपि वेदजन्यत्वात् वेदस्य तज्जन्यत्वायोगात् तदुत्पत्तेः प्रागपि तद्वेदसद्भावात् नित्यत्वम्। वर्णानित्यत्वे वर्णसमुदायात्मको वेदोऽ-प्यनित्य एव स्यादिति चेत्—न हि तत्तद्वर्णव्यक्तिनित्यत्वं वयं ब्रूमः; किंतु तासां तद्घटितवेद-व्यक्तीनामुत्पत्तिप्रध्वंसवत्त्वेऽपि समानानुपूर्वीकत्वात् प्रवाहनित्यत्वमेव। यद्यपि—'वर्णाः सर्वे आदिसृष्टौ सकृज्जायन्ते। सृष्टिकाले कल्पभेदेपि अविनाशेन तेषां स्थितिरेव। सर्वदा तदश्रवणं तु ताल्वादिव्यापा-रात्मकव्यञ्जकाभावात्, इति पक्षो गृह्येत—तथापि महाप्रलये सर्ववर्णनाशः स्यादेव। अतो वेदनित्यत्वम-न्यथैवोपपाद्यम्। एवं पुनस्सृष्टौ वेदानामावृत्तिरेव। तावता न समानानुपूर्वीकत्वभङ्गः। कल्पभेदेन वेदानुपूर्वीभेदस्यास्वीकारात् तथावादितार्किकमतं नेष्टम्। गौतमः समानानुपूर्वीमेव स्वीकुर्वानस्तु। श्रुतिस्मृत्योस्तथोक्तेस्तद्विरोधायोगादित्यर्थः।

वर्णनित्यत्वपूर्वकवेदनित्यत्वनिष्ठौ मीमांसाविरोध इत्यत्राह यत्त्विति। वर्णनित्यत्वमात्रेण वेदनित्यत्वे रघुवंशादिग्रन्थानामपि नित्यता स्यात्। तर्हि तत्र सूत्रार्थः क इति चेत्—शब्दार्थयोः संबन्धो न सां-केतिकः=किंतु स्वाभाविक इति प्रागुक्तं न घटते; शब्दानित्यत्वादित्यंशे समाधानं तच्छब्दव्यक्तीनामनित्यत्वेपि आनुपूर्वीनित्यत्वात् न संबन्धनित्यत्वभंग इत्येवोच्यते। उत्पत्तिरिति हि सूत्रे सेश्वरमीमांसादाविति ॥

यच्च द्वितीयाध्यायान्ते "व्यक्त्याकृतिजातयस्तु पदार्थः" (2-2-65) इत्युक्तम्, तत्रापि न वैशेषिकाभ्युपगतजातिस्वीकारे लिङ्गं पश्यामः ; न ह्यत्र द्रव्यगुणादिपदार्थपरिसंख्यानं क्रियते, "ते विभक्त्यन्ताः पदम्" (2-2-60) इति प्रतिज्ञादिपदवाच्यप्रदर्शनपरत्वात् । अनन्तरं च तिसृणामेव (वं?) लक्षणमाह—"व्यक्तिर्गुणविशेषाश्रयो मूर्तिः", (69) "आकृतिर्जातिलिङ्गाख्या", (70), "समानप्रसवात्मिका जातिः" (71) इति—

इह तु वस्तुस्वरूप-निरूपितस्वरूपविशेषकधर्म-स्वरूपनिरूपकधर्मविषयतया यथासंभवं

---

ननु सिद्धान्ते आकृत्यतिरिक्ता गोत्वघटत्वादिर्जातिर्नेष्यते । गौतमेन व्यक्त्याकृतिजातीनां पार्थक्यमुक्तम् । तेन कणादेन (वैशेषिक-1-2)नित्यपरापरनानाजातय उक्ताः अनेन स्वीकृता इति ज्ञायत इत्यत्राह यच्चेति । वर्णरूपशब्दविचारे, "ते विभक्त्यन्ताः पदम्" इति पदलक्षणमुक्त्वा वाच्यार्थः क इति विचार्य जातिराकृतिर्व्यक्तिरिति त्रयमप्यर्थ इत्युक्तम् । तावता नित्यजातिस्वीकारो न सिध्यति ; तथा सर्वात्मना आकृतिविलक्षणैव जातिरित्यपि न सिध्यति । यथा द्रव्यगुणकर्मसामान्येति पदार्थविभागवाक्ये विभाजकधर्माणां परस्परासंकीर्णत्वस्यावश्यकतया द्रव्यादितः सामान्यस्य जातिरूपस्य भेदसिद्धिः पृथक्गणनात्—तद्वदत्र, व्यक्तिर्द्रव्यम्, आकृतिः अवयवसंयोगरूपो गुणः, जातिस्तदुभयभिन्नेति न भेदकथने तात्पर्यम्, किंतु वाच्यत्रयमस्तीत्येतावन्मात्रे । ननु भेदे सत्येव त्रयमिति सुवचम् ॥ सत्यम्, तत् तेनैवोपरि निर्वचनात् तत्र सूत्रत एव पश्येमेति कृत्वोद्धरति अनन्तरञ्चेति । गुणविशेषेति । रूपादिगुण अवयवसंयोगरूपगुणोभयेत्यर्थः । आकृतिः संनिवेशोऽवयवानाम् ; तस्याः जातिलिङ्गमित्याख्या=नाम । जातिर्नाम अवयवविशेषसंयोगविशेषः । तस्यावयवग्रहणपूर्वकमेव ग्राह्यत्वात् जातिव्यञ्जकत्वमाकृतेः । आपातव्यक्तिग्रहणाद्धि न जातिग्रहणम् । अतिरिक्तजातिपक्षे तु आकृत्यग्रहणेऽपि ग्रहणमापद्यते । समानः एकरूपः प्रसवः बुद्धिजननमेवात्मा स्वरूपं यस्याः सा जातिः, गौर्गौरित्यनुवृत्तबुद्धिबोध्यं सौसादृश्यं जातिरित्यर्थः । प्रथमं प्रमाणप्रमेयेति सूत्रेऽपि हि संकीर्णधर्मपुरस्कारेणैवोद्देशः कृतः । तथाचाकृतिराकारो द्वेधा, सुसदृशभूतोऽन्यश्च । उभयमपि व्यक्तिवत् वाच्यमित्यर्थः । अत एव व्रीहिभिर्यजेतेत्यत्र व्रीहिशब्दोक्तव्यक्तिसुसदृशावयवः, तदन्यावयवानां सर्वेषां यागसाधनत्वम् । गौर्गौरित्यनुगतप्रतीत्यर्थं यावदंशग्रहणापेक्षा, तावन्मात्रं जातिः, तदन्यांशः आकृतिशब्देनेहोक्तः । व्यक्तिग्रहणे सदृशविसदृशग्रहणे सदृशाकारभूयस्त्वेन सौसादृश्यं गृह्यत इति स एव जातिग्रहः । यत्राकारो नास्ति रूपरसादिगुणेषु निरवयवेषु च, तत्र कथमिति चेत्—तत्राह इहत्विति । एकैकस्यापि वस्तुनः स्वरूपनिरूपकः निरूपितस्वरूपविशेषकश्चेति धर्मद्वयमस्ति । अतस्त्रयमेव स्वरूपेण सह तत्राप्यर्थः । अत्र—वस्तुस्वरूपपदेन व्यक्तेः, निरूपितस्वरूपविशेषकेति आकृतेः, स्वरूपनिरूपकधर्मेति जातेश्च यथासंख्यं ग्रहणमपीष्टम् । ननु आकृतिग्रहणानन्तरं जातिग्रहणम्, तत् कथमाकृतेर्निरूपितस्वरूपविशेषकत्वमिति चेत्=

र्क—

योज्यम्। अतो न द्वितीयाध्यायेऽपि वेदान्तविरोधः ॥

तृतीये, "दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्" (1) इत्यादिकं बाह्यान्तरेन्द्रियनिरूपणादिकं चात्र तोपयुक्तम्। न च मनोनित्यत्वादिकं तत्र सूत्रितम्; येन तदुत्पत्त्यादिश्रुतिकोपः।

यच्चात्रोक्तम्—"गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्, श्रुतिप्रामाण्याच्च"

---

उच्यते। स्वरूपनिरूपकधर्म इतरव्यावृत्त्युपयोगी प्रथमग्राह्यः। जातिरूपधर्मश्च तथा। तद्भिन्नाकाराणां निरूपितस्वरूपविशेषणत्वम्। जातित्वेन धर्मग्रहणस्य आकृतिग्रहणपश्चाद्भावित्वेऽपि जातिरूपधर्मः स्वरूपतो निर्विकल्पप्रत्यक्षेऽपि सिद्धान्ते गृह्यत एवेति। वस्तुतः अंशत्रयं वाच्यमिति न नियमः। क्वचित् धर्ममात्रस्यापि वाच्यतावच्छेदकत्वसंभवात्। तदाह **यथासंभव**मिति। अर्वाञ्चो मीमांसका आकृत्यधिकरणे जातिमेवाऽऽकृतित्वेन गृह्णन्तः तावन्मात्रे शब्दानां शक्तिरिति वदन्ति। अस्मन्मते धर्मविशिष्टव्यक्तिवाचित्वमेवेष्टम्। तद्विषय इवातिरिक्तजात्यभावेऽपि गौतमोऽनुकूल इत्युक्तं भवति ॥

ननु तृतीयेऽध्याये प्रमेयपरीक्षारम्भः। आदौ आत्मनो देहादिव्यतिरिक्तस्य युक्त्या स्थापनम्, न तु श्रुत्या। अतस्तर्कप्रधानमिदमित्यत्राह **तृतीयेदर्शने**त्यादि। श्रुतिप्रमाणकस्यापि तदनुरोधितर्कप्रदर्शनमनुकूलमेवेति भावः। सूत्रार्थस्तु—**दर्शनं** चक्षुः, **स्पर्शने**न्द्रियं त्वक्। ताभ्यामेकोऽर्थो गृह्यते, चक्षुषा यदपश्यम्, तदेव त्वचा स्पृशामीति प्रतिसंधानात् एकवस्तुग्राहकत्वमिन्द्रियद्वयस्य। अनेन रूपस्पर्शात्मकगुणव्यतिरिक्तद्रव्यसद्भावो यथाऽवगम्यते, तथा चक्षुर्वा त्वग् वा नात्मा, किंतु तदुभयकरणकस्तदन्यः चाक्षुषस्पार्शनप्रत्यक्षतत्प्रतिसंधानाद्याश्रय इति च। नन्वत्र 'नात्मप्रतिपत्तिहेतूनां मनसि संभवात् (३-1-16) इति सूत्रेण आत्मस्थाने मन एवास्तु; नातिरिक्तमित्याशंक्य, अथापि मनसः कर्तृत्वे करणान्तरस्यापि स्वीकार्यतया, कर्तृकरणोभयसिद्धिरेवेति तदुपरि साधितम्। तेनात्मवत् मनसोऽनादित्वं नित्यत्वञ्चेष्टमिति ज्ञायते। अतो विरोध इत्यत्राह **न च मन** इति। मनसो नित्यत्वं न कण्ठोक्तम्, आत्मनोऽनादित्वञ्च वीतरागजन्मादर्शनादिति उपर्येव वक्ष्यते। अतस्तावति तात्पर्यमत्र न कल्प्यमिति भावः। उपरि तदणुत्वोक्त्या न नित्यत्वसिद्धिः; व्यासोक्ताणुत्वं हि ब्रह्मसूत्रे इन्द्रियाणां सूक्ष्मत्वमात्रम्, तथैव स्यादिति।

अनन्तरं द्वितीयप्रमेयस्य शरीरस्य परीक्षायाम् शरीरमेकभूतोपादानकम् अन्येषां भूतानां निमित्तकारणत्वम्। तत्र मानुषादिशरीरं पार्थिवमेवेति, पार्थिवं गुणान्तरोपलब्धेरिति सूत्रेणोक्तम्—एतदुपरि सूत्रत्रयं 'पार्थिवाप्यतैजसं तद्गुणोपलब्धेः, निश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम्, गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्' इत्यस्ति। नचैषां **भाष्ये** व्याख्यानाभावात् असूत्रत्वं शंक्यम्—भाष्य एवैतान्यनूद्य हेतूनामाभासत्वात् सूत्रकारो न पृथक्खण्डयामासेत्युक्त्या सूत्रत्वसिद्धेः। **वृत्तिकारेणै**तत्सूत्रसद्भावकण्ठोक्तेश्च। एतदनन्तरम् श्रुतिप्रामाण्याच्च इति सूत्रम्। भाष्यकारः **पार्थिव**मिति प्रथमसूत्रं सिद्धान्तसूत्रं कृत्वा तदुपरि संभावितपूर्वपक्षभेदप्रदर्शनमिति निरुह्य, श्रुतिप्रामाण्याच्चेति सूत्रं केवलपार्थि-

(3-1-28-29) इति, एतदेव यथाश्रुतं सिद्धान्ततया स्वीकार्यम् ।

**यदपि "गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः अप्तेजोवायूनां पूर्वंपूर्वमपोह्याकाशस्योत्तरः" (64) इति गुणव्यवस्थापनम्, तत्र तु तथैवाभ्युपगमेऽपि न वस्त्वन्तरविरोधः ।**

---

त्वसाधकश्रुतिपरतया व्याचख्यौ । पूर्वपक्षं पूर्वं प्रदर्श्य उत्तरपक्षस्योत्तरं प्रदर्शनमेव स्वरसम्, श्रुतिप्रामाण्यसूत्रमप्यनन्तरपूर्वोक्तार्थस्थापकमेव भवितुमर्हतीति विमृश्यात्र पार्थिवत्वादिः परपक्षः, पाञ्चभौतिकत्वमेव गौतमपक्ष इति निर्धार्यते । **एतदेव यथाश्रुतम्** इति यथाश्रुतपदेन श्रुतक्रमेण पूर्वोक्तापक्षव्यवस्थापरित्यागो न युक्त इति बोध्यते । तथा च त्रिवृत्करणपञ्चीकरणादिपरश्रुतिरेवात्र विवक्षिता, न तु केवलपार्थिवत्वसाधिका । अत एव तत्र पूर्वम् (21) सूत्रे पद्मादिप्रबोधादिविचारे 'नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम्" इति जगद्गतपदार्थानां सर्वेषां पञ्चात्मकत्वस्य सिद्धवत्कारेणोक्तिर्घटते । कणादस्तु, "प्रत्यक्षाप्रत्यक्षसंयोगस्याप्रत्यक्षत्वात् शरीरं पञ्चात्मकं न विद्यते" इति पञ्चात्मकत्वादि प्रतिषेधतीत्यन्यदेतत् । पार्थिवाप्यतैजसमित्यस्य पृथिवीमात्रोपादानकं जलमात्रोपादानकं तेजोमात्रोपादानकञ्च शरीरमस्तीत्यर्थस्य स्वरसत्वेऽपि उत्तरानुसारात् पृथिव्यप्तेजस्त्रयोपादानकमित्यर्थ एव ग्राह्यः । **गन्धे**ति शरीरे एकैकस्मिन्नपि गन्धस्य, क्लेदस्य=द्रवीभावस्य, पाकस्य=तेजस्संयोगस्य, व्यूहस्य=प्राणादिवायुविभागविशेषस्य, अवकाशदानस्य=भोजनाद्यनुकूलच्छिद्रस्य च दर्शनात् पञ्चभूतोपादानकत्वमेवाविशेषादित्यर्थः । एवञ्च पार्थिवे गुणान्तरोपलब्धेरित्युक्तकाठिन्याद्युपलम्भस्यापि न हानिः ।

अथ तत्रैव तृतीयस्य प्रमेयस्येन्द्रियस्य विभिन्नस्यावश्यकत्वभौतिकत्वादिविचारे तद्ग्राह्यगुणविशेषरूप चतुर्थप्रमेयस्थितिप्रकारोऽपि प्रादर्शि । उपर्यपीन्द्रियविषयविचारानुवृत्तिदर्शनात् पृथिव्यादौ एवं गुणविभागे पार्थिवादीन्द्रियाणामपि क्रमेण तावद्गुणकतया घ्राणादिना गन्धव्यतिरिक्तपार्थिवगुणानामपि ग्रहणं कुतो नेति शंकामुद्भाव्य परिहर्तुमेवेन्द्रियविचारमध्ये तन्निवेश इति ज्ञायते । **पूर्वंपूर्वमपोह्ये**त्यस्य अपां गन्धमपोह्य स्पर्शपर्यन्ताः, तेजसो गन्धरसावपोह्य स्पर्शपर्यन्ताः । वायौ गन्धरसरूपाण्यपोह्य एकमात्रमित्यर्थः । उत्तरः स्पर्शपर्यन्तोपर्युक्तः शब्द एवाकाशस्येति सूत्रार्थः । अत्र **स्पर्शपर्यन्ताः** इति पदस्याभावे श्रुत्यन्ताविरोधेन सूत्रं सुयोजम् । तत्पदसत्वात् आकाशव्यतिरिक्ते शब्दाभाव एव गौतमेष्ट इति स्पष्टम् । अतोऽभ्युपगमेनैव निर्वाहे यतते, **तत्र**त्विति । **तथैवाभ्युपगमेऽपि**=शब्दस्यान्यत्रानुत्पत्त्यभ्युपगमेऽपि । **न वस्त्वन्तरविरोधः** । वेणुनादः मेघस्तनितमित्येवं शब्दविशिष्टपार्थिवादिवस्तुसद्भावविरोधो नास्ति । पृथिव्यादीनामुत्पत्तिकाले गौतमोक्तरीत्या गुणनियम एव ; पश्चात् पञ्चीकरणादाकाशप्रवेशात् व्यष्टौ अन्यत्रापि तदुपलम्भ इति सुवचत्वादिति भावः । अत्र न शब्दांगीकारविरोध इति सामान्यरूपेणास्पष्टं कैश्चित् व्याख्यातम् । अन्यैस्तु, अवयविस्वीकारे आरम्भणाधिकरणाभिमतकार्यकारणैक्यादिविरोधवत् अत्र विरोधो नास्तीत्युक्तम् । विरोधे सिद्धे तत्र तादृशत्वमतादृशत्वमिति को भेदः

तथाप्याकाशादिषु शब्दादेरेकद्वित्रिचतुष्पञ्चक्रमेण पुराणेषु पाठात्, आकाशानुप्रवेश अन्यत्र शब्द इति निर्वाहे वाय्वाद्यनुप्रवेशादुत्तरोत्तरेषु स्पर्शादिरिति निर्वोढुं शक्यत्व उपलम्भान्वयव्यतिरेकाभ्यां व्यवस्थापनस्यापि समत्वात्, गन्धादिसूत्रम्, पृथिव्यास्ते सन्त वेत्ययोगव्यवच्छेदेन निर्वाह्यम्; "आकाशस्योत्तरः" इत्यत्र तु तस्य स एवेत्यन्यय गव्यवच्छेदेन। कति कति चैवं सूत्राणि क्लिष्टानि परैरपि निरुह्यन्ते॥

यच्च, "स्वगुणान्नोपलभन्त इन्द्रियाणि कस्मादिति चेत् (भाष्य)" "सगुणानामिन्द्रियभावात् (72) इत्यत्र. "न शब्दगुणोपलब्धेः" (74) इत्युक्तम्—

"न श्रुत्यन्तविरोधः" इति पाठः स्यात्; उपरि पुराणादेरेव प्रदर्शनात्। तत्र स्पष्टवेदान्तवाक्याभावात् स्थितनिर्वाहोऽपि कृतः। क्लिष्टनिर्वाह एव कार्य इत्याह तथापीति। निर्वाह्यमित्यन्तमेकं वाक्यम् श्रीविष्णुपुराणे, 'आकाशवायुतेजांसि सलिलं पृथिवी तथा। शब्दादिभिर्गुणैर्ब्रह्मन् संयुक्तान्युत्तरोत्तरैः इत्युक्तम्। उत्तरोत्तरभूतेषु उत्तरैः अधिकसंख्याकैः शब्दादिभिर्युक्तानीति तदर्थः। मोक्षधर्मे विशिष्ट "शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च भूगुणाः"—इति प्रतिनियतपरिगणनपरः स्पष्ट एव पाठः। न पञ्चीकरणादनुप्रवेशादन्यत्रास्तु शब्द इत्यत्राह आकाशेति। उपलम्भेति। स्पर्शोपलम्भस्य तेजस्यन्वयात् सत्त्वात् स्पर्शस्तस्यापि, आकाशे तस्य व्यतिरेकादभाव इति व्यवस्थापनम्=एकत्र सत्त्वमन्यत्राभावश्चेति वर्णनं शब्दविषयेऽपि तुल्यम्। अयोगेति। पृथिव्याः स्पर्शपर्यन्ता एवेत्यन्ययोगव्यवच्छेदं विहाय पृथिव्यास्ते सन्त्येवेत्ययोगव्यवच्छेदेऽन्यस्यापि स्वीकारो न वार्यते। आकाशस्य शब्दोऽस्त्येवेति कथनेऽन्यसमुच्चयसंशयः स्यात्। अतोऽन्ययोगव्यवच्छेदस्य तत्र स्वीकारः। अत्रैकरूप्येण स्पर्शपर्यन्ताः पृथिव्या एव, पूर्वपूर्वापोहविशिष्टः स्पर्शपर्यन्ताः अबादीनामेव। पूर्वापोहविशिष्ट उत्तर शब्दः आकाशस्यैवेत्यन्ययोगव्यवच्छेदोऽपि स्यात्। स्पर्शपर्यन्तादवैयग्ग्यं [illegible] सर्वत्राविशिष्टम्। कति कतिचेति। तत्तद्घट्टे बहूनीत्यर्थः। न्यूनाधिकविरुद्धव्यपदेशादौ हि परेषां निर्वाहक्लेशः प्रागेव दर्शितः।

तदुपरि इन्द्रियविचारावसाने विरोधं प्रदर्श्य निर्वहति यच्चेति। पूर्वमिन्द्रियाणां घ्राणादीनां पार्थिवादिरूपतया भौतिकत्वात् तत्तद्भूतगुणाः पूर्वोक्ताः तत्रदिन्द्रियेऽपि सन्तीत्युक्तम्। तदुपरि "सगुणानामिन्द्रियभावात्" इति सूत्रम्, तदुत्थानभाष्यम् (अवतरणभाष्यम्) स्वगुणान्नोपलभन्ते इन्द्रियाणि कस्मादिति चेदिति। यदि गुणा इन्द्रियाणामपि, तदा ततदिन्द्रियेण तत्तद्गुणोऽपि बाह्यगुण इव ग्राह्यः स्यादिति शंका। तत्राह सूत्रकृत्—तत्तद्गुणविशिष्टाकारेणैवेन्द्रियत्वात्, विशेष्यमात्रस्येन्द्रियत्वाभावादिति। अतो ग्राहकानुप्रविष्टस्य गुणस्य ग्राह्यत्वं न भवतीत्यर्थः। "तेनैव तस्याग्रहणाच्च" इति तद्विवरणसूत्रमप्युपरि। तदुपरि सूत्रम्, 'न शब्दगुणोपलब्धेः' इति। स्वगुणत्वात् स्वयं न गृह्णातीत्युक्तमयुक्तम्, श्रोत्रेन्द्रियेणाकाशेन स्वगुणस्य शब्दस्य ग्रहणादिति तत्सूत्रार्थः॥ अत्र को विरोधः। कथञ्च परिहार इति विमृश्यम्—

तत्रापि श्रोत्रेन्द्रियस्य आकाशाप्यायितत्वादाप्यायकगुणस्य तद्गुणतां पटनैल्य.पानीय-सौरभादिवत् प्रकल्प्योक्तमुत्तरम् । अथवा यथागममाहंकारिकत्वमिन्द्रियाणामजानत-श्चोद्ये भूताप्यायितेन्द्रियपक्षे स्थित्वैवेदमुत्तरं गूढाभिप्रायेण दीयत इति । एतदुक्तं

---

इन्द्रियाणां भूतगुणवत्त्वकथनात् भौतिकत्वाद्दहंकारिकत्वसिद्धान्तविरोध इति चेत्—स एत-त्पूर्वं गुणस्वीकारसूत्रसंदर्भे एव प्रदर्शयितुं युज्यते। किंच सगुणानामिन्द्रियभावादिति कथमुच्यते, इन्द्रियाणामाहंकारिकत्वात् गुणा न सन्तीति खलु वक्तव्यम्। एवं तत्सूत्रस्यैवानुपपन्नत्वे स्थिते तदनुक्त्वा स्थलप्रदर्शनार्थमिव तत्सूत्रमुपादाय, इत्थत्रेति प्रयुज्य तदुपेक्ष्य, 'न शब्दगुणोपलब्धेः' इति सूत्रे, अहं-कारिके श्रोत्रे कथं शब्दगुणकस्वीकरणमिति श्रोत्रमात्रविषये प्रश्नविश्रमः कुतः । उपरि तत्र पि श्रोत्रेन्द्रियेत्यादिना तत्सूत्रविषय एव समाधानोक्तथा च तावन्मात्रे प्रश्न इति ज्ञायते। सर्वेन्द्रियविषय एव सगुणत्वमाक्षेप्यम्। किञ्च न्यायभाष्यरीत्या सगुणानामित्यादि सिद्धान्तसूत्रम्। 1-1-4 सूत्रे भाष्य-कारः, "सगुणानामेषामिन्द्रियभावः" इति स्वयमभाषिष्ट। तत्सिद्धान्तोपरि पूर्वपक्षः क्रियते नशब्देति सूत्रे। अयमर्थः—यदि गुणविशिष्टतयेन्द्रियत्वम्, तर्हि श्रोत्रेऽपि तथेति शब्दग्रहणं न स्यादिति। अत्र समाधानमनन्तरसूत्रे भविष्यति। एवं पूर्वपक्षसूत्रत्वे स्थिते एतत्सूत्रनिर्वाहवाक्ये, उक्तमुत्तरम् इति उत्तरपरतया व्याख्यानमत्र कथमिति ॥

उच्यते—अत्रायमाचार्याशयः—इन्द्रियविचारान्ते तेषामाहंकरिकत्वाशयेनोपसंहार एव युक्तः। पूर्वं भौतिकत्वं भूतगुणवत्त्वञ्च यदुक्तम्—तत् सर्वमाप्यायकभूतांशमादाय निर्वहणीयम्। अतो गौतमस्ये-न्द्रियेषु आहंकारिकत्वमतिरेव। अथेन्द्रियेषु साक्षाद्भूतगुणाभावेऽपि आप्यायके तद्गुणवत्त्वात् तदग्रहणं कुत इति प्रश्नः। आप्यायकगुणविशिष्टतयैव करणत्वात् तदग्रहणमिति अन्यः कश्चिदुत्तरमुक्तवान्, सगुणा-नामिति सूत्राभ्याम्। अथ मुख्यसिद्धान्ती वदति, श्रोत्रस्याऽऽहंकारिकस्य स्वाप्यायकाकाशगतशब्दग्राहकत्वदर्श-नात् तत्समाधानं न युज्यत इति। अत इदं तन्निरासकसिद्धान्तिवाक्यत्वादुत्तरमेव। तर्हि गुणाग्रहणकारणं किमिति चेत् तत् उत्तरसूत्रे उक्तमिति मन्तव्यम्। इमं निर्वाहप्रकारमविज्ञाय कश्चिदेवं पृच्छति—इन्द्रियाणां गुणवत्त्वमुक्तम्; तद्गुणानुपलम्भः कथमिति ततः पृष्टम्। सगुणानामिन्द्रियभावादिति केनचिदन्येन समाहितम्। तत्र तत्त्वं ज्ञापयता सिद्धान्तिना गुणा न सन्तीत्येव समाधाने कार्ये 'नशब्द..'इति सूत्रेण श्रोत्रे गुणस्वीकारेण समाधानं किमन्युच्यमानं न घटत इति। अयं यच्चेत्या-देरर्थः। समाधत्ते तत्रापीत्यादिना। प्रागुक्तरीत्या आप्यायकांशे गुणसत्त्वात् तदग्रहणं कुत इति प्रश्ने समाधानस्य वक्तव्यत्वात् सामान्यतो गुणा न सन्तीत्युत्तरं न भवति। आप्यायकगतगुणवि-शिष्टतयेन्द्रियत्वमिति समाधानं न युक्तमित्येव वक्तव्यम्। तदेवानेन सूत्रेणोच्यत इति। साक्षाद्-गुणा न सन्तीत्यर्थस्यापि ज्ञापनाय पक्षान्तरमाह अथवेति ।

भवति—भवता किमिन्द्रियगुणोपलम्भाभाव उच्यते, किं वा तदाप्यायकगुणोपलम्भाभावः? पूर्वत्रानङ्गीकार एवोत्तरम्, शब्दादीनामनिन्द्रियगुणत्वात्। उत्तरत्र व्यभिचार इति। अतो न वेदान्तविरोधप्रसङ्गः॥

चतुर्थे चाध्याये—प्रवृत्तिरागद्वेषादिनिरूपणम्, आत्मनित्यत्वादिना प्रेत्यभावादिप्रतिपादनम्, अनिमित्तभावोत्पत्ति—सर्वानित्यत्व—सर्वनित्यत्वादिनिरूपणं (निराकरणं?)

---

इदमत्र बोध्यम्—इन्द्रियाणां गुणविषयकप्रत्यक्षे स्वसंयुक्तसमवायरूपसंनिकर्ष एव पुष्पादिगतगन्धादिग्रहणे क्लृप्तः। इन्द्रियाणां साक्षाद्गुणवत्त्वेऽपि तादृशसंनिकर्षाभावान्न तद्ग्रहणपादनसंभवः। भूताप्यायितत्वपक्षे तु आप्यायकगुणे तत्संनिकर्षसत्त्वात्प्रत्यक्षमापद्यते। गुणानां ग्राहकान्तर्भावादग्राह्यत्वे श्रोत्रेण शब्दो न गृह्येत। तत्र श्रोत्रं प्राप्तानां शब्दानामेव ग्राह्यतया गुणं विना केवलस्यैवेन्द्रियत्वं वक्तव्यम्। तथैवास्तु सर्वत्र। आप्यायकगतगन्धाद्यग्रहणं तु तस्यानुद्भूतत्वात्। घ्राणे सर्वपार्थिवगुणानामाप्यायकद्वारा सत्त्वेऽपि गन्धमात्रग्रहणं तस्यैवोत्कटत्वात्। एवमुत्कटत्वेऽप्यनुद्भूतत्वमयोग्यत्वं स्वीकर्तव्यम्। अतः=श्रोत्रस्येव सगुणानामिन्द्रियभावस्य तार्किकैरवक्तव्यत्वात् सगुणानामिति न सिद्धान्तसूत्रम्। तन्निरासकनशब्दसूत्रमेव सिद्धान्तसूत्रम्। अत उत्तरमिति कथनं युक्तम्। शब्दे श्रोत्रसंनिकर्षस्तु तार्किकमते समवायः। अस्मन्मते संयुक्ताश्रितत्वमेवेति। वृत्तिकारव्याख्यानं तु प्रायो नवीनमन्यादृशम्॥ **पटनैल्ये**ति। पटस्य कार्पासप्रकृतिकत्वात् तस्य च धवलत्वात् नील्यादिरञ्जकद्रव्यगतमेव नैल्यादि। **पूर्वत्रे**ति। इन्द्रियगुणोपलम्भाभावोक्तौ अंगीकार एव। इन्द्रियाणि न ग्राह्यगुणानि सगुणतयैवेन्द्रियत्वादित्यनुमाने सिद्धसाधनमित्यर्थः। इदं दोषान्तरोपलक्षणम्। **उत्तरत्रे**ति। इन्द्रियाणि न ग्राह्यस्वाप्यायकगुणानीति साधने साध्याभाववति श्रोत्रे हेतुसत्त्वात् व्यभिचारः। तदपि हि सगुणमेवेन्द्रियम् इन्द्रियत्वात्। अन्यथा गुणानां ग्राहककोटिनिवेशाभावः श्रोत्रेन्द्रियदृष्टान्तेन साध्येतेति।

**चतुर्थे** चेति। तृतीय एवाध्याये द्वितीयाह्निके बुद्धिमनसोर्निरूपणम्। तत्र श्रीभाष्ये जिज्ञासाधिकरणे ज्ञाननित्यत्वस्यैवानुभविकतया अद्वैतिदूषणावसरे प्रपञ्चितत्वात् धर्मभूतज्ञाननित्यत्वस्य श्रुतिप्रामाण्यादेव तदनुकूलतर्कोपष्टम्भेन स्वीकारात् तदनित्यत्वादिकथनमवस्थाविशेषपरं न विरुद्धम्। मनोविचारस्तु प्रागेव दर्शितः—इति तदुभयोपेक्षया चतुर्थाध्यायग्रहणम्। द्वादशविधप्रमेये क्रमेण प्रवृत्तिप्रभृतिनिरूपणं चतुर्थे। **रागद्वेषादीति आदि**पदेन मोहग्रहणम्। दोषरूपप्रमेयस्य त्रैविध्यं रागद्वेषमोहा इति। 'आत्मनित्यत्वे प्रेत्यभाव.' इति सूत्रं स्मृत्वाऽऽह **आत्मे**ति। **प्रेत्य**—मृत्वा **भावः**—जननम्; पुनरुत्पत्तिः; जन्मपरम्परारूपसंसार इति यावत्। **अनिमित्तोत्पत्तिः** कारणं विना कार्योत्पत्तिः। आकस्मिकत्ववादिचार्वाकमतमिदं **न्यायकुसुमाञ्जल्यारम्भे सर्वार्थसिद्ध्यादौ** च द्रष्टव्यम्। **सर्वनित्ये**ति। सर्वं नित्यं पञ्चभूतनित्यत्वादिति सूत्रम्। फलदुःखयोः प्रमेययोर्निरूपणमपि

चात्यन्तानुगुणम् । अवयविप्रसङ्गश्च प्रागुक्तन्यायेन नेतव्यः ।

पञ्चमस्तु जातिनिग्रहस्थानमात्रोपक्षीणो न कचित्तत्त्व उपकरोति । व्यवहाराङ्ग-विमर्शसौन्दर्यासौन्दर्यादिकं तु वास्तवलक्ष्यलक्षणयुक्त्यादिपरामर्शवैज्ञानिकैरर्थस्थितिमात्रानु-सारादना(रान्ना)दरणीयम् ।

यत् पुनरर्वाग्भिरक्षचरणपञ्चाध्याय्यां कुशकाशावलम्बेन कणचरणकथां निवेश्य नैगमिक्यः पद्व्यो निरुध्यन्ते, तत्र तु नूनं स एव गौतमः स्वयमन्तः प्रहसति ।

इति स्वीकारपक्षः ॥

---

चतुर्थप्रथमे । तत्र द्वितीये अपवर्गः—इति प्रमेयसमाप्तिः । अपवर्गो मोक्षो यस्मात् तस्य मिथ्याज्ञानादेः विचारे दोषाणां रागद्वेषमोहरूपाणां निमित्तमवयव्यभिमानः ; मांसासृक्पूयविण्मूत्रादिरूपेण विभज्य दर्शनं वैराग्यायेत्युक्त्वा अवयवि अतिरिक्तमस्ति न वेति विचारः प्रवर्तितः । अवयविसाधानञ्च सिद्धान्तविरुद्ध-मित्यत्राह अवयविप्रसंगश्चेति । संघानरूपावस्थाविशेषस्थापन एव तात्पर्यम्, नातिरिक्तापूर्वद्रव्य-साधने इति प्रागेवोक्तम् ; तदेवात्र स्मर्तव्यमिति भावः । पञ्चमस्त्विति । षोडशपदार्थ्यां संशयादयः प्रागेव विवेचिता इति पञ्चमाध्याये जातिनिग्रहस्थानोभयप्रपञ्च एव कृतः । तस्य विजिगीषुकथकसंबन्धित्वात् न तत्त्वस्यापकता । नापि तत्र तत्त्वविचारः प्रसंगादपि कृत इति न तत्र विरोधः कश्चिदिति भावः । व्यवहारेति । उपरि अत्र जातिनिग्रहस्थानप्रपञ्चने वादिप्रतिवादिव्यवहारांगविषयविचारे सौष्ठवाद्य-भावः प्रदर्शयिष्यते । तथापि तदप्रधानम् । उपपादनप्रक्रियाभेदः तद्व्याख्यातृभिः, 'लक्ष्यं लक्षणमुत्थितिः स्थितिपदं मूलं फलं शातनम्' इति जातिसप्तांगत्वादिविज्ञायिभिरुदयनादिभिरपि गृहीतः ; प्रमेयस्थितिस्तु स्वीकृतता । न हि बाह्यैरिवास्माभिः जातिनिग्रहस्थानयोरपलापः क्रियते इति भावः । अथवा विजिगीषु-कथायां व्यवहारः कदाचित् सुन्दरः स्यात्-छलजात्यादिघटनादसुन्दरश्च । तत्त्वबुभुत्सवः तत्त्वस्थिति-मात्रपराः तदुचितलक्ष्यलक्षणादिपरास्तदुपेक्षेरन्नित्यर्थः । द्वितीयरीत्या व्याख्यैव पूर्वैः कृता ॥ नन्वेतावता गणरात्रेण व्याख्यातृभिः पारम्पर्येण कृतस्य सर्वस्य व्याख्याप्रकारस्याद्यत्वे कथमनादर इत्यत्राह यत् पुनरिति । पञ्चाध्याय्याम् तत्रैकैकाध्यायेऽपि । कुशकाशावलम्बेन संतरणानुपयोग्यर्थग्रहणेन । स्वयमन्तःप्रहसतीति । वेदान्तप्रमेयवैदेशिकैर्बाह्यैः सह जल्पवितण्डापूर्वककथाप्रवृत्तैर्वक्तव्यार्थगोपनेन तत्समा-धानोपयुक्तमात्रे स्थित्वा अस्माभिरुच्यमननमजानन्त इमे वैदिका भूत्वा हन्त स्वयं नष्टाः परान् नाशयन्ति । तर्कसाध्ये लौकिकेऽर्थेऽस्मदुक्तानेकांशत्यागेनान्यथा तात्पर्यमादरेण कल्पयन्तो वेदप्रमेयविरोधस्थले कथं तदनुरूपं तात्पर्यं न न कल्पयन्तीति मन्वानः, विरोचनस्यान्यथाग्रहणमवेक्ष्य प्राक् प्रजापतिरिव तदविज्ञेयं यथातथा स्वयमन्तर्हसतीत्यर्थः ।

गौतमीयस्य सर्वात्मना बहिष्कारः सम्प्रदायस्वरसावगत इति प्रथममुक्तम् । विरुद्धवदवभासमानाना-

**यद्वा–नातीवच बहिष्कारो नातीवच परिग्रहः। सांख्यादिविदिहापि स्यात्समाधिस्तौषतण्डुलः॥**
**उपजीव्यबहुत्वेन विद्यास्थाननिवेशनम्। विरुद्धांशैकविषया सूत्रादिषु बहिष्क्रिया॥ ९॥**

मर्थान्तरवर्णनेन सर्वात्मना स्वीकार्यत्वमयोक्तम्—शबरादिव्याख्यानानां दूष्यत्वेऽपि जैमिनीयसूत्रस्वीकारवत्, पक्षिलादीनां गतेरुपेक्ष्यत्वेऽपि गौतमीयं मूलं ग्राह्यमिति भाष्यकाराशय इत्यभिप्रायेण। विद्यास्थानत्वेन स्वीकृते कतिपयोपेक्षाया अयुक्तत्वमाशय्यैवमुक्तिः। ननु धनेशास्त्र पाणिनीयादिकं विद्यास्थानत्वेनाभिमतमपि श्रुतिविरोधादिना अंशत उपेक्ष्यते, भ्रान्तेः पुरुषधर्मत्वात्। सूत्राणि प्रत्याख्यायन्ते; यथोत्तरं मुनीनां प्रामाण्यमिति चेष्यते। नैतावता सर्वांशोपेक्षा। तत्र सांख्यादीनां दर्शनानां विद्यास्थानत्वविरहिणामेवांशतः परिग्राह्यत्वे सति एतदत्यन्तोपेक्षा हि न युज्यते। तदर्थं पृथगुपमानप्रमाणपरिगणनं तत्स्थापनस्थलमाकाशादि(4-2-21-22)नित्यत्वविभुत्वनिरवयवत्वादिपरं स्थलञ्च किमिति क्लिष्टार्थवर्णनेन ग्राह्यम्; द्वितीयद्वितीये हि, 'न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात्' इत्यैतिह्यादीनामतिरिक्तप्रमाणत्वं निरस्यन्, चतुष्ट्वपदेनोपमानपार्थक्यमेव स्वाभिमतं दर्शयति। प्राचीनकथिते प्रमाणाष्टके चतुष्कनिरासः चतुष्कस्वीकारश्चेह स्पष्टः। (4-2-20) अन्तर्बहिश्चेति सूत्रे कार्यद्रव्यमन्यत् कारणद्रव्याण्यन्यानीति सुस्पष्टोक्त्या अतिरिक्तावयविस्वीकार एव लक्ष्यते। अतो यथायथं कतिपयसूत्रस्थपदानां कतिपयसूत्राणाञ्च निरसनेन शुद्धांशमात्रसंकलनेन गौतमीयस्यैव मूलत्वेन स्वीकारो नाथमुन्याद्याचार्यग्रन्थानां तद्विवरणार्थत्वञ्च युक्तमध्यवसातुमिति प्रश्ने तथैवाभ्युपगच्छन् **यद्वे**ति। **यद्वे**ति कारिकान्तर्गतं कृत्वा **यद्वा नातिवहिष्कार** इति कश्चन पाठः। पृथक्ककारेण **नातीवचबहिरष्कार** इति कारिकापाठोऽन्यः। एतदनुगुणं न्यायसूत्रनिबन्धनमितः परं कार्यम्। प्रागेव कतिपयवाक्यान्यादाय सूत्रत्वमस्ति वा भाष्यवाक्यमेव वेति विवादे प्रसक्ते **न्यायसूचीनिबन्धो वाचस्पतिना** व्यधायि। इतस्त्वस्माभिः तत्स्वीकृतसूत्राणामपि केषाञ्चित् सति संभवे वेदान्तविरोधाद्युपेक्षया शुद्धसंकलनं युक्तमित्याशयः **तौषतण्डुलः**। व्रीहिषु तुषांशव्यपोहेन तण्डुलांशग्रहणवत् असारनिष्कासेन सारमात्रग्रहणम्, सांख्यादिष्विवात्रापि। तण्डुलांशत्यागेन तुषमात्रग्राहिणस्तदर्थिनः केचित् स्युः; न वयं तथेति।

**उपजीव्ये**ति। न्यायभाष्ये (1-1-1), संशयादीनां पृथग्वचनमनर्थकमित्याशंक्य, 'तेषां पृथग्वचनाभावे अध्यात्मविद्यामात्रमियं स्यात् यथोपनिषदः' इति कथनात् उपनिषदभिमतप्रमाणग्रमेयोक्तिरेवात्र; संशयादिन्यायांशव्युत्पादनमसाधारणकार्यमिति सिद्धेरत्र वेदान्ताविरोध एवेष्टः। इन्द्रियार्थसन्निकर्षोत्पन्नमिति प्रत्यक्षलक्षणं मानासे आत्मादिप्रत्यक्षे कथम्, मनसोऽनिन्द्रियत्वादिति शंकायां भाष्ये मनस इन्द्रियत्वमिष्ट्वा परिहारः कृतः। वस्तुत आत्मतज्ज्ञानादीनां स्वप्रकाशत्वात् तत्र मानसप्रत्यक्षमिति किञ्चिन्नास्तीति वेदान्त्याशयोऽपि स्यात्। (2-1-19) 'न प्रदीपप्रकाशवत् तत्सिद्धेः' इति सूत्रे स्वरसतः प्रदीपवत् इतरनिरपेक्षप्रकाशं स्वयंप्रकाशं वस्त्वप्यस्तीति तदाशयो ज्ञायते। भाष्यगतिस्तु तद्दूषणपरा भवतूपेक्षा।

[अधिकारिविवेचनम्—अधिकाराच्च नियतः स्यादयं न्यायविस्तरः ।]

**नियताधिकारश्चायं न्यायविस्तरः ।**

---

1-1-31 अभ्युपगमसिद्धान्तस्य चतुर्थस्योक्त्या च ज्ञापयति—क्वचित् कथायां स्वानभ्युपगते परकीये मते स्थित्वाऽपि तत्र विशेषो विचार्येत । तावता न तदस्मदिष्टम् । अतः काणादस्वीकारोऽपि नात्यन्तमस्मदिष्टतयेति । तेन तदुपेक्ष्य वेदान्तिमतादरणं भवत्विति । शब्दोऽनुमानम् ('-1-47) इत्याशंक्य काणादमतनिरासेन तस्यातिरिक्तप्रमाणत्वस्थापनं वेदान्तोपजीव्यम् । विशिष्य वेदप्रामाण्यस्थापनतदवान्तरविभागादिवचनमभ्युपादेयम् । ऐतिह्यादेः प्रमाणान्तरत्वनिरासोऽपि । शब्दस्याऽऽकृतिमात्रपरत्वस्य मीमांसकसंमतस्यास्वीकारेण विशिष्टवाचित्वं वर्ण्यमानं सिद्धान्ते परमात्मनः सर्वशब्दवाच्यत्वस्य स्वीकृतस्योपपादकमिति अत्यन्तोपयुक्तम् । कणादोऽपि तृतीयेऽध्याये देवदत्तादिशब्दानां शरीरविशिष्टजीववाचित्वेन स्थापनीयगुणादिनमस्माभिर्वैशेषिकरसायने । तृतीये देहेन्द्रियमनःप्रभृत्यतिरेकः आत्मनस्तर्केणोपपादनान आत्मनः एव । पञ्चात्मकविकाराणाम् पाञ्चभौतिकम् इति जगति सर्वस्य कणादाद्यभिमतपाञ्चभौतिकत्ववचनं वेदान्तिमतवचनमेव । इन्द्रियेष्वाप्यायकगुणोक्तिरेव, न साक्षात् भौतिकगुण इति प्रागेवोक्तम् । तृतीयद्वितीये, बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् इति प्रथमाध्यायोक्तोपपादनेन सांख्यादिमतदूषणम्, आत्मनि धर्मभूतज्ञानस्थापनञ्च सूपयुक्तम् । चतुर्थे चेश्वरः पुरुषकर्म च कार्ये कारणमिति निरीश्वरवादादिनिरासो वैदिकश्रेष्ठतामस्य व्यनक्ति । तदेवमुपजीव्यांशबहुत्वात् कतिपयासारभागमात्रत्यागः सारतण्डुलग्रहणेन तुषरूपत्वक्परित्यागवत् युज्यते । पूर्वमर्थान्तरवर्गनेन सर्वस्वीकार उक्तः ; इह कतिपयवचनानां प्रक्षिप्तवाक्यानामिवोपेक्षणमेव विवक्षितमिति ध्येयम् । अतोऽत्र प्रमेयांशापेक्षया प्रमाणानां निरूपणस्य तत्रापि न्यायशास्त्ररूपान्वीक्षिकीप्रतिपाद्य. संशयादिनिग्रहस्थानान्तपदार्थविवेचनस्य मुख्यत्वात् अपेक्ष्याणां सूत्राणामेवाधिकत्वात् उपेक्ष्याणामल्पत्वाच्च विद्यास्थाने निवेशनमस्येति ।

एवं गौतमीयस्य बहिष्काराबहिष्कारविचारेण वेदाङ्गभूतेन तेन यत् यथा प्रतिपाद्यं तत् तथा न प्रतिपादितमिति शोधनात् प्रतिपाद्यप्रतिपादकभावरूपसंबन्धो यथावदस्ति न वेति निरूपितमासीत् । ग्रन्थानुबन्धिरूपतया ज्ञातव्येषु चतुर्षु संबन्धाधिकारि. प्रयोजन.विषयेषु शिष्टांस्त्रीन् क्रमेण वक्ष्यन् अधिकारिणं दर्शयति । यद्यपि विषयोऽप्येतावतैवोक्त इति सुवचम् । अथापि तन्निष्कर्ष उपर्यस्ति । न्यायस्य तर्करूपतया बाह्यग्रन्थेष्वपि तर्कनिरूपणस्य प्रसिद्धत्वात् प्रत्यक्ष.लौकिकशब्दयोरपि तर्कोपयोगात् सर्वेऽधिकारिण इत्येव प्रतीयेत । वेदाङ्गभूतविद्यास्थानत्वोक्त्या वेदैकाधिकारिकत्वमुचितं लक्ष्यते । तत्र सिद्धान्तमाह **नियते**ति । **नियताधिकार** इति वाक्यमेव व्याख्यातादृतम् । **अधिकाराच्च नियतः स्यादयं न्यायविस्तरः** इत्येकमर्धं क्वचित् कोशेषु पठ्यते । पुनरुक्ततया तदुपेक्ष्यम् । अत्र श्लोकान् परिगणने अर्धन्यूनतामालक्ष्य कैश्चिदिदं प्रक्षिप्तमिव । एवंसति प्रतिश्लोकं वाक्यसमाप्तिश्च रमणीया । अर्धन्यूनता तु नास्ति ; स्वकृतानां श्लोकानाम् **आश्वमेधिके** इत्यन्तेन सततसंख्याकतया पूर्णत्वात् ।

अप्रत्यवायो माहात्म्याद्दयालुः शास्त्रमब्रवीत् । सर्वाधिकारमित्येतद् समीक्षित (?) भाषितम् ॥
कथमागमवृत्तान्तमनधीतागमा विदुः । निषिद्धे प्रेरयंस्तान् वा कथं कारुणिको भवेत् ॥ ११ ॥
नच शक्या नरशिरःपावित्र्या(शुचित्वा)द्यनुमाश्रुतः । विहायागममक्षाद्यैर्द्विधा तत्रापि विप्लवः

---

अङ्गानीत्यनुवादश्लोकानामर्थन्यूनतयोदाहरणं तु न दोषाय । यावदपेक्षितमेव ह्युदाहार्यम् ॥
अत्रैवं प्रवादः—विद्यास्थानान्तराणां वेदमात्रोपयोगेऽपि न्यायविस्तरस्य तर्कप्रधानतया लौकिकप्रमाणाद्युपयोगित्वस्यापि सत्त्वात् 'प्रदीपः सर्वविद्यानाम्' इत्युक्तस्य वेदोपयोगित्वस्यापि सत्त्वात् तत्र गणनेऽपि सर्वाधिकारिकत्वमेव युक्तम् । न च—वैदिकमात्रोपयोग्यर्थविचारोऽत्र क्रियमाणः, "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः, कर्मकर्तृसाधनवैगुण्यात्, विधिर्निन्दा परकृतिः पुराकल्पः" इत्यादिरूपः, मोक्षार्थास्तत्त्वविवेकनोपायोपदेशादिरूपश्च वेदानधिकारिग्राह्यतयोपदिष्टश्चेत्, अवश्यमेव ऋषिरयं प्रत्यवेयादिति—वाच्यम्—'तेषां तेजोविशेषेण प्रत्यवायो न विद्यते' इत्यादिप्रमाणात् तस्य प्रत्यवायस्पर्शासंभवात् । न च क्षुद्रप्रयोजनार्थी अनधिकारिण उपदिदेश—संसाराङ्गेषु पच्यमानान् प्राणिनोऽवलोक्य पूर्णकारुण्यप्रेरणयैवंकरणादिति । तं निरस्यति **अप्रत्यवाय** इति । **सर्वाधिकारं शास्त्रमब्रवी**दित्यन्वयः । **आदिश**दिति पाठान्तरम् । **असमीक्षितभाषितम्** । **समीक्षित**मिति भावे क्तः । समीक्षणाभावेन भाषितम्, समीक्षणरहितैर्भाषितमिति वा । असमीक्षकभाषितमिति पाठो वा । हेतुमाह **कथ**मिति । महर्षेः प्रत्यवायरहितत्वेऽपि विश्वामित्रयाजितस्य त्रिशंकोरिवानधिकारिणां फलप्राप्तिर्न भवति । वेदार्थानुग्राहकतर्कागमश्लोकानां वेदानधिकारिणः कथमनुग्राहकत्वप्रकारं विदुः । अत्र पूर्वोदाहृतश्लोकान् विध्यनुवादादिवाक्यार्थान् कथं ते ग्रहीतुमर्हन्ति । अनूदितमात्रपठनेनाविशदमेव विदन्त्विति चेत्, अनधिकारिभिरनूदितपठनमप्ययुक्तम् । पापप्रसक्तेः । एवं पापहेतुकार्यप्रवर्तकश्च कथं कारुणिकः स्यात् । ननु एतन्माहात्म्यबलेनैव तेषामपि न पापम्; प्रत्युत पूर्ववेदग्रहणेन सर्वफलप्राप्तिरेवेति चेत्—एवं चेत् गौतमो विश्वामित्रसखः, इतोऽप्यधिकं कारुणिकाः, "स दिशतु भगवान् अशेषपुंसां हरिरपजन्मजरादिकां समृद्धिम्" इत्याशासानाः स्वमाहात्म्येन सर्वान् सर्वत्राधिकारिणः कृतवन्तस्स्युरिति स्त्रीशूद्राद्यानधिकारवचांसि सर्वाणि समुद्रे प्रागेव प्रक्षिप्तानि स्युः । अत एव, "अथ जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुः" इति **तत्त्वचिन्तामणि**ग्रन्थारम्भवाक्ये जगदेवेति सर्वाधिकारिकत्वोक्तिकथन्तायाम्—**दीधितिकारे**णैवमभिप्रायेणोक्तम्—सर्वजनोद्धाराय मुनिः शास्त्रं प्रणिनायेत्यस्तु, तावता न सर्वेषामधिकार इष्टो भवति । अधिकारिणोऽद्यैव, अनधिकारिणस्तु तिर्यगादिवत् तदुचितजन्मप्राप्तौ अधीयतामित्येवाशयः । एवमप्यनधिकारी उच्छृंखल शास्त्रं स्वयं पठन् कस्मादप्यर्थं गृह्णाति चेत्, तत्र किमिति चेत्—तदिदमुद्ग्रन्थान्तरेऽपि प्रसज्यते । न स्वत्वनधिकारिणो गृह्णन्तीत्येतावता प्रत्यवयन्ति प्रणेतारः शास्त्राणामिति । **न च शक्ये**ति । **कथमागमवृत्तान्ते**ति श्लोके, अनुवाद्यानुग्राहकत्वोपपादकवेदार्थविधिनिन्दादिवेदवाक्यविचारपर-

श्रुत्यां ह्यनधिकारित्वात् तदन्यत्राव्यवस्थितेः । धर्मक्षोभानुमाभङ्गे कथं शूद्रादयः क्षमाः ॥
अथ त्रैवर्णिकैरुक्ते त्वन्यो विश्वसितीत्यपि । स्वयं न्यायविचारेऽस्य फलत्यनधिकारिताम् ॥
प्रत्यक्षानुमयोर्यत्र नित्यं वेदानपेक्षता । तत्राशूद्रभाष्योक्ता शूद्रादेरप्यधिक्रिया ॥ १५ ॥

---

न्यायविस्तरभागो विषयः । अत्र श्लोकेऽनुमानांशपरो भागो विषयः । आगमवृत्तान्तेत्यस्य आगमोक्त प्रमाणत्रित्व-चतुष्ट्वमात्ररूपेयत्तां कथं शूद्रो विद्यादित्यर्थः क्लिष्टः । नरशिरःपवित्रत्वानुमानं नरशिरः कपालं शुचि प्राण्यंगत्वात् शंखवदित्याकारकं यदि प्रयुज्यते, तत्र क्षतिः=बाधो वक्तव्यः । बाधो द्विविधः ; आद्यः प्रत्यक्षेण, अन्यः श्रुत्या । अग्निरनुष्ण इत्यत्र प्रत्यक्षेण बाधः । अत्र, 'नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशेत्' इति अशुचित्वप्रतिपादकवाक्येन बाधो वक्तव्यः, आगमानधिकारी कथमेवं बाधं गृह्णीयादिति । न ह्यत्रागमैर्विना अक्षेणानुमानेन वा क्षपणं शक्यम् । द्विधा तत्रापि विप्लवः । पूर्वमागमवृत्तान्तस्थल इवात्रापि विप्लवः व्यवस्थाभंगो द्विप्रकारो भवति । अनधीतागमत्वात् बाधज्ञानाभावात् अशुचिस्पर्शरूपो विप्लवः, निषिद्धे तत्प्रेरणे च कारुणिकत्वविप्लव इति । अत्र अपिशब्दं द्विधेत्यनेन संयोज्य उपरितनार्धश्लोकस्यात्रान्वयेन, श्रुतावनधिकारात् अन्यत्र=अक्षादौ अव्यवस्थितेः= एतदर्थस्थापकत्वाभावात् उभयथापि विप्लव इति व्याकुर्वते । उपरितनार्धस्यात्रान्वये तदुपरितनवाक्ये हेतुरनुक्तः स्यात् । उपर्युक्तमुभयञ्च मिलितमेव हेतुरिति द्विधेति नातीव स्वरसम् । धर्मक्षोभानुमाभंगे इत्यस्यापि नरशिरःपरत्वोक्तौ पौनरुक्त्यं स्यात् । अतोऽन्य एव विषयः प्रथमव्याख्योक्तः । किं नरशिर इति विशेषानुमानग्रहणेन । सामान्यतः यागहोमादिक्रिया न धर्मः क्रियात्वात् भोजनादिवदिति धर्मत्वाभावोक्त्या क्षोभे, वैधहिंसा अधर्मः हिंसात्वादिति धर्मप्रत्यनीकत्वोक्त्या च क्षोभे क्रियमाणे शूद्रः श्रुत्यामनधिकृतः किं कुर्यादिति । परं तु पूर्वार्धमप्यत्रैव योज्यम् । चोदनालक्षणोऽर्थो धर्मः कथं तेन ज्ञायेत । अक्षादेस्तत्र व्यवस्थापकत्वाभावात् अन्यत्र=लोके अक्षमात्रप्रमाणकैः पुरुषैस्तत्तत्पुरुषमतिभेदेन धर्मत्वाधर्मत्वयोरव्यवस्थया व्यवहारदर्शनाच्च यथावत् तदनुमानभंगं न शूद्रः कर्तुं शक्नुयादित्यर्थः । इदानीमव्यवस्थितिपदमपि स्वरसार्थम् । श्रुत्यामित्येव श्लोकारम्भाच्च स्वरसगतिरियमेव । नन्वधीतवेदेन द्विजेन वेदमनुकृत्यैव प्रतिबोधनात् शूद्रः क्षम इति चेत्—अङ्गिन एवानध्ययने अङ्गस्य न्यायविस्तरस्याप्यनध्ययनेनैव ज्ञातव्यं जानातु । तदाह अथेति । इत्यपि=इत्युक्तिरपि फलति—जनयति-गमयति । ननु न्याये शूद्रस्यानधिकारे अपशूद्राधिकरणभाष्ये अद्वैतिनिरासावसरे शूद्रस्यापि तर्कानुगृहीतप्रत्यक्षादिना निर्विशेषज्ञानं संभवतीत्युक्तं कथं घटत इत्यत्राह प्रत्यक्षेति । अस्मन्मते तत्तद्विशिष्टब्रह्मज्ञानं प्रत्यक्षानुमानयोः क्वचिद्ज्ञापकयोः वेदसहकारे सति तद्द्वयोर्वेदतो ब्रह्मान्तर्यामिकत्वज्ञानात् भवति, अद्वैतिभिस्तु निर्विशेषं ब्रह्म प्रत्यक्षानुमानद्वयमात्रावसेयं भवतीत्युक्तत्वात् तयोर्वेदापेक्षाविरहात् शूद्राधिकार आपादित इति भावः । नित्यमिति सर्वथेत्यर्थः । अतो वेदार्थनिर्णयोपयोगिन्यायप्रतिपादके न्यायविस्तरे न तदधिकार इति ।

चतुर्दशापि स्थानानि भगवान् धर्मविद्ययोः । न स्प्रष्टव्यानि शूद्रैरित्यब्रवीदाश्वमेधिके ॥ १६
"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥
यान्युक्तानि मया सम्यग्विद्यास्थानानि भारत । उत्पन्नानि पवित्राणि पावनार्थं तथैव च ॥
तस्मात् तानि न शूद्रस्य स्प्रष्टव्यानि कथंचन ।" इति ॥ तस्मादेतानि त्रैवर्णिकैरेवाध्येतव्यानि ।

तत्र ब्राह्मणेन विद्याप्राप्तये धर्मानुष्ठानाय चाधिगन्तव्यानि । क्षत्रियवैश्याभ्यां धर्मानुष्ठानायैव । तथा शङ्खेन विद्यास्थानान्यनुक्रम्योक्तम्—"एतानि ब्राह्मणोऽधिकुरुते । स च वृत्तिं दर्शयतीतरेषाम्" इति । एवमेव धर्मशास्त्रान्तरकैः समर्थितम् । ततश्च येषां कर्मब्रह्ममीमांसावसेयतत्त्वहितरूपप्रमेयचिन्ताधिकारः, तेषामेव तात्पर्यपर्यवसायितया धर्मविद्यास्थानाभिमतन्यायविस्तराधिकार इति सिद्धम् ॥

प्रयोजननिरूपणम्

प्रत्यक्षादिप्रमाणेन शुद्धिः (सिद्धिः)पदतदर्थयोः । मानमेयादिनियतिर्निर्दोषोक्तेश्च मानता ॥
ग्रावप्लवनवाक्यादावान्यपर्यं विरोधतः । चित्रायागफलस्याविरोध(धात्)द्वारसंग्रहः ॥ १८

---

आश्वमेधिकपर्व स्थश्लोकानुवादः अङ्गानीत्यर्धत्रयेकेन । विद्यास्थानानि विद्योत्पादकानि, पावनानि धर्मानुष्ठानोपयोगात् पापनिवर्तनार्थमुत्पन्नानि पवित्राणि=पारायणेनापि शोधकानि । एतानि न केनाप्याकारेण शूद्रस्प्रष्टव्यानीत्यर्थः । अध्येतव्यानि-गुरुमुखं प्रमाणि । विद्याप्राप्तये परप्रतिबोधनोपयोगिविशदज्ञानोत्पत्तये ॥ वृत्तिं दर्शयति=अनुष्ठानप्रकारं शिक्षयति । सर्वेषां विद्यास्थानत्वं धर्मस्थानत्वञ्चेत्याह विद्याप्राप्तये धर्मानुष्ठानाय चेति । न्यायशास्त्राधिगतन्यायस्वरूपाणां मीमांसायामेवोपयोगात् तदनधिकारिणामेतदनधिकार एवेति युक्त्यन्तरमप्याह येषामित्यादिना । तात्पर्यपर्यवसायितयेति । इदं वेदवाक्यमेतदर्थैकतत्परमिति पर्यवसानकारित्वादित्यर्थः ॥ अधिकार्येवमधिगमितः ।

प्रयोजनं प्रतिबोधयति प्रत्यक्षेत्यादिभिः श्लोकैः । कथञ्चनेत्यन्तमेकं वाक्यम् न्यायविस्तरप्रयोजनं प्रत्यक्षादिप्रमाणतदङ्गतर्कावधारणम् । तदभावे प्रत्यक्षादिष्वसिद्धेषु शुद्ध्यादिप्रथमान्तपदोक्तं सर्वं न कल्पेत=न भवेदित्यन्वयार्थः । शुद्धिरित्यत्र सिद्धिरिति च पाठः । अधीते वेदादौ, अत्रेत्थमेव पदम्, इत्थंभूत एवार्थः, तदुक्तोऽर्थश्च यमेवेति प्रत्यक्षादिप्रमाणकृतं यत् शोधनम्, इदं मानम्, अयं मानाभासः, इदं मेयम्, अयं तदाभास इति या व्यवस्था, अस्या उक्तेर्भ्रम.प्रमाद.विप्रलम्भ.करणापाटवरूपदोषमूलकत्वाभावात् प्रमाणत्वमेवेति यावत्, ग्रावाणः प्लवन्ते, आदित्यो यूप इत्यादौ प्रतीतान्वये प्रत्यक्षादिविरोधसत्त्वात् सिंहो माणवक इत्यादिप्रमाणवाक्य इव क्रियमाणं यत् अन्यार्थपरत्वम्, चित्रया यजेत पशुकाम इत्यादौ चित्रायागेऽनुष्ठिते उचितावसरे पशुरूपफलस्य लाभदर्शनात् यागस्य च चिरध्वस्तस्य कथं फलसाधनत्वमिति शंकायां अनुभवादेः 'सूत्यादिसाधनत्ववत् राजसेवादेरैश्वर्यसाधन-

अनुवादविधानादिचिन्ता प्राप्त्यादिपूर्विका । प्रत्यक्षादिष्वसिद्धेषु न कल्पेत कथंचन ॥ १९ ॥
एवमाद्युपयोगेन मुनिर्भिन्न्यायविस्तरः । वेदानुग्रहणात् धर्मविद्यास्थानतयोदितः ॥ २० ॥
आगमाख्यप्रमाणेतु(णस्य) संशुद्धे[ः]न्यायविस्तरात् । तद्विशेषस्य मीमांसा साधयेद्धर्ममानताम् ॥
प्रमेयस्यापि संशुद्धिरन्ततो ब्रह्मचिन्तनात् । इह तस्य निवेशस्तु तादर्थ्यादिप्रसिद्धये ॥ २२ ॥

---

त्ववत् किञ्चिद्द्वारा फलसाधनत्वं स्यादिति विमर्शे तादृशद्वारकल्पनस्य बाधितत्वाभावात् आत्मसमवेतापूर्वरूपस्य वा देवताप्रीतिरूपस्य वा तस्य यः स्वीकारः, दध्ना जुहोतीत्यादौ किं दधिविशिष्टहोमविधानम्, उत होमस्य प्राप्तत्वात् दधिमात्रविधानमिति विवादे, अग्निहोत्रं जुहोतीति तत्प्राप्तिसत्त्वात् दध्नश्च नियमेनाप्राप्तत्वात् होमस्यानुवादः दध्नो विधानमित्येवं प्रतिवाक्यं यत् परिशीलनम्, इदं सर्वं न्यायशास्त्रमूलं प्रत्यक्षादीनां नियतां प्रमाणत्वमस्तीति निर्धारणाभावे कथमपि न भवेदित्यर्थः । **एवमाद्युपयोगेन**=एवं कर्मकाण्ड इव ज्ञानकाण्डे तत्त्वहितपुरुषार्थनिर्धारणाय विद्यास्थानान्तरेष्वर्थनिर्धारणाय चेति भावः । **वेदानुग्रहणात्** वेदोपकारकत्वात् । अर्थाल्लौकिककार्येष्वपि चाणक्यस्येव न्यायोपयोगेऽपि ग्रन्थनिर्माणेऽपि तद्वृत्तेर्दाक्ष्यमेवेति भावः । ननु प्रावप्लवनवाक्येत्यादिना भवदुक्तं सर्वं पूर्वमीमांसयैवावधारितमिति किमनेन कार्यमित्यत्राह **आगमे**ति । **संशुद्धे** इति सप्तम्यन्तपाठः । इदमिदं प्रमाणमिति प्रत्यक्षानुमानशब्देषु प्रमाणतयाऽवधृतेषु । शब्दे च, स द्विविधो दृष्टादृष्टार्थ वादिति लोकवेदोभयरूपतया प्रदर्शिते, तत्र वेदस्य बहुप्रकारेणाप्रामाण्यशंकायां तत्परिहारे च न्यायविस्तरेण कृते, कार्त्स्न्येन प्रामाण्ये निष्कलंकतया सिद्धे, मीमांसा तत्तद्वाक्यं पृथग्गृहीत्वा किं विधेयं किमुद्देश्यम्, कस्य विधिः, कियतो विधिः किमर्थं विधिरिति विशेषविचारं प्रवर्तयन्ती वेदस्य निःश्रेयससाधनताकत्वरूपे धर्मे वेदः प्रमाणमिति व्युत्पादयतीति भावः । पूर्वं **प्रावप्लवने**त्यादि तु कर्मकाण्डमात्रस्यैवमुक्तम् । अस्तु वा कृत्स्नमीमांसैवेह मीमांसापदार्थः । धर्मश्च शारीरके सिद्धरूपो ब्रह्म, साध्योपायो भक्त्यादिश्च । वस्तुतोऽनन्तरेणार्धेन तदुच्यत एव—आगमाख्यप्रमाणे न्यायविस्तरात् संशुद्धे मीमांसान्ते ब्रह्मचिन्तनात् कर्मवत् तत्त्वमपि निर्णीयत इत्यर्थः । उपलक्षणमेतत् वेदप्रामाण्यस्थापनकथनमन्यस्यापि—आयुधकारनिर्मिताकाराणां नानाविधायुधानां संग्रहेण यथायथं युद्धे विनियोजनवत् न्यायदर्शनशिक्षितानां पक्षसाध्यहेतुदृष्टान्तव्याप्तितद्बोधकावयवतदर्थतर्कलक्षणानां तदाभासानां यथावदवगमे सति ततो मीमांसायां तत्तदनुरूपः प्रयोगः सुकरः । अन्यथा युद्धकाले शस्त्रनिर्माणप्रवृत्तस्येवानधिकार एव स्यादिति । तर्हि पूर्वोत्तरमीमांसाधीनत्वात् प्रमेयनिर्णयस्यात्र कथं तदुक्तिरित्यत्राह **इहे**ति । **इह** न्यायविस्तरे **निवेशः आत्मशरीरे**त्यादिना सूत्रे विभज्य गौतमेन कथनम्, अस्माभिश्च, द्वेधा त्रेधा षोढा एकधा वेत्यादिविस्तरणमिह कृतं **तादर्थ्यस्य** प्रमाणनिरूपणं प्रमेयाधिगमार्थम्, तत्रापि तत्त्वावधारणार्थं परमतप्रक्रियाप्रतिक्षेपेणेदृशप्रमेयपर्यवसानं कार्यमिति प्रतिबोधनार्थञ्चेत्यर्थः ॥

प्रमाणमेवास्य शास्त्रस्य प्राधान्यतो विषयः। तत्र प्रेक्षावदधिचिकीर्षासिद्ध्यर्थम्, 'प्रमेयतत्त्वज्ञानं हानोपादानद्वारा निःश्रेयसहेतुः। तच्च सपरिकरात् प्रमाणात्' इति परम्परया प्रयोजनज्ञापनाय प्रदर्शनमात्रमिहाभिमतम्। अतः प्रधानविषयतया, प्रमेयादिसाधकतया च प्रमाणं प्रमेयादपि पूर्वमुच्यते। तत्र व्यवच्छेद्यत्वाङ्गत्वादिमुखेन संशयादयोऽपि चतुर्दश यथायथं निरूप्यन्ते। न च षोडशत्वे निर्बन्धः, कथात्वविपर्ययत्वाद्युपाध्यन्तराधीनसंग्रहविभजनाभ्यां न्यूनाधिकोद्देशस्यापि शक्यत्वात्; उपयोगानुपयोगाविशेषाच्च। एतावदेव गौतमस्यापि हृदयमिति॥

---

एतद्विवरणव्याजेन विषयेयत्तामपि दर्शयति प्रमाणमेवेति। प्रेक्षावतां प्रधानं यत् फलं तदुपयोगः साक्षात् परम्परया वाऽस्ति न वेति परिशीलनप्रवृत्तानाम्। अधिचिकीर्षासिद्ध्यर्थम्= एतत्प्रमाणपरीक्षणमस्माभिः कार्यमिति तदिच्छासिद्धये। हानोपादानेति। हेयप्रमेयहानम्, मोक्षसाधनांशोपादानञ्चेति भावः। व्यवच्छेद्यत्वेति। आपातवेदवाक्यार्थज्ञानवतः सर्वत्र संशयः सहजः। स व्यवच्छेद्यः। किञ्च संशय एव जिज्ञासां जनयन् पुरुषं विचारे प्रवर्तयतीति इदं प्रथममङ्गम् उपकारकम्। आदिपदेन फलस्य ग्रहणम्, सौत्रनिर्णयप्रयोजनयोस्तथात्वात्। सत्यपि संशये निष्प्रयोजनत्वे विचारस्य काकदन्तपरीक्षावत् अकर्तव्यत्वात् प्रयोजनोक्तिः—इति क्रमेण प्रथमसूत्रोक्तं सर्वं न्यायशास्त्रविषयः। तर्हि निग्रहस्थानानन्तरं सूत्रे प्रमेयं पठनीयम्; तस्य तदनन्तरमेव मेयत्वादप्रधानत्वाच्चेति चेत्—सर्वत्र संशयादिचतुर्दशप्रवृत्त्यनन्तरमेव प्रमेयनिर्णय इति न; प्रायः प्रमाणप्रवृत्तिसमनन्तरमेव प्रमेयावधारणमिति ज्ञापनार्थमेवं निर्देशः। एवं तर्हि चतुर्दशस्त्वेव वक्तव्येषु भवता कथं विपर्ययः स्मृतिरनुभव इति अधिकं स्वसूत्रे गणितमित्यत्राह नचेति। कथात्वेति पाठः। अतथात्वेत्यादिकमशुद्धम्। वादजल्पवितण्डानां कथात्वरूपसामान्यधर्मपुरस्कारेणापि संग्रहे न चतुर्दशत्वम्। विपर्ययस्वरूपोपाधेः संशयादावभावात् पृथक्कारेऽस्य चतुर्दशाधिकता स्यादिति भावः। एतावदेवेति। न तु कणादसंमतप्रमेयरीतिज्ञापनमभिमतम्। न च विभागप्रकारमन्यमपोह्य षोडशधाविभजनमेव कार्यमित्यपि। नापि प्रमेयप्राधान्यमेवात्रेति॥

उपोद्घातो वृत्तः। अथ ग्रन्थप्रमेयम्। तत्र वैशेषिकदर्शनस्य भाष्यमारचयन् प्रशस्तपादो यथा मूलोक्तक्रमेण सर्वसूत्रग्रहणेन व्याख्यानमनपेक्ष्य कणादाभिमतं सर्वं मनसि निधाय प्रकारान्तरेण परिष्कृत्य सर्वमब्रवीत्, तथा गौतमीयदर्शनोक्तं सर्वं प्रतिविपादयिषुः तथैव पञ्चैवाध्यायान् कुर्वन् अवयवादिनिग्रहस्थानान्तपदार्थजातमनुमान एवान्तर्भाव्य प्रत्यक्ष—अनुमान—शब्दाध्यायेषु त्रिषु कृतेषु अनुभवात्मकज्ञानस्योक्ततया स्मृत्यात्मकं ज्ञानं चतुर्थेन प्रतिपाद्य प्रमाणेयत्तां प्रदर्श्य प्रमेयमन्ते पञ्चमेन गृह्णाति। तत्र प्रथमनिरूप्यस्य प्रमाणपदार्थस्य प्रमातत्करणाधिकतया तद्विवेचनस्य च प्रमाणाप्रमाणोभयसत्त्व एवावश्यकतया

॥ प्रमाणाप्रमाणव्यवस्थापनम् ॥

अस्ति तावत् इदं प्रमाणमिदमप्रमाणमिति प्रसिद्धो लौकिकपरीक्षकव्यवहारघण्टापथः । तदनादरे तु निराश्रयतया परीक्षणस्याप्यनुदयः ॥

व्यवहारो हि जगतो भवत्यालम्बने क्वचित् । न तत् सामान्यतो नास्ति कथंता तु परीक्ष्यते ॥
सामान्यनिश्चितार्थेन विशेषे तु बुभुत्सिते । परीक्षा सूचिता स्वेष्टप्रमाणोत्पादनात्मिका ॥२४
न सर्वस्याप्रमाणत्वं स्वपक्षस्य स्वतः क्षतेः । न सर्वस्य प्रमाणत्वं स्वपक्षस्यान्यतः क्षतेः ॥२५

---

तत्सत्तामादौ स्थापयति । अत एव प्रमाविपर्ययोभयं क्रमेण निरीक्ष्यति । अस्ति तावदिति । अस्त्येवेत्यर्थः । घण्टापथः राजमार्गः । अत्रायमाशयः—अस्मिन् व्यवहारे इदं प्रमाणमिति भाग एव सम्यक् भागान्तरमनुपपन्नमिति चेत्—तर्हि तस्याप्रमाणत्वमेवोक्तं भवतीति प्रमाणाप्रमाणद्वयसिद्धिः । यदि इदमप्रमाणमित्येव युक्तम्, न तु पूर्वमिति—तर्हि तस्य तदर्थे प्रामाण्यमेवेष्टमिति तद्द्वयसिद्धिरेव । अतः सर्वप्रामाण्यवादः सर्वाप्रामाण्यवादश्च न भवतीति । सर्वात्मना तद्व्यवहारानादरे दोषमाह तदनादर इति । अनादरः किं व्यवहारापलापः उत तत्प्रतिपाद्यप्रकारापलापः ; नाद्य इत्याह निराश्रयतयेति । श्रोत्रेन्द्रियगृहीतस्य शब्दराशेरपलापो न भवति; सामान्यतस्तदर्थापलापोऽपि न भवति । व्यवहारं तस्य किञ्चित् प्रतिपाद्यञ्च गृहीत्वैव हि साध्वसाधुत्वविचारः क्रियत इत्यर्थः । कथंता तु=किञ्चिन्निष्ठप्रामाण्यतदन्यनिष्ठाप्रामाण्यरूपार्थस्य साधुत्वासाधुत्वरूपप्रकारभेदस्तु । सामान्यनिश्चितार्थेन । सामान्यरूपेण निश्चितः अर्थः=धर्मी येन पुरुषेण, तेन विशेषजिज्ञासायां सत्यां परीक्षा युज्यते । परीक्षाशब्दार्थमाह स्वेति । प्रमाणशब्द इह प्रमापरः । तदुत्पादनं तदुत्पत्त्यनुकूलानुमानप्रयोगः । तस्य प्रयोगस्य कदाचिदसाधुत्वेन प्रमित्यसंभवेऽपि प्रमित्युत्पिपादयिषया प्रयोगात् तथोक्तिः । एतत्प्रमाणशब्दवत् एतद्ग्रन्थस्थपूर्वापरप्रमाणशब्दानामपि प्रमित्यर्थकत्वं युक्तम् । एवं प्रमाविचारेपि तत्करणविचारोऽप्यर्थसिद्ध इत्यभिप्रायेण प्रमितिं तत्करणञ्चेति वक्ष्यति । ननु व्यवहार इव तत्प्रतिपाद्यमपि किञ्चिदस्तु; न तत् साध्वित्यत्राह नेति । सर्वस्याप्यप्रमाणत्वात् कतिपयप्रामाण्यव्यवहारोऽसाधुरिति चेत्—न सर्वस्याप्रमाणत्वम्; सर्वमप्रमाणमिति स्वपक्षविषयकज्ञानस्यापि तर्ह्यप्रमाणत्वमुक्तं भवति । अप्रमाविषयत्वात् स्वपक्षेऽसाधुरिति सिद्ध्यति । यदि सर्वस्यापि प्रमाणत्वात् कतिपयाप्रामाण्यव्यवहारोऽसाधुरिति, तर्हि अन्यपक्षविषयकज्ञानस्य प्रमात्वात् तेन स्वपक्षबाधः । ननु स्वपक्षेणान्यपक्षक्षतिरेवास्त्विति चेत्—तदापि कथं क्षतस्य प्रमाविषयत्वमिति सर्वप्रमात्वरूपस्वपक्षबाध एव । उभयस्वीकारे तयोर्विरोधो न स्वीकार्यः । तथैवास्वीकारे परीक्षाया एव नावसरः । प्रमाणाप्रमाणव्यवस्थाव्यवहारो न युक्तः विरोधाभावादित्येव ब्रूम इति चेत्—धर्मिग्राहकप्रमाणेन विरोधविशिष्टतयैव प्रतीतत्वात् अर्धजरतीयमसाध्विति भावः । प्रमाणाप्रमाणव्यवस्था नास्तीति स्वपक्षः सर्वप्रामाण्यस्वीकारेण वा सर्वाप्रामाण्यस्वीकारेण

बाधाबाधव्यवस्थापि मानतः स्याद्व्यवस्थितात्। अन्यथा त्वव्यवस्थाया न व्यवस्थेत्यवस्थितेः॥
सर्वत्रानिर्णये न स्तः संशयोत्पत्तिनिर्णयौ । यथा तत्कोटितत्सिद्धिस्तथान्यत्रापि युज्यते ॥
धर्मिसाधारणाकारकोटीनां पूर्वनिश्चये । असावयमयं वेति ह्याविर्भवति संशयः ॥ २८ ॥
सर्वत्र संशयस्तावन्न सर्वस्यापि दृश्यते । सर्वं संदिग्धमिति ते निपुणस्यास्ति निश्चयः ॥ २९॥
संशयश्च न संदिग्धः संदिग्धाद्वैतवादिनः । दूरं गत्वापि दुर्वारः संशये निर्णयस्तव ॥ ३०

---

ग्रन्थान्तर इव सुलभे, ल्यब्लोपे पञ्चमी, प्रामाण्यमन्तरेणेत्यर्थ इत्यादिकल्पनमतिक्लिष्टं लक्ष्यते । एवं मानसिद्धिमुपपाद्य इदमप्रमाणमिति वा सर्वमप्रमाणमिति वा बाधस्य, तद्बाधरूपाबाधस्यास्मदिष्टस्य तद्बाधाभावरूपत्वद्बाधस्य सर्वस्य प्रमाणाधीनत्वात् प्रमाणसिद्धिर्नापलप्येत्याह बाधेति । अन्यथा=बाधाबाधव्यवस्थाऽपि न, व्यवस्थासामान्यमेव मा भूदिति स्वीकारे, त्वत्संमतायाः अव्यवस्थायाः=बाधाबाधव्यवस्थाविरहस्यापि न व्यवस्थेति स्यात् । तथाच बाधाबाधव्यवस्थैवोक्ता भवतीति ॥ ननु इदं प्रमाणमिदमप्रमाणमिति व्यवस्थाव्यवहारोऽस्माभिर्निराक्रियते, व्यवस्थायाः निर्णयाधीनत्वात् तदभावादिति ; तत्राह सर्वत्रेति । यदि निर्णय इति कुत्रापि नास्ति, तर्हि संशयोत्पत्तौ निर्णयार्थप्रवृत्तिर्निर्णयोत्पत्तिश्चेति सर्वापलापः स्यात्। तथाच परीक्षैव व्यर्थेति । संशयस्वीकारिणा निर्णयोऽपि स्वीकृत एवेत्याह यथेति । यथा स्थाणुर्वा पुरुषो वेति संशयगतयोः स्थाणुत्वपुरुषत्वकोट्योः तद्विषयकसंशयस्य च सिद्धिर्दृश्यते, तथा अन्यत्रापि संशयातिरिक्तस्थलेऽपि एककोटितज्ज्ञानयोः सिद्धिर्दृश्यत एव ; कथं तदपलाप इत्यर्थः । अनेकनिर्णयजन्यत्वाच्च संशयस्य तत्सिद्धिरित्याह धर्मीति । यत्र संशयः तत् धर्मि पूर्वं ज्ञातव्यम् , तत्रोर्ध्वत्वादिः साधारणधर्मोऽपि ज्ञातव्यः । तथा स्थाणुत्वं यत्र क्वापि स्थाणौ, पुरुषत्वं यत्र क्वापि पुरुषे च पूर्वमेव ज्ञाते चेत्, तदैव तत्तत्कोटिस्मरणं संप्रति जायेत । तत एवासौ स्थाणुर्वा पुरुषो वेति संशयाविर्भाव इत्यर्थः । सर्वं ज्ञानं संशयात्मकमित्यप्यनुभवविरुद्धम् । यथा ज्ञानस्य भातविषयकत्वापलापो न युक्तः, तथैवाभातांशविषयकत्वकल्पनमप्ययुक्तमिति । यस्य कस्यचित् यत्र क्वचित् निर्णयसत्त्वेऽपि त्वत्पक्षहानिरित्याह सर्वत्रेति । तदेव साधयति सर्वमिति । तव स्थितस्त्वत्पक्षनिर्णय एव त्वत्पक्षघातीत्युक्तं भवति । एकैकस्यापि पुरुषस्य निर्णयोऽस्तीति त्वयैवोपगन्तव्यमित्याह संशय इति । सर्वं संदिग्धमिति संदिग्धातिरिक्ताभाववादिनस्तव यो यः संशयो जायते, तत्र सर्वत्र, इदं ज्ञानं धर्मिकोटिद्वयविषयकं न वा, अहं संशयवान्न वेति संदेहो हि न जायते । तद्वदेव प्रतिपुरुषम् । ननु संदेहरूपधर्मिज्ञानाभावात् तथा न संशय इत्यत्राह दूरमिति। अहं संशये, अहं संदेह्मीति निर्णयः स्थित एव । तत एव धर्मिविषयकत्वादावपि निर्णयः । अथापि संशये प्रकारान्तरेण अपनोद्यत्वानपनोद्यत्वादिना संदिग्धताऽस्तु इति चेत्—अस्तु ; तावता निर्णयस्तु तव न त्यक्त इत्यप्यर्थः । तदेवं कारिकाभिः प्रमाणाप्रमाणव्यवस्थां साधितामुपसंहरन्, तर्हि लोकप्रसिद्धार्थस्य लक्षणं किमिति वक्तव्यमित्याशंकां परिहरति

मानामानविभागोऽतः सामान्येन व्यवस्थिते । क्वाचित्कसंशयोच्छित्त्यै लक्षणं संप्रचक्षते ॥३१

तत्र—व्युत्पत्तिविवक्षाभेदात् प्रमितिं तत्करणं च यथेच्छं प्रमाणमाहुरित्यवोचाम. आश्रयप्रामाण्यस्यानादेशिकत्वात् । "आप्तप्रामाण्यात्" (न्या.सू. 2-1-67)=आप्तोक्तत्वहेतोः प्रामाण्यादित्यर्थः । न हि वक्तृप्रामाण्यं वाक्यप्रामाण्ये उपयुज्यते लौकिकवाक्येषु ; किंतु कारणदोषाभावः ।

---

मानेति । क्वाचित्कसंशयेति ; स्थाणौ स्थाणुधीवत् पुरुषेऽपि स्थाणुधियः क्वचिज्जायमानत्वात् अन्यत्र अयं स्थाणुरिति बुद्धौ भवति संशयः, इयं धीः प्रमा न वेति । तत्र प्रमालक्षणं निरुच्य, पृथिवीत्वसंदेहास्पदे गन्धवत्त्वलक्षणेन पृथिवीत्वज्ञापनवत् प्रमालक्षणसमन्वयनेन प्रमात्वं साधयित्वा संशयः उच्छेद्य इति लक्षणं संप्रचक्षते=कथयन्ति ॥

प्रमालक्षणं विवक्ष्यते ; प्रमितिकरणरूपप्रमाणस्य प्रथममुद्देशेऽपि प्रमालक्षणकथनं नायुक्तमिति प्रथमतो दर्शयति तत्रेति । प्रमाणलक्षकवचन इत्यर्थः । प्रमितिरेव शब्द्येत्यत्रान्वयः । व्युत्पत्तिविवक्षाभेदादिति । प्रमीयत इति भावे व्युत्पत्तेर्विवक्षायां प्रमितिरर्थः । प्रमीयतेऽनेनेति करणव्युत्पत्तेर्विवक्षायां प्रमितिकरणमर्थः । ननु प्रमिणोतीति कर्तृभूताश्रयरूपार्थविवक्षापि लक्ष्यते—भगवा देवः प्रमाणम्, प्रमाणभूत आचार्यः, आप्तः प्रमाणम् इत्यादिप्रयोगादित्यत्राह आश्रयेति । आश्रयरूपः प्रमाणशब्दार्थः अनादेशिकः=आदेशः शासनं पाणिनेः ; अभिधानाभिधेयनियमनियोगः ; तत्फलं न भवतीत्यर्थः । भावे ल्युट् ; करणाधिकरणयोश्च ; न तु कर्तरि । अत एव ज्ञानपदस्य ज्ञानाश्रयरूपार्थसंभवः श्रीभाष्ये आक्षिप्तः । प्रयोगस्तु वृत्त्यन्तरेणापि प्रयोगस्य लोके बहुलं दर्शनान्निर्वहणीयः । अतः प्रयोगमात्रेण न शक्तिसिद्धिः । ननु मन्त्रायुर्वेदेति(.....)सूत्रे आप्तप्रामाण्यादिति प्रयुक्तम् । तत्र प्रमाकरणावस्थेश्वरादावभावात् प्रमाश्रय इत्येवार्थो वक्तव्य इत्यत्राह आप्तेति । तस्यार्थस्य तत्रानन्वयात् प्रमितिकरणरूपार्थ एव वक्तव्य इत्यर्थः । ननु "तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते" इति न्यायकुसुमाञ्जलौ प्रमानित्याश्रय इत्यर्थ उक्त इति चेन्न—आश्रयरूपार्थं यद्यविवक्षिष्यत्, प्रमाश्रयत्वं प्रामाण्यमित्येवावक्ष्यत् । अतस्तदाशय एवम्—आश्रयरूपार्थेऽनुशासनाभावात् प्रमाश्रय इति नार्थः । कर्तुः करणत्वं यद्यपि न भवति—अथापि करणे व्युत्पत्तिमेव स्वीकृत्य—करणत्वं फलायोगव्यवच्छेदेन कारकत्वम् ; यस्योत्तरक्षणे कार्यमवश्यम्भावि तत् साधकतमं करणम् ; तत्र प्रमित्ययोगव्यवच्छेदमात्रं करण आश्रयोभयसाधारणमिति तन्मात्रविवक्षा प्रमाणशब्दे ; ईश्वरे ज्ञानस्य नित्यत्वात् तदयोगव्यवच्छेदः—मन्त्रायुर्वेदकर्तृष्वपि उत्पन्नं ज्ञानं संततिरूपेण अविच्छिन्नमस्तीति विवक्षेति भावः । शंकितं न हीत्यादिना व्युदस्यते । आप्तस्य प्रमाश्रयत्वं न वाक्यप्रामाण्ये हेतुर्भवति । किं सिद्धस्य वाक्यप्रामाण्यस्य कारणं विमृश्यते, किं वा आप्तप्रामाण्येन वाक्ये प्रामाण्यमनुमीयते । नाद्यः, दोषाभावमात्रेण वाक्यप्रामाण्यसंभवात् आप्तगुणरूपकारणस्यानपेक्षितत्वात् । पूर्वाचार्यवाक्यानुवादकाचार्यवाक्ये प्रामाण्ये आप्ताचार्यप्रामाण्यस्य कारणत्वाभावाच्च । प्रकारान्तरेण

द्विधाऽपि प्रमितिरेव शोध्या ॥

(प्रमालक्षणपरीक्षणम्)

**तत्रास्मदीया एव केचिदन्यथाख्यातिमिच्छन्तः स्मृतेः प्रामाण्यमनिच्छन्तः सम्यगनुभवः प्रमेति लक्षयन्ति ; उभयमिच्छन्तः, यथार्थज्ञानं प्रमेति ; उभयमनिच्छन्तः, अनुभूतिः प्रमेति । एवंप्रायाणि च बहून्यन्तरोक्तानि लक्षणानि ॥**

---

वाक्यप्रामाण्ये सिद्धे एतद्विचारस्य व्यर्थत्वाच्च । न द्वितीयः, वक्तुः प्रमाश्रयत्वेऽपि विप्रलम्भबलाधीने वाक्ये अप्रामाण्यदर्शनेन प्रामाण्येन तदनुमानायोगात् । न च विप्रलम्भाधीनवाक्यस्यान्यप्रकारकतया वक्तृगतप्रमायाश्चान्यविषयकतया तस्य न तदधीनत्वमिति वाच्यम्—एवमपि वक्तृप्रमाधीनत्वेऽपि करणापाटवेनान्यार्थके वाक्ये तेन प्रमाण्यानुमानायोगात् । अतो लौकिकवाक्येऽपि वक्तृप्रामाण्यस्य तत्प्रामाण्येऽनुपयोगात् न तन्मुखेनेश्वरप्रमाण्यसिद्धिः । तस्मात् **आप्तप्रामाण्यादि**त्यस्य आप्तस्य—वक्तुः प्रामाण्यात्=प्रमितिकरणत्वादित्येवार्थः । आप्तस्य करणत्वञ्च आप्तोक्तत्वरूपहेतुघटकतया करणतावच्छेदकत्वात् प्रयोजकत्वरूपम् । आप्तोक्तत्वात् भवत्यनुमेयं वाक्यप्रामाण्यम् । महाजनपरिग्रहस्यानुमापकत्वमिष्टं हि । तथाच प्रमाणपदमुख्यार्थः प्रमा तत्करणञ्च, व्युत्पत्तिभेदात् ; नाश्रय इति । वस्तुनो**ऽनादेशिकत्व**मसांप्रदायिकत्वम् ; सर्वार्थसिद्धौ (1-11) तथाप्रयोगात् । प्रासंगिकमेतत् । **द्विधाऽपी**ति । प्रमाया इव प्रमाकरणस्यापि प्रकृते प्रमाणपदार्थत्वेऽपीत्यर्थः ।

**सम्यगनुभव** इति । तार्किकमनुसृत्य तद्वति तत्प्रकारकत्वरूपसम्यक्त्वाश्रयोऽनुभव इति वदन्ति, अनुभवत्वमप्रमायामपीति सम्यक्त्वनिवेशः । यथार्थस्मृतिवारणायानुभवत्वनिवेशः । अन्यथाख्यातिमिव स्मृतिप्रामाण्यमपीच्छन्तोऽस्मदीयाः अनुभवत्वं विहाय ज्ञानत्वमेव निवेशयन्तीत्याह **उभयमिति । प्रमेतीति । लक्षयन्ती**त्यनुषंगः । इच्छादिवारणाय ज्ञानत्वनिवेशः अस्मन्मते इच्छादेर्धर्मभूतज्ञानपरिणामत्वेऽपि ज्ञानत्वरूपावस्थाविशेषाश्रयत्वं न भवति । जानातीच्छतीत्यादिनियतप्रसिद्धेः । प्राभाकरपक्षमाह **उभयमनिच्छन्त** इति । अन्यथाख्यातिं नेच्छन्ति ; सांख्यवत् अख्यातिवादित्वात् । स्मृतिप्रामाण्यमपि नेच्छन्ति । तद्वारणाय ज्ञानं प्रमेत्यनुक्त्वा अनुभवः प्रमेति लक्षयन्ति । न च भ्रमज्ञानेऽतिव्याप्तिरिति शंक्यम्, अन्यथाख्यातिरूपभ्रमस्यानिष्टत्वात् । तद्रूपत्वाभावेऽपि भ्रम इष्ट एवेति चेत्—शुक्तौ रजतमिति ज्ञानं नाम इदं रजतमिति । तत्रेदमंशदर्शनमनुभव एव । रजतमिति स्मरणात्मकज्ञानञ्चान्यत् भ्रमपदविवक्षितम् । तस्य स्मृतिरूपत्वादनुभवत्वाभावान्नातिव्याप्तिः । धारावाहिकज्ञानसन्ततेः प्रमात्वमिष्टम् । **अतोऽनधिगतार्थगन्तृत्वमित्यादिलक्षणत्याग** इति । भाट्टा इव केचित् अनधिगतार्थगन्तृत्वमज्ञातार्थग्राहकत्वरूपमेव प्रमात्वमिच्छन्ति । अयं घट इति धारावाहिकज्ञाने अप्रमितेः उत्तरोत्तरविभिन्नक्षणभानादज्ञातार्थग्राहित्वमिति तदा वक्तव्यम् । निष्प्रकारकज्ञानं स्वलक्षणविषयकं प्रमा, सविकल्पकं सर्वमप्रमेति बौद्धाः

वयं तु ब्रूमः—यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमेति ।
यथार्थख्यातिमख्यातिमन्यथाख्यातिमेव वा । इच्छद्भिर्न विमन्तव्यमिदं लोकानुसारतः ॥ ३२

---

केचित् । अनिर्वचनीयवादिनस्तु व्यवहारे भाट्टानुसारिणः । तन्मतनिष्कर्षे तु बाध्यार्थविषयकज्ञानं भ्रमः । तद्भिन्नज्ञानं प्रमेति । प्रमालक्षणस्य तत्तदुक्तस्येतरमतसाधारण्याभावात् भ्रमस्थले प्रमाव्यवहाराभावस्य सर्वेष्टत्वात् सर्वसंमन्तव्यं लक्षणं स्वयमाह वयंत्विति । यथा सर्वैर्व्यवह्रियमाणस्य ज्ञानपदस्य स्वयंप्रकाशत्वात्मविशेषगुणत्वादिकं कतिपयमात्रसंमतं प्रवृत्तिनिमित्तं न भवति । तद्वत् यथार्थत्व—अनुभवत्वादिकं प्रमापदप्रवृत्तिनिमित्तं न भवति । अन्यथाख्यातिसंमतौ भ्रमस्थलेऽपि यथार्थत्वसत्त्वात् , अख्यात्यनभ्युपगमे भ्रमेऽपि अनुभवत्वसत्त्वात् तादृशलक्षणायोगात् । यथावस्थितेति । इदं व्यवहारविशेषणमिति स्पष्टम् । ज्ञानविशेषणत्वं तु न भवति । यथावस्थितत्वं हि अबाधितस्वरूपत्वम् । तत् भ्रमस्यापि । व्यवहारो द्विविधः, कायिको वाचिकश्च । भ्रमस्यापि तदनुगुणत्वात् व्यवहारे यथावस्थितत्वनिवेशः । भ्रमाधीनव्यवहारस्यापि स्वरूपमबाध्यमेवेति पुनरतिव्याप्तिरेव । तस्मादबाध्यार्थसंबन्धित्वं यथावस्थितत्वञ्चेत्—वाचिके शब्दे किमिदमर्थसंबन्धित्वम् । तद्बोधकत्वमिति चेत—तर्हि अबाध्यार्थविषयकज्ञानजनकशब्दप्रयोगानुगुणज्ञानत्वमित्युक्तं भवति । तद्घटकस्य जनकेत्यादिभागस्य वैयर्थ्यम् । तत्पूर्वांशमात्रस्य लक्षणत्वसंभवात् । कायिकव्यवहारस्य हानोपादानादेर्ग्रहणे तज्जनकत्वं ज्ञानस्यात्मगतप्रयत्नद्वारैव वक्तव्यमिति प्रयत्नस्यैव निवेशोऽलम् । अतो व्यवहारपदं प्रयत्नपरम् । अत एव सर्वार्थसिद्धौ प्रवृत्तिपदप्रयोगः । तस्य यथावस्थितत्वं तद्वति तत्प्रकारकत्वम् ॥ शुक्तौ इदं रजतमिति ज्ञानाधीनप्रयत्ने यथार्थख्यातिवादे तत्र रजतांशसत्त्वात् तद्वति तत्प्रकारकत्वमस्तीति चेत्—कार्योपयोगित्वं यादृशरजतस्य तत्प्रकारकत्वं नास्तीति ध्येयम् । यद्वा यथावस्थितत्वं संवादित्वं सफलत्वम् । तत्र विसंवादिन्येव प्रवृत्तिः । मणिप्रभायां मणिबुद्ध्या प्रवृत्तौ प्रवृत्तिसाफल्यात् तत्र प्रमात्वापत्तिरिति चेत्—तत्र साफल्यं मणितत्प्रभयोरपृथक्सिद्धिप्रयुक्तम् । अतोऽनन्यप्रयुक्तसाफल्यशालिप्रवृत्तिकरज्ञानत्व प्रमात्वम् । ज्ञानसत्त्वेऽपि प्रवृत्त्यभावदर्शनात् तत्र जनकत्वाभावेऽपि स्वरूपयोग्यत्वमस्तीति ज्ञापनायानुगुणमित्युक्तम् । प्रवृत्तिजनकत्वमिच्छाद्वारेति इच्छावारणाय ज्ञानत्वनिवेशः । अस्य लक्षणस्य सर्वसंमन्तव्यत्वमाह यथार्थेति । इच्छद्भिरिति । भ्रमस्थले इति शेषः । इदम् एतल्लक्षणम् । लोकानुसारतः । इदं रजतमिति यथार्थख्यातिरेवेति पक्षे याथार्थ्यसत्त्वेऽपि लोके प्रमात्वं नेष्टमिति भावः । अख्यातिपक्षे तत्र रजतमिति स्मरणात्मकम् । तत्र याथार्थ्यमस्ति ; प्रमात्वं नेष्टम् । तत् संवादिप्रवृत्त्यभावादेव ॥ केचित् व्यवहारपदं ज्ञानजनकशब्दप्रयोगरूपमेवेच्छेयुः । धर्मिभूतज्ञानस्य निर्विषयकस्यापि प्रमात्वं तदिष्टम् । इदञ्चोपरि ज्ञास्यते । तत्राबाध्यार्थविषयकत्वं साक्षान्नास्ति निर्विषयकस्वप्रकाशरूपत्वात् । अथापि तादृशज्ञानजनकशब्दप्रयोगहेतुत्वमस्तीति तत्र समन्वयाय गुरुभूतलक्षणस्वीकार इति ।

**स्मृतिमात्राप्रमाणत्वं न युक्तमिति वक्ष्यते। अबाधितस्मृतेर्लोके प्रमाणत्वपरिग्रहात् ॥३६**
**बुद्धागमादित्यागे च न हेतुः स्मृतिमूलता। विशुद्धस्मृतिमूलेऽपि मानवादौ प्रसङ्गतः ॥३७**
**भ्रान्तिं प्रमातो भिन्दन्तो न चाहुः स्मृतिमानताम्। स्मृतित्वमेव हि व्यक्तमप्रामाण्यं भवन्मते**
**पीतशङ्खभ्रमादौ च न ह्येतदु(वमु)पपद्यते। चक्षुषैव हि शङ्खादेः पीतिमादेश्च तत्र धीः ॥३९**
**ततश्च प्रतिपत्तौ वा व्यवहारोदयेऽपि वा। तथाभावान्यथात्वाभ्यां प्रमाभ्रान्तिव्यवस्थितिः ॥**
**विपर्ययादेर्व्यावृत्तिरेवमेव हि सिध्यति। यत्किंचिदन्यथात्वं हि वैपरीत्यमितो(मपी)ष्यते ॥४१**

---

ननु स्मृतावपि लक्षणमिदमतीव्याप्तिरित्यत्राह **स्मृतिमात्रे**ति। **मात्रपदं** कार्त्स्न्ये। यथार्थस्मृतिभिन्नस्मृतेरेवाप्रमात्वम्। अतोऽत्रानुभवत्वं विहाय ज्ञानत्वमेव निवेश्यमिति। स्मृतेः प्रमात्वे बुद्धाद्यागमस्य स्मृतिजन्यत्वात् प्रमाणत्वं स्यादिति चेन्न; आगमः स न प्रमाणं स्मृतिमूलत्वादित्युक्तौ मन्वादिग्रन्थे व्यभिचारात्। व्याप्तेरिष्टत्वे तदप्रामाण्यापत्तेः। अतो बाधितस्मृतिमूलकत्वादिति वक्तव्यम्। वस्तुतः बुद्धादिवाक्यस्य लौकिकस्य तात्कालिककल्पनाधीनस्य वेदादिशब्दान्तराधीनस्मृतिमूलकत्वाभावात् हेतुरसिद्धः। बाधितार्थकत्वाच्च तदनुमानमाभास इति। मन्वादिग्रन्थस्याप्रमाणत्वापादनमिदं **प्राभाकर**-पक्षेऽपीत्याशयेनाह **भ्रान्ति**मिति। रजतभ्रमः, स्मृतिः; प्रमा चानुभव इति तयोर्भेद इति वदन्तो भवन्तः प्राभाकराः स्मृतेः प्रमाणतां न ब्रुवते, सर्वस्या अपि स्मृतेरनुभवरूपप्रमाभिन्नत्वात् स्मृतित्वाप्रमात्वयोरेकत्वात्। अतस्तदधीनमन्वादिग्रन्थस्याप्रामाण्यप्रसंग इत्यर्थः। **आहु**रित्यत्र **भवन्त** इति पूरणीयम्। उत्तरार्धे भवत्पदप्रयोगात्। अतः स्मृतिप्रमोषत्वं भ्रान्तित्वम्। वेदार्थानुभवाधीन विशिष्टस्मृतिस्तु यथार्था; न स्मृतिप्रमोष इति बुद्धागमादेः स्मृतिप्रमोषाधीनत्वादप्रामाण्योक्तिः कथञ्चित् युज्यते॥ भ्रान्तित्वरूपविपर्ययत्वस्य स्मृतित्वस्य चैक्यं स्मृतिविशेषे विपर्ययत्वाभावादिव विपर्ययविशेषे स्मृतित्वाभावादपि दुर्वचमित्याह **पीते**ति। **पीतिमा**=पीतरूपम्। तद्ज्ञानं प्रत्यक्षरूपानुभवात्मकं भ्रम इति सुप्रसिद्धम्। तत्र स्मृतित्वरूपभ्रमत्वं नोपपद्यत इत्यर्थः। अनुभवत्वं प्रमात्वमित्यप्यत एव दुर्वचम्॥ **ततश्चे**ति। तत्तदुक्तलक्षणानुसारे प्रमाभ्रमव्यवस्थोपपादनायोगादित्यर्थः। **प्रतिपत्ता**विति। इदं रजतमिति प्रमास्थल इव भ्रमस्थलेऽपि विशिष्टज्ञानरूपान्यथाख्यातिस्वीकारे प्रमायां **तथाभावः**=यथा वस्तु भवति तद्वत्तत्प्रकारकत्वम्, भ्रमे **चातथाभावः** तद्वृत्तिप्रकारकत्वमस्ति। द्वितीयरीतिस्तु तत्तदितरसर्वपक्षेऽपि। **व्यवहारोदये**=ज्ञानाधीनप्रवृत्तौ तथाभावः उद्दिष्टफलवैशिष्ट्यम्, भ्रमस्थले प्रवृत्तौ उद्दिष्टफलविरहश्च। **अपि**वेति अपिशब्दप्रयोगः अन्यथाख्यातिपक्षे प्रतिपत्तौ व्यवहारे चातथाभाव इति समुच्चयाय। **वाकारः** पक्षान्तरे प्रतिपत्तौ तदसंभवात्। तर्हि विपर्ययेऽपि प्रमात्वापत्तिः; पुरोवर्तिद्रव्यं रजतमिति भ्रमे द्रव्ये धर्मिणि पुरोवर्तित्वरूपतद्धर्मप्रकारकत्वसत्त्वात्। तथा संशयेऽपि। तत्र प्रवृत्तौ तत्साफल्ये च सति सफलप्रवृत्तिकरतया प्रमात्वापत्तिश्चेत्तत्राह **विपर्यये**ति। **आदि**ना संशयग्रहणम्। विपर्यये आंशिकप्रमात्वमांशिकभ्रमत्वञ्चेष्टम्।

आत्मख्यात्यादिवादेष्वप्यन्यथात्वमवारितम् । भ्रमप्रवृत्तिबाधादेरन्यथा न हि संभवः ।।४२
एवं सत्यन्यथाधीस्तत्सामग्री वापि लाघवात् । अयथाव्यवहारस्य हेतुरित्यव(त्येव)शिष्यते ।।
सर्वैरप्यन्यथाख्यातिर्दुस्त्यजत्वाल्लघीयसी । तद्वादिनाप्यवर्ज्यत्वात् ततोऽप्यख्यातिलाघवम्

यदि सर्वांशे प्रमात्व एव प्रमेति व्यवहार इष्यते, तर्हि तदभाववति तत्प्रकारकभिन्नं ज्ञानं प्रमेति निर्वाच्यम् । इदं न विपर्यये । अतो न प्रथमदोषः । संशये प्रमात्वं चेदानीं वारितमेव । अख्यातिपक्षे तु विसंवादिप्रवृत्तिजननानर्हज्ञानत्वं प्रमात्वमिति निर्वचनात् संशयवारणम् । संवादिप्रवृत्तिजननानर्हज्ञानत्वं विपर्ययत्वम् । उभयप्रवृत्तिजननार्हत्वं संशयत्वमिति भेदः । यथा प्रमात्वं सर्वांशे, तथा वैपरीत्यं सर्वांशेऽस्ति चेत्, तदेव विपर्ययत्वमिति नास्तीत्याह **यत्किञ्चि**दिति । अनेकविषयकज्ञाने यत्र क्वचिदन्यथात्वं विपर्ययव्यवहारायालमिति भावः । ननु विज्ञानरूपात्मैव तत्त्वम् ; तत्राविद्यमानजगद्ज्ञानं भ्रम इति **योगाचाराः** । ब्रह्मणि अनिर्वचनीयजगद्भ्रम इति **शांकराः** । तत्र विफलप्रवृत्तिहेतुत्वलक्षणं कथमित्यत्राह **आत्मे**ति । तत्तन्मते आत्मनो ब्रह्मणो वा यथावद्ज्ञाने सति यत् फलमिष्टम्, तदहेतुप्रवृत्तिकरत्वादेव लक्षणसमन्वयः । तज्ज्ञानस्यान्यथाख्यातिरूपत्वे तु तदभाववति तत्प्रकारकत्वमप्यस्तीति भावः । **भ्रमे**ति । **अन्यथा**=तत्र सर्वत्र सांवृतिकसत्यत्व-व्यावहारिकसत्यत्वसत्त्वात् सफलप्रवृत्तेरेव स्वीकारे भ्रमत्वं प्रवृत्तिबाधश्च न स्याताम् ।। **आदि**ना यथावस्थितात्मब्रह्मसद्भावज्ञानग्रहः । तदपि न कल्पनीयमिति भावः । ख्यातिपक्षेषु बहुषु स्थितेषु अख्यात्यन्यथाख्यात्यन्यतरपर्यवसानस्यास्माभिरुच्यमानस्येदमेव कारणम्, यत् तत्र सर्वत्र तदभाववति तत्प्रकारकत्वसत्त्वमिति दर्शयति **एवंसती**ति । अयं भावः—आत्मैवास्ति विज्ञानरूपः, नान्यदिति आत्मख्यातिवादिनः, असदेव ख्यायते, न सदित्यसत्ख्यातिवादिनः । आत्मैव, अथवा ब्रह्मैवानिर्वचनीयवस्त्वात्मना ख्यायत इति अनिर्वचनीयख्यातिवादिनः । सा ख्यातिः तार्किकस्येव एकज्ञानरूपा वा, प्राभाकरस्येव अनुभवस्मरणाद्यात्मकज्ञानद्वयरूपा वेति तैर्न शोधितम् । शुक्तिरन्यथा भासत इतिवत् आत्मा जगद्रूपेण भासत इत्युक्त्या स्वारस्यादन्यथाख्यातिरेवाभिमता स्यात् । एवञ्चान्यथाख्यातित्वोपपादनार्थमेवाऽऽत्मख्यात्यादिव्यवहारः । न ह्यात्मख्यातत्वमात्रेण भ्रमत्वम् ; आत्ममात्रविषयकज्ञानस्याभ्रमत्वात् । आत्मनो जगद्रूपेण परिणामवादिभास्करादिमते तथा भ्रमत्वाभावाच्च । अतः ख्यातिविषययोर्मिथोऽसंसर्गो भ्रमत्वप्रयोजक इति सिद्धमन्यथाख्यातित्वम् । अस्तु, तत्पक्षे कथमिति चेत्—तस्याः अख्यातेरुक्तासंसर्गाग्रहरूपाया एवान्यथाख्यातिकारणत्वस्य नैयायिकैरुक्ततया, अन्यथाख्यातिहेतुनैवान्यथाख्यातिकार्यविफलप्रवृत्तिनिर्वाहे किं मध्ये तत्कल्पनया ; तद्भेतोरेवास्य तद्धेतुत्वे मध्ये किं तेनेति न्यायादिति लाघवादन्यथाख्यातित्यागः ; अयथाव्यवहारनिर्वाहश्चेति । किञ्चाख्यातिवादी सर्वं ज्ञानं यथार्थं मन्यते, अन्यथाख्यातिस्वीकारे तत्र यथार्थत्वभंगात् तदुपेक्षा । आत्मख्यात्यादिवादिनां तु ज्ञानस्यायथार्थत्वमिष्टमिति न तत्त्याग इति । उभयत्र विशेषे हेत्वन्तरमपि दर्शयते **सर्वैरि**ति । आत्मख्यात्यादिवादिनां लोके

**स्वारस्यमन्यथाख्यातावख्यातौ लाघवं स्थितम्। इति दर्शयितुं भाष्ये द्वितयं तदनुज्झितम्॥४७**

इयं शुक्तिरिति ज्ञानं प्रमा, तत्रेदं रजतमिति ज्ञानं भ्रम इत्येतन्निर्वाहः कथम्; आत्मख्यातित्वादेरविशिष्टत्वात्। अतोऽन्यथाख्यातित्वं ज्ञानविषयवृत्तिधर्मप्रकारकख्यातित्वं यस्य स्फुटप्रतीतम्, स भ्रमः, अन्या प्रमेति वक्तव्यमिति अस्याः दुस्त्यजत्वात् आत्मख्यात्यादित्वमननुगतं विमतमुपेक्ष्य लाघवादन्यथाख्यातित्वरूपधर्म एव वक्तुमुचितः। **तद्वादिनेति**। अन्यथाख्यातिवादिना तार्किकादिनाऽपि तत्कारणतया अख्यातेः=असंसर्गाग्रहस्यांगीकार्यतया अख्यातिमेव पुरस्कृत्य भ्रमव्यवहारनिर्वाहः क्रियतामित्यर्थः। तथाच, 'आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा। अनिर्वाच्यख्यातिरेवं प्रसिद्धं ख्यातिपञ्चकम्' इति विभागात् अन्यपक्षे अन्यथाख्यात्यादिर्न भवतीति न मन्तव्यम्। अनिर्वचनीयख्यातिवादिभिः परोक्षे अनुमित्यादावन्यथाख्यातेरेव स्वीकाराच्च॥ अख्यातेः कथं ख्यातित्वेन गणनेति चेत्—**अख्यातिः** ख्यात्यभावः विशिष्टज्ञानाभावः भेदाग्रहः असंसर्गाग्रहो वा। तद्विशिष्टं धर्मिज्ञानधर्मज्ञानोभयम् अख्यातिपदार्थ इति।

तर्हि भाष्यकारः अख्यातिवादेऽप्यन्यथावभासं कथमभाषिष्ट; अन्येषामन्यथाख्यातिसंमतावपि अख्यातिवादिना कुत्रापि तदसंमतेः। तत्स्वीकारे सर्वज्ञानं यथार्थमित्यस्य भंगप्रसंगादित्यत्रोत्तरमनन्तरश्लोकः **स्वारस्य**मिति। इदं रजतत्वेन जानामि; इदं रजतमिति ज्ञानमेकम्, न द्वयमित्यनुभवात्, ज्ञानद्वित्वे इयमिति स्त्रीलिंगेन रजतमिति परं क्लीबेन प्रयुज्येत—तदभावाच्चान्यथाख्यातौ स्वारस्यमस्ति। न च लाघवयुक्त्या प्रत्यक्षसिद्धस्य विशिष्टज्ञानस्यान्यथाख्यातिरूपस्यापलापसंभवः दृष्टापह्नवायोगात् इति तद्भाष्याशयः। अख्यात्यवलम्बनं तु सर्वज्ञानयाथार्थ्याय लाघवे पक्षपातादिति। लाघवञ्च मध्ये विशिष्टज्ञानस्य कस्यचिदकल्पनात्। किञ्च घटविषयकज्ञानवानहमिति विशिष्टव्यवहारे विशिष्टज्ञानं कारणमिति नियमो नेष्यते सिद्धान्ते। घटज्ञानस्य घटत्वविशिष्टघटमात्रकर्मकत्वात् ज्ञानस्याऽऽत्मनश्च स्वयंप्रकाशतया ज्ञानकर्मत्वानपेक्षणात्, ज्ञानात्मनोर्धर्मधर्मिभावस्य स्थितिमात्रापेक्षणात्। ईदृशघटज्ञान—ज्ञानप्रकाश—आत्मप्रकाशसमुदायस्यैव विशिष्टव्यवहारकारणत्वसंभवात् अनुभवसिद्धमपि विशिष्टज्ञानं नेष्यते स्वप्रकाशत्वबलात्—तथा शुक्तिज्ञानरजतज्ञानप्रकाशयोरेवासंसर्गाग्रहविशिष्टयोर्विलक्षणप्रवृत्तिकारणत्वे लाघवं स्थितमिति दर्शयितुं भाष्ये, (प्रथमं **ख्यात्यनुरवादिनां**त्विति अन्यथाख्यातेरवश्याश्रयणीयत्वमुपपाद्य अख्यातिवादिनां वस्तुतस्तदभावेऽपि स्वयं तत्र स्वारस्यमुक्त्वा,) अन्यथाख्यातेरखण्डनेन, स्वारस्यत्यागः ज्ञानयाथार्थ्यप्रयुक्तः; ज्ञानस्य सत्त्वकार्यतया याथार्थ्यावश्यम्भावादित्याशयेन **अथवायथार्थं सर्वविज्ञान-**मित्यारम्भेण, अख्यात्यन्यथाख्यातिद्वयस्यानुज्झनम् अन्यख्यातिवादोज्झनञ्च कृतमित्यर्थः।

ननु भ्रमस्थलेऽपि यथार्थविशिष्टज्ञानमेव, शुक्तौ रजतांशसत्त्वात् इदं रजतमित्यभेदस्याक्षतेरिति **न्यायतत्त्वे** श्रीमन्नाथमुनिभगवत्पादतत्वात् न तत्रान्यथाख्यातिः, नाप्यसंसर्गाग्रह इति द्वितयमुज्झितमेवे-

**यन्नाथमुनिमिश्राद्यैर्यथार्थख्यातिसाधनम् । तल्लोकबुद्ध्यनारोहाद्वैभवं केचिदूचिरे ॥**
**मानादख्यात्यादिसत्त्वेऽपि तयोरन्यतरद् ध्रुवम् । कार्याक्षमत्वाग्रहणात् तत्क्षमत्वग्रहेण वा ॥ ४८**
**ख्यात्यन्तराणां दोषास्तु तत्तत्सिद्धान्तशीलने । स्वयमेवोन्मिषन्त्येव संग्रहात् किंचिदुच्यते ॥**

यत्राह यदिति । **केचित्** सिद्धान्त्येकदेशिनः **तत् वैभवमूचिरे** । **वैभवं** विभुत्वं प्रभुत्वं स्वातन्त्र्यम्; नियोगपर्यनुयोगानर्हत्वकार्यमित्यर्थः । शुक्तावविद्यमानस्य रजतस्य कथं चाक्षुषत्वमित्याशंक्यानिर्वचनीयरजतं कल्पयतो निरसितुं तत्रास्त्येव रजतम्, तत एव चाक्षुषं तदित्युपपादनं कृतम् । चाकचक्यादिमदंशसत्त्वेऽपि रजतत्वजात्यसाधारण—अर्घहांशानां तत्र सत्त्वे मानाभावात् वैभववाद एव सः । सदृशवस्त्वभावस्थले, परोक्षे अनुमित्यादिभ्रमे च सर्वत्राख्यातौ तदुपपादनायोगाच्च । न हि शुक्तौ रजतमस्ति मृगतृष्णिकायां जलमस्तीति लोको बुध्यते इति । शुक्तिरजतादिस्थलेऽपि अख्यात्याद्यावश्यकत्वमाह **माना**-दिति । त्रिवृत्करणश्रुत्यादिप्रमाणबलात् शुक्तौ रजतांशसत्त्वेऽपि तेन इदं रजतमिति विशिष्टज्ञाने तस्य यथार्थत्वे च संभवत्यपि, तत्र **तयोः** अख्यात्यन्यथाख्यात्योः **अन्यतरत् ध्रुवमि**ति । सामान्ये नपुंसकमिदम् । शुक्तौ यत् इदं रजतमिति ज्ञानं तद्विषयस्य रजतस्य अंगुलीयकादिकार्यक्षमत्वमस्ति न वा । अस्ति चेत्, प्रवृत्तिः सफलैव स्यात् । नास्ति चेत्ः कथं प्रवृत्तिरित्यत्र, अख्यातिपक्षे स्थित्वा कार्याक्षमत्वरूपधर्माग्रहात् प्रवृत्तिरिति वक्तव्यम्, अन्यथाख्यातिपक्षावलम्बनेन वा, इदं रजतं कार्यक्षममिति क्षमत्वग्रहसत्त्वादिति । अत. अन्यतरत् ध्रुवम्—अवर्जनीयमिति कि तत्र यथार्थख्यातिसमर्थनेनेति केचिदूचिरे इत्यन्वयः । अत्र केचिदित्यस्वरसाभिप्रायेण । न हि नाथमुनेरख्यात्यादिनिषेधे तात्पर्यम्; किंतु भ्रान्तिस्थले विशिष्टज्ञानं जायते चेत, अन्यथाख्यातिरेव, अनिर्वचीयख्यातिर्वेति प्रतिवाद्याशयो न युक्तः, क्वचित् सदृशसद्भावस्थले नीवारादौ व्रीहिबुद्धौ तदंशमात्रग्रहणात् तथा बुद्धेः सुवचतया यथार्थख्यातेरेव संभवात् । नेदमिति बाधज्ञानं तु न विषयबाधात, किंतु प्रवृत्तिबाधादिति वस्तुस्थितिशोधनमात्रम् । एवञ्चान्यथाख्यात्यस्वीकारे अत्र विशिष्टैकबुद्धित्वरूपस्वारस्यत्याग इति दोषो नास्तीति यथासंभवं तद्रक्षणं फलमित्येवाभिमतमिति । अतः क्वचित् संभवन्ती यथार्थख्यातिर्न दूष्या । अख्यातिसंवलितयथार्थख्यातिरेव तत्र । तदसंभवे अख्यातिमात्रमिति स्वारस्याभावस्तु सह्यः इति सर्वज्ञानयाथार्थ्यम् **अथवेत्यादि**भाष्याभिमतम् ।

यथावस्थितव्यवहारहेतुर्ज्ञानमिति प्रमालक्षणमख्यात्यन्यथाख्यातिपक्षसाधारणम् । सर्वपक्षसाधारण्याय तथोक्तिरित्येतावता आत्मख्यात्यादिपक्षा अस्मत्स्वीकृता इति न मन्तव्याः । तत्तन्मतप्रमेयदूषणादेव तदसंभवस्य सुगमतया तत्स्वीकारप्रसक्त्यभावादित्याशयेनाह **ख्यात्यन्तराणामिति** । **स्वयमेवे**ति । विज्ञानरूपात्मातिरिक्तो बाह्यपदार्थः सत्योऽस्तीत्युक्त्या योगाचारदूषणे कृते विज्ञानमेव जसद्रूपेणभसत इति ख्यातेः कथमवकाशः । सर्वं सदेव नासदिति सिद्धौ नासत्ख्यातेः, अनिर्वचनीयं नोत्पद्यते

तत्रात्मख्यातौ तावत्—

**अन्यद्विज्ञानमस्तीति धीरन्यविषया न वा। आद्येऽर्थस्यापि तद्वत् धीरन्यत्वैकैव धीर्भवेत् ॥ ५० ॥**
**संतानान्तरविज्ञानं स्वसंताने क्षणान्तरम्। या धीः साधयते सा हि स्वतो बाह्यं विगाहते ॥ ५१**

---

सामग्र्यभावात् सत्यमिथ्यार्थसंबन्धाभावाच्चेति निरूपणानन्तरं कथननिर्वचनीयस्य ख्यातिरित्येवं द्रष्टव्यम्। **किञ्चि**दिति। ख्यातिप्रकरणत्वात् आत्मख्यातिः निरधिष्ठानख्यातिः अनिर्वचनीयख्यातिः निर्विषयख्यातिरित्येतत्पदार्थशोधने यद् वक्तव्यम्, तन्मात्रमुच्यत इत्यर्थः। **ताव**दिति। प्रथममित्यर्थः। योगाचारमते विज्ञानातिरिक्तं बाह्यं किमपि नास्ति ; विज्ञानञ्च नैकम्। किं तु तस्य क्षणिकत्वादेकैकोऽपि जीवात्मा क्षणिकविज्ञानधारारूपः। जीवबहुत्वात् विज्ञानसंततिबहुत्वमेव। जानामीति धातुना व्यवह्रियमाणं ज्ञानं प्रवृत्तिकरत्वात् प्रवृत्तिविज्ञानमित्युच्यते। तदाश्रयतयाऽऽत्मनः प्रतीतेः अहमर्थ आत्मा आलयविज्ञानमित्युच्यते। आत्मनो ज्ञानरूपत्वात्। शोधने धर्मिधर्मिज्ञानभेदो नैतन्मते। तथा चैकमपि विज्ञानं स्वसंततिगतस्वभिन्ननानाज्ञानकम् स्वसन्तत्यप्रविष्टजीवान्तरात्मकानेकविज्ञानकञ्च। इदं सर्वं सत्यम्। अर्थस्तु बाह्योऽसत्य इति तन्मतस्थितिः। अत्र दूषणमुच्यते—यथा घटोऽस्तीति धीः स्वभिन्नघटविषयिणी, क्षणिकस्य विज्ञानरूपस्याऽऽत्मनो ग्रहणेन स्वभिन्नं विज्ञानमस्तीति या धीर्जायते साऽपि तथा वा न वा। तस्याः स्वभिन्नविषयकत्वमस्ति न वा। तत् भिन्नं सत्यमसत्यं वा। आद्ये, तद्वदेव घटपटादेरपि विषयस्य भिन्नत्वं सत्यत्वञ्चाविशिष्टम्। स्वभिन्नत्वे विषयस्य न भवति चेत्, विज्ञानेष्वपि तत् तुल्यमिति तदसिद्धिप्रसंग इत्यर्थः। **अन्यत्व** अन्यविषयकत्वाभावे, विषयस्य स्वान्यत्वाभावे एकैव धीर्भवेत्। क्षणिकविज्ञानसंततिरूपना तदनेकता च न स्यात्। अन्यद्विज्ञानमस्तीत्यत्र विषयविषयिभूतयोरैक्यं स्यात्। तदा चान्यत्वांशे भ्रमत्वं स्यादित्यर्थः। अत्र श्लोके अर्थस्याप्येवमुपपादनम्, विज्ञानमन्यदित्यनेन ग्राह्यस्य विज्ञस्योपपादनञ्च करोति **संताने**ति। देवदत्तविज्ञानसन्तानात् यज्ञदत्तविज्ञानसंतानोऽन्यः। देवदत्तरूपसंताने च 'अन्यत् विज्ञानमस्तीति संप्रति जायमानप्रवृत्तिविज्ञानात्मकालयविज्ञानव्यक्त्यपेक्षया तत्प्रविष्टव्यक्त्यन्तराण्यन्यानि। एवञ्च येयं धीः देवदत्तीया यज्ञदत्तरूपसन्तानान्तर्गतं सर्वं विज्ञानं स्वसंतानगतपूर्वोत्तरक्षणात्मकविज्ञानव्यक्तीश्च साधयते, सा तावद्विज्ञानसाधिका घटपटादिवत् **स्वतो बाह्यं** स्वभिन्नज्ञानमेव गृह्णाति। तद्ग्रहणबलादेव तावद्विज्ञानसिद्धिरित्यर्थः। तदभिप्रायस्तु—एषां विज्ञानानां विज्ञानरूपत्वं कस्मात्? स्वप्रकाशत्वात् विषयग्राहकज्ञानापेक्षया वस्तुतः स्वस्य भिन्नत्वाभावाच्चेति भवदाशयः। एवञ्चान्यत् विज्ञानमस्तीति धीः स्वभिन्नविज्ञानानि, नानाविषयग्राहित्वप्रयुक्तविज्ञानांश्च तेषां गृह्णाति। तत्र विज्ञानांश इव विषयांशोऽपि स्वतो बाह्यो गृह्यमाणः कथमसत्यः स्यादिति। अत्र ज्ञानाकारेति (4-20) श्लोकसर्वार्थसिद्धौ "अन्यथा क्षणभेदसंततिभेदयोरपि केनचित् ज्ञानेन गृहीतौ अगृहीतौ च क्षणभेदाद्यसिद्धिप्रसंगेन दत्तोत्तरत्वात्" इति वाक्यमेतत्समानार्थकं ग्राह्यम्। ननु विषयाणां ज्ञानाभिन्नत्वं

सहोपलम्भनियमः संविदो ग्राह्यलक्ष्म च। बोधेऽप्यर्थ इवेत्येवं (भेदेऽप्यत्रैव वेत्येवं)
ज्ञानार्थैक्यं न तद् भवेत् ॥ ५२ ॥

---

हेत्वन्तरसाध्यमित्यत्र तद् दूषयति सहेति। घटादिकं ज्ञानाभिन्नं ज्ञानेन सह नियमेनोपलभ्यमानत्वात्। एवं ग्राह्यलक्ष्मापि हेतुः। ग्राह्यलक्ष्म च ग्राह्यत्वमेव। घटादि ज्ञानाभिन्नं ग्राह्यत्वात् स्वप्रकाशज्ञानवत्। तृतीयपादेन एतद्दूषणहेतून्यासः। संविदः सहोपलम्भनियमः ग्राह्यत्वञ्च यथा अर्थे बाह्ये घटादौ, तथा बोधे पूर्वोक्ते सन्तानान्तर. स्वसंतानगतज्ञानेऽप्यस्तीति तत्राप्यैक्यापत्तिरिति। अर्थ इवेत्यत्र अर्थे इति सप्तम्यन्तम्। घटादाविव ज्ञानेऽपि हेतुरस्तीति व्यभिचार इत्यर्थः। इत्येवं इत्यादिहेतुना तत् त्वदुक्तं ज्ञानार्थैक्यं न भवेत् न सिध्येत्। अत्र कारिकायां न नाकारेति पूर्वश्लोकसर्वार्थसिद्धिदर्शितं हेतुत्रयं विवक्षितम्। तच्च सहोपलम्भनियमः संवेद्यत्वं संबन्धान्तराभाव इति। तत्रोत्तरद्वयं ग्राह्यलक्ष्मपदगृहीतम्। ग्राह्यलक्ष्म ग्राह्यनिष्ठासाधारणधर्मः ग्राह्यत्वम्। घटादिः ज्ञानाभिन्नः ग्राह्यत्वादित्यनुमानम्। इदं सर्वार्थसिद्धौ, "यत् येन संवेद्यते तत् तदभिन्नम्" इति वाक्येन दर्शितम्। तृतीयञ्च, "संयोगसमवायैकार्थसमवायकारणत्वादीनामव्याप्त्यादिदुस्स्थतया ग्राह्यलक्षणत्वायोगाच्च परिशेषात् तादात्म्यमेव ग्राह्यलक्षणमास्थेयम्" इति वाक्ये दर्शितम्। घटादिकं ज्ञानतादात्म्यापन्नं ग्राह्यलक्षणवत्त्वादित्यनुमानम्। लक्षणपदेन संयोगसमवायादिग्रहणे व्यभिचारः स्यादिति तेषां लक्षणत्वं भग्नमित्युक्तम्। एवं वाक्यार्थ उक्तः। पूर्वव्याख्यायां ग्राह्यलक्ष्मपदेन ज्ञानेऽप्यस्तित्वं विवक्षितम्। तृतीयपादे अर्थ इवेत्यस्यार्थमादाय तत्स्वरूप्यं तत्समानाकारत्वमर्थः। संयोगादिसंबन्धाभावात् अर्थाकारत्वेन ज्ञानस्य ग्राहकता; अर्थाकारश्च ज्ञाने चेत्, अर्थो ज्ञानमेवेति सिद्ध्यतीत्युक्तम्। अत्र इवार्थस्य वाक्ये विशेष्यतया भाने अनुपपत्तिदुर्भरा। बोधे इति सप्तम्यन्ते सति अर्थः इति प्रथमान्तं न स्वरसम्। उपमानोपमेययोः इवशब्दप्रयोगे समानविभक्तिकत्वस्यैव दर्शनात्। एवं पादत्रयेण हेतुत्रयोपन्यासेऽपि तद्दूषणानुपपादनारूपन्यूनता चेत्यादि विमृश्यम्। अत्र भेदेऽप्यत्रैवेत्येवमिति तृतीयपादपाठान्तरम्; तदा—सहोपलम्भनियमः ग्राह्यलक्ष्म च तयोरभेद इव भेदेऽपि स्यात्; अथवा शोधने अत्रैव=भेदे एव स्यात् (न्या.कु.) अतो हेतोर्व्यभिचारित्वं विरुद्धत्वं वेति दूषणोपपादनमिति ध्येयम्। अयमर्थः—सहोपलम्भनियम इत्यत्र नियमः व्याप्यत्वं वा व्यापकत्वं वा। व्याप्यत्वमपि तदभाववदवृत्तित्वं वा तन्न्यूनवृत्तित्वं वा। आद्यं द्वयोरभेदेऽपि भवति, भेदेऽपि। अन्त्ये तन्न्यूनवृत्तित्वस्य किञ्चित्तदधिकरणावृत्तित्वे सति तदधिकरणवृत्तित्वरूपतया द्वयोर्भेदे सत्येवेदं स्यात्। एवं व्यापकत्वमपि तत्समानाधिकरणाभावाप्रतियोगित्वं द्वयोरभेदे भेदे च स्यात्। तदधिकदेशवृत्तित्वं चेत्—तस्य तच्छून्यदेशवृत्तित्वे सति तदधिकरणवृत्तित्वरूपतया द्वयोर्भेदे सत्येवेदमिति भावः। एवं ग्राह्यलक्ष्मेत्यत्रापि ग्रहणविषयतायास्तार्किकमते स्वस्य स्वविषयत्वानङ्गीकारात् अभेदे भेदे च। क्रियाकर्मणोर्भेद, विषयत्वं संयोगादिरूपमित्युक्तौ तु भेदे सत्येवेदमिति ॥ एवमेकविज्ञानपरिशेष आपादितः।

दोषादेरनुजातस्य मिथ्यात्वेऽपि यथेष्यते । अधिष्ठानस्य मिथ्यात्वेऽप्यनिवार्यस्तथा भ्रमः ॥
ततो माध्यमिकस्यैव पक्षस्तत्रावशिष्यते । न च तत्रापि निस्तारः सर्वथानुपपत्तितः ॥ ५२ ॥
असत्त्वं लौकिकं ब्रूषे लोकोत्तरमथापि वा । न निषेधो निरुपधिः पूर्वत्रान्त्यं न(न्यन्न) धीपदम् ॥
चतुष्कोटिविमुक्तं च तत्त्वं प्रामाणिकं न वा । पूर्वत्र तावती सत्ता ; न चेत् , तद्धीरसन्मतिः ॥

---

तदपि मा भूदित्याह **दोषेति**। विज्ञाने अर्थात्मनाभ्रान्तिः दोषतदाश्रयेन्द्रियपुरुषादिकारणाभावे कथमिति तेषां सत्यत्वापत्तिः। तेषां मिथ्यात्वेऽपि कार्योत्पत्तिश्चेत्; यस्मिन् विज्ञाने अर्थनाभ्रम तस्य अधिष्ठानस्यापि मिथ्यात्वेऽपि सा स्यादिति तस्याप्यसिद्धिरेव ॥ अत एवमेवास्मद्गुरुपक्ष इत्यत्राह **नचेति**। 'नाभाव उपलब्धेः' इति तन्निरासानन्तरम्, 'सर्वथाऽनुपपत्तेश्च" इति सोऽपि निरस्त एवेति भावः। तद्विवृणोति **असत्त्व**मिति। सर्वथाऽनुपपत्तिरित्यस्य प्रमेयतः प्रमाणतश्चानुपपत्तिरित्यर्थः। अंशद्वयं क्रमेण कारिकाद्वयेनोच्यते। सर्वं शून्यम्—असदिति माध्यमिकेनोच्यते। असत्त्वमिदम् अभावो लोके यादृशः प्रतीयते, तादृशो वा विलक्षणो वा। पूर्वत्र—प्रथमपक्षे ; लोके निषेधस्य नेत्युच्यमानस्य न निरुपधित्वम् निर्विशेषणत्वाभावात् अनुयोगिप्रतियोगिरूपोपाधिद्वयसापेक्षत्वात्। अत्रेद नास्ति, इदमिदं नेत्येव हि तदाकार। तथा चाभावोऽर्थद्वयमुपजीव्य स्थित इति कथं सर्वाभावः। एवं सर्वोऽप्यभावः भावात्मक एव शोधने प्राप्त इति च न भावापलाप इत्यभिमतम्। **अन्यत्र**=विलक्षण इति द्वितीयपक्षे, स तादृशः **न धीपदम्**—नानुभवसिद्धः। नन्वस्माभिर्ज्ञानैव व्यवह्रियत इति चेत्—स्वीयज्ञानमात्रं न ह्यनुभव इति। प्रमाणानुपपत्त्यैव तन्निरास इत्याशये तामेवाह **चतु**रिति। त्वदुक्तो विलक्षणोऽभावः खलु, 'न सन्नासन्न सदसत् न चाप्यनुभयात्मकम्। चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः' इति प्रसिद्धं सद्विलक्षणत्वासद्विलक्षणत्वसदसद्विलक्षणत्वसदसदनिर्वचनीयविलक्षणत्वरूपधर्मवत् तत्त्वम्। सर्वं सदिति सांख्याः ; असदित्यनित्यत्ववादिनश्चार्वाकाः ; सदसदिति जैनाः ; सदसदनिर्वचनीय इति शांकराः। सर्वविलक्षणमिति माध्यमिकः। तत्र प्रमाणमस्ति न वा। **पूर्वत्र**=आद्ये, **तावती** प्रमाणायत्तस्वरूपा सत्ता तस्यास्तीति कथं तस्य सद्विलक्षणत्वम्। सत्त्वं हि अर्थक्रियाकारित्वादिवत् प्रामाणिकत्वमपि। **तावती सत्ते**त्यस्य प्रमाणमस्तीत्युक्तत्वात् प्रमाणस्य यावती सत्ता तावती प्रमेयस्यापीत्यर्थमप्याहुः। घटपटादीनां यावती सत्ता तावत्येव चतुष्कोटिविनिर्मुक्तस्यापीत्यप्याहुः। **नचे**दिति। प्रमाणं नेति द्वितीयपक्षे इत्यर्थः। **धीः** चतुष्कोटिविनिर्मुक्तमिति ज्ञानम् **असन्मतिः** असद्विषयकज्ञानमेव स्यात्। अतो नासद्विलक्षणत्वम्। तदसत्त्वे चास्मत्प्रमेयमेव सदिति। अस्तीति वा नास्तीति वा लोके प्रतीतिरिति सत्त्वासत्त्वकोटिमतिक्रोटौव न भवतीति भावः ॥

एवं शून्यवादे, अपलापमात्रवादस्याप्ययोगात् अनेकविज्ञानसंतानज्ञानवत् अर्थज्ञानस्यापि प्रमाणात्मकत्वं न तत्र दोषः [illegible]। तत्र निरधिष्ठानपक्षे समारोप्य दूषणमुक्तम्। अथ साक्षात्

अन्येषां च निरधिष्ठानख्यातौ—

तत्रा(अत्रा)सदेव भवतामत्रेति ख्यायते न वा । आद्ये सिद्धमधिष्ठानं द्वितीये ख्यात्यसम्भवः ॥
किं च स्वनेत्रनिष्ठ्यूतं तिमिरं तिमिरार्दितैः । केशस्तबकसादृश्यात् तथा भात्येव तादृशाम् ॥५६

निरधिष्ठानख्यातिमेव वदतां माध्यमिकानां ख्यात्ययोग उच्यते **अन्येषां चेति** । **उच्यत इत्यनुकर्षः** । अत्र अन्येषां तत्र निरधिष्ठानख्यातौ विचार्यतामिति श्लोकव्याख्याता न युक्ता ; अर्थाविशेषापत्तेः । तत्रेत्यस्य ख्यातावित्येनदतन्तरपाठाकरणादेव प्रक्षिप्तत्वं सिद्धम् । विज्ञानरूपाधिष्ठाने असदर्थख्यातिः पूर्वोक्ता ; अधिष्ठानं विनैव ख्यातिरभिरुच्यते । अत्र पूर्वोत्तरस्थल इव निरधिष्ठानख्याताविल्येवालम् ; **अन्येषाञ्चे**त्यन-पेक्षितम् । अथापि योगाचारविचारेपि निरधिष्ठानत्वस्य प्रसक्तत्वात् तद्वारणार्थम् । **अत्र** अस्मिन् निरधिष्ठानख्यातिपक्षे विकल्पः—**भवतामसदेव** असत्त्वेन भवदभिमतमेव अत्रेति **ख्यायते** प्रतीयते न वा । आद्ये, प्रतीयते चेत्, स देश एवाधिष्ठानमिति कथं निरधिष्ठानख्यातिः । **द्वितीये** देशविशेषा-ख्यानपक्षे ख्यातेः लोकसिद्धाया अपलापः स्यादित्यर्थः । अयं भावः—लोकसिद्धा प्रतीतिः सर्वा निरधिष्ठानामसत्ख्यातिरिति भवन्मतम् । तत्र भूतले घटः, पर्वते वह्निरित्यादिषु ख्यातिषु भूतलादीनाम-धिष्ठानतया प्रतीतिरस्ति । यद्यपि भूतलादिकमसत्; अथापि तत् देशतया प्रतीयत एव । एवं सति कथं ख्यातेर्निरधिष्ठानत्वम् । एवञ्च **अत्रेति ख्यायत** इत्यस्य सप्तम्यन्तपदव्यवहारानुकूलतया भासते न वेत्यर्थः । **असत्**पदेन तदधिष्ठानं गृहीतम् । अथवा असत्पदेनाऽऽवेयं घटादिकं गृहीत्वा तत् **अत्रेति** देशविशेषवर्तितया ख्यायते न वेत्यर्थः । सर्वस्या अपि प्रतीतेः इदमित्थमित्याकारकत्वात् इदंपदार्थस्या-धिष्ठानतया प्रकारस्य तत्रत्यतया च भाननैयत्यात् सर्वापि साधिष्ठानख्यातिरेवेत्युक्तं भवति । ननु तदधिष्ठानमसत् । परमार्थाधिष्ठानराहित्यमेवास्माभिरुच्यते । यद्वा साधिष्ठानख्यातिर्नास्तीति न ब्रूमः । किं तर्हि ? निरधिष्ठानख्यातिरप्यस्तीति । एवञ्च भूतले घट इत्यत्र घटांशे साधिष्ठानत्वेऽपि भूतलस्याप्यसत्त्वात् असद्भानं सर्वं साधिष्ठानमिति नियमाभावात् भूतलस्याप्यसत्त्वं युक्तमिति ब्रूमः । किञ्चाधिष्ठानमिति पदेन यत्र वस्तु कल्प्यते तदेवोच्यते । शुक्तिः कल्पनाधारत्वात् रजताधिष्ठानम् । भूतले च घटस्य कल्पितत्वाभावात् घटभूतलयोः स्वस्यैकरूप्यात् भूतलांशे घटांशे च सर्वत्र निरधिष्ठानख्यातिरेव ; अधिष्ठानं विना कल्पनास्वीकारादिति चेत्—तन्न ; रज्जुसर्पशुक्तिरजतादौ सर्वत्र कल्प्यस्य तद्विलक्षणे एव क्वचित् कल्पनाया आनुभविकत्वात् निरधिष्ठानत्वस्य पक्षलेशस्याप्यभावात् । एतदुपरि ते वदन्ति—दृश्यत एव तिमिराभिभूतस्य निरधिष्ठाना केशसमूहप्रतीतिरिति । तद् दूषयति **किञ्चे**ति । स्वनेत्रात् निःसृतं तिमिरमेव तथा केशसमूहतया भाति ; कुतः ? तत्सादृश्यात् । अतस्तिमिररूपस्यासताधिष्ठानसत्त्वात् न निरधिष्ठान-तेत्यर्थः । **तिमिरार्दितैरि**ति तदसत्त्वात् नेत्रैरिति विशेष्यमध्याहरन्ति । स्वनेत्रेति **स्व**पदानुरोधात् **तिमिरार्दितपदं** पुरुषपरं युक्तम् । एवञ्च **तिमिरार्दिते** इति सप्तम्यन्तपाठः स्यात् । यद्वा 'नष्ट्यूत-

यद्यप्यविद्यमानोऽर्थो विद्यमानतया स्फुरेत् । तथाप्यसावधिष्ठानं स्वदेशादौ मितो हि सः ॥
इदंत्वेन प्रतीतेऽर्थे तदारोपं परे विदुः । तस्मिन्नदंन्त्वाभेदस्ते फलतस्तुल्यता द्वयोः ॥ ५८ ॥

अनिर्वचनीयख्यातौ—

अनिर्वाच्यतया वस्तु निरुच्येत न वा त्वया । आद्ये विरोधो विविधो द्वितीयेऽसम्मतस्थितिः ॥
सदसद्व्यतिरेकोऽपि विरुद्धो यदि गृह्यते । सदसद्रूपता किं तु प्रतीता तु न गृह्यते ॥ ६० ॥

---

श्रवणोपभोगसुलभो लाक्षारसः केनचित्' इत्यत्रेव तिमिरार्दितै पुरुषैः खनेत्रेभ्यो निर्व्यूढः निस्सारित इत्यन्वयार्थः । उत्तरार्धे तथा भात्येव तादृशामिति पाठः । तादृशां तिमिरार्दितानाम् । एवमीदृशा इति पाठदर्शनात्, ईदृशाः अन्ये आरोपाः एवं साधिष्ठाना इति व्याख्यान्ति । एव तादृशा इति क्वचित् पाठः । सोऽप्यशुद्धः । तथाच तत्र तिमिरदोषस्यैव केशकल्पनाधिष्ठानत्वात् कुत्रापि निरधिष्ठानकल्पनस्यादर्शनात् लोकप्रतीतिः सर्वाऽपि न कल्पनेति । ननु अयं केशस्तबकः, अयं सर्प इत्यादौ केशसर्पादौ विशेष्ये इदंत्वमेव=विद्यमानत्वरूपमेव कल्प्यते । अतो न तिमिरादेरधिष्ठानत्वमिति चेत्— तर्हि केशादिरेवाधिष्ठानम् । स च सत्यः अननुभूतकेशसर्पादेः पुरुषस्य तथाबुद्ध्यभावात् । यत्र क्वाप्यनुभूतस्य विषयत्वे च स केशसर्पादिः स्वस्थले प्रागनुभूतः सत्य एवेति । इदमाह यद्यपीति ।

सर्वेऽपि अयमयं सर्प इत्यादौ अयमिति इदंत्वेन धर्मिभानं सर्प इति कल्पनेत्येवाहुः ; भवता तद्विपरीतमुच्यते । अस्तु ; तावतापि को लाभ इत्याह इदन्त्वेनेति ।

अनिर्वाच्यतयेति । अनिर्वाच्यख्यातिरित्यस्य कोऽर्थः । अनिर्वाच्यस्य घटपटादेः ख्यातिरिति चेत्—अनिर्वाच्यपदस्य घटपटादौ न रूढिः । न निर्वाच्यमिति योगव्युत्पत्तौ च निर्वाच्यं किम् । तदप्रसिद्धौ अनिर्वाच्य प्रसिद्धिः—घटोऽस्तीत्यादिव्यवहाराद् घटादिरेव निर्वाच्यश्चेत्, कथं तस्या निर्वाच्यता । एवं विरोधे बद्धे जाग्रति त्वया अनिर्वाच्यपदेनापि घटादिबोधनात् अनिर्वाच्यत्वेन रूपेण निर्वाच्यत्वमेव त्वदिष्टमिति तस्य तदभावस्य चैकत्रोक्त्या विविधो विरोधः प्रसज्यत इत्यर्थः । द्वितीये अनिर्वाच्यत्वेन निर्वचनाभावे निर्वाच्यत्वमेवेति न किञ्चिदनिर्वचनीयमिति । ननु अनिर्वचनीयत्वं नाम सत्त्वेनासत्त्वेन वा निर्वचनायोग्यत्वम् तत् घटादावक्षतम्, सदसद्विलक्षणत्वादित्यत्राह सदिति । सद्विलक्षणत्वे असत्त्वमेव स्यात् ; तथा असत्त्वेन निरुच्यमानता च । असद्विलक्षणत्वे सत्त्वमेव स्यात्, सत्त्वेन निरुच्यमानता च । सद्विलक्षणत्वासद्विलक्षणत्वयोश्च विरुद्धयोर्न योगः । तदिष्टौ सत्त्वासत्त्वयोरेवेष्टिरस्तु ; किं विलक्षणत्वघटनया । प्रतीतेति । अस्तीति कदाचित् क्वचित्, नास्तीति चान्यत्र प्रतीयमानतया स्वरसत इयमेव ग्राह्या । सदसद्विलक्षणता न प्रतीतेति वैलक्षण्यज्ञापनाय तुशब्दः । ननु घटोऽस्ति नास्तीति किञ्चिद्देशकालसबन्धासबन्धयोर्न सदसत्पदतो विवक्षा । किन्तु यत् सर्वदैव सत् तत् ब्रह्म सत् ; यत् कदापि न सत् तत् शशविषाणादि तुच्छमसत् ; तदुभयविलक्षणमित्यर्थः । तादृश-

अनुष्णाशीतवत् तुच्छाद् ब्रह्मणश्चातिरेकिता । साध्येत ख्यातिबाधादेर्यदि, सिद्धं तदेव नः ॥
न च विश्वस्य बाधोऽपि स्वरसादुपजायते । अप्रतिष्ठितयुक्त्या तु बाधो ब्रह्मापि संस्पृशेत् ॥
नाशात् सदितरत्वं च नाशकाले यदीष्यते । स्वकाले यदि बाधः स्यान्नाशस्याप्यनिरूपणम् ॥
नित्यत्वेन श्रुतानां च केषां चिन्न हि नाशिता । भागासिद्धस्ततो हेतुर्न चैक्यं नाशबाधयोः ॥

निर्विषयख्यातौ—

विषयालीकभावादौ ख्यात्यन्तरपरिग्रहः । अनुल्लेखस्तु रूप्यादिधीरित्युक्त्या निबर्हितः॥ ६५॥

—०—०—

सत्त्वासत्त्वाभ्यामनिर्वचनीयत्वमेव सदसदनिर्वचनीयत्वमित्यत्राह अनुष्णेति । ख्यातिबाधादेरिति । तुच्छं न ख्यायते, घटादि ख्यायते, ब्रह्म न बाध्यते, घटादि तु बाध्यते । आदिना घटादेर्बाध्यत्वसाधकस्य कार्यत्वादिहेतोः संग्रहः । यदि साध्येत इत्यन्वयः । इदमिष्टमित्याह सिद्धमिति यथा पृथिव्यां सामान्यतः स्पर्शवद्भिन्नत्वस्यानिष्टत्वेऽपि शीतोष्णभिन्नत्वमिष्यते, तद्वत् तुच्छब्रह्मभिन्नत्वं सर्वसंमन्तव्यमेवेति । ब्रह्मभिन्नत्वं स्वभावभेदादुच्यताम् ; नतु बाधादित्याह नचेति । लोके नायं सर्प इतिवत् नायं घटादिरिति प्रतीत्यभावात् । कार्यत्वादियुक्तिश्च न बाधसाधिका ; बाध्यस्य सर्पादेः कार्यत्वाभावात् । युक्त्याभासेन घटादिबाधकल्पने, माध्यमिकेन ब्रह्मबाधेऽपि युक्तिवर्णनात् तस्यापि बाध्यता स्यात् । ननु सदितरत्वं न ब्रह्मभेदः, येन सिद्धसाधनं स्यात् । किंतु सत्त्वाभाव एव, स घटादौ भवितुमर्हति, नाशदर्शनादित्यत्राह नाशादिति । नाशप्रयुक्तः सत्त्वाभावस्तत्त्वया नाशकाले यदि कथ्यते, तर्हीष्यते, इति पूर्वार्धार्थः । स्वेति । घटसत्ताकाल एव यदि कथ्यते, तर्हि बाधः स्यात् , सत्त्वेन प्रत्यक्षादित्यर्थः । नाशस्येति । स्वकालेऽपि तदभावसाधने वस्तुनः कदाप्यभावात् नाशरूपहेतुरप्यसिद्धः स्यात् कदाचित् प्रतियोगिनः स्थितस्य पश्चादभावो हि नाशः । नाशस्य सत्त्वे च तेन प्राक्काले तत्सत्त्वमेवानुमीयेत, न त्वभाव इति हेतुर्विरुद्धः । अतो घटः स्वाधिकरणवृत्त्यभावप्रतियोगिनः नाशित्वादिति साधनमिष्टम् , स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगिन इति साधनमशक्यम् , तस्य नाशित्वस्य च विरुद्धत्वात् । कथञ्च स्वाधिकरणे स्वस्यात्यन्ताभाव इति । नाशस्याप्यनिरूपणमित्यस्यार्थान्तरमभिप्रेत्याह । ब्रह्मतत्त्वकालादिनित्यवस्तुनोऽप्यभावस्त्वदिष्टः तत्र पक्षे नाशित्वरूपहेतोरसिद्ध्या भागासिद्धिः (पक्षैकदेशे हेत्वभावो भागासिद्धिः) इति । ननु बाध्यत्वे स्थिते नाशित्वं कथं न भवेदित्यत्राह न चेति । प्रतीतिकाले स्थितस्य पश्चादेवाभावो नाशः, प्रतीतिकालेऽप्यभावो बाध इति वैलक्षण्यमिति भावः । तथाच किञ्चित्कालत्रयेऽपि न ब्रह्मतुच्छभिन्नख्यातिरित्यर्थे प्रमात्वस्यैव संभवान्न भ्रान्तिता । निर्वचनीयवस्तुसाध्यत्वाभावाद्धम तुच्छतेत्युक्तौ तादृशवस्त्वसिद्धिः । वस्तुनो ब्रह्मण एव भवन्मते तादृशत्वात् ब्रह्मज्ञानमेव भ्रान्तिः स्यादित्यादि द्रष्टव्यम् ।

विषयेति । निर्विषयत्वं ख्यातिनिष्ठं किंरूपम् । अनुद्दिष्टविषयकत्वं वा अनिर्वचनीयविषयकत्वं

ततश्चात्राऽयथाधीर्वा तद्धेतुर्भ्रान्तिरेव वा । आ[illegible]वस्तुविरूपस्य व्यवहारस्य कारणम् ॥ ६६ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ प्रत्यक्षाध्याये प्रथमं प्रमाणाह्निकम् ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥

—o—o—

## ॥ द्वितीयं प्रत्यक्षाह्निकम् ॥

### (1) अप्रमानिरूपणम्

तदिहाऽयथाख्यातिपक्षे विपर्ययस्य संशयस्य च व्यवच्छेदार्थम् "यथावस्थितव्यवहारानुगुणं ज्ञानम्" इति प्रमाणलक्षणे यथावस्थितादिविशेषणम् । अख्यातिपक्षेऽपि तत्तत्साम-

---

वा, स्थलान्तरस्थित—प्रकृतस्थलास्थितवस्तुविषयकत्वं वा, तदा क्रमेणासत्ख्यात्यनिर्वचनीयख्यात्यन्यथाख्यातिरूपता । यदि किञ्चिद्वस्तुविषयकत्वमेव, तत् बाधितम् ; रूप्यं पश्यामि सर्पं पश्यामीति विषयभानात् । अन्यथा ख्यातित्वमेव न स्यादिति । ख्यातिदूषणमुपसंहरति ततश्चेति । तथाच ख्यात्यन्तराणामभावात् घटोस्तीति बाह्यज्ञानादीनामबाध्यत्वात् अख्यात्यन्यथाख्यातिमात्रपरिशेषात् तद्व्यावृत्तमेवोक्तं प्रमात्वमिति ॥

2. न्यायपरिशुद्धिमारभ्य संबन्धाधिकारिप्रयोजनविषयोक्तिपूर्वकं प्रमाणनिरूपणशेषतया प्रमानिरूपणं प्रथमाह्निके कृतम् । अथ तद्विशेषं तत्करणविभागपूर्वकं वक्ष्यन् आदौ विपर्ययं संशयञ्च निरूपयति । ननु प्रमालक्षणनिविष्टस्य यथावस्थितव्यवहारेति दलस्य व्यावर्त्यकथनमिदं लक्षणप्रदर्शिप्रथमाह्निक एव कार्यम् । व्यावर्त्ये तदाह्निकमप्रमेति चेत्—न ; प्रागेव दलकृत्यं भ्रमवारणमित्युक्त्वा आत्मख्यात्यादिभ्रमत्वेनास्य प्रतदंशे कृतत्वात् । प्रमावचनं तच्छेषतया अप्रमाकथनञ्च प्रथमाह्निककार्यम् । अथ विभज्य विशेषनिरूपणारम्भः । तत्र पूर्वमप्रमाकथनस्य प्रासंगिकत्वात् तद्विशेषसंशयादिनिरूपणस्य पश्चादनवकाशात् सूचीकटाहन्यायाच्च प्रथममप्रमाविशेषं निरूप्य पश्चात् प्रमाविशेषारम्भ इति स्थितगतिः । तत्राऽऽदौ सर्वज्ञानयाथार्थ्यपक्षे कथमप्रमात्वमेषु विशेषेष्विति शङ्कामादौ परिहरन् अन्यथाख्यातिपक्षे आक्षेपानवकाश इति द्योतनाय तत्र सामञ्जस्यमनुवदन् अख्यातिपक्षेऽपि निर्वाहं वक्तुमारभते तदिति । तत्=तस्मात् आत्मख्यात्याद्युदाहरणानां भ्रान्तिभावस्योक्तत्वात् अख्यात्यन्यथाख्यात्योरेव शिष्टत्वादित्यर्थः । इह अस्मदुक्ते । अस्य प्रमाणलक्षणे इति पदेनान्वयः । यथावस्थितेत्यादीति । यथावस्थितव्यवहारानुगुणत्वरूपं विशेषणमित्यर्थः । अख्यातिपक्षे ख्यातिमात्रे ज्ञानत्वरूपविशेषणेन नास्ति ; इदमित्यादिज्ञानानां सर्वेषां यथार्थत्वात् विपर्ययसंशयादेरभावादिति शङ्का स्यात् । तत्रापि तार्किकसंमतविपर्ययसमन्वयाभावेऽपि तत्सामग्री विद्यत एव । इदमिति रजतमिति ज्ञानद्वयं भेदाग्रहविशिष्टं विपर्ययसामग्री । इदमर्थदर्शनस्थाणुत्वपुरुषत्वस्मरणतदुभयकोटिमिथोविरोधज्ञानसमुदायः भेदाग्रहविशिष्टः संशयसामग्री ।

प्रत्यनुप्रविष्टं तत्तद्ज्ञानं तत्तच्छब्देन व्यपदिश्यते । तच्च तत्राप्रमाणमिति लोकसिद्धत्वाद्व्यवच्छेद्यमेव । तत्रापि प्रत्येकांशे याथार्थ्यं न विहन्यते ॥

॥ (क) विपर्ययः ॥

तत्राद्ये पक्षे अन्यस्य अन्यथाध्यवसायो विपर्ययः । द्वितीये तु पक्षे सामान्यतो धर्मिस्फुरणे सति अप्रतिपन्नतद्विरोधविरुद्धविशेषाध्यवसाय इति ॥ स चायमनेकविधः—

---

सर्वमिदं वक्ष्यते । तत्र यथावस्थितप्रवृत्तिहेतुत्वलक्षणं प्रकृतप्रमात्वं नेष्यते । अप्रमाणमिति पदस्य च अयथार्थज्ञानमिति नार्थः ; किंतु विफलप्रवृत्तिहेतुज्ञानमित्येव । यथार्थं सर्वविज्ञानमित्यस्य च प्रमा चाप्रमा चेति सर्वं यथार्थमेवेत्यर्थ इति याथार्थ्यकथनमविरुद्धम् । एवं सामान्यलक्षणे ज्ञातेऽपि विशेषलक्षणं सुग्रहं नेति तदुच्यत इति प्रकृतग्रन्थार्थः । **तत्तच्छब्देन**=विपर्यय इति संशय इति च शब्देन । **तत्रापी**त्यत्र **तथापी**ति पाठः स्यात् । **प्रत्येकांशे** इति । प्रतिनियततत्तदंश इत्यर्थः । संशयव्यावर्तनादिकं प्रागेवादर्शि । आद्ये पक्षे=अन्यथाख्यातिपक्षे । **अन्यस्य** रजतभिन्नस्य **अन्यथा** रजतरूपेण **अध्यवसायः** निश्चयः । तेन संशयव्यावृत्तिः । **द्वितीये** इति । अख्यातावित्यर्थः । **सामान्यतः** इदन्त्वादिरूपेण **धर्मिस्फुरणे** वस्तुप्रकाशे सति । शुक्तित्वेन धर्मिस्फुरणे सति तस्य विपर्ययसामग्रीत्वायोगात् तत्र शुक्तिज्ञानविशिष्टरजतस्मरणे लक्षणसमन्वयस्यानिष्टत्वात् **सामान्यत** इति । शंखः पीत इति वक्ष्यमाणोदाहरणे शंखत्वं कथं सामान्यधर्मः इति चेत्—विधेयधर्मप्रतियोगिकाभावात्मकधर्मभिन्नधर्म इत्यर्थः । तादृशधर्मावच्छिन्नधर्मिज्ञानविशिष्टं तद्वृत्तिधर्मज्ञानं विपर्ययः । इदं च ज्ञानद्वयम् । यदा इदमिति ज्ञाने रजतस्मरणे च सति रजतं इदमर्थविरुद्धमिति विरोधज्ञानम्, तदा न विपर्ययत्वम् । अतो भेदाग्रहविशिष्टत्वमपि निवेश्यमिति ज्ञापनाय **अप्रतिपन्नतद्विरोधे**ति **विशेष**विशेषणम् । इदं रंगविरुद्धरजतमिति ज्ञानद्वये यत्किञ्चिद्विरोधज्ञानेऽपि विपर्ययत्वमिष्टम् । अतः **तद्विरोधे**ति तत्पदम् ; तद्धर्मिपरम् । **अध्यवसाय**पदेन संशयव्यावृत्तिः । तच्च प्रकृतविशेषविरुद्धतया गृहीतविशेषान्तरज्ञानाविशिष्टत्वरूपम् । स्थाणुर्वा पुरुषो वेति संशये स्थाणुत्वविरोधितया गृहीतपुरुषत्वज्ञानमप्यस्तीति न संशयेऽतिव्याप्तिः । तत्र तद्भ्रमत्वं नाम तद्विषयक. तत्साध्यकार्योद्देश्यकप्रवृत्तिहेतुज्ञानत्वम् । रजतकार्योद्देश्यकप्रवृत्तिः शुक्तौ भवतीति । समूहालम्बनज्ञानादौ तादृशप्रवृत्त्यभावान्न तद्भ्रमत्वम् । **स्फुरण** इति पदप्रयोगः स्वयंप्रकाशवस्तुप्रकाशस्यापि संग्रहाय । तेन अहं स्थूल इति भ्रमे अहमिति स्वप्रकाशस्यैव धर्मभूतज्ञानातिरिक्तस्य ग्रहणात् न क्षतिः । सिद्धान्त्येकदेशिसंमतान्यथाख्यातिपक्षे तु तत्रापि विशिष्टज्ञानं धर्मभूतं भवतीति स्वीकर्तव्यम् । अनेकविशेषपदयोगेन संशयसामग्र्या संशयत्वाभावं क्वचिदुपपादयितुं तत्र भेदं प्रपञ्चयति स चेति । विपर्ययश्चेत्यर्थः । विरुद्धेति । धर्मितावच्छेदकविरुद्धेत्यर्थः । अत्र त्रैविध्यं दर्शयिष्यति । धर्मिस्फुरणे एकविशेषग्रहणम्, अनेकपरस्पराविरुद्धधर्मग्रहणम्, परस्परविरुद्धा-

एकानेकविरुद्धविशेषस्फुरणात् । तत्र एकविशेषस्फुरणं यथा—पीतः शङ्ख इत्यादि । अनेकविशेषस्फुरणं यथा-एकमेव भिन्नमभिन्नं चेत्यादि अनेकान्तवादिनाम्, प्रपञ्चः सद्विलक्षणोऽसद्विलक्षणश्चेत्यादि अद्वैतवादिनाम् । परस्परविरुद्धानेकविशेषवत ईदृशस्य विपर्ययस्य संशयात् भेदो मिथोविरोधभान(धाभिमान) विरहेण समुच्चिताध्यवसायात् । धर्म(धर्मि)विरोधे परस्पराविरुद्धानेकविशेषस्फुरणं यथा—विपुलत्वैकत्वविशिष्टे चन्द्रे अल्पत्वद्वित्वादिग्रहः । विपर्ययमेव धर्मान्तरधर्म्यन्तरभेदादन्यथाख्यातिविपरीतख्यातिभेदेन केचिद्व्यवहरन्ति । यथा पीतशङ्खरज्जुसर्पभ्रमौ । तयोश्च रजस्तमसी मूलमिति गीयते—

"यया धर्ममधर्मं च कार्यं चाकार्यमेव च । अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥ अधर्मं धर्ममिति या मन्यते तमसा वृता । सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥" इति ॥

यद्यपि रज्जुसर्पादिभ्रमे रज्जुत्वादिधर्मविपरीतसर्पत्वादिधर्माध्यास एव, तथापि स्वरूपनिरूपकधर्मत्वेनान्तरङ्गतया धर्मिविपरीत्यव्यपदेशः । श्वैत्यादेस्तु निरूपितस्वरूपविशेषकत्वमेव ।

विवरणे त्वेवमुक्तम्—"त्रिविधमज्ञानम्—स्वरूपाज्ञानम्, अन्यथाज्ञानम्, विपरीतज्ञानमिति । स्वरूपाज्ञानं नाम वस्तुनोऽप्रतिपत्तिः । अन्यथाज्ञानं वस्तुनो वस्त्वन्तरतया भानम्; यथा--शुक्तेः रूप्यतया । विपरीतज्ञानं तु यथावत् वस्तुनि भासमाने युक्तिभिस्तदन्यथोपपादनम्; यथा—ज्ञातृतया अद्वैतेन च आत्मनि भासमानेऽपि कुयुक्तिभिस्तस्य भ्रमिकोपपादनं कुदृष्टीनाम्" इति ।

---

नेकधर्मग्रहणश्चेति । चन्द्रः अल्पोऽनेकश्च, अहं स्थूलो नीलश्चेत्यादेर्द्वितीयः । एकानेकभिन्नमभिन्नश्चेत्यादिस्तृतीयः । विरहेणेति । संशये विरोधभानं नियतम् । तद्विरहकृतः संशयभेदः । विरोधभानकल्पनं न भवतीत्याह समुच्चिताध्यवसायादिति । समुच्चयविशिष्टस्य निश्चयादिति । एकत्वादीति आदिपदेन पूर्णत्वदन्तुरत्वादिग्रहणम्, मण्डले निम्नोन्नतभावस्य सहजत्वात् । द्वित्वादीति आदिपदेन भ्रमविषयार्धस्य समपरिमाणत्वादिग्रहः । धर्मान्तरेति । अन्यथाख्यातिशब्दे थाल्प्रत्ययस्य प्रकारवाचिनो धर्मपरत्वात् किञ्चिद्विशेष्यकतदवृत्तिधर्मप्रकारकज्ञानत्वम् । धर्मिणि अभेदेन धर्मिभाने तु विपरीतख्यातिरिति तदाशयः । एवम्भूतो भेदः श्रीगीतायामप्यदर्शीत्याह तयोश्चेत्यादिना । तयोर्धर्मविपर्ययः राजसः । अयथावदिति थाल्प्रत्ययेन धर्मविपर्ययप्रदर्शनात् । धर्मिविपर्ययस्तामस इति । सर्वस्यान्यथाख्यातित्वेन व्यवहारमपि निर्वहति यद्यपीति । तदापि द्वेधा विभागः सुकर इत्याह तथापीति । धर्मविपर्यास एवेति । धर्माध्यासोऽस्त्येव; सर्वत्र विना धर्मिभाने भ्रमाभावादिति भावः । विवरणे त्विति । इदं श्रीराममिश्रकृतं विवरणं स्यात्, अत्र ज्ञानान्तरविनाशे ज्ञानाभावो गणितः । संशयश्च वक्ष्यमाणः । धर्मिविपर्ययस्याप्यन्यथाज्ञानेऽन्तर्भावं कृत्वा विपरीतज्ञानमन्यादृशं प्रातीतिकं निरुक्तमित्याद्यसौष्ठवं द्रष्टव्यम् ।

अधर्म- इन्द्रियदोषदुस्तर्काभ्यासदुर्व्याप्त्यनुसंधानविप्रलम्भकवाक्यश्रवणादिभिः तत्त्वाग्रहसहकृतैर्विपर्ययस्य यथासंभवमुद्भवः ॥

(ख) संशयः

सामान्यधर्मिस्फुरणे सति अप्रतिपन्नतद्विरोधप्रतिपन्नमिथोविरोधानेकविशेषस्फुरणं संशयः । यथा—ऊर्ध्ववस्तुमात्रग्रहणे सति तद्विरोधितयाऽननुसंधीयमानयोर्मिथःस्फुटविरोधयोः स्थाणुत्वपुरुषत्वयोः स्फुरणम्—अयं स्थाणुर्वा पुरुषो वेति । मिथो विरोधाग्रहणे तयोर्विकल्पो न स्यात् । तत एव "डोलावेगवदत्र स्फुरणक्रमः" इत्येके, एकस्मिन् युगपदन्योन्यप्रतिक्षेपस्य धीविरुद्धत्वात् । अत्र—

"चैतन्यस्य विषयेण दृढसंयोगो हि निश्चयः । तस्यैव बहुभिर्युगपददृढसंयोगः संशयः" इत्यात्मसिद्धिग्रन्थोऽपि न विरुद्धः; इतरथा ज्ञानार्थयोर्दृढादृढसंश्लेषनिरूपणानुपपत्तेः । युगपदिति तु शैघ्र्यमात्रपरम् । यौगपद्याभ्युपगमेऽपि अदृढत्वं परस्परप्रतिक्षेपप्रकारविशेष एव । अन्यथा अयमूर्ध्वो वा स्थाणुर्वेत्यादिसंशयप्रसङ्गः । यद्यप्यविरुद्धेष्वपि केषुचिदधर्मादिमूलकविरोधग्रहणात् केषांचिदीदृशोऽपि संशयः संभवति; यथा—आत्मा ज्ञानं वा ज्ञाता वेति, ज्ञानं धर्मो धर्मि वेत्यादिः; तथाप्याभिमानिकं परस्परप्रतिक्षेपित्वं तत्राप्यस्त्येव ।

---

विपर्ययकारणान्याह अधर्मेति । तत्त्वाग्रहस्यैवास्य सर्वविपर्ययकारणत्वात् विशेषकारणेष्वेतद्घटनं कथमिति चेत्—क्लृप्तविशेषकारणाभावेऽपि क्वचिदधर्म एव प्रधानहेतुतया वक्तव्यो भवतीति भावः ॥

अन्यथाख्यातिपक्षे एकधर्मिविशेष्यकानेकमिथोविरोधविशिष्टधर्मप्रकारकज्ञानं संशय इति लक्षणस्य सुगमत्वात् अख्यातिपक्षे संशयलक्षणमाह सामान्येति । कोट्यात्मकधर्मप्रतियोगिकाभावात्मकभावधर्मव्यतिरिक्तकिञ्चिद्धर्मवत्तया धर्मिज्ञाने सतीत्यर्थः । अप्रतिपन्नेत्यादिकं चेति भेदाग्रहविशिष्टत्वस्य असंसर्गाग्रहविशिष्टत्वस्य वा निवेशप्रदर्शनम् । प्रतिपन्नेति । कोट्योः परस्परविरोधभानं संशये आवश्यकमिति भावः । विकल्पो न स्यादिति । वाकारोल्लेखो न स्यादित्यर्थः । तत एव=विरोधग्रहणादेव । डोलेति । डोलास्थलेऽत्यन्तवेगेऽपि पर्यन्तद्वयस्पर्शस्य क्रमिकत्वमेव हि; तद्वदिति । युगपत्प्रतिक्षेपस्य विरुद्धत्वेऽपि आत्मसिद्धौ यौगपद्योक्तिः कथमित्यत्र शीघ्रभावितात्पर्येण तदुक्तिरित्याह अत्रेति । अदृढसंयोग इति हि अन्यकोटिसंश्लेषार्थशीघ्रतत्कोटिविभागवद्भिः संश्लेष उच्यत इति भावः । विरोधग्रहणसाधनार्थमयौगपद्योक्तिरेकेषां दर्शिता; तदुपपादनमेतावत् । आत्मसिद्ध्यनुरोधेनायौगपद्यत्यागेऽपि, विरम्यव्यापारायोगात् यौगपद्यस्वीकारेऽपि अदृढपदेन कोट्यन्तरप्रतिक्षेपित्वबोधनद्वारेण विरोधग्रहणं सूचितमित्याह यौगपद्येति; विरोधावगाहित्वमवश्यकमित्याह अन्यथेति । ईदृशोऽपि=ऊर्ध्वो वा स्थाणुर्वेतिवदविरुद्धकोटिकोऽपि । आभिमानिकं प्रतिक्षेपित्वम्=विरुद्धत्वभ्रमः ।

अस्य च समानधर्मविप्रतिपत्तिभ्यामेवासाधारणकारणाभ्यामधर्मादिसहिताभ्यां यथा-संभवमुद्भवः । तदुक्तं तत्त्वरत्नाकरे—

"कश्चेह संशयः कतिविधश्च? एकस्मिन् धर्मिणि विरुद्धानेकविशेषावभासः संशयः; स च द्विविधः" इत्यादिना । तत्र समानधर्मः साधारणो धर्मः । तज्जनितो यथा—ऊर्ध्वत्वाविशेषात् स्थाणुर्वा पुरुषो वेति । अगृह्यमाणबलतारतम्यविरुद्धानेकज्ञापकोपस्थापनमिह विप्रतिपत्तिः । सा च सजातीयविजातीयाभासरूपद्वित्रिचतुरादिज्ञापकभेदात् बहुप्रकारा ।

प्रत्यक्षतदाभासविप्रतिपत्तेः संशयो यथा—चक्षुषा समुखं प्रतिभाति दर्पणतलम्, स्पर्शनेन त्वन्यथा; किमिदं समुखं निर्मुखं वेति । अनुमानतदाभासविप्रतिपत्तेर्यथा—धूमवत्त्वात् पर्वतोऽग्निमान्, निरालोकत्वादनग्निरित्यत्र, साग्निरनग्निर्वेति । श्रुतिविप्रतिपत्तेर्यथा—भेदाभेदव्यपदेशाभ्यां जीवो ब्रह्मणो भिन्नोऽभिन्नो वेत्यादिः । वादिविप्रतिपत्तेर्यथा—वैशेषि-

---

संशयासाधारणकारणविषये विवादसत्त्वात् स्वाभिमतमाह **अस्य चेति** । **समानधर्मः** साधारणधर्मः, **विप्रतिपत्तिः** कोटिद्वयोपस्थापकविशेषाविति वक्ष्यते । एतयोरन्यतरस्यासाधारणकारणत्वम् । अधर्मः, संशयविषयकोट्युपस्थितिः, धर्मिज्ञानमित्यादीनि सर्वसंशयकारणानि । न्यायदर्शनादावधिकासाधारणकारणोक्त्या कथं तत्त्याग इत्यत्र एतावतैव निर्वाहादधिकास्वीकार इत्याशयेन संप्रदायमपि दर्शयति **तदुक्तमिति** । क इत्यस्योत्तरं **एकस्मिन्नित्यादि** । कतिविध इत्यस्य **स चेति** । अन्यथाख्यातिरीत्या लक्षणमुक्तम् । अख्यातिपक्षे च तत्सामग्र्येव लक्षणमित्यर्थसिद्धम् । समानशब्दस्य सदृशेति वा एकेति वा नार्थः; किंतु साधारणेति । विप्रतिपत्तिशब्दस्य वादिप्रतिवादिवाक्यद्वयमित्यर्थस्वीकारे तदितराधीनसंशयासंग्रहः स्यादिति सर्वानुगतरीत्या परिष्करोति **अगृह्यमाणेति** । **इह** संशयनिरूपणे । ज्ञापकस्यानेकस्य विप्रतिपत्तिशब्दवाच्यत्वे **विप्रतिपत्तिरि**त्येकवचनं न घटते इति **उपस्थापनमि**त्युक्तम् । अनेकज्ञापककृतमनेककोट्युपस्थितिजननमित्यर्थः । स्थूलं नीलमितिवत् अविरुद्धत्वे संशयायोगात् **विरुद्धेति** । तयोर्ज्ञापकयोरेकतरप्राबल्यज्ञानेऽन्यबाधान्न संशयः । अतः **अगृह्यमाणबलतारतम्येति** । विरुद्धद्वयस्य बलतारतम्यमवश्यम्भावि । अतस्तारतम्यग्रहेति नोक्तम् । ज्ञापकमनेकं किमत्र विशदयति **सा चेति** । ज्ञापकद्वयस्य प्रत्यक्षरूपत्वे अनुमानादिरूपत्वे वा सजातीयत्वम् । एकं प्रत्यक्षमन्यदनुमानमित्यादिरूपत्वे विजातीयत्वम् । अन्यतरस्याभासत्वमवश्यम्भावीति ज्ञापनाय **आभासपदप्रयोगः** । संशये द्वित्रिचतुराद्यनेककोटिकत्वस्वीकारात् **द्वित्रीत्यादि** । सजातीयतदाभासविजातीयतदाभासरूपानेकज्ञापकगतमुपस्थापकत्वं विप्रतिपत्तिः । सजातीयोदाहरणान्यादावाह **प्रत्यक्षेति** । मिथोविजातीयानेकोदाहरणोक्तिः **प्रत्यक्षानुमानेत्यादिना** । **प्रत्यक्षमि**न्द्रियं चक्षुस्त्वगादि । **अनुमानं** धूमवत्त्वनिरालोकत्वादिहेतुजातम् । **भेदव्यपदेशः** 'ज्ञाज्ञौ द्वावजावीशनीशौ । पृथगात्मानं प्रेरितारञ्च मत्वा; आत्मनि तिष्ठन्' इत्यादिः ।

औपनिषदवाक्यद्वयश्राविणो मध्यस्थबुद्धेः किमिन्द्रियाणि भौतिकानि, आहंकारिकाणि वेति एवं पामरादिवाक्यविप्रतिपत्तेरपि—नद्यास्तीरे फलानि सन्ति, न सन्ति वेत्यादिः ।

प्रत्यक्षानुमानविप्रतिपत्तेर्यथा—चक्षुषा पीतशङ्खग्रहणे शङ्खत्वाच्च सितत्वानुमाने, किमयं शङ्खः पीतः सितो वेति । प्रत्यक्षागमविप्रतिपत्तेर्यथा—किमहमर्थः स्थूलोऽणुर्वेति । अनुमानागमविप्रतिपत्तेर्यथा—किं परमाणूपादानं जगत्, उत ब्रह्मोपादानमिति एषा दिक् ॥

केचित् विप्रतिपत्तिशब्दमूले मुह्यन्तो वादिविप्रतिपत्तिमेव विप्रतिपत्तिं मन्यन्ते । तदयुक्तम्, विशेषाभावात् ॥ यदुक्तं प्रज्ञापरित्राणे—

'साधारणाकृतेर्दृष्टेरनेकाकारग्रहात् तथा । विपश्चितां विवादाच्च त्रिधा संशय इष्यते ॥' इति;

तदपि नूनं परानुकारमात्रम्, द्वितीयतृतीययोरैकरूप्यात् ग्राहकावान्तरभेदस्यातिप्रसङ्गित्वात्

---

**अभेदव्यपदेश**. तत्त्वमसीत्यादिः । **मध्यस्थबुद्धेः** मध्यस्था एकतरपक्षपातोपयोगिविशेषग्रहणविधुरा बुद्धिर्यस्य पुंसः । **औपनिषदवाक्यमिति** श्रुतिमूलकत्वेनागृहीतं श्रुत्यतिरिक्तं तत्समानार्थकं वाक्यं ग्राह्यम् । अन्यथा श्रुतिप्राबल्यस्य प्रसिद्धत्वात् स्वरसतः संशयो न भवेत् । **अहमर्थ** इति । प्रत्यक्षोऽहमर्थः देहः आगमसिद्धस्तु देहातिरिक्त इति भेदेऽपि अहंशब्दवाच्यत्वेनैकीकरणम् । **सजातीयविजातीयेति** पूर्वोक्तवाक्यार्थे आभासानाभासोभयमूलकविप्रतिपत्तिरुक्ता, आभासद्वयमूलकविप्रतिपत्तिर्वक्तव्या । तथा ज्ञापकद्वयरूपविप्रतिपत्तिरुक्ता । त्रिचतुरादिज्ञापकस्थलानि ग्राह्याणि । तत्र प्रत्यक्षानुमानागमानां समावेशः एकतमस्याधिकसंख्याकत्वमन्यतमन्यूनत्वनिश्चयादिकमपि भाव्यमित्याशयेनाह **एषा दिगिति** । ज्ञापकानेकत्वमत्रोक्तम्; कोटिबहुत्वकृतभेद उपरि वक्ष्यते ।

**मुह्यन्त इति** । वादिप्रतिवादिवाक्यद्वयस्थल एव विप्रतिपत्तिपदप्रयोगः प्राय इति न्यायदर्शने संशयलक्षणसूत्रेऽपि तमेवार्थं गृह्णन्ति; सर्वलक्षणानुगमनात् तदयुक्तम् । विप्रतिपत्तिरुपपत्तिरित्येति सूत्र इव समुचितार्थः आदरणीय इति भावः । ननु संप्रदायप्रवर्तकेऽप्येवमुक्तिर्लक्ष्यते; कथं तदुपेक्षेत्यत्राह **यदुक्तमिति** । **प्रज्ञापरित्राणं** न्यायसुदर्शनकारवरदनारायणभट्टारककृतम् । **साधारणाकृतेर्दृष्टेः** साधारणधर्मदर्शनात् । तथा **अनेकाकारग्रहात्** अनेकधर्मग्रहणात् । **विपश्चितां विवादात्** वादिविप्रतिपत्तेश्च । **परानुकारेति** । "समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः" इति सूत्रे असाधारणकारणपञ्चकमुक्तमिति **भाष्ये** व्यक्तम् । **वार्तिककारस्तु** उपलब्ध्यनुपलब्ध्यव्यवस्थात इतीदमन्यथाव्याख्यायासाधारणकारणत्रयमुक्तवान् । तद्वत् अत्र स्वयं कारणत्रयमुक्तम् । वस्तुनो द्वयमेवेत्यर्थः । तत्र हेतुमाह **द्वितीयेति** । **अनेकाकारग्रहात्** अनेककोटिग्राहकादित्यर्थः । विवादोऽपि तादृश एवेत्यैकीकारः । ननु प्रत्यक्षादिरूपं ग्राहकं प्रथमानुदाहरणं तत चेन्न; तथासति क्वचिदनुमानादिकं ग्राहकमित्यनेकभेदापत्तेः । ननु सूत्रे अनेकधर्मोपपत्तेरित्युक्तम्, तदनुसारेण तथोक्तिरित्यत्राह

अप्रयोजकत्वाच्च । अत्र चानेकाकारग्रहो नानाकारग्रहो विवक्षितः, न त्वनेकव्यावृत्तासाधारणाकारग्रहः, अनन्तरम्

"अर्थेऽप्यविशेषेण द्वय कारग्राहिधीद्वयम् ।" इत्यादिना तस्यैवोदाहरणात् ॥

असाधारणधर्मादपि केचित् संशयमाहुः ; यथा–गन्धवत्त्वात् पृथिवी नित्या अनित्या वेत्यादि । अत्र गन्धवत्त्वस्य नित्यात्मादिव्यावृत्ते: कृतकत्वादिवदनित्यत्वस्मारकत्वम्, अनित्यत्वादिव्यावृत्तेर्निरवयवत्वादिवन्नित्यत्वस्मारकत्वमिति विरुद्धविशेषद्वयान्वितसमानधर्म-

---

अप्रयोजकत्वाच्चेति । व्युत्पत्तिवैशद्याय तैस्तथोक्तावपि परिशीलकैरेकीकारसंभवादिति भावः । ननु प्रज्ञापरित्राणगतमनेकाकारग्रह इत्येतत् न भवदुक्तार्थकम् ; किंतु न्यायसूत्रे समानानेकधर्मोपपत्तेरित्यत्र अनेकधर्मोपपत्तेरित्यस्य योऽर्थस्तत्परमेव । तत्रासाधारणधर्म एवानेकधर्म इष्टः । कथं तस्य तद्वाचकत्वमिति चेत्—एकशब्दः साधारणपरः ; अनेक इति असाधारण इति । न्यायभाष्ये तु अनेकव्यावृत्तो धर्मोऽनेकधर्म इत्युक्तम् । अनेकस्य धर्म इति विग्रहे षष्ठी व्यावृत्तत्वरूपसंबन्धपरेति तल्लाभ इति केचित् । अनेकव्यावृत्त इति मध्यमपदलोपी समास इत्यन्ये । गन्धवत्त्वं पृथिव्यसाधारणं पृथिवीव्यतिरिक्तनित्यानित्योभयविधवस्तुव्यावृत्तमिति गन्धवति नित्यत्वानित्यत्वसंशय इति । अतस्त्रैविध्यं तन्मतमेवंरूपमेवेत्यत्राह अत्र चेति । तत्रोपरि द्व्याकारग्राहिधीद्वयमिति नानाधर्मोक्त्या, असाधारणैकधर्मपक्षस्तदनिष्टः । अतो वादिविप्रतिपत्तेरिव प्रत्यक्षानुमानागमादीनामनेककोटिज्ञापकानामपि विप्रतिपत्तावेवान्तर्भावान्न युक्तं पार्थक्यमिति भावः ।

अस्तु यः कश्चित् तद्ग्रन्थार्थः । असाधारणधर्मस्य कथमुपेक्षेत्यत्र तन्निरसनमारभते असाधारणेति । तार्किकेषु गौतमीया एवैवम् । कणादसूत्रे तु, "सामान्यप्रत्यक्षाद् विशेषाप्रत्यक्षात् विशेषस्मृतेश्च संशयः" (2-1-17) इति साधारणधर्मज्ञानमेव सर्वसंशयकारणमुक्तम् । उपरि "तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथादृष्टत्वात्" (2-1-25) इति सूत्रसत्त्वेऽपि असाधारणधर्मस्य पृथक्कारणत्वं व्याख्यातॄणामनिष्टमित्याशयेन केचिदित्युक्तम् । तन्मतमुपपादयति अत्रेति । यथा स्थाणुत्वपुरुषत्वसहचरितसामान्यधर्मवत्ताज्ञानं कोटिद्वयोपस्थापनेन संशयहेतुः, तथा नित्यानित्योभयव्यावृत्तगन्धवत्त्वरूपधर्मज्ञानमपि कोटिद्वयोपस्थापकम् । अत्रायं विशेषः—नित्यव्यावृत्तधर्मोऽयमिति ज्ञाने नित्यत्वोपस्थितावपि धर्मिणि नित्यत्वाभाव एव गृह्यते । एवमनित्यव्यावृत्तधर्मत्वज्ञानमनित्यत्ववत्ताग्रहानुपयुक्तम् । अथापि नित्यव्यावृत्तत्वज्ञाने सति तादृशकृतकत्वाद्युपस्थित्या तद्वत् अनित्यत्वसहचरितमिति ज्ञानं भवति । तथा अनित्यव्यावृत्तमिति ज्ञाने तादृशनिरवयवत्वादिधर्मवत् इदं नित्यत्वसहचरितमिति ज्ञानं भवेत् । एवमनित्यत्वस्य नित्यत्वस्य चोपस्थित्या संशय इति । विशेषद्वयान्वितेति । विशेषधर्मद्वयसहचरितेत्यर्थः । उभयव्यावृत्तत्वमुभयनिष्ठाभावप्रतियोगित्वम् । अत्र गन्धवत्त्वं वा तस्योभयव्यावृत्तत्वं वा न संशयकारणमिति

स्यैव तदुभयव्यावृत्तासाधारणधर्मस्यापि संशयहेतुत्वमुपगन्तमिति । तदयुक्तम् ; न हि तत्र गन्धवत्त्वादिना संशयोत्पत्तिः, अपि तु व्यतिरेकनिरूपणविलम्बात् प्रागेव गन्धादिविशिष्टद्रव्यस्य नित्यानित्यसाधारणतया भासमानैर्द्रव्यत्वादिभिरेव । तत्रान्यतरकोटिनिर्णिनीषया विशेष(क)धर्मचिन्तायां तु गन्धवत्त्वमुभयानन्वितत्वादुभयोरप्यसाधकमिति केवलमेव चिन्त्यते । केवलव्यतिरेकिभङ्गे चैतद्विशदं भविष्यति । गन्धवत्त्वात् पृथिवी नित्या वा अनित्या वेति तु यदा कश्चिद्व्यवहरेत्, तत्रापि गन्धवत्त्वं नित्यत्वानित्यत्वयोरन्यतरस्य प्रयोजकं न वा इत्येव संदेहः । सोऽपि धर्मत्वादिलक्षणसमानधर्मादेव । अथ नित्यव्यावृत्तधर्मवत्त्वादनित्यत्वम्

---

वदन् तन्निरस्यति तदयुक्तमिति । आदिपदेनोभयव्यावृत्तत्वविशिष्टतया गन्धग्रहणम् । केवलगन्धज्ञानस्येव नित्यानित्यव्यावृत्तत्वविशिष्टतया तज्ज्ञानस्यापि न संशयोत्पादकत्वमित्यर्थः । कुतः ; व्यतिरेकनिरूपणविलम्बात् । गन्धवत्त्वज्ञानानन्तरं तदभावरूपव्यतिरेकज्ञानं ततस्तत्समानाधिकरणनित्यत्वानित्यत्वधर्मज्ञानम् तत्र नित्यव्यावृत्ततया गन्धज्ञानस्य नित्यत्वकोट्युपस्थापकत्वेऽपि नित्यत्वसाधनांशे तस्यानुपयोगात् नित्यत्वव्यतिरेकरूपानित्यत्वकोट्युपस्थापकत्वम् । एवं अनित्यव्यावृत्ततया गन्धज्ञानस्यानित्यत्वव्यतिरेकरूपनित्यत्वोपस्थापकत्वमिति व्यतिरेकाणां ग्रहणे विलम्बो भवति । एतदपेक्षया गन्धवत्त्वज्ञानसमनन्तरमेव तत्समानाधिकरणद्रव्यत्वरूपसाधारणधर्मज्ञानं तत्र नित्यत्वानित्यत्वसाहचर्यज्ञानात् युगपदेव कोटिद्वयोपस्थितिः, ततः संशय इत्युक्तौ शीघ्रमेव तदुत्पत्तिनिर्वाहः । अतस्तादृशविलम्बात् पूर्वमेव द्रव्यत्वादिसमानधर्मत एव संशय इत्यर्थः । तर्हि तत्र गन्धवत्त्वे नित्यानित्यव्यावृत्तत्वनिरूपणं किमर्थं क्रियत इत्यत्राह तत्रान्यतरेति । द्रव्यत्वेन नित्यत्वानित्यत्वसंदेहे गन्धवत्त्वं प्रागगृहीतमेवान्यतरनिर्धारकं भवेदिति चिन्तायां तस्य निर्धारकत्वाभावनिरूपणार्थमेव तदुपन्यास इति । ननु व्यावृत्तत्वज्ञानस्य कोट्युपस्थापकतया संशायकत्वं मा भूत् ; किंतु पृथिवीव्यतिरेके यत्र नित्यत्वाभावः, तत्र गन्धवत्त्वाभावः, एवं यत्रानित्यत्वाभावः तत्र गन्धवत्त्वाभाव इति तत्तदभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तेर्गन्धे ग्रहणात् नित्यत्वानित्यत्वरूपसाध्यद्वयसमावेशे प्राप्तेऽर्थात् संशयसंभवः सत्प्रतिपक्षस्थले केषाञ्चिदिवेत्यत्राह केवलेति । केवलव्यतिरेकव्याप्त्या किञ्चित्साधनमेव न भवतीति तद्भङ्गो वक्ष्यत इति भावः । तद्ग्रन्थे (५.1) अपि चानध्यवसितेपीत्यादिना एतत्प्रस्तावः करिष्यते ।

तर्हि गन्धवत्त्वस्य प्रकृतसंशयहेतुत्वाभावे गन्धवत्त्वादिति पञ्चमी निर्देशः कथमिति पृच्छति गन्धेति । नित्यत्वानित्यत्वान्यतराप्रयोजकत्वस्य तदभाववत्त्वस्य चोभयवृत्तित्वरूपसाधारणधर्मज्ञानात् प्रयोजकत्वादिसंशय इत्याह सोऽपीति । ननु विलम्बं विना द्रव्यत्वादित एव संशयः कल्प्यताम् । यदा कस्यचित् तदनुपस्थित्या, व्यावृत्तत्वज्ञानविलम्बेनैव संशयः, तत्र साधारणधर्माधीनत्वाभावात् अन्यो हेतुः कल्प्य एवेत्यत्राह अथेति । संशय्यत इति । पुरुषेणेति शेषः । धर्मद्वयेति । एकस्योभयव्यावृत्तत्वायोगादिति भावः । तत्तदुक्त्या-

अनित्यव्यावृत्तधर्मवत्त्वाच्च नित्यत्वं पुरस्कृत्य नित्या अनित्या वेति संशय्यते (संशेते) (संशेरते); तदापि हेतुभूतधर्मद्वयनिमित्तोऽयं संशयः। न ह्येक एवात्र हेतुः। गन्धस्तु तत्र सामान्यरूपस्तटस्थः; न तु हेतुः॥

विप्रतिपत्तिमपि केचित् समानधर्म एवान्तर्भावयन्ति। यथा हि ऊर्ध्वत्वमुभयसाधारणम् तथा वादिपरिगृहीतत्वादेरपि साधारणत्वात् विप्रतिविषयस्य धर्मिणो वा सामान्यवेषस्य तदुभयसाधारण्य इति।

तथापि साधारणधर्मस्य सहानुभूतस्थाणुत्वपुरुषत्वस्मारकत्ववत् विप्रतिपत्तेरपि समानधर्मोन्नीति-निरपेक्षाया एव तदुपजीव्यतया तत्पूर्वभाविन्याः साक्षात्तद्विशेषस्मारकत्वसिद्धेर्द्वैधमुक्तमस्माभिः।

पुनश्चायं द्वित्रिचतुरादिशिरोधिकरणभेदात् बहुविधः; यथा—अयं स्थाणुर्वा पुरुषो वेति, घटः सद्रूपोऽसद्रूपो निर्वचनीयोऽनिर्वचनीयो वेत्यादि। तथा इमौ स्थाणू वा पुरुषौ वा, एते पदार्थाः सत्या असत्या निर्वचनीया अनिर्वचनीया वेत्यादि। यस्तु द्वयोरन्यतरस्य चोरत्वे सिद्धे अयं चोरः अयं वा चोर इति सन्देहः, स तु अयं चोरो न वा इत्येवंरूपसंशयद्वयसमाहारः। यद्वा यश्चोरः, सः अयम् अयं वा इत्येक एव। अथवा चोरत्वमेतन्निष्ठम् एतन्निष्ठं वेति।

---

वृत्तत्वरूपहेतुतावच्छेदकभेदादपि भेदः। **सामान्यरूप** इति। नित्यत्वानित्यत्वयोर्मिथो विरुद्धतया तद्व्यावृत्तधर्मयोर्नह्येक एव तत्र संभाविनः,। यस्तत्रानुवृत्तिमर्हति, तत्सहचरितं भविष्यति गन्धवत्त्वमिति साधारण्यमेव। नित्यानित्यपृथिवीद्वयसत्त्वपक्षे तदुभयसाधारण्यमपि तस्येति भावः।

कणादसूत्रे **सामान्यधर्मप्रत्यक्षा**दिति साधारणधर्ममात्रकथनात् विप्रतिपत्तिरूपकारणान्तरेऽपि विप्रतिपत्तिमुद्भाव्य परिहरति **विप्रतिपत्तिमपी**ति। सव्यभिचारमणिग्रन्थेऽपि एतत्प्रस्तावः। **वादिपरिगृहीतत्वं** वादिभ्यां गृहीतत्वम्। प्रत्यक्षादिविप्रतिपत्तेरपि प्राग्दर्शितत्वात् कथमिदं सर्वत्रेत्यत्राह **विप्रती**ति। **वादो** हेतुरलक्षणम्; कारणज्ञानविषयत्वधर्मित्वादिः साधारणधर्म इति भावः। **तदुपजीव्यतया** समानधर्मोन्नीतिकारणतया विप्रतिपत्तौ ततः पूर्वमेव जातायां तत एव समानधर्मोन्नीतिं विना कोटिद्वयोपस्थित्या झटिति संशयोत्पत्तिरानुभविकी; न तु विप्रतिविषयत्वादिसाधारणधर्मे कोटिद्वयसाधारण्यज्ञानानन्तरभाविकोटिस्मरणपर्यन्तविलम्ब इत्यर्थः। **द्वैधं** संशयहेतोः द्विधात्वम्। असाधारणकारणभेदप्रयुक्तं संशयद्वैविध्यमुक्तम्। कोटिद्वित्वबहुत्वधर्मिसंख्यान्यूनाधिकभावप्रयुक्तं बहुविधत्वमाह **पुनश्चे**ति। **शिरः** कल्पः कोटिः; **अधिकरणं** धर्मी। **द्वित्रिचतुरादी**ति उभयान्वयि। **सत्यत्व**मबाधितत्वम् **असत्यत्व**मसत्त्वम्, **निर्वचनीय**त्वं सदसत्त्वेन निर्वक्तुं शक्यत्वम्। **अनिर्वचनीयत्वं** सदसदनिर्वचनीयत्वम्। नन्वेककोटिकसंशयोऽपि दृश्यते, अयं चोरः, अयं वा चोर इति इत्यत्राह **यस्त्वि**ति। नन्वस्य वाक्यस्य एतदुभयान्यो न प्रकृतचोर इति वा, एतदन्यतरश्चोर इति वाऽर्थे

यद्यप्युभयव्यतिरिक्तपुरुषचोरत्वाभावे तयोरन्यतरस्य चोरत्वे वा तात्पर्यानिर्णयगर्भत्वम्, तथापि उभयोरन्यतरविशेषनिर्णयाभावात् तस्मिन्नंशे संशय एव। न चैकस्यापि ज्ञानस्य संशयनिर्णयात्मताविरोधः, सर्वस्मिन्नपि संशये धर्म्यंशादौ निर्णयस्य दुस्त्यजत्वात् ॥

पुनर्द्विविधोऽयम्—अन्यतरकोटिविशेषयोग्यत्व, तदयोग्यत्वभेदात्। पूर्वो यथा—स्थाण्वात्मके वस्तुनि स्थाणुः पुरुषो वेति। उत्तरस्तु पलालकूटे द्विरदो गिरिशिखरं वेति। तत्र निरूपकाणां प्रायशः पूर्व एव भवति। तेनैव च प्रवृत्तस्य पाक्षिकोऽर्थलाभः। यद्वा निरीहस्ये(स्यै)व कदाचित् द्वितीयेन संशयेन विपर्ययेण च प्रवृत्तस्य दैवात् तदात्तनार्थसंनिपाते नाभिमतलाभ इति ॥

पुनरपि इमौ संशयविपर्ययौ सामान्यधर्मिणो विशेषाणां चानुभूयमानत्वस्मर्यमाणत्वादिभेदात् बहुविधावूहनीयाविति ॥

(अनध्यवसायविवेचनम्)

किंसंज्ञकोऽयं वृक्ष इत्येवमादिरूपोऽनध्यवसायो नाम अन्यो ज्ञानविशेष इति केचित्;

---

निर्णयरूपत्वमेव, न संशयत्वमित्यत्राह यद्यपीति। योग्येति। धर्मिनिष्ठविशेषस्यैकैककोटिवेऽन्यतरकोटिपरिशेषः स्यात्, कस्या अपि कोटेर्धर्मिनिष्ठत्वाभावे परिशेषायोग्यत्वम्। पलालकूटे शुष्कसस्यतृणराशौ। निरूपकाणामिति। यत्र धर्मिणि स्थाण्वादौ संशयः इतरविलक्षणगतः तज्जातीयस्य एकव्यक्तिरूपरिवयवनां पुरोवर्तिनि चेतदवधानं कुर्वतामित्यर्थः। तेषां स्थाणुत्वाद्युपस्थितिरवश्यम्भाविनी। तेनैव—संशयेनैव। उत्तरसंशयाधीनप्रवृत्तेः पाक्षिकतयाऽपि साफल्यं नास्तीत्यर्थः। तेनैवेति कथम्; द्वितीयसंशयस्थलेऽपि कदचिदर्थलाभादित्याशंकायाम्, तथापि न स तत्प्रवृत्तिफलमित्याह यद्वेति। निरीहस्येवेति। इवकारघटितः पाठः प्रथमव्याख्यासंमतः; गजार्थमप्रवृत्तस्येवेति लेखनात्। यथा गजस्याभिमतत्वेऽपि तदर्थप्रवृत्तिरहितस्यापि यदृच्छया तल्लाभः, तथा, पलालकूटे द्विरदभ्रान्त्या प्रवृत्तस्य तत्र पलालकूटधर्मिविषयकत्वात् यदृच्छया तत्र समागतगजव्यक्तिविषयकत्वाभावात् तल्लाभो न तत्प्रवृत्तिफलमित्यर्थः। विपर्ययेणेति। कोट्यन्तरं विना कथं द्विरद इति भ्रमात्मकनिश्चयेनेत्यर्थः। तदेकव्यक्तिविषयकगिरिशिखराद्यविषयकज्ञानाधीननिष्कम्पप्रवृत्तेरेव गजलाभो न फलमिति स्थिते संदेहमूलकसकम्पप्रवृत्तिफलत्वं कथमिति भावः। तदातनोऽर्थसंनिपातः गजादिसमागमः। व्युत्पत्तिवैशद्यायान्यदप्याह पुनरपीति। प्रसंगात् विपर्ययस्यापि ग्रहणम्। अनुभूयमानत्वम्, इदमनुभवामीत्यनुभवत्वरूपगृहीतभिन्नज्ञानत्वेन गृह्यमाणज्ञानविषयत्वम्। आदिना पश्यामीति अनुमिनोमीत्येवं तत्तदवान्तरधर्मपुरस्कारेण गृह्यमाणज्ञानविषयत्वग्रहः।

किंसंज्ञक इति। अनध्यवसायात्मकोऽनेककोटयविषयकत्वात् संशयविलक्षणोऽपि ज्ञानविशेषो वैशेषिके प्रशस्तभाष्ये उक्तः। (2-1-17) मूले अस्मदीये रसायने, अनध्यवसायज्ञानं संशयातिरिक्त-

तदसारम्; तस्य संशयादिविशेषेभ्योऽनतिरेकात् संशयविशेषात्मकत्वात्। अथवा अवच्छेदकादर्शनादनवधारणात्मकविशेषः संशय एव॥

---

मसाधारणधर्मज्ञानजन्यमिति प्रागुक्तादनध्यवसाय। वाहीकस्य गृहीतसदृशने कःस्विदयमिति" इत्यादिकं द्रष्टव्यम्। कःस्विदयमित्यस्य किंसंज्ञकोऽयमित्यत्र पर्यवसानात् अत्र किंसंज्ञक इत्येव लिखितम्। न हि स्कन्धशाखापर्णादिसंवृते वृक्षनुह्यौ विवाद इति भावः। आदिपदाभ्यां कःस्विदयमित्यस्य, गोत्वादेश्च क्रमेण ग्रहणम्। प्रथमस्य कंटकरकार्यादिग्रहणमप्याचार्योऽपि भवति। ज्ञाटान्तरिते गवि सास्नामात्रं पश्यतो गोत्वमपश्यतः कः स्विदयं प्राणीति गोत्वानध्यवसाय इति च तत्र भाष्ये। ननु संज्ञाविशेषसंदेहेति कथम्? वृक्षान्तरवैलक्षण्यस्य प्रत्यक्षितत्वादेव वृक्षान्तरसंज्ञावाच्यत्वाभावावधारणात्। एतद्व्यसंज्ञायाश्च पूर्वमगृहीततया तत्कोटयुपस्थितेर्दुर्वचत्वादिति चेत्—सदेहमनन्तरेत्यत्र संदेहे नैर्भर्याभावात्। बुभुत्सायामेव तात्पर्यात्। अस्तु वा संदेहोऽप्यन्यादृश इत्याह अथवेति। अवच्छेदकादर्शनात् व्यवर्तकस्वरूपादर्शनात्। "यावदर्थं वै नामधेयशब्दाः, तैरर्थसंप्रत्ययः" इति लोकप्रसिद्धत्वात् अयस्य संज्ञाऽस्त्येव। संज्ञा चैकाक्षरानेकाक्षरादिरूपा नियतानुपूर्वीका। तथात्र प्रथमवर्णोऽयं वा स वा, द्वितीयवर्ग एष वाऽसौ वा, तृतीयवर्णोऽस्ति वा न वा, अस्ति चेत् कः इत्येवं कचटतपादिधर्मानिर्णयात् तादृशवर्णघटितसंज्ञासंदेह इति। नन्वेवमनेककोटिकत्वात् कःस्विदयमित्यत्रानुभवविरुद्धत्वात् अनुल्लिखितानां कथं कोटित्वमिति चेत्—कोटिविशेषा भासन्त एव। कोटिनावच्छेदकधर्माणां विशिष्याग्रहणात् तथाऽनुल्लेखः। तथाच स्फुटानेककोटिकः अस्फुटानेककोटिक इति भेदेऽपि संशय एव। संभावितानेकानुपूर्वीकशब्दराशिषु ईदृशो वाऽन्यादृशो वेति कोटिनावच्छेदकाध्यवसायाभावादनध्यवसायः; अनेककोटिगर्भत्वाच्च संशय इति। आम्रपनसादिसंज्ञासंदेह इति पूर्वव्याख्यानं तु कथञ्चिदुपपादनीयम्॥ यदि अस्मद्गुणायनोक्तरीत्या संशयं विना जिज्ञासमात्रं कः स्विदिति। किंशब्दस्य जिज्ञासाविषयार्थकत्वात्। तत एव बुभुत्सात्मकत्वादित्युक्तमत्र। अनध्यवसायश्च नाध्यवसायभिन्न ज्ञानम्; किन्त्वध्यवसायाभावः। संशयादेवाज्ञानादपि जिज्ञासासंभवादिति मन्यते—कामनस्तु; ज्ञानमिति पक्षे संशयातिरिक्तं न भवतीत्येव प्रकृतग्रन्थतात्पर्यात्।

अप्रमारूपं ज्ञानं त्रिविधं संशयविपर्ययतर्कभेदादिति तार्किकाः। तत्र प्रसिद्धस्तर्क आरोपः। सूत्रे तु, "अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" इति ऊहत्वेनोक्तः। तदर्थस्तु—अर्थस्य यथावस्थिते आकारे अज्ञाते सति=संशयिते सति कोटिद्वयसाधकेष्वन्यतमस्य यतरस्य कारणस्य विषये उपपत्तिरस्ति तत्परिशीलने क्रियमाणे, तत्त्वज्ञानोत्पत्तेः प्राक् अन्तराले उपपत्तिमत्त्वेन ज्ञानहेतुपक्षे आदरेण इयं कोटिरेव स्यादिति संभावना भाति। स एवोह इति। अत्रोपपत्तिशब्दः शोधने आरोपात्मकतर्कपरो भवेत्। ऊहस्तु नाऽऽरोपः। अपत्रोहः न तत्त्वज्ञानम्। तस्य एवमेवेत्यवधारणरूपत्वात्, अस्य च एवं स्यादिति संभावनारूपत्वात्। संभावना हि संशयविशेषः, यत्र कोटिद्वयस्य न साम्यम्, एकतरकोटौ

(ऊहद्वैविध्यम्)

ऊहस्तु 'प्रायः पुरुषेणानेन भवितव्यम्' इत्यादिरूप एककोटिसहचरितभूयोधर्मदर्शनात् अनुत्कटान्यकोटिकः स एव। प्रायः पुरुषेण भवितव्यमिति पुरुष एवेत्यभिप्रायश्चेत्, यथोचितं प्रत्यक्षानुमानादिष्वनुप्रवेशः। तर्करूपमूहं तु अनुमाने वक्ष्यामः ॥

(प्रमाणसंख्या)

त्रिविधं प्रमाणम्—प्रत्यक्षानुमानशब्दभेदात्। भगवता मनुनाप्युक्तम्—

"प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्। त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता ॥"

इति ॥ आह च भगवान् शौनकः—"दृष्टानुमानागमजं ध्यानस्यालम्बनं त्रिधा।" इति।

भाष्यकारेण च प्रत्यक्षादित्रयं स्वशब्देनोपादाय "प्रमाणसंख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः" इत्यन्येषाम्—

---

त्कटत्वानुभवात्। तदस्य संशय एवान्तर्भावान्न पार्थक्यम्; आरोप एव पृथक्। एतद्द्वयावृत्तिश्च संशयव्यावृत्त्यैवोक्ता भवति। तदाह ऊहस्तु इति। प्राय इति। स्थाणुपुरुषसंशये, अयं पुरुषः स्यादित्यूहो विचारावसरे भवति। स एवोच्यते प्रायः पुरुषेणानेन भवितव्यमिति। एकेति। पुरुषत्वकोटिसमानाधिकरणहस्तपादकेशाद्यनेकांशस्फुरणावमर्शे स्थाणुत्वकोटिसाधकानुपलम्भात् सा कोटिरुद्भूता औत्कट्यशालिनी भवति। ननु भवितव्यमिति विधिबलात् पुरुषत्वावधारणे सति कथं कोटिद्वयभानम्। प्राय इत्यस्य चानेकहेतुत इत्यर्थ इति शंकायामाह प्राय इति। प्रत्यक्षेति। विस्फारिताक्षगतं ज्ञानं प्रत्यक्षम्; अन्यदनुमानादीति। नैयायिकलोकप्रसिद्धस्तर्कस्तु अन्यः। सोऽप्यूह इति गण्यते। सोऽनुमानविशेष एवेति चेत्, अनुमानेऽन्तर्भूतः प्रमैव भवेत्। आरोपात्मकत्वे विपर्ययविशेषः। तदभाववति तत्प्रकारकज्ञानमेवेदम्। परन्तु बाधनीयो विपर्ययो भ्रमः। बाधकालीनेच्छाजनितं तु ज्ञानमाहार्यारोपः प्रमाणस्यानुग्राहक इति वक्ष्यते। सोऽपि वार्य एवाप्रमात्वात्; परं तु विपर्यये पर्यवसानगर्भ इति भावः। एवमप्रमावान्तरभेदः प्रसंगात् प्रथममेव निरूपितः।

अथ प्रमाविशेषादयः प्रत्यक्षादयो वक्तव्याः। तेषां कारणभेदमादायैव भेदः प्रदर्शनीय इति प्रमाकरणविभागमारभते त्रिविधं प्रमाणमिति। शब्दपदमागमानागमोभयसाधारणम्। शास्त्रपदेन श्रुतिस्मृत्यादिसत्त्वशब्दग्रहणम्। तत्र प्रधानांशं विशिष्याह विविधागममिति। विविधाः आगमाः ऋग्वेदयजुर्वेदादिरूपाः अधीयमानानधीयमानरूपाः श्रुतिपञ्चरात्ररूपाश्च यत्र शास्त्रे घटकाः तदित्यर्थः। शास्त्रपदमशास्त्रभूतलौकिकवाक्यादेरपि प्रत्यक्षानुमानातिरिक्तप्रमाणस्य सूचकम्। धर्मसिद्धिम्=अयमयं धर्म इति विशेषरूपेण तन्निश्चयम्। दृष्टेति। दृष्टमिति भावे क्तः। दर्शनं प्रत्यक्षम्, अनुमानमनुमितिः आगमजं शाब्दबोधरूपं त्रिविधमपि ज्ञानं ध्यानस्यालम्बनमनुग्राह्यम्। यथायथं दर्शनादिगोचरस्य ध्येयत्वमित्यर्थः। कार्यमुखेन प्रमाणत्रयमत्राप्युक्तम्। अयमेव विषयः=सविशेष एव विषयः। अन्येषां

मनादरः कृतः। सर्वाभ्युपगताप्रमाणानामिति च पराभ्युपगमत्वं द्योतयति, तत्र प्रतिवादिना षट्प्रमाणाभ्युपगमात्। प्रत्यक्षानुमानागमानामेव च मिथो भेदो वेदार्थसंग्रहे विशदमुपपादितः॥

यत्तु "मत्तः स्मृतिर्ज्ञानमपोहनं च" इत्यत्र भाष्यम्—"ज्ञानमिन्द्रियलिङ्गागमयोगजो वस्तुनिश्चयः" इति, तत्रापि योगजस्य प्रत्यक्षस्य प्राधान्यात् पृथग्व्यपदेशः। अन्तर्भावं च वक्ष्यामः। उक्तं च श्रीविष्णुचित्तैः प्रमेयसंग्रहे—'प्रमाणत्रैविध्याविरोधोऽन्यत्र त्रिप्रमाणत्वं भगवतोक्तम्" इति। भाष्ये च केषुचित् कोशेषु यथार्थख्यातिसमर्थनदशायाम्—

"अथवा किमनेन बहुनोपपादितेन। प्रत्यक्षानुमानागमाख्यं प्रमाणजातमागमगम्यं च निरस्तनिखिलदोषगन्धमनवधिकातिशयासंख्येयकल्याणगुणगणं सर्वज्ञं सत्यसंकल्पं परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति; किं नोपपद्यते—"

इत्यादिः पाठो दृश्यते॥ यद्यपि स्मृतिरपि यथार्था प्रमाणमिति वक्ष्यते, तथापि प्रत्यक्षादिमूलतया तदविशेषात् पृथगनुक्तिः। उक्तं च तत्त्वरत्नाकरे—

"प्रत्यक्षादिमूलानां स्मृतीनां स्वस्वमूलेऽन्तर्भावविवक्षया प्रमाणत्रित्वाविरोधः। चतुष्ट्वे च वैदिकानुवादो दर्शितः" इति। स चायमनुवादः पूर्वोपात्तः—

"स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् इति प्रत्यक्षाद्यविशेषेण वेदानुवादाच्च"— इति।

प्रज्ञापरित्राणे तु स्मृतिप्रामाण्यानभ्युपगमेऽपि ज्ञानस्य तावत् करणभेदाच्चातुर्विध्यमेवोक्तम्—

---

प्रत्यक्षानुमानशब्देष्वेव रक्षितानामुपमानार्थापत्त्यादीनां प्रमाणान्तरतया परेष्टानाम्। सर्वाभ्युपगतेति। तत्तद्वाद्यभ्युपगतानामतिरिक्तप्रमाणानाम्। चतुर्थं योगजं ज्ञानं गीताभाष्योक्तमिति शंकां परिहरति यत्त्विति। प्राधान्यात् भगवतो विशेषानुग्रहेण जायमानत्वात्। विवादास्पदभाष्यपाठविशेषेऽपि प्रमाणत्रित्वं दृश्यते। अत एवायं साम्प्रदायिक इत्याह भाष्ये चेति।

स्मृतेरपि प्रमाणत्वात् तत्करणमनुभवोऽपि प्रमाणतया परिगणनीय इत्यत्राह यद्यपीति। तदविशेषात् प्रत्यक्षाद्यनुभवाधीना हि सा तस्य याथार्थ्ये यथार्था, तदयाथार्थ्ये चायथार्थेति भावः। न्यायसूत्रे प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्युक्तम्, न त्वनुभवोऽपि पञ्चमप्रमाणतयोक्तः; कथमेवमित्याशंक्य,— अत एव प्रमालक्षणे अनुभवत्वग्रहणं गौतमेष्टमिति तद्वैरूप्यम्। अत्र तु यथार्थज्ञानत्वेन प्रमात्वमिति वा यथावस्थितेत्यादिसूक्तिं वा स्मृतेरप्यभ्युपगमे प्रमात्वम्। तदनु किन्तु प्रत्यक्षाद्यनुविधायितया पृथक्प्रतिपादनीयाभावादित्यभिप्रायः। स्मृतिप्रामाण्यं स्वीकार्यमित्यत्र हेतुमाह चतुष्ट्वे चेति। वैदिकोऽनुवादः क इत्यत्राह स चेति। ऐतिह्यमिति शब्दसामान्यजन्यज्ञानपरम्। चतुष्टयं चतुर्विधं प्रमाभूतज्ञानमित्यर्थः। ननु ऐतिह्यमज्ञातकर्तृको वेदः; स्मृतिग्रन्थ एव स्मृतिरित्यस्त्विति चेन्न—उभयोः शब्दत्वाविशेषात् चतुष्टयोक्तिविरोधात्। ज्ञानस्य तावदिति। यथार्थानुभवरूपप्रमाकरणानां त्रैविध्येऽपि

प्रमेयसंग्रहे त्वेवमुक्तम्—"साक्षाद् नुभवः प्रत्यक्षम्। साक्षात्त्वं जातिः—" इत्यादि।

तत्त्वरत्नाकरेऽप्येवमुक्तम्—"अपरोक्षप्रमा प्रत्यक्षम्; आपरोक्ष्यं च संविदः। व्यवहार्यर्थसंनिधिज्ञानजन्यत्वविवर्जनम्॥" इति॥ परोक्षत्वं चैवमुक्तम् 'परोक्षं व्यवहार्यानन्तर्गतवस्तुवेदनापेक्षा(क्ष्य)। तदनन्तर्गं लिङ्गं यदपेक्ष्य (क्षा) परोक्षमनुमादि" इति।

वरदविष्णुमिश्रैः मानयाथात्म्यनिर्णये त्वेवमुक्तम्—अपरोक्षप्रमा प्रत्यक्षम्। प्रमाया आपरोक्ष्यं नाम विशदावभासत्वमिति ब्रूमः। किमिदं वैशद्यं नाम? असाधारणाकारेण वस्त्ववभासकत्वम्-इत्यादि॥

---

जन्यत्वं प्रत्यक्षे नास्ति। अनुभवरूपकरणजन्यस्मृतेरपि करणस्य पूर्वं ज्ञानापेक्षणाभावात् तत्रातिव्याप्तिः स्यादिति स्मृतित्वरहितत्वमपि दलं निवेश्यम्। इदं रहितत्वद्वयं घटपटादावप्यस्तीति ज्ञानत्वमपि निवेश्यम्। एवं सर्वपरोक्षज्ञानव्यावृत्तिः। साक्षात्पदस्य किञ्चिदद्वारीकृत्येत्यर्थे प्रसिद्धत्वे विषयान् द्वारीकृत्य ग्रहणमिति युक्तमिति भावः। यदि इन्द्रियार्थसंनिकर्षजन्यज्ञानत्वमिति प्रत्यक्षलक्षणम् तत् ईश्वरीयनित्यज्ञाने नेऽव्याप्तिः स्यात्। निरुक्तलक्षणे एकैकदलानिवेशे चातिव्याप्तिः। अत इदं सुष्ठ्वित्यर्थः। अत्र साक्षात्त्वे प्रमेयसंग्रहोक्तम्, द्वितीयमन्यत्र दर्शितमित्याह प्रमेयेत्यादिना। अपरोक्षेति। अध्यक्षं प्रत्यक्षं नाम परोक्षभिन्नप्रमा। परोक्षभिन्नत्वं नाम व्यवहार्यसंबन्धिविषयकज्ञानजन्यत्वाभावः। अनुमितिशाब्दबोधयोर्विषयीभूतोऽर्थः अग्न्यादिः व्यवहार्योऽर्थः; तत्संबन्धि लिंगं शब्दश्च; तज्ज्ञानजन्यत्वं ज्ञानकरणजन्यत्वं परोक्षज्ञाने; तदभावः प्रत्यक्षे इति समन्वयः। स्मृतिवारणायानुभवत्वमपि निवेश्यम्। ननु निर्विकल्पकानन्तरे सविकल्पके, क्वचिद् विशेषणज्ञानजन्ये विशिष्टप्रत्यक्षे च व्यवहार्योऽर्थो यो विशेष्यः, तत्संबन्धि यत् तद्विशेषणं तज्ज्ञानजन्यत्वमस्त्यात् तदभावरूपदलाभावादव्याप्तिरित्यत्र परोक्षत्वं तत्त्वरत्नाकर एव परिष्कृतं दर्शयति परोक्ष्यश्चेति। व्यवहार्यसंबन्धीत्यस्य व्यवहार्यानन्तर्गतेत्यर्थः। तथा च स्वविषयतानवच्छेदकधर्मावच्छिन्नविषयकज्ञानजन्यत्वं परोक्षत्वम्। खं कार्यम्। अनुमितिविषयतानवच्छेदकाग्नित्वादिभिन्नधूमत्वशब्दत्वादिविशिष्टविषयकज्ञानजन्यत्वं तत्रास्ति। निर्विकल्पकज्ञानं विशेषणज्ञानञ्च सविकल्पकैकविषयकमिति न दोषः। वस्तुवेदनापेक्षेति। वस्तुविषयकज्ञानसापेक्षत्वमित्यर्थः। तच्च वेदनापेक्षमिति पाठान्तरम्; उपरि अपेक्ष्येति च। वस्तु लिंगं शब्दश्चेति दर्शयति तदिति। वैशद्यं नाम=अवभासगतवैशद्यं नाम; विशदावभासकत्वं नामेति यावत्। साधारणाकारभूतोर्ध्वत्वादिमत्त्वविशिष्टप्रत्यक्षस्यापानुभविकत्वादव्याप्तिः। अनुमित्यादौ असाधारणाकारेण वस्तुप्रतिभाने अतिव्याप्तिश्च (मवर्थ. 1-?) अत इदमापाततो न युज्यते। अथ अनुमितिशाब्दबोधयोर्वस्तुगतसकलांशविषयकत्वं न भवति, यावदंशसाधकः हेतुप्रयोग शब्दप्रयोगश्च, तावन्मात्रस्य तत्र विषयत्वात्। चक्षुरादिकं तु घटादौ अनेकावयवसंबन्धरूपसंस्थानरेखादिकं युगपद् दर्शयतीति प्रत्यक्षमेकैककरणजन्यमनेकांशविषयकमिति वैलक्षण्यमिति चेत्—तदिदं घ्राणादिजन्यगन्धादिप्रत्यक्षे दुर्निरूपम्। अतोऽन्यादृशमेव साक्षा-

साक्षात्त्वं द्विधा–नित्यं चानित्यं च। ईश्वरनित्यज्ञानादिनिष्ठं नित्यम्। अस्मदादिज्ञानादिनिष्ठं त्वनित्यम्। अस्मदादिप्रत्यक्षं द्विधा—योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति। तत्र योगिप्रत्यक्षं प्रकृष्टादृष्टविशेषजम्। तत् युक्तावस्थायां मनोमात्रजन्यम्। वियुक्तावस्थायां तु बाह्येन्द्रियजन्यमपि तच्च बुभुत्सादिगतिनियमविरहमागमैकसिद्धं च। भावनाबलजमात्रं जान्कारि प्रत्यक्षं प्रतिक्षिप्तं 'शास्त्रयोन्यधिकरणे'; अन्यत्र भाष्यकारैरेव साक्षाद्योगिप्रत्यक्षस्य कण्ठोक्तेः, तस्य संभवतोऽप्यागमनिकेश्वरज्ञानमूलत्वमागमानुवादत्वादनाशक्यत्वा

त्वमिति भाव्यम्। तत्रत्यग्रन्थो द्रष्टव्यः।

अथ साक्षात्त्वं विभजते साक्षात्त्वमिति। ईश्वरनित्येति। ईश्वरस्य यत् नित्यज्ञानं, नित्यसूरीणाञ्च तद्वदित्यर्थः। ईश्वरादेरनित्यमपि ज्ञानमस्तीति तद्वारणाय नित्यपदम्। अथवा साक्षात्त्वे नित्यत्वं ध्वंसाप्रतियोगित्वमात्रं चेत्—ईश्वरनित्यज्ञानेति ईश्वरस्य नित्यानाञ्च ज्ञानग्रहणेन आदिपदेन मुक्तात्मज्ञानमपि ग्रहीतुं शक्यम्। तस्योत्पद्यमानत्वेऽपि यावदात्मभावितया नाशाभावात्। प्रत्यक्षं द्विधेत्यनुक्त्वा साक्षात्त्वं द्विधेत्युक्तिस्तार्किकादिमत इव प्रत्यक्षत्वं जातिर्नित्यमेकं सामान्यमिति मतिव्युदासाय। ईश्वरनित्यधर्मभूतज्ञानमेकमेवांशतो नित्यप्रत्यक्षरूपम्, अंशान्तरेणानित्यप्रत्यक्षतया परिणामीति वस्तुतो द्रव्यद्वयाभावाच्च प्रत्यक्षं द्विधेत्यनुक्तिः। ज्ञानस्यापि द्रव्यत्वात् अवस्थाभावादैश्वर्यानित्यत्वमिति ज्ञापितं भवति। अदृष्टं भगवत्प्रीतिः। युक्तावस्था योगनिष्ठस्य दशा। योगदशैव तद्बाह्येन्द्रियनिरोधात् नेन्द्रियसंनिकर्षप्रसक्तिः। वियुक्तः योगाद्व्युत्थितः तस्यावस्था निष्पन्नयोगस्य तदभावदशा। अयमेवोपसंहृतसमाधिरिति कणादसूत्रे (९-१-१३) उक्तः। तत्रास्मदीये रसायने मतं विशदम्। सर्वदा सर्वप्रत्यक्षाभावात् वसिष्ठादिभिरपि तदर्थानामानादित्वात् नादिविषयविज्ञानादाह बुभुत्सेति। योगदशायां बुभुत्सा चेत् बुभुत्साप्रेरितमनस्संबन्धमात्रं कारणम्। योगाभावदशायां बुभुत्साप्रेरितमनस्संयुक्तेन्द्रियसंनिकर्षः। आदिना संनिकर्षग्रहणम्। चक्षुष इव तमादेरपि योगबलात् व्यवहित-विप्रकृष्टसंनिकर्षः कल्प्यः। प्रतिक्षिप्तमिति। कामिनो भावनाप्रकर्षजन्यकामिनीसाक्षात्कारवत् ईश्वरभावनापरिपाकरूपदर्शनस्य विशदस्मृतिरूपतया प्रत्यक्षत्वेनेव न भवतीयुक्तम्। तद्धि न योगजधर्मजन्यम्, कामिसाक्षात्कारतुल्यत्वात्। अन्यत्र=गीताभाष्ये 'मत्तः स्मृतिर्ज्ञानम्' इत्यत्र। जिज्ञासाधिकरणभाष्ये च स्मरणानुमानागमयोगिप्रत्यक्षादावनीतानाग तविषयत्वमनुक्तम्। तर्हि ईश्वरस्य शास्त्रैकगम्यत्वं कथम्? प्रत्यक्षेणैव दृष्टेरित्यत्राह तस्येति। योगजप्रत्यक्षस्यागमादीश्वरे तत्प्रणिधानविधिद्धारागम्यानुष्ठितयोगस्यैव पुरुषस्येति कथं तत्प्रत्यक्षसिद्धार्थकथनरूपता स्यात् वेदस्येति तत् तत्रापेक्षामिति भावः। नन्वस्मत्प्रत्यक्षाविषयत्वमात्रेण सामान्यतः इन्द्रियाग्राह्यत्वस्येश्वरे साधनमयुक्तम्; एकविशेषाभावेन सामान्याभावसाधनायोगात्; ग्राह्यत्वबाधकहेतुरस्त्वचेति शंकायामाह धर्मादय इति। इदं न्यायकुसुमाञ्जलौ(5)

तत्त्वौदासीन्यात्। धर्मादयः कस्यचिदिन्द्रियग्राह्याः, प्रमेयत्वात्, घटवत्, मीमांसकानाम-प्रत्यक्षत्वाद्वा, अस्मत्सुखादिवदित्याद्यनुमानानां विपक्षे बाधकविरहादिभिराभासत्वात्,

---

ईश्वरादेः प्रत्यक्षत्वसाधनायोक्तम्। अनुमानान्तरमाह **मीमांसकानाम्** इति। अत्र प्रथमव्याख्यायां मीमांसकसमवेतप्रत्यक्षभिन्नप्रमाणविषयत्वादित्यर्थः कृतः। स उदक्षरः। पूर्वोक्तप्रमेयत्वहेतौ पर्याप्ते तत्र प्रमायां मीमांसकसमवेतप्रत्यक्षभिन्नेति विशेषणस्य कथं सार्थक्यम्, दृष्टान्तेऽपि विशेष्यस्याक्षतेः। मीमांसकसमवेतप्रत्यक्षाविषयत्वादिति यथाश्रुतार्थे च को दोषः। तदानीं प्रत्यक्षे मीमांसकसमवेतत्वस्य विशेषणाभावे पक्षे साध्यसंदेहात् हेतोः संदिग्धासिद्धिः, तार्किकस्य स्वरूपासिद्धिः, विरुद्धत्वं, दृष्टान्तेऽस्मदीयसुखादौ साधनवैकल्यं च स्यादिति साफल्यम्। अथ तदा विशेषनिषेधे शेषाभ्यनुज्ञानात् मीमांसकव्यतिरिक्तपुरुषप्रत्यक्षविषयत्वादिति पर्यवसानं स्यात्; तथात्र साध्यविशेष इति चेत्—तथापर्यवसितस्य हेतुत्वेनानिर्देशात् पर्यवसानप्रयोजकस्य यथाश्रुतस्यैव हेतुत्वात्। एतदनुमानमेव तादृशशेषाभ्यनुज्ञारूपम्। द्वितीयव्याख्यायां **मीमांसकानाम्** मत्यस्य विचारं कुर्वन्नित्यर्थ उक्तः। यथाश्रुते को दोषः? तदभिमतस्य पर्यवसितार्थस्य यथाश्रुतेन एव लाभात्। अत्रेदं बोध्यम्—शास्त्रयोनित्वाधिकरणे मीमांसकैरीश्वरस्य प्रत्यक्षानुमानाविषयत्वमुक्तम्। तार्किकस्तदनुवादेन तत्स्थापकमतया प्रयत्नं प्रत्यक्षविषयत्वमाह। तत्र प्रथमनुमानमिदमपि तार्किकस्य। स प्रतिवादिनो मीमांसकानामिति निर्दिशति। मीमांसको द्विविधः कर्मकाण्डविश्रान्तस्तदन्यश्च। तत्र "आगमादपि कथमीश्वरः सेत्स्यति" इति मीमांसकवादे प्रथममीमांसकाशयस्तु आगमादपि न सिध्यति, आगमतोऽपि न सिध्यति; प्रवृत्तिनिवृत्त्यन्वयरहितस्यार्थस्य शास्त्राबोध्यत्वादिति। द्वितीयस्तु वेदान्ती शास्त्रयोनित्ववादी। तदत्रास्मदीयसुखादेरस्मद्व्यतिरिक्तमीमांसकप्रत्यक्षाविषयस्य किञ्चित्पुरुषेन्द्रियग्राह्यत्वमेव धर्मादीनामपि तदिति साध्यते। मीमांसकाः प्रतिवादि-प्रभृतीनामस्मद्व्यतिरेकपरमे। अस्मदीयसुखादौ अस्मदिन्द्रियग्राह्यत्वस्यानुमतसिद्धत्वादेवनुक्तिः। किञ्चित्पुरुषप्रत्यक्षाविषयत्वात् तदन्यपुरुषसुखादेरिति सामान्येनोक्तिरपि संभवति। साध्यत्वे इन्द्रियग्राह्यत्वमात्रम्। कस्यचिदित्यस्य सिद्धत्वम्। प्रत्यक्षविषयत्वमात्रसाधने वेदान्ती ईश्वरादिप्रत्यक्षविषयतया सिद्धसाधनं मन्वीत। इन्द्रियजन्यप्रत्यक्षविषयत्वमेव प्रकृतमिति तत्साधनम्। तस्य मानसप्रत्यक्षविषयत्वे पर्यवसानकरणं द्वितीयव्याख्यायां व्यर्थम्। वियुक्तानां बाह्येन्द्रियग्राह्यत्वस्यापि तत्रेष्टत्वात्। तदत्र विशिष्टपुरुषप्रत्यक्षत्वमात्रेणाप्रत्यक्षत्वसाधनमयुक्तम्; तेनान्यदीयेन्द्रियग्राह्यत्वसाधनमेव युक्तमिति तार्किकस्याभिप्रायः। इत्यादीति आदिना ज्ञेयत्वात् वस्तुत्वात् अस्मदादृश्यत्वादित्यादिग्रहः। सर्वेषामप्रयोजकत्वमाह **विपक्षे** इति। धर्मादयः लौकिकप्रत्यक्षाविषयाः तत्सामग्रीरहितत्वादिति प्रत्यनुमानञ्च। अलौकिकप्रत्यक्षमस्तीति चेत्—किं तत्। योगजमिति चेत्। तत् प्रत्यक्षं योगमूलशास्त्रसिद्धत्वोपजीवित्वात् न शास्त्रयोनित्वबाधकमिति। **अन्यथा**=त्वदनुमानस्य निर्युक्तत्वे। **उदयनाचार्यादिभिः**

अविद्याद्यनिनो मुक्तपुरुषाणां हि संविदाम् । स्वाभाविकस्वरूपेण निखिलार्थावभासिता ॥
प्रतिबन्धकभावस्य प्रत्युत्तम्भकमानिना । परेणानुगृहीता धीर्ऋषीणां सर्वभासिका ॥" इति ॥

मानसप्रत्यक्षमप्यस्मदादीनां नास्त्येवेति वृद्धसंप्रदायः ; आत्मस्वरूपस्य तद्धर्मभूतज्ञानस्य च स्वयंप्रकाशत्वात् । सुखदुःखेच्छाद्वेषप्रयत्नानां तत्तद्धेतुतयाऽभिमतज्ञानविशेषानतिरेकस्य वेदार्थसंग्रहे समर्थितत्वात् । नित्यत्वादिविशिष्टास्मदाद्यनुभवस्य शास्त्रादिप्रसिद्धत्वात् । पूर्वानुभवादिज्ञानस्य स्मृतिरूपत्वात् । "आत्मसुखादिव्यतिरिक्तबहिर्विषयेषु तस्य

---

त्याहाविद्येति । उभयवैलक्षण्यमार्षे दर्शयति **प्रतिबन्धके**ति । ऋषीणामपि प्रतिबन्धकमविद्याख्यमस्त्येव । तन्निष्ठस्य प्रतिबन्धकत्वस्य प्रत्यर्थि यत् **उत्तम्भकम्** उत्तेजकम् तद्भाविना—तथा भवता **परेण** अक्षयोगादिसर्वसाधारणातिरिक्तेनादृष्टविशेषेण **अनुगृहीता** उपकृता धीः धर्मभूतज्ञानमृषीणां **सर्वभासिका** सूक्ष्मव्यवहितविप्रकृष्टतत्तद्विशेषदर्शिकाऽपि भवतीति । अत्र 'प्रतिबन्धकीभूतस्य **भावस्य** पदार्थस्य । **परेण** परमात्मना **अनुगृहीता** अनुग्रहविषयीकृता धीः इति द्वितीयव्याख्या ।

एवमिन्द्रियानपेक्षमार्षं प्रत्यक्षमिति प्रज्ञापरित्राणमतमुक्तम् । स्वमते इन्द्रियापेक्षमपि स्यात् । न तद् वारणीयम् । दिव्यचक्षुस्स्मरणात् । सर्वथा प्रथमप्रत्यक्षेऽन्तर्भाव एव । योगिप्रत्यक्षमित्यस्य योगजन्यप्रत्यक्षमित्यर्थाभावात् । अदृष्टविशेषजन्यप्रत्यक्षमित्यर्थात् । तच्च दिव्यचक्षुरादिबलाद्वा मनोमात्राद्वा भवतु । तदस्माकं नास्ति । यथेदम्, तथा मानसप्रत्यक्षमप्यस्माकं नास्तीत्याह **मानसे**ति । **अपि**शब्दश्रवणादेवमवतारितम् । एवं शोधनेन अस्मत्प्रत्यक्षरूपलक्ष्येयत्ताऽपि दर्शिता भवति । तेन वक्ष्यमाण वाक्ये न न्यूनताप्रसक्तिः । **अस्मदादीनाम्** ऋष्यादिवत् पूर्वोक्तप्रत्यक्षविशेषकारणविरहिणाम् । तर्हि सूक्ष्मव्यवहितादिप्रत्यक्षवत् आत्मतद्गुणप्रत्यक्षमपि न स्यादित्यत्राह **आत्मे**ति । तार्किकमते आत्मनस्तद्गतज्ञानादेश्च जडत्वात् तत्प्रत्यक्षमनुभवसिद्धं तद्विषये मनसः प्रत्यक्षहेतुत्वमन्तरा न निर्वहतीति तदिष्टम् । अस्माकं तस्य सर्वस्य स्वयंप्रकाशतया तद्व्यवहारस्य मनोजन्यप्रत्यक्षमन्तरैव निर्वाहः । घटमहं जानामीति व्यवहारश्च नानुव्यवसायात् ; किंतु घटप्रकाश, ज्ञानप्रकाशाऽऽत्मप्रकाशसमुदायात् । अहं जानामीत्यस्यैवं निर्वाहेऽपि अहं सुखी अहमिच्छामीत्यादिकं मानसप्रत्यक्षाभावे कथमित्यत्र, सुखादीनामपि स्वयप्रकाशत्वमेव, धर्मभूतज्ञानानतिरेकादित्याह **सुखे**ति । अहं नित्योऽणुः परमात्मशेषः इत्यादिज्ञानविषयनित्यत्वादीनामपि किं स्वप्रकाशता ; तत्राह **नित्यत्वे**ति । तादृशज्ञानस्य मानसप्रत्यक्षत्वं तार्किकैरपि नेष्टम् ; शब्दजन्यज्ञानमनुमितिश्च तावद्विषयकत्वेनान्यत्रदिष्यत इति भावः । वर्तमानज्ञानस्य स्वयंप्रकाशत्वेऽपि अतीतानुभवविषयकं ज्ञानं कथमित्यत्राह **पूर्वे**ति । तार्किकमतेऽपि न तत्प्रत्यक्षमिति । अनागतविषयेऽनुमितिरस्तु । तर्हि आत्मसमवेतसुखदुःखादिविषये मनसः स्वातन्त्र्येण प्रत्यक्षजनकत्वं श्रीभाष्यतोऽवगम्यमानं कथं घटत इत्यत्राह **आत्मे**ति । परैर्विवादे प्रसक्तं तद्वाक्यं परसंमतरीत्यै-

बाह्येन्द्रियानपेक्षप्रवृत्त्यनुपपत्तेः” इति शास्त्रयोन्यधिकरणभाष्यस्यान्वारोहेणाप्युपपत्तेरिति ।

ततश्चादिव्यबाह्येन्द्रियप्रसूतं(प्रसृतं) ज्ञानमयोगिप्रत्यक्षम् । तत् सामान्यादृष्टाऽऽलोकविशेषादिसहकृतेन्द्रियजन्यं दृष्टसामग्रीविशेषात् प्रतिनियतविषयम् । तत् श्रोत्रादीन्द्रियासाधारणकारणभेदात् पञ्चधा ॥ विषयेन्द्रियसंबन्धश्च—द्रव्येषु संयोगः, द्रव्याश्रितेषु रूपादिषु तु संयुक्ताश्रयणम् । यथोक्तं तत्त्वरत्नाकरे—

“अत्र वृद्धा विदामासुः संयोगः संनिकर्षणम् । संयुक्ताश्रयणं चेति यथासंभवमूह्यताम् ॥” इति ॥

पुनः प्रत्यक्षं द्विधा—सविकल्पकं निर्विकल्पकं चेति ।

---

वोपपादनार्थं प्रवृत्तम् । तत्र वक्तव्यांशस्य स्वयम्प्रकाशत्वसायेक्षत्वाभावात् तदुपेक्षेति भावः ।

एवञ्चायोगिप्रत्यक्षं प्रति बाह्येन्द्रियमेव करणमित्याह **ततश्चे**ति । योगिनामपि बाह्येन्द्रियजन्यप्रत्यक्षस्वीकारात् तद्वारणाय **अदिव्ये**ति । तेषामिन्द्रियमदृष्टविशेषसहकारिकतया दिव्यमिति भावः । अदिव्यप्रसूतं ज्ञानमनुमित्यादिकमपि ; अत **इन्द्रिये**ति । अदिव्यमनोजन्यमपि तदेवेति **बाह्ये**ति । अदिव्यजन्यं प्रत्यक्षमित्युक्तौ मानसप्रत्यक्षं नास्मन्मते इति न प्रतीयेत । तदिदानीं स्पष्टं भवति । **अयोगी**ति । अयोगिनां प्रत्यक्षमित्युक्तौ योगिनामेव योगाद्यदृष्टनिरपेक्षं अस्माकमिव सहजं घटादिप्रत्यक्षं न गृहीतं स्यात् । अतो योग्ययोगिसाधारण्येन योगादिविशेषाजन्यप्रत्यक्षमेवायोगिप्रत्यक्षं वाच्यमिति भावः । स्व योगिप्रत्यक्षवैलक्षण्यमाह **तदि**ति । योगिप्रत्यक्षमदृष्टविशेषजम्, **इदं** साधारणकारणभूतादृष्टजन्यम् । तत्र चाक्षुषमालोकविशेषाद्यनपेक्षम् ; इदं तत्सापेक्षम् । **प्रतिनियते**ति । ये विषया यदिन्द्रिययोग्याः ; तेषु येन विषयेण संनिकर्षः, तन्मात्रविषयकम् । योगजप्रत्यक्षं तु सत्यां बुभुत्सायां सर्वविषयकमिति । **तत्** अयोगिप्रत्यक्षम् **पञ्चधा** बाह्येन्द्रियाणां पञ्चत्वात् । मानसप्रत्यक्षाभावस्य प्रागेवोक्तत्वात् । **दृष्टसामग्री**ति पदविवक्षितस्येन्द्रियसंनिकर्षस्य द्वैविध्यमाह **विषये**ति । अस्मन्मते श्रोत्रस्याकाशरूपत्वाभावात् आहंकारिकत्वात् भौतिके शब्दे श्रोत्रेन्द्रियसंयुक्ताश्रयणरूपसंनिकर्षस्य न क्षतिः । समवायस्यानंगीकारात् संयुक्तसमवाय इत्यनुक्त्वा आश्रयणमित्युक्तिः । **यथासंभव**मिति । घटादिद्रव्ये संयोगः संनिकर्षः, तद्गतरूपादौ तदाश्रयणमिति यथायोगमित्यर्थः । न च वृक्षेन्द्रियसंनिकर्षे वृक्षगतपक्ष्यादीनामिन्द्रियासंयुक्तानामपि संयुक्ताश्रयणरूपसंनिकर्षात् प्रत्यक्षापत्तिरिति शंक्यम्, द्रव्यनिष्ठविषयतासंबन्धेन प्रत्यक्षं प्रति इन्द्रियसंयोगः कारणम् । अन्यनिष्ठविषयतासंबन्धेन प्रत्यक्षं प्रति संयुक्ताश्रयणमित्येव कार्यकारणभावात् । **पुनःप्रत्यक्ष**मिति । तत् प्रत्यक्ष द्विधेत्यनुक्त्वा **पुनः प्रत्यक्ष**मिति वचनात् प्रत्यक्षसामान्यद्वैविध्यावसायात् योगिप्रत्यक्षेऽपि निर्विकल्पकसविकल्पकभेदोऽस्ति यथबुभुत्समिति ज्ञायते । निर्विकल्पकानन्तरमेव सविकल्पकम्—अथापि विकल्पे गृहीते तदाश्रयस्य तदभावाश्रयापेक्षया पुरस्स्फूर्तिकत्वात् सविकल्पकस्य प्रागुक्तिः । नैयायिकाभिमतनिर्विकल्पकादिनिर्वचनस्य

**सप्रत्यवमर्शं प्रत्यक्षं सविकल्पकम्। तद्रहितं प्रत्यक्षं निर्विकल्पकम् ॥**

### नैयायिकनिर्विकल्पकनिराकरणम्

**उभयविधमप्येतत् विशिष्टविषयमेव। अविशिष्टवस्तुग्राहिणो ज्ञानस्यानुपलम्भात्; अनुपपत्तेश्च। बालमूकतिर्यगादिविज्ञानमपि हि संज्ञादिविकल्परहितमपि विशिष्टवस्तुविषयमेव, अन्यथा तेषां हेयोपादेयविभागपूर्वकप्रवृत्तिविशेषानुपपत्तेः।**

**विप्रतिपन्नं विशिष्टज्ञानं विशेषणज्ञानपूर्वकम्, विशिष्टज्ञानत्वात्, सुरभि चन्दनमित्यादिविशिष्टज्ञानवदिति चेन्न—एकसामग्रीवेद्यविशेषणेषु तन्निरपेक्षत्वात्।**

---

निराकरिष्यमाणतया स्वाभिमतं निर्वचनं दर्शयति **सप्रत्यवमर्श**मिति। **प्रत्यवमर्शः** पुनर्ग्रहणम् संस्काराधीनभानम् तत्सहितं प्रत्यक्षमित्यर्थः। अयं गौरिति निर्विकल्पकम्। अयमपि गौरिति सविकल्पकम्। तत्र **अपि**शब्दप्रयोगात् पूर्वगृहीतगोव्यक्तेः संस्कारबलाद्भानमस्ति। एतद्रहितं निर्विकल्पकम्। ज्ञानद्वयेपि गोः गोत्वरूपसंस्थानस्य च भानसत्त्वात् विशेणविशिष्टविषयकत्वमेव। नन्वनुपलम्भादिति सत्यम्। निर्विकल्यकमतीन्द्रियमित्येवास्माभिः स्वीकारात्। अनुमानात्तु तत्सिद्धिरित्यत्राह **अनुपपत्तेश्चे**ति। गवि संयेगरूपसंनिकर्षस्य गोत्वे च तदाश्रयणरूपस्य सत्त्वे एकतरस्यैव प्रत्यक्षमित्येतदनुपपन्नम्। अत एव द्रव्यचाक्षुषत्वं यत्र, तत्र सर्वत्र तद्गतरूपचाक्षुषत्वमिति तार्किकैर्नियम इष्ट इति। तदिष्टमनुमानस्यानन्तरमेव दूषयिष्यते। ननु बालमूकादीनां यत् घटादिप्रत्यक्षं न तत् विशिष्टविषयकम्; प्रतिबुद्धप्रत्यक्षवत् घटादिवाचकशब्दाविषयकत्वात्। अन्यथा तैर्व्यवहारप्रसंगादित्यत्राह **बाले**ति। **संज्ञादीत्यादि**ना घटादिविषयसंबन्धितत्कार्यकारणादिवस्त्वन्तरग्रहणम्। संज्ञादिकिञ्चिद्विशेषविषयकत्वाभावेन सामान्यतो विशिष्टविषयकत्वाभावो न साध्येत व्यभिचारादिति भावः। बालादीनामव्युत्पन्नत्वात् वाचकशब्दस्मरणाप्रसक्त्या तद्भानायोगेऽपि संनिकृष्टगोत्व-रूपादिभानमनिवार्यम्; अन्यथा गोत्वादिविषयकत्वाभावे बालादीनां गोसर्पादिदर्शने तदुपादानहानादिरूप प्रवृत्तिः कथम्। व्यक्तिमात्रज्ञानस्य रागद्वेषोभयसाधारणतया प्रवृत्तिनिवृत्त्यन्यतरानियामकत्वात्। रज्जोः रज्जुत्वेन दर्शनं प्रवृतिहेतुः, सर्पत्वेन दर्शनञ्च निवृत्तिहेतुरिति। प्रवृत्तिपदं सा मातोव्यापारपरम्। निर्विकल्पकसाधकमनुमानं निरसितुमनुवदति **विप्रतिपन्न**मिति। विवादास्पदमित्यर्थः। विशिष्टज्ञानसामान्यस्य पक्षत्वे विशिष्टज्ञानरूपदृष्टान्तो दुर्लभः स्यादिति एतद्विशेषणम्। यत्र विशिष्टज्ञानव्यक्तौ विशेषणज्ञानपूर्वकत्वमस्ति नवेति विवादः, तन्मात्रं पक्ष इति। **एकसामग्री**ति। सौरभरूपविशेषण ज्ञानं चन्दनग्राहकचक्षुर्घटितसामग्र्यजन्यम्; घ्राणघटितसामग्रीजन्यम्। विशेष्यग्राहकसामग्र्यग्राह्यविशेषणकत्वमुपाधिरित्युक्तं भवति। यथा गोशब्दात् गोत्वविशिष्टव्यक्तिज्ञानं न विशेषणज्ञानपूर्वकम् एकशब्दवेद्यत्वात्, तथेति भावः। ननु संबन्धग्रहणमन्तरेण विशिष्टप्रत्ययो न भवति; संबन्धग्रहश्च संबन्धिद्वयग्रहाधीनः वृक्षवानरयोरदर्शने तत्संयोगग्रहणायोगात्।

स्वरूपसंबन्धपक्षे स्वरूपग्रहेणैव संबन्धस्यापि ग्रहणात् तावतैव विशिष्टग्रहणसिद्धेः । समवायवादेऽपि तस्यैव गृह्यमाणस्य विशेषणविशेष्यभावरूपत्वात्, समवायविशिष्टप्रत्यये तथैवाभ्युपगमात्, तद्वैशिष्ट्यग्रहे च गुणादिवैशिष्ट्यग्रहस्यावर्जनीयत्वात् । न च समवायस्य सविकल्पकैकविषयतेति वाच्यम्, निर्विकल्पके धर्मवत् धर्मिवच्च तत्संबन्धस्याप्यैन्द्रियकत्वाविशेषेण ग्रहणसंभवात्, योग्यस्य संनिकृष्टगृह्यमाणसंबन्धिनः संबन्धस्याग्रहणानुपपत्तेः । अन्यथा नित्यं तदग्रहापातात् ।

प्रथमाक्षसंनिपातजा बुद्धिर्विशिष्टविषया, बुद्धित्वात्, संप्रतिपन्नवदित्याद्यपि चिन्त्यम् ॥

---

अतो रूपघटयोर्विशकलितयोर्ग्रहणानन्तरं समवायग्रहे तत एव विशिष्टप्रत्यक्षमित्यत्राह **स्वरूपेति** । समवायः संबन्धिस्वरूप एवेति सिद्धान्ते तद्ग्रहणमेव तत्संबन्धग्रहणम् । तदेव विशिष्टग्रहणमपि । समवायनामा संबन्धोऽन्य इति तार्किकपक्षेऽपि **एक**सामग्रीग्राह्याणां युगपद्ग्रहणस्य प्रागेवोक्तत्वात् संबन्धिभ्यां सह सोऽपि गृह्यत एव । अत एव प्रकारमात्रज्ञानं निर्विकल्पकमिति पक्षं प्रकारविशेष्योभयविशकलितग्रहणं तदिति पक्षञ्च परित्यज्य संबन्धिनोः संबन्धस्य च विशकलितग्रहणं तत्र तार्किकेष्टम् । एवं समवायग्रहणे सिद्धे विशकलितभानं दुर्वचम् ; संबन्धिनिष्ठस्य समवायवैशिष्ट्यस्य समवायानतिरिक्ततया समवायभाने वैशिष्ट्याग्रहणायोगात् । समवायाभावयोः विशेष्यणविशेष्यभाव एव हि संबन्धस्तार्किकेष्टः । स च स्वरूपमेवेति तद्ग्रहे कथं विशकलितग्रहः । न च वैशिष्ट्यमतिरिक्तम् । समवायविशिष्टो घट इत्यत्र संबन्धान्तरस्वीकारेऽनवस्था स्यादित्युक्तत्वात् । एवञ्च त्रयाणां ग्रहणे वैशिष्ट्यमपि गृहीतमिति रूपसमवायविशिष्टवस्तुग्रहे रूपविशिष्टत्वग्रहोऽप्यवर्जनीयः । तत् सिद्धं प्रथमत एव विशिष्टप्रत्यय इति । मूलवाक्यावधानपूर्वकं व्याख्यान्तारकृतोपपादनरीतेरस्मदुक्तरीतेश्च भेदः सूक्ष्मोऽवधेयः । निर्विकल्पके समवायभानं नास्तीति पक्षं निरस्यति **नचेति** । **अन्यथा**—समवायस्यायोग्यत्वे । एवमुक्तिश्च **वैशेषिकपक्ष**प्रतिबोधनाय । तत्पक्षे समवायोऽतीन्द्रियः सविकल्पकेऽपि न भासते । तत्सद्भावमात्रेण विशिष्टप्रत्ययः । ननु संबन्धाभाने भासमान संबन्धप्रतियोगित्वं प्रकारत्वमिति दुर्वचमिति चेत्—संबन्धावच्छिन्नविषयत्वं प्रकारत्वमित्येवोच्यताम् । तथाच तत्पक्षे पूर्वोक्तशंकैव न भवतीति । ननु "समवायिनः श्वैत्यात् श्वैत्यबुद्धेश्च श्वेते बुद्धिः ते एते कार्यकारणभूते"(वै.प.) इति कणादोक्त्या विशेषणज्ञानरूपकारणाभावे कथं विशिष्टबुद्धिरिति चेत् न; कारणत्वस्यैवाकारात्। विशिष्टज्ञानं नियमेन विशेषणविषयकमित्येव नियमः, न तु विशेषण ज्ञानपूर्वकमिति । अतो न कार्यकारणभावभंगप्रसंगरूपस्तर्कः । साधकानुमानमप्यस्तीत्याह **प्रथमेति** । इन्द्रियसंनिकर्षात् प्रथमाज्जातेति निर्विकल्पकत्वेन पराभिमतज्ञानोक्तिः । **संप्रतिपन्नवत्**=विशिष्ट विषयकत्वेन निश्चितबुद्धिवत् । **आदिना** विवादास्पदं प्रत्यक्षं विशिष्टविषयं प्रत्यक्षत्वादित्याद्यनुमानग्रहणम् । **चिन्त्यम्**=सिद्धान्तसाधकतया ग्राह्यम् । एवं निर्विकल्पकशाब्दस्वारस्यात् प्रथमज्ञानस्य विशिष्टविषयकत्वा-

न च सविकल्पकं न प्रत्यक्षमिति वाच्यम्, साक्षात्काराबाधाद्यविशेषात् ।

श्लो. सहकारिविशेषेण न वैजात्यं प्रसज्यते । तज्जातीये तु यत्किंचिद्वैषम्यं संभवेदपि ॥ ७० ॥
यत्र दृश्येत वैजात्यं तथा तत्राभ्युपेयते तावता नैव सर्वत्र भवेदेतस्य कल्पनम् ॥ ७१ ॥
केवलेन्द्रियजं चापि न किंचिज्ज्ञानमिष्यते । सहकारिविशेषा हि विभिद्यन्ते प्रतीन्द्रियम् ॥
अतः संस्कारसंभेदेऽप्यपरोक्षत्वयोगतः । प्रत्यक्षत्वं विकल्पस्य न क्वचिद्विनिवर्तते ॥ ७३ ॥

---

भावशंकायां तन्निरासः कृतः। निर्विकल्पकशब्दस्तु सविकल्पग्राह्यकिञ्चिद्विशेषाविषयकार्थक इति भावः।

एवं परनिर्विकल्पकं निरस्य तथापि निर्विकल्पकसविकल्पकभेदोऽस्तीत्युक्तम्। तदिदं द्वैविध्यं न भवति, सविकल्पकस्याप्रत्यक्षत्वादिति शंकां परिहरति **न चेति**। इदमप्रत्यक्षमिति किं बाह्यबुद्दष्टिपक्षावलम्बनेनोच्यते, किं वा सप्रत्यवमर्शत्वस्यास्मदुक्ततया स्मृतित्वमेवेति कृत्वा। आद्यमत्रैव पश्चान्निराकरिष्यते। अन्त्यमपि नेत्याह **साक्षा**दिति। सविकल्पकानन्तरं गोत्वजातिविशिष्टमिदं साक्षात्करोमीति प्रत्ययदर्शजात् निर्विकल्पकवत् साक्षात्कारित्वमविशिष्टम्। नेदं प्रत्यक्षं किंतु स्मृतिरिति पश्चात्तनबाधाभावाच्चेत्यर्थः। **आदिना** संनिकर्षग्रहः। ननु निर्विकल्पकवत् क्लृप्तकारणमात्रजन्यत्वाभावात् संस्काररूपसहकार्यपेक्षणात् प्रत्यक्षत्वं नेति ब्रूम इत्यत्राह **सहकारी**ति। क्लृप्तप्रत्यक्षकारणनिरपेक्षत्वे हि अप्रत्यक्षत्वम्। अन्यथा क्लृप्तस्मृतिकारणरूपसंस्कारातिरिक्तेन्द्रियसंनिकर्षसापेक्षत्वात् स्मृतित्वमपि न स्यादिति तृतीयप्रकारापत्तिः। तथापि प्रत्यक्षत्वे किं विनिगमकमिति चेत्—धर्मिणो धर्मान्तरस्य चेन्द्रियापेक्षं ज्ञेयत्वात् अंश एव संस्कारापेक्षणात् ज्ञानसामान्ये प्रत्यक्षप्राबल्याच्च प्रत्यक्षत्वेनैव व्यवहारः। अन्यथा सोऽयं देवदत्त इति प्रत्यभिज्ञाऽपि प्रत्यक्षं न भवेत्। तावता संस्कारस्य सहकारितयाऽप्यनापेक्षा न भवति। किञ्चिदंशविषयतायाः तत्प्रयोज्यत्वात्; सुरभि चन्दनमिति प्रत्यक्षवत्। तर्हि प्रत्यक्षजातीयत्वेऽपि **वैषम्यं** संभवेत्=संस्काराधीनभाने अंशे लौकिक विषयतारूपं साक्षात्त्वं न भवेदिति चेत्—अस्तु। तथापि ज्ञानं प्रत्यक्षमेव अज्ञातकरणजन्यानुभवत्वरूपलक्षणसत्त्वादिति। तर्हि स घट इति ज्ञानमपि न स्मृतिः; संस्कारजन्यत्वात् सविकल्पकवदित्यत्राह **यत्रे**ति। स्मरामीत्यनुव्यवसायेन स्मृतित्वरूपवैजात्यस्य सिद्धत्वात् तत्रेष्यते स्मृतिरूपता; नान्यत्र। तदर्थं संस्कारमात्रजन्यत्वं प्रयोजकमिष्यते। तद्वत् इन्द्रियमात्रजन्यत्वं प्रत्यक्षत्वप्रयोजकमस्त्वित्यत्राह **केवले**ति। निर्विकल्पकमपि केवलेन्द्रियजन्यं न भवति; प्रत्यक्षे विषयस्य, तद्योग्यतायाः चाक्षुषादौ आलोकोद्भूतरूपादेश्च सहकारित्वात्। **अतः** इन्द्रियमात्रजन्यत्वस्य दुर्वचत्वात् सहकार्याधिक्यस्य वैजात्यापादकत्वाभावात् **संस्कारसंभेदेऽपि**=संस्काररूपसहकार्यन्तरमेलनेऽपि अपरोक्षत्वस्य=प्रत्यक्षत्वस्य **योगतः**=प्रत्यभिज्ञादाविव संभवात् सविकल्पकस्य सर्वस्य प्रत्यक्षत्वमेव। ननु चक्षुस्संनिकर्षे सुरभिश्चन्दनखण्ड इतिवत् चन्दनखण्डे सौरभमित्यपि सविकल्पसंभवात् तस्य प्रत्यक्षत्वापत्तिः। नचेष्टापत्तिः; सौरभं पश्यामीति व्यवहारापत्तेरित्यत्राह **क्वचि**दिति। इन्द्रियाणां स्वायोग्यमुख्यविशेष्यकज्ञानजनने

"निर्विकल्पकमेकजातीयेषु द्रव्येषु प्रथमपिण्डग्रहणम्"

इत्यादिभाष्यं तु उदाहरणपरं योज्यम्। अत एव हि श्रीविष्णु चित्तैरुक्तम्

"संस्कारोद्बोधसहकृतेन्द्रियजन्यं ज्ञानं सविकल्पकम्, एकजातीयेषु प्रथमपिण्डग्रहणम् द्वितीयादिपिण्डग्रहणेषु प्रथमाक्षसंनिपातजं च ज्ञानं निर्विकल्पकम्" इति। अन्यत्र चोक्तम्—"केवलचक्षुरादीन्द्रियजन्यं निर्विकल्पकम्" इत्यादि ॥

यत्तूक्तं तत्त्वरत्नाकरे—

"विशेषणानां स्वायोगव्यावृत्तिरविकल्पके। सविकल्पेऽन्ययोगस्य व्यावृत्तिः संज्ञिता तथा ॥" इति--

---

सामर्थ्याभावात् चक्षुस्संनिकर्षजन्यं चन्दनविशेष्यकमेव; न तु सौरभविशेष्यकम्। घ्राणसंनिकर्षात् तद् भवत्विति चेत्—भवतु। तदपि प्रत्यक्षमेव। तावता पश्यामीत्यापादनं न भवति। साक्षात्करोमीति त्विष्टम्। एवं सोऽयं घट इत्यस्येव एतद्घटदेशः स इत्यस्य प्रत्यक्षत्वं नापाद्यम्। इन्द्रियासंनिकृष्ट-देशान्तरविशेष्यकप्रत्यक्षायोगदिति ॥

ननु द्वितीयादिगोव्यक्तावपि प्रथमदर्शनं निर्विकल्पकमेव स्यात्। तदनन्तरमेव संस्कारोद्बोधे सविकल्पसंभवात्। तथाच भाष्यविरोध इत्यत्राह **निर्वित्कल्पक**मिति। **केवले**ति। संस्कारासह-कृतेत्यर्थः। ननु अयोगव्यवच्छेदसिद्धिहेतुविशेषणप्रत्यक्षं निर्विकल्पकम्, अन्ययोगव्यवच्छेदसिद्धिक-तत्प्रत्यक्षं सविकल्पकमिति भट्टपादोक्तमाद्रियतामित्यत्राह **तत्त्वरत्नाकरे** इति। इयं गौरिति निर्विकल्पके तु गोत्वरूपविशेषणस्य व्यक्तिसंबन्धभानात् तदसंबन्धाभाव एव सिध्येत्। इयमपि गौरिति सविकल्पके गोत्वस्यानेकव्यक्तिवृत्तित्वभानात् जातित्वसिद्धौ तत्र तद्विरुद्धजात्ययोगात् अश्वत्वादिधर्मयोगव्यवच्छेद-सिद्धिरिति। यद्वा प्रथममेकत्र इयं गौरिति गोत्वदर्शने अन्यव्यक्तिषु चिन्तितमश्वत्वादिकम् इयमपि गौरिति प्रत्यक्षे सति व्यावर्त्यते। एवं प्रसक्तान्ययोगव्यावर्तकत्वं सविकल्पकस्येति कारिकार्थः। अन्ययोग-व्यावृतिरित्यस्यात्र अन्यत्र गोत्वयोगव्यावृत्तिरिति नार्थः। अदृष्टगोव्यक्तिष्वपि गोत्वयोगात्। अतः **स्वायोगे**त्यस्य स्वस्यायोगेत्यर्थकत्ववत् **अन्ययोगे**त्यस्य स्वान्याश्वत्वदिधर्मयोगेत्यर्थकत्वम्। एवमुक्तेरयमाशयः—यत् द्वितीयव्यक्तिदर्शने पूर्वव्यक्तिसंस्कारात् तद्ज्ञानात् गोत्वेऽनुवृत्तत्वबुद्धिर्जायत इति अश्वत्वादिविरुद्धजातिग्रहण-मिति द्वितीयव्यक्तिप्रत्यक्षं यत् संस्कारसापेक्षं तत् सविकल्पकमिति। एवञ्च संस्कारसापेक्षत्व-तदभाव-कृतवैलक्षण्यमेव सूचितं भवति। अन्यथा पूर्वदृष्टगोव्यक्तिविषयक एव पुनर्दर्शने सेयं गौरित्याकारके सविकल्पकत्वं न स्यात् तत्रानेकव्यक्त्यभानात् गोत्वस्यानुवृत्तत्वाग्रहणात् जातिभानाप्रसक्तेरश्वत्वादि व्यवृत्त्यसिद्धेः। यदि च जात्यभानेऽपि गोत्वरूपसंस्थनभानात् अश्वत्वसंस्थानव्यावृत्तिर्भवत्येवेति मतम्—तर्हि निविकल्पकज्ञानानामप्यन्ययोगव्यावर्तकत्वं स्यात्। अतः संस्कारसापेक्षत्व एव तात्पर्यम्। श्लोके **संज्ञिते**ति संज्ञावत्वमुच्यते। सविकल्पके गवादिसंज्ञाऽपि संस्कारबलाद्भासत इत्यर्थः। इदं

तत्रापि संस्कारनिरपेक्षत्वसापेक्षत्वयोः प्रदर्शनपरत्वं ग्राह्यम्। प्रत्यक्षस्य चैवंविभागोऽभिहितः—

"द्विविधं चैतत् प्रत्यक्षम्—अर्वाचीनमनर्वाचीनं च। युगपदशेषविषयसाक्षात्कारक्षमम् अनर्वाचीनम्। तत् योगिमुक्तेश्वराणां प्रभावविशेषाधीनमुपपादयिष्यते" इत्यादि॥

अत एव कुदृष्टीनां सन्मात्रग्राहि प्रत्यक्षमित्यविलक्षजल्पितं निरस्तम्। क्रमयौगपद्या-

---

च न सर्वसविकल्पकविषयम्। अव्युत्पन्नेषु, व्युत्पन्नमध्ये क्वचिच्च तदभावदर्शनात्। अतः संज्ञिताभानवत् अयोगान्ययोगव्यावृत्तिभानमपि संभवाभिप्रायेण कथितम्। "आलोचनं व्यापार इन्द्रियाणाम्। विकल्पस्तु मनसः" इति सांख्याः। दर्शनातिरिक्तज्ञानं कल्पनेत्युच्यते—तन्मानसम्। अतः कल्पनाविषयांशः संस्कारादिना भासमानोंऽशो विकल्पः। तद्रहितमिन्द्रियसंनिकृष्टमात्रग्राहि निर्विकल्पकम्। तदनन्तरम् इममपि गौः, इदमिष्टसाधनजातीयमित्यादि पूर्वगृहीतांशसहितविषयकं सविकल्पकप्रत्यक्षमिति विकल्पपदव्यवहारौचित्यमपि परिशीलनीयम्। **एवं विभाग** इति। सर्वग्राहिमुक्तौ प्रत्यक्षं न निर्विकल्पकम् किञ्चिद्ग्रहणाभावात्; न सविकल्पकम् संस्कारानधीनत्वात्। अथवा तत एव निर्विकल्पकमेव सर्वं विशिष्टविषयकम्।

एवं प्रत्यक्षसामान्यं विशिष्टविषयकं स्थापितम्; अद्वैतिनस्तु स्वपक्षरक्षणश्रद्धया सर्वलोकनेत्राण्यप्याभासतर्कपांसुभिरवकिरन्तः सर्वं प्रत्यक्षमविशिष्टविषयकमिति स्वानुभवविरुद्धमेव व्याहरन्ति। तत् बौद्धवासनावासितव्यतिरिक्ता न स्वीकुर्युरिति विशदयति **अत एवे**ति। सर्वप्रत्यक्ष सविशेषत्वस्थापनादेवेत्यर्थः। **कुदृष्टीनाम्** अद्वैतिनाम्। **सन्मात्रग्राही**ति। घटः इति व्यवहारे अस्तीति अर्थसिद्धम्। घटप्रत्यक्षं नाम घटोस्तीति प्रत्याक्षमेव। एवं पटोऽस्तीत्याद्यपि। तत्र सर्वप्रत्यक्षविषयतया सत्ताया अर्थसिद्धत्वात् अस्तीति विहाय घटः, पट इत्यादिकमेवोच्यते। घटोऽस्तीत्यस्य च घटः सन् इत्यर्थः। तत्र सदिति सन्मात्रं ब्रह्म। घटपटादयस्तु विशेषाः परस्परभेदरूपाः। अनयोः सामान्यविशेषयोर्मध्ये सामान्यं सदेव प्रत्यक्षग्राह्यम्, न तु विशेषो घटादिः। स हि भेदः। भेदश्च सर्वः इदमिदं नेति किञ्चिद्वस्तुप्रतियोगिकः किञ्चिद्वस्त्वनुयोगिकश्च। प्रतियोग्यनुयोगिग्रहणानन्तरमेव भेदो ग्राह्यो भवति। न चेन्द्रियसंनिकर्षकाले पटादीनामुपस्थितिरस्ति। अतो भेदं विना सन्मात्रं प्रत्यक्षेण गृह्यते। अतो युगपदुभयग्रहणं न भवति। तर्हि, प्रथमं सन्मात्रग्रहणे पश्चात् प्रतियोग्याद्युपस्थितौ भेदोऽपि गृह्यतामिति चेत्—किं तेनैव प्रत्यक्षेण घटग्रहणम्, उत तदन्येन, नाद्यः; तस्य क्षणिकत्वेन नष्टत्वात् प्रथमे क्षणे विरम्य, पश्चात्तनक्षणे भेदग्रहणे व्याप्रियत इत्यस्य दुर्वचत्वात्। नान्त्यः, तस्यापि क्षणिकतया पूर्वजातधर्मिज्ञानप्रतियोगि ज्ञानयोः कीदृग्रूपतेति तद्वार्तामप्यजानतः—तदसमानकालिकतया तत्समागमरहितस्य स्वयमपि प्रथमग्राह्यसन्मात्रग्रहणेनैव क्षीणतया प्रतियोग्यादिग्रहणवभेदग्रहणपर्यन्तस्थायित्वाभावात्। अतो घटादिर्भेदो न प्रत्यक्षविषय इति तज्ज्ञानं भ्रान्तिरेवेति। विषयश्च सन्मात्रं ब्रह्मैवेति ब्रह्मणः प्रत्यक्षत्वमिति तदुपन्यासः। **अविलक्षजल्पितम्**। **विलक्षो** लज्जितः॥ क्रमेण वा युगपद् वा गृह्यते; भेदत्वात्

दिदूषणं तु भ्रान्तिविकल्पेऽपि समानम्। भ्रान्तिरूपोऽपि हि विकल्पः क्षणिकत्वान्न विरम्य व्यापर्तुमलम्। न च पूर्वज्ञानवार्तां जानाति। न च स्वयं धर्मिप्रतियोगिग्रहणाभावे भेदग्रहणं मन्यसे। तथापि यदि कल्पना भेद(दं?)विशिष्टं युगपद्गृह्णाति, का प्रत्यक्षे सर्पमृतिः? अतो धर्मिवत् योग्यत्वाज्जात्यादिरूपभेदोऽपि युगपद्ग्राह्यः। अभेद इव भेदोऽपि स्वरूपतः

---

प्रतियोग्यादिकमगृहीत्वा न गृह्येतेति दूषणं भ्रान्तिपक्षेऽप्यापादयति **क्रमे**ति। भ्रान्तिज्ञानं क्रमेण प्रतियोगितद्भेदग्राहकं न भवतीत्याह **क्षणिकत्वा**दिति। विरम्य=प्रथमक्षणे प्रतियोगि गृहीत्वा **व्यापर्तुम्** द्वितीयादिक्षणे भेदं ग्रहीतुम् **अलं**=समर्थम् न; द्वितीयादिक्षणे स्वस्यैवाभावात्। स्वपूर्वक्षणजातं प्रतियोग्यादिज्ञानं कारणीकृत्य स्वयं भेदं गृह्णात्वित्यत्राह न चेति। ज्ञानद्वयस्य समानकालिकत्वाभावान्न तत्संभव इत्यर्थः। युगपत् प्रतियोग्यनुयोगिभेदत्रयग्राहि न भवतीत्याह **न च स्वयमि**ति। अथ स्वक्षणे तदभावेऽपि कारणत्वं स्यादिति चेत् तत्राह **तथापी**ति। **कल्पना** भ्रान्तिः। **भेदविशिष्टं** किंचित्प्रतियोगिकभेदविशिष्टमनुयोगि। **भेदं विशिष्ट**मिति पाठः स्वरसः। धर्मिप्रतियोगिविशिष्टं भेदमित्यर्थः। **के**ति। पूर्वज्ञानमुत्तरज्ञाने विशिष्टविषयकत्वापादकमिति निरूपणप्रक्रियायां प्रत्यक्षे समन्वयायाऽऽनीयमानायां मध्ये सर्पेण मृतिर्न हि जायत इत्यर्थः। पूर्वजातप्रतियोग्यादिज्ञानबलेन प्रत्यक्षमेव घटरूपं भेदं सच्च युगपत् गृह्णीयादिति भावः। तर्हि मिथ्याभूतघटादिविषयकत्वे प्रत्यक्षमप्रमा स्यादिति चेत्—सन्मात्रस्यापि प्रत्यक्षविषयत्वे दृश्यत्वान्मिथ्यात्वं स्यादिति तुल्यम्। एवमनुमानादीनां सन्मात्रग्राहित्वाभावादप्रमात्वापत्तिः। इष्टत्वे प्रत्यक्षस्यापि तदस्तु। सर्वसत्यत्वस्वीकारिणः सर्वप्रमात्वमेव तु वयं ब्रूम इति। **धर्मिवत्** अनुयोगिवत्। **जात्यादिभेद** इति। घटपटादीनां मिथोभेदरूपत्वं भवदुक्तम्; तत्र पटभेदस्य घटनिष्ठतया प्रतीतत्वात् घटत्वरूपत्वमेव युक्तम्, न तु अधिकरणरूपत्वमिति जातिपदेन ज्ञाप्यते। भावरूपत्वात् अभेदस्य स्वरूपतोऽपि भानमस्ति; तदा प्रतियोग्यपेक्षाऽपि नेत्याह **अभेद इवे**ति। नीलो घटः, सत्यं ज्ञानमित्यादौ नीलाद्यभेदो भासते। अभेदश्च भेदाभावः नीलभेदं पीतादौ गृहीत्वा तदभावमिह गृह्णीति न सुवचम्; पीताद्यनुपस्थितेः। अतो नीलभेदाभावो नीलत्वं स्वरूपतो भासत इति वक्तव्यम्। तत्र च न नीलभेदाभावप्रतियोगिनः नीलभेदस्य ज्ञानापेक्षा। एवं सत्यादिवाक्येऽपि। तद्वत् घटत्वादि स्वरूपतो भासताम्। न तत्र पटादिरूपप्रतियोग्यपेक्षेति। **अभेद इवे**त्यत्रेदमप्यभिधित्सितम्—यथा घटो न भासते भेदरूपत्वात् तथा सदपि न भासेत। घटरूपसतः पटभेदरूपत्वात्। अथ पटः सन् इति प्रतीत्या सति पटाभेदसत्त्वात् सति पटभेदो न भवतीत्युच्येत, तर्हि पटाभेदः सति संमन्तव्यः। एवञ्च सतः पटभेदाभाव-घटभेदाभावाधिकरणत्वात् तस्याधिकरणस्वरूपत्वात् अभावरूपं सदपि प्रतियोग्याद्यग्रहणान्न गृह्येतेति प्रत्यक्षस्य सन्मात्रविषयकत्वमप्यपेतम्। न च निर्विषयं प्रत्यक्षम्। यदि स्वरूपतो भाने प्रतियोगिग्रहणमनपेक्षितम्, तर्हि घटादिभानेऽपि तत् तुल्यमिति॥

प्रतीतौ न प्रतियोगिसाकाङ्क्षः ; भेदव्यवहारस्त्वभेदव्यवहारवत् तत्साकाङ्क्षः । अतः प्रथममेव भेदधीर्युक्ता । अत एव धर्मधर्मिणोर्धर्मिप्रतियोगिनोरन्येषां च प्रतीतावन्योन्याश्रयो निरस्तः । ततश्च व्युत्पत्तेस्तद्व्यवहारेऽपि न तत्प्रसङ्गः । भेदशब्देन व्यवहारस्य तु प्रतिसंबन्धिनिरूपिताकारे व्युत्पन्नत्वात् तदपेक्षा । भेदत्वं हि भेदानां प्रतियोगिना निरूप्यम्; न तु जात्यादिलक्षणं स्वरूपम् । यद्ग्रहो यत्र यदारोपविरोधी, स हि तस्य तस्माद्भेदः ; गोत्वादि च गृह्यमाणं स्वस्मिन् स्वाश्रये चाश्वत्वाद्यारोपं निरुणद्धीति स्वस्य स्वाश्रयस्य च स्वयमेव तस्माद्भेदः ॥

---

च निर्विषयं प्रत्यक्षम् । यदि स्वरूपतो भाने प्रतियोगिग्रहणमनपेक्षितम्, तर्हि घटादिभानेऽपि तत् तुल्यमिति ॥ तर्हि अभावज्ञाने व्यवहारे च प्रतियोग्यादिज्ञानं कारणमिति कथमुच्यते इत्यत्राह **भेदव्यवहार** इति । भेदत्वेन भेदव्यवहारः अभावत्वेन रूपेणाभावव्यवहार एव तदपेक्ष इत्यर्थः । स्वरूपतो भेदादिव्यवहारे प्रतियोग्यपेक्षाया आवश्यकत्वे सर्वप्रतीतिभंग इति दोषमप्याह **अत एवेति** । घटस्य घटत्वस्य वा भेदरूपत्वेऽपि प्रतियोगिज्ञानात्प्रागेव भेदधियो युक्तत्वादेवेत्यर्थः । अन्यथा घटत्वादिज्ञानं पटादीनामन्येषां ज्ञानं विना न भवति । पटपटत्वादिज्ञानञ्च तत्प्रतियोगिघटादिज्ञानं विना न भवेत् । अतोऽन्योन्याश्रयात् किमपि न प्रतीयेत ; अत एव न व्यवह्रियेत चेत्यर्थः । **ततः** स्वरूपतः प्रतीतेर्युक्तत्वादेव **व्युत्पत्तेः**=शब्दार्थसंबन्धग्रहणात् व्यवहारेऽपि प्रतियोग्यपेक्षा नास्ति । **भेदशब्देन**= भेदत्वादिनाऽभावबोधक नञादिशब्देन । पुत्रत्वादिवत् भेदत्वाभावत्वादेः प्रतियोगिनिरूपणाधीननिरूपणत्वात् घटः पटो नेति उभयसाहचर्येणैव नञ्व्यवहार इत्यर्थः । धर्म्यपेक्ष्य धर्मस्यैव भेदरूपत्वं युक्तमित्याह **यद्ग्रह** इति । भावातिरिक्ताभावत्रादिनो घटत्वमन्यत् पटभेदोऽन्य इत्याहुः ; पटभेदज्ञानस्य पटधीविरोधित्ववत् घटत्वज्ञानस्यापि पटधीविरोधित्वानुभवात् अतिरिक्ताभावकल्पनमयुक्तमित्यप्यनेन दर्शितम् । यस्य घटत्वादेर्ग्रहः घटे पटत्वाद्यारोपविरोधी, स=घटत्वरूपधर्मः । गोत्वं गवि अश्वत्वारोपं स्वस्मिन् अश्वत्वतादात्म्यारोपञ्च रुणद्धि; तस्मात् गोत्वमश्वभेदः अश्वत्वभेदश्चेत्याह **गोत्वेति** । गोत्वं नाश्व इति प्रतीतौ अश्वभेदोऽपि गोत्वमिति सुवचम् । तथापि गोत्वमश्व इत्यारोपस्यानिरूढत्वादेवं व्याख्यातम् । यथा शुक्ले कृष्णात् भेदः शौक्ल्यम्, शौक्ल्ये कार्ष्ण्याद् भेदश्च शौक्ल्यमिति । वस्तुतो गोत्वे स्थितोऽश्वभेदोऽपि गोत्वमेव ।

एवं भेदस्य प्रत्यक्षविषयत्वासंभवात् भेदविषयकं सविकल्पकं भ्रान्तिरित्युक्तं प्रत्युक्तम् । अथ भेदस्य दुर्निरूपत्वादपि तद्विषयसविकल्पकं भ्रान्तिः । तथाहि भेदः स्वरूपं वा तदन्यो वा । नाद्यः ; स्वरूपग्रहस्य प्रतियोगिनिरपेक्षतया भेदग्रहस्य च तदपेक्षतया च वैलक्षण्यात् । नापि धर्मः । तस्य भेदस्तद्धर्म इत्यनवस्थापातादिति यत् अद्वैत्यभिमतम्, तदप्येतेन निरस्तम् । भेदस्य भावरूपत्वस्य स्थापितत्वात् । तथा स्ववचन

अपि च प्रतियोगिसापेक्षत्वनिरपेक्षत्वलक्षणविरुद्धधर्माध्यासेन भेदात् स्वरूपभेदग्रहणैक्यं न संभवतीति वदन् भेददूषणार्थमेव भेदं साधयतीति स्ववचनविरोध इति ॥

॥ शाब्दापरोक्षनिरासः ॥

शब्दजन्यमपि प्रत्यक्षमस्तीति त एव वर्णयन्ति ; तदप्ययुक्तम्, व्याघातात्। न हि परोक्षजननस्वभावतया सिद्धा सामग्री विशेषाभावे क्वचित् स्वभावमतिपतेत्। न चैकजातीयसामग्रीतः प्रसूतं कार्यं विचित्रं स्यात्, एकयैव सामग्र्या सर्वजातीयोत्पत्तिप्रसङ्गात्। एकस्य कार्यस्य विरुद्धजातियोगप्रसङ्गाच्च। "दशमस्त्वमसि" इत्यादिदृष्टान्तेऽपि त्वमर्थमात्रं प्रत्यक्षम्। 'दशमोऽहम्' इति प्रत्ययो हि नेन्द्रियस्वातन्त्र्येणोदेति, किंतु पुरुषवचनानुरोधेन। तन्मूलेऽपि चेत् प्रत्यक्षता, एवम् 'धर्मवांस्त्वमसि' इति कार्तान्तिकोपदेशादौ 'तादृशोऽहमस्मि' इति बोधे धर्मादेरपि प्रत्यक्षत्वप्रसङ्गः। ततश्चाप्रत्यक्षमिति जगति किंचिन्न स्यात्, प्रत्यक्षभूतं यत्किंचिदुद्दिश्य विशेषणतयैव सर्वस्य प्रत्यक्षत्वोपपत्तेः। पूर्वावगतदशमभावं तु पुरुषं प्रति उपदेशे माषराशिप्रविष्टमषीन्यायेन पूर्वापरापरोक्षधीनैरन्तर्येण मध्यवर्तिशब्दजन्यधियोऽपरोक्षत्वव्यवहारः कस्यचित् स्याद्वा न वा। अत एव तत्त्वमस्यादिशब्दः स्वविषयगो-

---

विरोधोऽपि तत्रेत्याह **अपि चेति**। भेदस्य दुर्निरूपत्वे विकल्प्य दूषणम्, हेतुसाध्यादिनिर्देशः इतीदं सर्वं न भवतीति भावः। **भेदं साधयतीति**। भेदसिद्धत्वकारेण व्यवहारो भेदसाधक एवेति भावः। तथा च भेददूषकेनैव भेदाभ्युपगमात् स्ववचनविरोधः। भेदोपजीवनाच्च भेदो दूषयितुमशक्यः। विस्तरो **भाष्यादौ**।

तत्त्वमसि, दशमस्त्वमसीत्यादिवाक्यश्रवणे अहं ब्रह्मास्मि, दशमोऽहमस्मीति प्रत्यक्षं जायते इत्यद्वैतिनः। तत्र ज्ञातकरणाजन्यत्वरूप प्रत्यक्षलक्षणमव्याप्तमिति शंक्तं तदनंगीकारेण क्षिपति **शब्दजन्यमपीति**। **विशेषाभावे** इति। परोक्षस्मृतिजनकः संस्कारः इन्द्रियसंन्निकर्षरूपविशेषे सति प्रत्यभिज्ञाप्रत्यक्षहेतुर्भवति, सविकल्पकहेतुश्च। न त्विह; इन्द्रियसहकारस्य तदनिष्टत्वात्। अन्यथा शाब्दापरोक्षत्वासिद्धेः। **एकयैवेति**। घटसामग्र्या एव कटपटघटादिसर्वोत्पादकता स्यात्; एवमेकत्र घटत्वकटत्वपटत्वादिसमावेशः स्यात्। प्रत्यक्षपरोक्षसामग्रीभेदोऽपि न स्यात्। वक्ष्यमाणानुमाने दृष्टान्तभूतं दशमस्त्वमसीति वाक्यम्। तत्र त्वमर्थो धर्मी श्रोतुरहमर्थः पिण्डाकारः प्रत्यक्षः; न तु दशमत्वम्। तथासति पुरुषान्तरवचो विनाऽपि इन्द्रियेण तद्ग्रहणप्रसंगात्। अतो धर्मांशे स्वतोपरोक्षार्थविषयकत्वरूपहेतुरसिद्धः। धर्मिप्रत्यक्षत्वमात्रं पर्याप्तं चेत्, अदृष्टादिसर्वातीन्द्रियवस्तूनामपि विशेषणतया प्रत्यक्षता स्यात्। ननु अहमर्थः पिण्डः प्रत्यक्षः दशमत्वमपि योग्यदशकगतं प्रत्यक्षं भवितुमर्हति, दशमत्वञ्च दशत्वसंख्यापूरकत्वं दशत्वाश्रयनवकभिन्नत्वे सति दशत्वाश्रयत्वम्। तदपि प्रत्यक्षत्वार्हम्। अतो विशिष्टप्रत्यक्षं भवतीति चेत्—एवं पूर्वं पश्चाच्च दशमोऽहमिति प्रत्यक्षवत् मध्ये पुरुषान्तरवचनश्रवणात् यद्ज्ञानं भवति, तदपि परोक्षसामग्रीजन्यत्वात् परोक्षमेव।

चरप्रत्यक्षज्ञानजनकः, स्वतोऽपरोक्षार्थगोचरत्वात् "दशमस्त्वमसि", "संवित् स्वप्रकाशा" इत्यादिवाक्यवत् इत्याद्यनुमानानि निरस्तानि; दशमत्वस्वप्रकाशत्वादिविशिष्टाकारेण दृष्टान्तेष्वपरोक्षज्ञानजननासिद्धेः । तथा विगीतः शब्दो न स्ववाच्यगोचरप्रत्यक्षधीजनकः, शब्दत्वात्, संप्रतिपन्नवत् इत्याद्यपि प्रतिप्रयोक्तव्यम् । उपलम्भविरोध-शाब्दप्रत्यक्षलक्षणसंकरादिप्रसङ्गोऽत्र विपक्षे बाधकः । नैवं पूर्वस्य ; शब्दजन्यप्रत्यक्षमन्तरेणापि योगजादृष्टजनितसाक्षात्कारात् प्रणिधानविशेषप्रसादितपरमात्मसंकल्पाद्वा निःश्रेयससिद्धेरिति ॥

प्रत्यक्षं चिदचिन्मयं जगदिदं यस्येत्यनुश्रूयते
यश्चानन्यधियामनन्तविभवः प्रत्यक्षतामश्नुते ।
यश्चैको युगपत् सदा स्वत इदं विश्वं दरीदृश्यते
प्राज्ञं त प्रतिपन्नमोक्षणविधादक्षं दिदृक्षेमहि ॥ ७४ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ प्रत्यक्षाध्याये द्वितीयमाह्निकम् ॥

समाप्तश्च प्रत्यक्षाध्यायः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

—०—०—

---

माषराशिमध्यस्थमष्यां माषभ्रमवत् प्रत्यक्षद्वयमध्ये जाते परोक्षे प्रत्यक्षत्वभ्रम एव तत्र । मम तु तत्र परोक्षत्वनिश्चय एव । तदपि प्रत्यक्षं चेत्—इन्द्रियसंनिकर्षजन्यमेव । वाक्यं त्वकार्यकरम् । असंनिकर्षक्षणे परोक्षमेव जनयेत् । पूर्वागृहीतदशमत्वपुरुषगतं ज्ञानं तु शाब्दमेव । अतः साध्यविकलो दृष्टान्तः । प्रत्यनुमानं चास्ति । बलाबलविचारे कार्यकारणभावव्यवस्थाभंगप्रसंगः प्रत्यनुमानस्य बलप्रदः । तर्हि तत्त्वप्रत्याक्षाभावे कथं मोक्ष इति चेत्—वाचस्पतिमिश्रादिभिरपि शब्दजन्यप्रत्यक्षं निराकृतम् । योगजधर्मसंस्कृतमनोजन्यं तत्वप्रत्यक्षमिष्टम् । अस्मन्मते तु भक्तिरूपापन्नविशदस्मृतित एव परमात्मसंकल्पद्वारा मोक्ष इति फलसिद्धिरिति ।

**यस्येत्यनुश्रूयते**—यच्छेषत्वेन पतिंविश्वस्येत्यादिनोच्यते । **दरीदृश्यते**—विशदं सदैव पश्यति ॥

विद्यास्थानन्यायशास्त्रार्थशुद्धिं कुर्वन् आद्येऽध्याय आह क्रमेण ।
सत्तां मानस्यास्य लक्ष्माप्रमाया भेदं मानस्याप्यथाध्यक्षतत्त्वम् ॥

॥ इति अभिनवदेशिककृतौ न्यायपरिशुद्धिव्याख्यायां न्यायतत्त्वप्रकाशिकायां प्रथमाध्यायः ॥

—०—०—

श्रीः

## ॥ अनुमानाध्यायः ॥

### ॥ प्रथममाह्निकम् ॥

**अथ प्रत्यक्षमूलत्वादागमज्येष्ठभावतः । तयोरन्तरतः साङ्गमनुमानं प्रभाष्यते ॥ ७५**
**व्याप्यस्य व्याप्यत्वानुसंधानात् व्यापकविशेषप्रतीतिरनुमानम् ।**

---

### अनुमानाध्यायः

अथ द्वितीयोऽध्यायः सांगानुमानविषयकश्चतुराह्निकः । प्रथम आह्निके अनुमिति. तत्करणज्ञान-तद्विषयव्याप्तिपक्षधर्मताहेतूनां निरूपणम् ; द्वितीये पञ्चावयवन्याय. कथा.तदन्वयिनिग्रहस्थानानाम् ; तृतीयेऽवशिष्टच्छल. जातीनाम् ; चतुर्थे अनुमानाभास.तदन्यप्रमाणाभासानाम् । आदौ प्रमाणत्वेन तुल्यस्य शब्दस्य त्यागेनानुमानस्य प्रत्यक्षानन्तर्ये नियामकमाह **अथे**ति । प्रथमतो हेतुप्रत्यक्षे सत्येव तेन साध्यानुमितिर्भवेत् । अतोऽनुमितिरूपं फलं प्रत्यक्षरूपफलमूलकमिति कार्यकारणभावसंगतिः । ननु शब्दश्रवणे सत्येव शाब्दबोधो जायत इति तस्य प्रत्यक्षस्य च कार्यकारणभावसंगतिसत्वात् शाब्दनिरूपणमेवेदानीमस्त्वित्यत्राह **आगमज्येष्ठभावत** इति **आगमस्य**=शब्दजन्यबोधं प्रति अनुमानस्य ज्येष्ठत्वात्=**पूर्वत्वात्** उपजीव्यत्वात् प्रत्यक्षानुमानोभयोपजीवकं शाब्दमनुमानात्पश्चात् प्राप्तावसरमित्यर्थः । अत एव प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागममिति स्मृतौ क्रमाऽऽदरः । शाब्दबोधं प्रति व्युत्पत्तिः कारणम् । सा च प्रयोज्यप्रयोजकव्यवहारयोर्दर्शने इयं गवानयनकृतिर्गवानयनकर्तव्यताबोधाधीना कृतित्वात्, गवानयनकर्तव्यताबोधोऽयं गामानयेति प्रयोजकवृद्धवाक्यप्रयोज्यः कारणान्तराभावे सति कार्यत्वादित्यनुमानत एव भवतीति अनुमानसापेक्षत्वमपि शाब्दस्येति । एष संगतिक्रमः पूर्वं विभागकाल एव परिशीलनीयः । द्वितीयाद्याह्निकार्थक्रोडीकाराय **सांग**मिति । तथाचावसरसंगतिवत् कार्यत्वरूपसंगतिरपि ॥

अनुमानं किमित्यत्र तल्लक्षणमाह **व्याप्यस्ये**ति । व्याप्यस्य धूमादेः अग्निनिरूपितव्याप्यत्वानुसंधानजन्या व्यापकविशेषस्याग्नेः प्रमितिरिहानुमानपदार्थः । अनुमितित्वस्य भ्रमप्रमासाधारण्येऽपि प्रमाविभागान्तर्गतमनुमानं प्रमितिरेवेति भावः । अव्याप्ये व्याप्यत्वभ्रमाज्जायमानाऽप्यनुमितिः क्वचित् प्रमितिरेव भवेत् ; अतो **व्याप्यस्ये**ति किमर्थमिति चेत्—तत्रानुमितिप्रमितित्वे व्याप्तिज्ञानस्य न प्रयोजकत्वम् । व्याप्यत्वानुसंधानप्रयुक्तप्रमितिताकज्ञानं प्रकृते विवक्षितम् । तल्लाभाय **व्याप्यस्ये**त्युक्तम् । यत्राग्निव्याप्यधूमवच्चत्वरज्ञानानन्तरं तादृशचत्वरवदिदं पुरमिति विशिष्टज्ञानमुदेति, तत्रापि व्याप्यत्वानुसंधानस्य कारणत्वात् तद्वारणाय **व्यापके**ति । व्यापकमग्न्यादि । अग्निव्याप्यधूमज्ञानानन्तरम् अग्नि—आलोकोभयविषयकानुमितिर्यत्र जायते, तत्रालोकांशेऽनुमितित्वापत्तिवारणाय **व्यापकविशेषे**ति । तथाच स्वव्याप्यत्वानुसंधानप्रयुक्तप्रमितिताकस्वविषयकज्ञानत्वं स्वानुमितित्वमित्युक्तं भवति । संशयोत्तर-

**तत् प्रमाणम्, कारणदोषबाधकप्रत्ययरहितत्वात्। किं च—**

**श्लो. अनुमानाप्रमाणत्वं नाध्यक्षेणैव गम्यते। नानुमानेन तेनैव तद्विरोधप्रसङ्गतः ॥ ७६ ॥**

**न च तत् संशयाकारं सर्वलोकविरोधतः। न च किंचेति दुर्ज्ञानं तथात्वेनैव निर्णयात् ॥७७**

प्रत्यक्षे एककोटिव्याप्तिज्ञानस्यापि कारणतया तत्रातिव्याप्तिरिति चेत्—तत्र व्याप्त्यनुसंधानं कोट्यन्तरभानवारणे उपयुज्यते, न तु साध्यांशभाने; तस्य संनिकर्षायत्तत्वादिति। एवमुपरि "साध्यविशेषज्ञानमनुमानम्; साध्यविशेषश्च साध्यस्य पक्षसंबन्धरूपः" इति वक्ष्यते। तज्ज्ञापनार्थम पि **विशेष**पदमिति ध्येयम्।

ननु सिद्धेऽनुमानस्य प्रमाणत्वे तन्निरूप्येत; तदेव नेति प्रत्यक्षप्रमाणमात्रवादिचार्वाकशंकां निरसितुमाह तत् **प्रमाण**मिति। यद्यपीदं पूर्वं प्रमाणत्रैविध्यकथनावसर एव निरूपणीयम्—अथाप्यनुमानांगव्याप्त्यादिशोधनस्थले तन्निरूपणे श्रोतुर्ग्रहणसौकर्यादत्रैव निरूप्यते। **प्रमाण**मिति प्रमेत्यर्थः। हेतुमाह **कारणे**ति। कारणदोषरहितत्वात् बाधकप्रत्ययरहितत्वाच्चेत्यर्थः। प्रत्यक्षस्यापि प्रमात्वाभावे शंक्यमाने यतस्तन्निरासः तत एवेहापीति भावः। पीतः शंख इति प्रत्यक्षं न प्रमेत्युच्यते; कस्मात्? पुरुषगतात् पित्तरूपदोषाज्जातत्वात्। इदं रजतमिति शुक्तौ प्रत्यक्षं न प्रमा; नेदं रजतमिति पश्चात्तनबाधदर्शनात्। तथा च दोषबाधयोरन्यतरसत्त्वेऽप्यप्रमात्वं कल्प्येत। उभयस्याप्यभावात् प्रत्यक्षे प्रमात्वमिष्टमिति तथैवेहापि। ननु अनुमानमप्रमाणमिति शंकायां कथमनुमानेनैव प्रामाण्यस्थापनेति मन्यमानं प्रत्याह **किञ्चे**ति। त्वयाप्यनुमानमप्रमाणमिति तदप्रमाण्यस्थापनं हेतुनैव क्रियत इति पूर्वपक्षस्यैव नावसर इति भावः। अनुमानस्याप्रमाणत्वं त्वदिष्टं न प्रत्यक्षप्रमाणविषयः, तदाह **नाध्यक्षेणैव गम्यते** इति। **नानुमानेने**ति। अनुमानाप्रमात्वसाधकस्य हेतोरप्यनुमानत्वे तेनाप्रमात्वं **न गम्यते** न ज्ञाप्यते। ज्ञापकत्वे अप्रमात्वविषयकप्रमारूपानुमितिजनकत्वेन सर्वानुमानाप्रमाणत्ववचनं व्याहतमित्यर्थः। तादृशानुमित्यजनकत्वे बाधकत्वदनुमानाभावादेवानुमानप्रमात्वं सिद्धमिति।

ननु धूमवत्ताज्ञानाज्जायमानमग्निमत्ताज्ञानं न निश्चयात्मकम्, किंतु संशयात्मकम्। अतो न प्रमात्वमित्यत्राह न च तदिति। सर्वलोकानुभवविरुद्धं संशयत्वकथनम्, कोट्यन्तराभानात्, अनुमानात् प्रागेव संशयसत्त्वेनैतत्साधनीयाभावाच्च। चकारः—न चेदं स्मृत्याकारम्—स्मरामीत्यनुव्यवसायाभावेन अनुमिनोमीत्येव सत्त्वेन लोकविरोधात्, पर्वतेऽग्निमत्त्वस्यानुभूतत्वया स्मृतित्वायोगाच्च' इति सर्वार्थसिद्ध्युक्तसमुच्चायकः। नन्वस्य प्रत्यक्षवत् निश्चयत्वे यथाऽग्निप्रत्यक्षं तद्गतरूपपरिमाणज्वालाङ्गाराद्यनेकविषयकं विशदम्, तथा स्यात्, तत्तदंशेऽस्यानिर्णयरूपत्वात् नेदं प्रमाणमित्यत्राह **नचकिञ्चे**ति। **किंचे**त्येव सर्वत्र पाठः। **किंच**=किंभूतश्चेति दुर्ज्ञानमिति शंका। प्रमाणत्वादिना दुर्ज्ञानमित्यर्थः। यद्वा प्रत्यक्ष इव एतद्रूपज्वालाङ्गारपरिमाणादिमानिति प्रकारविशेषानिर्णयात् नायं निर्णय इति न, यथा चाक्षुषप्रत्यक्षस्य तद्गतस्पर्शाद्यग्राहित्वेऽपि योग्यांशग्राहकत्वमात्रेण निश्चायकता, तद्वत् यादृशव्याप्यवत्ताज्ञानस्य यद्रूपावच्छिन्नं प्रति

संदेहादनुमेयादौ प्रवृत्तिरिति वादिनः । प्रत्यक्षेऽपि तथैव स्याद्बाधाबाधादिसाम्यतः ॥७८
यत्तु चार्वाकेणोच्यते—

"विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात् । तद्वतोऽनुपपन्नत्वादनुमानकथा कुतः ॥"

इति, अन्यत्र च—

"विशेषेऽनुगमाभावः सामान्ये सिद्धसाधनम् । अनुमानभङ्गपङ्केऽस्मिन्निमग्ना वादिदन्तिनः ॥" इति;

तत् स्ववचनविरुद्धम्, अनुमाननिरासाय हेतूपन्यासात्, तस्य च हेतोः स्वसाध्यव्याप्त्यनभ्युपगमे अनुमानस्य तेन बाधितुमशक्यत्वात्, अभ्युपगमे तत्रापि "विशेषेऽनुगमाभावः" इत्यादिप्रसङ्गात् ॥ श्लो. न व्याप्तिर्नियमायोगादिति व्याप्तमिदं न वा ।
व्याप्तं चेत् स्वीकृता व्याप्तिर्न व्याप्तं चेन्न दूषणम् ॥ ७९ ॥

---

व्याप्यताविषयकत्वम् योग्यतदाकारनिश्चायक तया तदन्याग्रहणमात्रेणानिश्चयत्वासंभवात् । यदा च पालालत्वपरिमाणविशेषवत्त्वादिसाधकाकारवत्तया व्याप्यधूमग्रहणं तदा तावद्ग्राहकत्वमपि भवत्येवेति भावः । किञ्च संदेहरूपत्वमयुक्तम्, धूमदर्शने सत्यग्न्यर्थिनो निष्कम्पप्रवृत्तिदर्शनात् । संदेहत एव प्रवृत्तिरिति हठात्कारे त्वाह **संदेहा**दिति । **प्रत्यक्षे**ति । सर्वं प्रत्यक्षं संदेहात्मकमेवास्त्विति भावः । ननु तत्र नेदं संशयरूपम् कोट्यन्तराविषयकत्वादिति बाधज्ञानमस्तीति चेत्—तदत्रापि तुल्यम् । प्रवृत्तेः साफल्यदर्शनात् तदबाधात् प्रत्यक्षं निश्चयरूपमिति चेत्—तदपि तुल्यमित्याह **बाधे**ति ।

पूर्वोक्तया **अनुमानाप्रमाणत्व**मिति कारिकयैव चार्वाकमतस्थेन स्थलद्वये उक्तमपि निरस्तमिति वक्तुमाह **यत्त्वि**त्यादि । अयमर्थः; पर्वतोऽग्निमान् धूमादित्यत्र किं पर्वतस्याग्नेरनुमानम्, उताग्निरूपपदार्थमात्रस्य । नाद्यः; पर्वतीयाग्निरूपविशेषं प्रति धूमसामान्यस्य व्याप्यत्वाभावात् ; प्रकृतधूमरूपविशेषे तु प्रकृताग्निव्याप्यत्वस्य पूर्वमगृहीतत्वात् । गृहीतत्वेऽग्निरपि तत्र प्रागेव गृहीत इति किमनुमानेन । न द्वितीयः, अग्निसामान्यस्य लोके सिद्धत्वेन साधनीयत्वाभावात् । ननु **तद्वतः** अग्निमतः पर्वतस्यानुमेयत्वमिति चेत्—तावतोऽनुमेयत्वमनुपपन्नम् ; अग्निमत्पर्वतं प्रति धूमस्य व्याप्यत्वाभावात् । अतोऽनुमानं सर्वं न घटत इति श्लोकार्थः । अत्र पूर्वार्धोक्तमेवान्यत्रापि चार्वाकमतस्थेनोक्तम् **विशेषे**ति । **अभावात् साधना**दिति पञ्चम्यन्तपाठोऽन्यत्र । एवमस्मदुक्तो योऽयमनुमानभंगः, तद्रूपे अगाधे **पंके** अनुमानप्रामाण्यवादिरूपाः गजाः सर्वे कुम्भपृष्ठलेशस्याप्यदर्शनेन नितरां मग्ना नैवोत्थास्यन्तीत्यर्थः । द्वयमपि निरस्यति **तदि**ति । **अनुमानस्य** अस्मदीयानुमानस्य । व्याप्त्यभ्युपगमस्तदीयानुमाने तस्य दुश्शक इत्याह **अभ्युपगमे** इति । **नियमायोगा**दिति । एतावत्संख्याकं भूयोदर्शनं व्याप्तिग्राहकमिति संख्यानियमस्य दुर्वचत्वादित्यर्थः । **इती**ति । **इतीदम्**=अत्र वाक्ये प्रयुक्तस्त्वदिष्टो हेतुरित्यर्थः । **न व्याप्त**मित्यस्य व्यभिचारीत्यर्थः । अनुमानं व्यभिचारि एवंत्वादिति प्रयोगेऽस्यापि व्यभिचारित्वे व्यभिचारोऽनेन न

सर्वस्य व्यभिचारित्वे व्यभिचारो न सिध्यति। एकस्याव्यभिचारित्वे न सर्वव्यभिचारिता॥७९

ततश्च सामान्यसिद्धैव व्याप्तिर्हेतोः पक्षधर्मताख्यसहकारिसाहित्यात् साध्यविशेषमुपस्थापयतीति दर्शनबलादभ्युपेयम्। अप्रमाणत्वपक्षेऽप्यन्वयव्यतिरेकावसिता सैव हि सामग्री; अन्यथाऽनुमानतो विशेषप्रतीतिमात्रस्याप्यनुदयप्रसङ्गात्। यथा च सामान्यधीः सामग्रीमध्यपातिनी विशेषबुभुत्सादिहेतुः, तथा सर्वविशेषसंग्राहिसामान्यव्याप्तिधीरपि विशेषानुमितिहेतुरिति यथादर्शनमाद्रियेथाः। स च साध्यस्य विशेषः पक्षसंबन्धमात्रात्मा त्वदयन्तविद्भिरिष्यते। तदतिरिक्तविशेषानुमाने त्वनुगमाभाव.विरोधादयो दोषाः स्युः। अत एव च वयमत्यन्तातीन्द्रियवस्त्वनुमानं नेच्छामः। तदेतत् सूत्रकारैरेव, "शास्त्रयोनित्वात्" इति जगत्कर्तुः शास्त्रैकप्रमाणकत्वं वदद्भिः प्रदर्शितम्॥

---

साधयितुं शक्यते। शक्यत्वेऽस्य हेतोरव्यभिचारित्वात् सर्वं व्यभिचारीति त्वदुक्तमसिद्धमित्यर्थः। नन्वेवमेष्टव्या व्याप्तिर्विशेषतो वा सामान्यतो वा। नाद्यः; विशेषव्याप्तेर्दुर्ग्रहत्वस्योक्तत्वात् व्यर्थत्वाच्च। सामान्यव्याप्त्या च न विशेषसिद्धिरित्यत्राह ततश्चेति। व्याप्यत्वेन गृहीतो हेतुर्यत्र गृह्यते तत्रैव साध्यस्य साधयितव्यत्वात् विशेषातिरिक्तसामान्याभावात् विशेषान्तराणाञ्च पक्षेऽसंभवात् पर्वतीयाग्निरेव पर्वते सिध्यति; पर्वतसंबन्धोक्त्यैव तत्सिद्धेः न पर्वतीयाग्निमानिति साधनीयम्। तथाच पक्षधर्मतया हेतुज्ञानं तत्र नियामकमिति। इदं प्रतिवादिनाऽभ्युपगन्तव्यमित्याह अप्रमाणत्वेति। अनुमानं न प्रमाहेतुरिति पक्षेऽपि ततो जायमानं ज्ञानं स्मृतिरूपं संशयरूपं वेति स्वीकारात् तत्र भासमानोऽग्निः पर्वतीय एव। अन्यस्याग्नेरत्राभावस्य सर्वसंमतत्वात्। तत्र विशेषप्रतीतौ इदं व्याप्तिपक्षधर्मताज्ञानं कारणम्। अन्यथा तत् प्रतीतिमात्रं अननुभवात्मकप्रतीतिरपि न स्यादिति। विशेषप्रतीतिमात्रस्य विशेषविषयकप्रतीतिसामान्यस्य। अविशेषेति पाठे, नियतविशेषाविषयकेति संशयरूपेत्यर्थः। सामान्यज्ञानं किञ्चित्सहकारिबलात् विशेषज्ञानहेतुरित्यत्र दृष्टान्तमाह यथाचेति। सामग्रीमध्येति। सामान्यज्ञानेन कार्यं साधयितुमशक्ये विशेषज्ञानमिष्टसाधनं स्यादिति चिन्तादिसहकृता सा विशेषबुभुत्सां ततो विशेषज्ञानञ्च जनयतीति। ननु सामान्यव्याप्तेर्विशेषां शसाधकत्वस्वीकारे, क्षित्यादिकं सकर्तृकं कार्यत्वादिति कर्तृसामान्यव्याप्तिज्ञानात् सर्वज्ञसर्वशक्त्यैकपुरुषानुमितिरपि भवतु। तथा च शास्त्रयोनित्वाधिकरणे तार्किको न खण्ड्येतेत्यत्राह सचेति। पक्षसंबन्धरूपविशेष एक एवेष्यते। सर्वज्ञत्वं सर्वशक्तित्वमेकत्वमित्यादि तु तदन्यत्। असर्वज्ञाल्पशक्त्यनेकचेतनानामपि पक्षसंबन्धसंभवान्नेश्वरसिद्धिरिति न विरोध; तादृशविशेषनिरूपितस्यानुगमस्य=व्याप्तेः सत्त्व एव तत्सिद्धिः। विरोधश्चासर्वज्ञकर्तृकत्वस्यैव घटादिदृष्टान्तेन साधनसंभवात्। आदिना उपादानगोचरज्ञानादीनामनित्यत्वकर्माधीनत्वादि स्यादिति ज्ञाप्यते। अत एव=अनुगमाभावादिदोषसद्भावादेव। अत्यन्तातीन्द्रियेति। प्रकृतिमहदहंकारपरमात्मनामग्निहोत्रादेः स्वर्गसाधनत्वादीनाञ्चेत्यर्थः। तथा च हेतुना

॥ अनुमानस्यातिरिक्तत्वस्थापनम् ॥

अस्त्वनुमानं प्रमाणम्; तथापि प्रत्यक्षान्तर्भूतं स्यादिति चेन्न, साक्षादिन्द्रियव्यापारसाध्यत्वाभावात्। नापि लिङ्गग्रहणावान्तरव्यापारद्वारेन्द्रियजम्, इन्द्रियव्यापारोपरमेऽपि स्मर्यमाणलिङ्गाद् व्यापकप्रतीतेः। नापि संस्कारादिप्रत्यासत्त्या मानसता, बाह्येन्द्रियग्राह्येष्वपि तत्तत्प्रत्यासत्त्यया मानसप्रत्यक्षत्वप्रसङ्गात्। न चैतदिष्टम्, बाह्यान्तरप्रत्यक्षविभागायोगात्, बाह्या-

---

स्वव्यापकतावच्छेदकधर्ममात्रावच्छिन्नमेव साध्येत, न तु तदन्यसर्वज्ञत्वैकत्वादिः। स न साध्यतावच्छेदकधर्मः। पक्षसंबन्धस्तु साध्यस्य न साध्यतावच्छेदकधर्मः। किंतु साध्यतावच्छेदकसंबन्धः। असंबद्धस्य साधनायोगात् अविवक्षितकालिकादिसंबन्धग्रहणे सिद्धसाधनाच्च संबन्धस्य वक्तव्यत्वात्। "साध्यनिर्देशः प्रतिज्ञा" इति सूत्रे धर्मिविशिष्टधर्मो वा अग्न्यादिधर्मविशिष्टपर्वतादिधर्मी वा साध्यमित्युक्तिः केवलाग्नेः प्रागेव क्वापि सिद्धत्वात् धूमविशिष्टपर्वतज्ञानादग्निविशिष्टपर्वतज्ञानोदयात् हेतुविशिष्टपक्षो ज्ञापकः साध्यविशिष्टः पक्षो ज्ञाप्य इत्यभिप्रायेणेत्युक्तं भवति ॥

एवमनुमानप्रामाण्ये स्थित्वैव तदप्रामाण्यवादी चार्वाकः स्ववचनव्याघातेन दूष्य इत्यनुमानप्रामाण्यं साधितम्। यदि अत्यन्तातीन्द्रियार्थेष्वनुमानस्य न प्रसरः, तर्ह्यनुमेयस्यैन्द्रियकविषयकत्वेऽनुमानं प्रत्यक्षमेव भवत्विति शंकायां प्रमाणान्तरत्वं स्थापयितुमाह **अस्त्विति**। **इन्द्रियव्यापारः** संनिकर्षः। **साक्षात्**—तदव्यवहितोत्तरमेव जायमानत्वाभावात्। न हि पर्वतेन्द्रियसंनिकर्षानन्तरमेव धूमवत् अग्निरपि दृश्यत इति भावः। ननु संनिकर्षानन्तरं निर्विकल्पकज्ञानव्यवधानेऽपि सविकल्पकं प्रत्यक्षत्वेनेष्टम्; तद्वत् अग्निव्याप्यधूमवान् पर्वत इति लिंगग्रहणमवान्तरव्यापारोऽस्तु। तदधीनमग्निज्ञानं ततः प्रत्यक्षमितीदं निरस्यति **नापीति**। **इन्द्रियेति**। धूमादिरूपहेतोर्दर्शनोपरमेपि स्मरणरूपव्याप्यत्वानुसंधानादप्यग्निप्रतीत्या तत्र प्रत्यक्षरूप व्यापाराभावादित्यर्थः। अत्रेदमभिधित्सितम्—योग्यत्वमात्रेण संनिकर्षाभावे प्रत्यक्षं नेष्यते। यद्यग्नौ संनिकर्षः स्यात्, तर्हि व्याप्तिविशिष्टदर्शनस्य व्यापारता कल्प्येत। यथा संशयोत्तरप्रत्यक्षे विशेषावधारणं कारणमिति। तदिदमुक्तं **न्यायकुसुमाञ्जलौ** निर्विकल्पकस्येव धूमदर्शनस्य व्यापारत्वशंकायाम्, "तत् किं सविकल्पकस्य व्यवहितस्य प्रत्यक्षेऽनन्तर्भावः? अन्तर्भावे वा कियती सीमा? तत्तदसाधारणसाहित्यम्" इति। इन्द्रियासंनिकृष्टविषयकस्य प्रत्यक्षत्वं न भवतीत्यर्थः। तर्हि प्रत्यक्षमेव मानसं तद् भवतु। केवलमनसो बहिरस्वातन्त्र्येऽपि व्याप्यदर्शनादिसहकारे प्रत्यक्षहेतुत्वस्वीकारसंभवात्। तादृशवैलक्षण्याभिप्रायेणैवानुमिनोमीति प्रतिसंधानमितीदं निरस्यति **नापि संस्कारेति**। **इन्द्रियग्राह्येष्वपि**=इन्द्रियसंनिकृष्टेष्वपि, सोयं देवदत्त इत्यादौ देवदत्तादिषु। तत्तदिति। तद्देशतत्कालविशिष्टतद्विषयकसंस्काररूपसंनिकर्षेणेत्यर्थः। **विभागेति**। आत्मतत्समवेतगुणप्रत्यक्षमेव मानसम्, अन्यत् बाह्यमिति तार्किकादिसंमतविभागेत्यर्थः। विभागनियामकं किमित्यत्र तद् दर्शयितुमाह बाह्यार्थेष्विति।

बाह्यार्थेषु च मनसः स्वातन्त्र्यादर्शनात् यत्परतन्त्रता मनसः, तत् पृथक्प्रमाणमित्युच्यते। वेद्यांशपारोक्ष्यं चानुमितेरैन्द्रियकत्वविरोधि परम्परया प्रत्यक्षमूलत्वमात्रेण प्रत्यक्षत्वोपचारं तु न वारयामः॥ न चानुमितिः स्मृतिमात्रमिति वक्तुं शक्या, अधिकविषयकत्वात्। न चानेकसंस्कारसंभेदेन तत्, अनुभूतानेकस्मरणयौगपद्यसंभवेऽपि वैशिष्ट्यविशेषस्याननुभूतस्य स्मृत्ययोगात्। शाब्दत्वं तु असंभावितमेव।

अतः सिद्धम्—अनुमानं प्रमाणम्, प्रत्यक्षादिबहिर्भूतं चेति॥

॥ व्याप्तिनिरूपणम् ॥

अनधिकदेशकालनियमं व्याप्यम्। अन्यूनदेशकालवृत्ति व्यापकम्। तदाहुः—

---

इन्द्रियान्तरनिरपेक्षमनोधीनं प्रत्यक्षमेव मानसम्, अन्यत् बाह्यमिति भावः। प्रत्यभिज्ञावत् अनुमानस्य प्रत्यक्षत्वशंकां परिहरति **यत्परे**ति। मनस इन्द्रियसापेक्षत्वे तदधीनस्यामानसत्ववत्, व्याप्तिज्ञानादिविशेषापेक्षत्वतोऽप्यमानसत्वमेव। मनसः साधारणतया विशेषव्यवहारानियामकत्वात्। सामान्यतः प्रत्यक्षत्वस्यैवाभावे हेतुमाह **वेद्ये**ति। अग्निं पश्यामीति न हि धीस्तवेति भावः। पर्वतेऽग्निज्ञानं स्मृतिरेव भवतु; व्याप्तिग्रहणकाले पर्वतीयाग्नेरपि विषयतया तद्विषयकसंस्कारसत्त्वात् तावताऽपि दर्शनानुरोधात् पर्वतत्वेन पर्वतेऽपि व्याप्तिग्रहणमाचिख्येऽग्निविशिष्टस्मृतिर्भवतीत्यास्तामित्यत्राह **नचे**ति। **मात्र**पदेन स्मृतिकारणसंस्कारविषयैकविषयकत्वस्फोरणम् अग्निर्व्याप्येत्यग्निविषयकात् संस्कारात् धूमवान् पर्वत इति ज्ञानाधीनात् पर्वतसंस्काराच्चोभयस्मृतिरित्यत्राह **नचानेके**ति। **संभेदेन**=मेलनेन। अग्निमान् पर्वत इति प्रागनुभवे सति वैशिष्ट्यं तत् स्मर्येतेति भावः। अनुमानत्वपरिशेषाय शाब्दत्वाभावमपि स्थितं ज्ञापयति **शाब्दत्व**मिति। अनुमानलक्षणे प्राक् प्रयुक्तयोर्व्याप्यव्यापकशब्दयोरर्थमाह **अनधिके**ति। साध्यधर्मं प्रति हेतुत्वेनाभिमतो धर्मः साध्यासमानाधिकरणो वा साध्याधिकरणकिञ्चिद्वृत्तिर्वा यावत्साध्याधिकरणमात्रवृत्तिर्वा साध्याधिकदेशवृत्तिर्वा। आद्ये विरुद्धत्वान्न हेतुता; अन्त्ये व्यभिचारिता। द्वितीयस्तृतीयश्च सद्धेतुः। तत्र सर्वत्र साध्यदेशानधिकदेशवृत्तित्वं नियतमिति नाव्याप्तिरिति सूचनाय **नियम**पदम्। न तु तदर्थस्य लक्षणघटकता। साध्याधिकं साध्यानधिकरणम्। तद्भिन्ने देशे काले च नियमो यस्येत्यनेन साध्यानधिकरणकालाद्यवृत्ति तादृशकालादिवृत्ति चेत्युक्तम्। कालिकसंबन्धेन हेतुमाध्यविवक्षायां कालोऽधिकरणम्, अन्यत्र देशः। तथा च साध्याभाववदवृत्तित्वं व्याप्तिः; तद्विशिष्टं व्याप्यमित्युक्तं भवति। अत एव वक्ष्यति **अविनाभूतं व्याप्यमि**ति। **विनाभूतं** साध्याभाववद्वृत्ति। तदवृत्ति चाविनाभूतम्। एवं निरुक्त्या अन्यूनदेशकालवृत्ति व्यापकमित्यर्थसिद्धम्। तन्न्यूनदेशवृत्तीत्यस्य तद्देशवृत्ति तद्देशवृत्त्यभावप्रतियोगि चेत्यर्थः। तद्भिन्नमन्यूनदेशवर्ति। अन्ततः तद्व्यापकत्वं नाम तदधिकरणवृत्त्यभावाप्रतियोगित्वम्। यथाऽग्नेः धूमाधिकरणे सर्वत्र सत्त्वात् धूमाधिकरणवृत्त्यभावाप्रतियोगित्वम्

"यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत् ।
स व्याप्यो व्यापकस्तस्य समो वाऽभ्यधिकोऽपि वा ॥" इति ॥

देशकालनियमश्च क्वचित् देशैक्ययौगपद्याभ्याम्; यथा—रसगुडत्वयोः । क्वचिद्यौगपद्यमात्रेण ; यथा—गन्तु(शंकु)च्छायासूर्यस्थितिविशेषयोः । क्वचित् देशैक्येनैव ; यथा—पाकजतज्जन्यगुणयोः । क्वचित् भिन्नदेशतया भिन्नकालतया च ; यथा—दिवानिशाकरा-

---

परामर्शे व्याप्यत्वस्य व्यापकत्वस्य च द्वयोर्न भानम् ; वैयर्थ्यात् । अतः साध्याभाववदवृत्तित्वरूप-व्याप्तिमद्धेतुमान् पक्ष इति वा स्वसमानाधिकरणाभावाप्रतियोगित्वरूप स्वव्यापकत्ववत्साध्यकहेतुमान् पक्ष इति वा परामर्शाकारः । स्वपदार्थः हेतुः । अधिकरणपदेन देशो वा कालो वा यथायथं ग्राह्यः । हेत्वधिकरणे सर्वत्रैव किञ्चित् साध्यं भवेत् । किञ्चित्तु हेत्वधिकरणेऽन्यत्र च । तत्र सर्वत्रेदं व्यापकत्वमक्षतम् । **य** इति : यो हेतुः **यस्य** साध्यस्य समः । केनोपाधिना ? **देशकालाभ्याम्** । देशेन साम्यं साध्यदेशसमदेशकत्वम् ; कालेन साम्यं साध्यकालसमकालकत्वम्, न तु न्यूनत्वमधिकत्वं वा, स हेतुर्व्याप्यः, तत् साध्यं व्यापकम् । तथा देशेन कालेन वा न्यूनोपि । साध्यदेशापेक्षया न्यूनदेशस्थत्वेऽपि न्यूनकालस्थत्वेऽपि व्याप्य एव । साध्यसमदेशकालवृत्तित्वं नाम साध्याधिकरणभिन्नाधिकरणावृत्तित्वे सति साध्यसमानाधिकरणाभावाप्रतियोगित्वम् । साध्यन्यूनदेशकालवृत्तित्वं नाम साध्याधिकरणभिन्नाधिकरणावृत्तित्वे सति साध्यसमानाधिकरणाभावप्रतियोगित्वम् । तत्र समन्यूनोभयसाधारणाकारः साध्यानधिकरणावृत्तित्वं हेतोः । तदेव व्याप्यत्वमित्यर्थः । केवलान्वयिसाध्यकस्थले साध्यानधिकरणाप्रसिद्धिरिति चेत्—स्वसमानाधिकरणाभावाप्रतियोगिसाध्यकत्वं व्याप्यत्वमित्यस्तु । अत्र स्वं हेतुः । प्रथममपि केवलान्वयिसाध्यकहेतुसाधारणं सुवचम्—स्ववद्भिन्नस्थलवृत्तिहेतुकं यत् तद्भिन्नसाध्यकत्वं प्रथमं व्याप्यत्वम् । स्वपदेन घटादिकं गृह्येत ; न तु केवलान्वयिसाध्यम् । तद्वद्भिन्नाप्रसिद्धेः । अतो यत्पदार्थत्वं न साध्ये इति तद्भिन्नसाध्यक एव हेतुर्भवति । अनुगमे तु स्वविशिष्टहेतुकवस्तुभिन्नसाध्यकत्वम् । स्ववैशिष्ट्यञ्च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्वृत्तित्वसंबन्धेनेति । यद्वा साध्याभाववदवृत्तित्वं नाम स्वाभाववद्वृत्तित्वसंबन्धावच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभाववत्त्वम् । केवलान्वयिधर्मस्याभावाप्रसिद्ध्या अभाववद्वृत्तित्वं तस्य व्यधिकरणसंबन्धः । तेन संबन्धेन साध्याभावो हेताविति समन्वयः । हेतुसाध्ययोर्देशैक्ये कालैक्ये च व्याप्तिरुक्ता । एवं देशभेदनियमे कालभेदनियमे उभयनियमे च व्याप्तिरस्ति । तत्सूचनार्थमेव **नियम**पदप्रयोग इत्याशयानो व्याप्यावान्तरभेदमाह **देशे**ति । इदं रसवत् गुडत्वादित्यनुमाने हेतुसाध्ययोरेकाधिकरणवृत्तित्वमेककालकत्वञ्च नियतम् । गन्तुः पुरुषस्य, स्थापितस्य शंकोर्वा छायाविशेषं दृष्ट्वा सूर्यगतिनाडीयत्ताऽनुमीयते । तत्र छायायाः सूर्यगतेश्च समानकालिकत्वमात्रम् । यदेयं छाया, तदा सूर्यगतिरेतावतीति । आम्रादिकं रसादिविशेषवत्

स्तगमन—अतिक्रान्तसमुद्रक्षोभयोरित्यादि ॥

**अत्रेदं तत्त्वम्—यादृग्रूपस्य यद्देशकालवर्तिनो यस्य यादृग्रूपेण यद्देशकालवर्तिना येनाविनाभावः, तदिदमविनाभूतं व्याप्यम्, तत्प्रतिसंबन्धि व्यापकमिति। तेन निरुपा-**

---

पाकवत्त्वादित्यनुमाने पाकस्य पूर्वभावित्वात् रसस्य च तन्नाशेऽपि सत्त्वात् आम्रादेरधिकरणस्यैवैक्यम्, न कालस्य। तत्र छायाया भूस्थत्वात् सूर्यस्थितेर्न भोगतत्त्वात् देशभेदनियमः। पाकतज्जन्यगुणयोश्च कालभेदनियमः। क्वचित् देशभेदकालभेदोभयनियमोऽपि। यथा रात्रौ समुद्रक्षोभ आसीत्। चन्द्रस्याद्य=अहनि अस्तमितत्वादित्यनुमाने क्षोभस्य रात्रिकालसमुद्रदेशसंबन्धित्वात् अस्तमयस्याहःकाल-चन्द्रदेशसंबन्धित्वाच्चोभयभेदनियम इति।

नन्वेवं देशकालभेदे हेतुसाध्ययोः सामानाधिकरण्याभावात् कथं व्याप्तिः? कुत्र केन कस्यानुमानम्। धूमस्य चाग्निं विना गगने स्थितत्वात् तस्य कथं हेतुत्वमित्यत्राह **अत्रेद**मिति। **यादृग्रूपस्य**=यादृशविशेषणविशिष्टस्य; यद्धर्मावच्छिन्नस्येति यावत्। यस्य हेतोः। **यादृग्रूपेण** यद्धर्मावच्छिन्नेन साध्येन। अग्निधूमयोः कार्यकारणभावात् धूमः स्वाव्यवहितपूर्वक्षणावच्छिन्नाग्नेरेव साधको भवेत्। विच्छिन्नमूलेन धूमेन गगनस्थेनाव्यवहितपूर्वक्षणेऽग्निसाधनमशक्यम्। तस्मादविच्छिन्नमूलत्वादिधर्मावच्छिन्नधूमस्यैव व्याप्यत्वम्। तेन केवलाग्निसाधनवत् स्वपूर्वक्षणावच्छिन्नत्वविशिष्टाग्निरपि साधयितुं शक्यते; तद्धर्माव-च्छिन्नाग्नेर्व्यापकत्वात्। एवं तत्र तत्र व्याप्यतावच्छेदको व्यापकतावच्छेदकश्च धर्मः जात्यादिरूपो वा किञ्चित्स्थूलविशेषरूपो वा यथायथं ग्राह्यः। **यद्देशकाले**ति। हेतुसाध्ययोर्देश एक एव स्यात् कालश्च क्वचित् क्वचित् अन्यतरो भिद्येत। कुत्रचिदुभयमपि। तत्राप्यनुभवानुरोधात् व्याप्तिरस्ति। यथा—यदा चन्द्रस्यास्तमयः तत्पूर्वकाले रात्रौ समुद्रस्य क्षोभ इति। कथं सामानाधिकरण्याभावे व्याप्तिरिति चेत्—परीक्षकः तत्रापि सामानाधिकरण्यं निर्वहेत्। यथा—चन्द्रास्तमयकालः समुद्रक्षोभकालोत्तरः तदस्तमयकालत्वादिति; चन्द्रः समुद्रक्षोभकालोत्तरकालावच्छिन्नः अस्तंगतचन्द्रत्वादिति समुद्रश्चन्द्रास्त-मयप्राक्कालिकक्षोभवान् क्षुब्धसमुद्रत्वादित्येव मिश्रलम्। तत्र प्रथमे उत्तरकालत्वसंबन्धेन समुद्रक्षोभस्य साध्यत्वम्, कालिकसंबन्धेन चन्द्रास्तमयस्य हेतुत्वम्। **तत्प्रतिसंबन्धि**=व्याप्यनिष्ठाविनाभावनिरूपकम्।

ननु स श्यामो मित्रातनयत्वादित्यादौ श्यामत्वरूपसाध्यस्य सर्वमित्रातनयान्तरवर्तितया व्यापकत्व-सत्त्वेऽपि सद्धेतुत्वं नेष्यते। अतो नाविनाभावादर्थनिश्चय इत्यत्राह **तेने**ति। नियतसंबन्धमात्रान्न व्याप्यता। निरुपाधिकत्वमपेक्षितम्। मित्रातनयत्वरूपहेतौ शाकपाकजत्वरूपोपाधिसत्त्वात् न निरुपा-धिकता। शिशूनां श्यामत्वं मातृकृतशाकाहारपरिणतिजन्यमिति शाकपाकप्रयुक्तमेवात्र श्यामत्वम्। स पाक एव तनयान्तरेषु साध्यप्रयोजकः। मित्रातनयत्वमप्रयोजकम्। यत्राप्रयोजकत्वशंका नावतरति, स एव सद्धेतुः। तदुक्तं **श्लोकवार्तिके,** "अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः। तैर्दृष्टैरपि नैवेष्टा

।धिकतया नियतः संबन्धो व्याप्तिरित्युक्तं भवति ॥

॥ व्याप्तिग्रहोपायनिरूपणम् ॥

श्लो॰ यथोपलम्भं भूयोभिर्दर्शनैर्गम्यते तु सा । सकृदेवानवच्छिन्नसंबन्धो न हि भासते ॥८१

तदुक्तं वरदविष्णुमिश्रैः—"तस्मादनुमानाङ्गभूता व्याप्तिर्भूयोदर्शनादसेयैव" इति ॥

तत्त्वरत्नाकरे तु सा सकृद्दर्शनसाध्यैवोक्ता—

"संबन्धोऽयं सकृद्ग्राह्यः प्रतीतिस्वरसात् तथा । प्रतीतयो हि स्वरसाद्धर्मधर्म्यवधीन् विदुः ॥"

---

व्यापकांशावधारणा" इति । हेत्वतिरिक्तो यः साध्यप्रयोजक इष्यते, स एवोपाधिः । तन्निष्ठैव व्याप्तिर्हेतावारोप्यते इति तत्र हेतोर्न वस्तुतो व्याप्यत्वम् । अत एव तार्किकैरप्यनौपाधिकः संबन्धो व्याप्तिरित्युक्तम् । संबन्धश्च साध्यहेत्वोः सामानाधिकरण्यम् तस्यानौपाधिकत्वोक्तौ नियतत्वमर्थतः सिध्यति । अत्र **निरुपाधिकतयेति** तृतीयान्तप्रयोगात् निरुपाधिकता प्रयुक्तः उपाध्यभावज्ञानाधीननिश्चयविषयः पूर्वोक्तोऽविनाभावः नियतसंबन्धो व्याप्तिरित्यवसितम् । एतेन निरुपाधिकसंबन्धो व्याप्तिरिति व्याप्तिलक्षणे उपाधिप्रवेशे, उपाधिलक्षणस्य साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वरूपत्वात् तत्र व्याप्तिप्रवेशात् सा व्याप्तिश्च निरुपाधिकत्वघटितेति आत्माश्रयान्योन्याश्रयदोषशंकाया नानवकाशः । **निरुपाधिकतयेति** तृतीयाप्रयोगात् व्याप्तिलक्षणे उपाध्यनिवेशात् । अन्ततः अनुकूलतर्कबलात् व्याप्तिज्ञानस्यानुमितिकारणत्वमित्युक्तं भवति । सर्वमुपरि स्पष्टयिष्यते ।

ननु हेतुसाध्ययोर्यत्र दर्शनं तत्र मिथस्सामानाधिकरण्यमेव गृह्येत ; कथं तदभाववदवृत्तित्वादिरूपव्याप्तिस्तत्र ज्ञायेतेत्यत्र व्याप्तिग्रहोपायमाह **यथोपलम्भ**मिति । अग्निधूमयोरेकत्र सकृद्दर्शनमात्रेण व्याप्तिर्न भासते । पर्वते महानसे वा यत्र क्वचित् दर्शने पर्वतादिविशेषवच्छिन्न एव संबन्धो भासते ; न तु किञ्चिद्विशेषानवच्छिन्नः । सामान्येन हेत्वधिकरणग्रहणेन हेत्वधिकरणावच्छिन्नं सामानाधिकरण्यमिति सर्वहेत्वधिकरणनिरूपितसामानाधिकरण्यरूपः संबन्धो न भासते । पुनःपुनरग्निधूमसामानाधिकरण्ये गृहीते सा व्याप्तिर्गृह्यते । अनेकस्थलदर्शनमात्रेण सर्वस्थलसंबन्धः कथं गृह्येतेति चेत्—तत्रोक्तं **यथोपलम्भ**मिति । बहुस्थलदर्शने तथाग्रहणस्यानुभवसिद्धत्वात् तदपलापो न युज्यत इत्यर्थः । सर्वग्रहणनिर्वाहक **भट्टपाद** पक्षमाह **तत्त्वरत्नाकरे**त्विति । अयं व्याप्तिरूपः संबन्धः **सकृत् ग्राह्यः**=सकृदग्निधूमोभयग्रहणेनापि ग्राह्यो भवति,, **प्रतीतिस्वरसात्** अग्न्यादिप्रतीतेः सर्वव्यक्तिविषयकत्वात् **तथा** सकृद्ग्रहणेनैव ग्राह्यता । प्रतीतयः, अग्निः, धूमः, अग्न्यधिकरणं, धूमाधिकरणम् , धूमसामानाधिकरण्यम्, अग्निसामानाधिकरण्यमित्येवंरूपाः अग्न्यादिरूपधर्माणां अधिकरणादिरूपधर्मिणाञ्चावधीन् इयत्ताः—यावत्यस्ता व्यक्तयः तावतीरपि सकृदेव एकदैव स्वरसतो **विदुः** गृह्णन्तीत्यर्थः । इन्द्रियासंनिकृष्टव्यक्तिग्रहणं कथमित्यत्र—सर्वव्यक्तिषु स्थितं सामान्यमेव संनिकर्षः, तद्घटितसंनिकर्षस्यापि स्वीकारादित्याह

इत्यादिना। सकृदेव च सर्वधूमव्यक्तिग्रहणमपि सामान्यरूपैक्यादुपपादितम्। असंनिकृष्टेष्विन्द्रियसंप्रयोगश्च संयुक्ताश्रिताश्रयत्वमित्युक्तम्—

"संनिहितधूमादिव्यक्तिसंयुक्तस्येन्द्रियस्य—तदाश्रितधूमत्वादिः संयुक्ताश्रितः, तदाश्रयत्वेन व्यक्त्यन्तराणि संप्रयुक्तानि" इत्यादिना, "तृतीयः संनिकर्षोऽयं संनिकर्षनिरूपणे। अनुक्तस्तत्प्रमेयस्य व्याप्तेरत्रैव साधनात्॥" इत्यनेन॥

इदं तु सर्वप्रत्यक्षत्वप्रसङ्गभीरवो वैभवं मन्यन्ते; पूर्वपूर्वसहदर्शनजनितसंस्कारप्रचय-

---

**सकृदेव चे**त्यादिना। प्रत्यक्षनिरूपणावसरे इन्द्रियसंयोगः इन्द्रियसंयुक्ताश्रितत्वमिति संनिकर्षद्वयमित्युक्तम्, अत्रेन्द्रियसंयुक्ताश्रिताश्रयत्वमिति संनिकर्षान्तरमप्यस्तीति अनुभवानुरोधादुच्यते। तथा च यावन्ति हेतुसाध्ययोः, सामानाधिकरण्यानि तावन्त्यपि तदा गृह्यन्ते। **इन्द्रियस्ये**त्यस्य **संप्रयुक्तानी**त्यनेनान्वयः **संनिकर्षनिरूपणे** तन्निरूपणार्थे प्रत्यक्षघट्टे। **तत्प्रमेयस्य** तृतीयसंनिकर्षाधीनज्ञानविषयस्य। **प्रमेयस्ये**ति सामान्ये नपुंसकं सत् व्याप्तिविशेषणम्। अयमेव संनिकर्षः सामान्यलक्षणप्रत्यासत्तिरित्युच्यते। सयोगवत् अस्य प्रत्यासत्तित्वं न स्वीकार्यमिति वदतामाशयमाह **इदं त्वि**ति। **इदं** संनिकर्षग्रहणं **वैभवं** विभुत्वाधीनं वक्तृगौरवादंगीकुर्युरित्याशयकृतमित्यर्थः। अत्र हेतुः सर्वप्रत्यक्षत्वप्रसंगः। घटदर्शने घटत्वरूपसामान्यग्रहणात् सर्वघटग्रहणवत् द्रव्यत्वसामान्यात् सर्वद्रव्यग्रहणं प्रमेयत्वरूपसामान्यप्रत्यासत्त्या सर्वप्रमेयग्रहणं स्यात्। तथाच सर्वज्ञः स्यादिति भावः; अतीन्द्रियमपि प्रत्यक्षं स्यादिति च भावः। सामान्यप्रत्यासत्तिवादिन एवमाहुः—प्रमेयत्वेन सर्वज्ञानेऽपि, यत् यत् वस्तु यद्यद्धर्मकं तावत्तद्धर्मवत्तया तत्तद्वस्तुग्रहणाभावात् न विवक्षितं सर्वज्ञत्वमिह सिध्येत्। न च भूतलं घटवदिति ज्ञाने भूतलवृत्तिप्रमेयत्वरूपसंनिकर्षात् भूतलस्येव सर्वस्य विशेष्यतया घटवृत्तिप्रमेयत्वमुखेन सर्वप्रमेयस्यापि प्रकारतया च भानात् सर्वधर्मधर्मिज्ञानं भवत्येवेति वाच्यम्—सामान्यप्रत्यासत्त्यनंगीकारिणोऽपि सर्वं प्रमेयवदिति ज्ञानमादाय सर्वज्ञत्वापत्तेः॥ अथ नैवम्; प्रमेयत्वरूपेण सर्वधर्मभानेऽपि घटत्वपटत्वादेः स्वरूपेण भानाभावात्। स्वरूपेण भानं नाम अनवच्छिन्नप्रकारता। सर्वज्ञत्वं नाम किञ्चिदवच्छिन्नप्रकारताः अनवच्छिन्नप्रकारताश्च यावत्यः तावन्निरूपकज्ञानाश्रयत्वम्। इदं प्रमेयवदिति ज्ञानमात्रेण न भवतीति चेत्—सामान्यप्रत्यासत्तिपक्षेऽपि तुल्यमिदम्। अत एव सामान्यप्रत्यासत्त्या सर्वज्ञत्वेऽपि सर्वत्र संशयाद्युपपत्तिः। **सर्वार्थसिद्धौ** च (4-4-40) सर्वज्ञत्वापत्तिरियं प्रत्युक्ता अथापि सर्वप्रत्यक्षापत्तिः शिष्यते। अलौकिकविषयतरूपमिष्टम्? लौकिकविषयताया अभावादप्रत्यक्षत्वव्यवहार इति वक्तव्यम्—ईदृशप्रत्यासत्तेरीदृशप्रत्यक्षस्य च स्वीकारः किमर्थः। यथा एकस्मिन्नग्नौ चक्षुस्संनिकृष्टे तद्बलेन तद्गतसंख्यापरिमाणादिसर्वग्रहणम्, तथा चक्षुसंयुक्ताश्रितसामान्याश्रयत्वरूपसंनिकर्षात् स्वीकृतादसंयुक्ताग्निव्यक्तीनामिव तद्गतसंख्यापरिमाणादीनामपि ग्रहणे सति, तृतीयः संनिकर्षोऽपि संमन्येत, तच्च न। अन्यथासंयुक्ताश्रिताश्रयत्ववत्

सहकृते त्वन्तिमे प्रत्यक्षे सकृदेव सामान्यतस्तज्जातीयसमस्तसंग्राहिणि(णी) सिद्धे(द्धिः) सामग्रीमहिम्नाप्यसंबद्धप्रकाशा(शना)योगात् । संभावितसंबन्धमात्रप्रकाशनपरत्वे तु नातिप्रसङ्गः ॥ एवम(श्वा)स्तु सकृद्दर्शनेन भूयोदर्शनेन वा व्याप्तिग्रहः ; तत्राप्यन्तिममन्यद्वा ग्राहकं बाह्यं मानसं वास्तु ; तत्र सर्वैरपि भूयोदर्शनं न परित्याज्यम् । तत्रापि भूयोदर्शनजनितसंस्कारसमुदायाधीनविमर्शविशेषेणोपाधिसंभावनामुच्छिन्दता निःशङ्कसंबन्धनियम-

---

संयुक्तव्यापकत्व-संयुक्तकारणत्वा-कार्यत्वसंयुक्तभिन्नत्वाद्यनेकसंनिकर्षकल्पनया सर्वं प्रत्यक्षमित्यपीष्यताम् नतु संयुक्तव्यापक-तत्कार्यकारणादिषु क्लृप्तसंनिकर्षाभावादप्रत्यक्षतैवेति चेत्— तुल्यमिदमसंनिकृष्टाग्निधूमसामानाधिकरण्यादिष्वपि । अत इयं वैभवोक्तिरेवेति ।

तर्हि पूर्वपूर्वसंस्कारसहकृतात् सर्वसामानाधिकरण्यव्यक्तिप्रत्यक्षमस्त्वित्यत्राह **पूर्वे**ति । अत्र **सहकृते** इति प्रत्यक्षविशेषणात् संस्कारसहकारिकारणकं प्रत्यक्षं सर्वसंग्राहिज्ञानजनकमित्यर्थो वक्तव्यो भवति । सहकृतेरिति पञ्चमीसत्त्वे तु संनिकर्षस्य संस्कारसहकारात् सर्वविषयकप्रत्यक्षमित्यर्थो युज्यते । **सहदर्शन**मग्निधूमयोः । एकैकाग्निधूमयोः । एकैकाग्निधूमसहदर्शनजनिततत्तत्संस्काराणां मेलनेन सांप्रतिकाग्निधूमव्यक्तिप्रत्यक्षं तावत्संस्कारसमुदायसहकारात् सर्वव्यक्तिविषयकत्वे सिद्धे=अभिमते, तत्रापि तया सामग्र्या यावत्संस्कारविषयव्यक्तीनां संबन्धस्तासां प्रत्यक्षमित्येव सम्यक् । तदा न सर्वप्रत्यक्षत्वापत्तिरूपोऽति प्रसंगः, सर्वेषां संबन्धत्वाकल्पनात् । तर्हि सकृद्ग्राह्यत्वमस्ति न वेति चेत्—एतच्छोधननिष्पन्नमाह **एवमि**ति । सामान्यलक्षणप्रत्यासत्त्यधीन सर्वव्यक्तिग्रहणकृतो व्याप्तिग्रह इत्यनभ्युपगमेऽपि पूर्वपूर्वसंस्कारादिजनितनानाव्यक्तिज्ञानादेकस्मात् सकृज्जातात् व्याप्तिग्रहो भवतीति स्वीक्रियते । क्वचित् व्यभिचारशंकाद्यभावे सकृद्ग्रहणेऽपि केषांचित् व्याप्तिग्रह उदेति । स चाबाधितस्तन्मात्रजन्यत्वेन स्वीकर्तव्य एव भूयोदर्शनकारितभूयस्संस्काराधीनव्याप्तिग्रहस्य भूयोदर्शनाधीनत्वमेव । पूर्वेषां दर्शनानां नष्टत्वेऽपि अन्तिमस्य पूर्वसंस्कारसाचिव्यात् व्याप्तिग्रहकारणत्वम् । अथवा पूर्वसंस्कारप्रचय—अन्तिमप्रत्यक्षोभयजन्य**मन्यत् मानसं** व्याप्तिग्रहजनकम् । **सर्वै**रपि=पूर्वपूर्वसंस्कारसाचिव्यवादिभिरपि । एकव्यक्तिदर्शनमात्रेण यस्य क्वचित् व्याप्तिग्रह उदितः, तस्यापि शंकायां प्रसक्तायां भूयोदर्शनमपेक्षितमिति भावः । ननु भूयोदर्शनेऽपि द्वयोर्मध्ये इदं व्याप्यमिदं व्यापकमिति कुतो निर्णयः । इदमस्तु तन्माऽस्त्विति प्रश्ने च किमुत्तरम् तत्राह **विमर्शविशेषणे**ति । द्वयोर्न्यूनाधिकदेशवृत्तित्वं परिशीलनीयम् । विपक्षशंकायामनुकूलतर्कोऽप्यनुसंधेयः । तेन सोपाधिकत्वशंका व्युच्छिद्यते । ततः संबन्धनियमः=सामानाधिकरण्यनियमः—सर्वव्याप्यव्यक्तिगता साध्यनि रूपितव्याप्तिः सिद्ध्यति । गृहीतव्यक्तिष्विवागृहीतहेतुव्यक्तिष्वपि साध्यसामानाधिकरण्याभ्युपगमबाधकमुपाधिशंकनम् । तदुच्छेदे सर्वव्यक्तिव्याप्तिग्रहणमस्त्येव । लोकसिद्धार्थस्यापलापायोगात् । मीमांसकास्तु यैर्यावद्व्यक्तिषु साध्यसामानाधिकरण्यं गृहीतम्, तावद्व्यक्तिज्ञानादेवानुमितिर्भवेदिति मन्यन्ते;

सिद्धिरिति च सिद्धम्। अतः परं तु विकल्पनमायासायैवेति विरम्यते ॥

तादात्म्य.तदुत्पत्तिभ्यामेवाविनाभाव इति सौगताः। यथाहुः—

"कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमो दर्शनान्न नदर्शनात् ॥" इति :

तदसत्; अकार्यानात्मभूतकृत्तिकोदयादिना अकारणानात्मभूतरोहिण्युदयाद्यनुमानात्। कथं च तादात्म्ये लिङ्गलिङ्गिभावः? तथात्वेन वा भेदे कथं तत्? यदि च शिंशपात्ववृक्षत्व-

---

तेषां पक्षे अनुमितिः संभावनात्मकसंशयरूपैव स्यात्; विपक्षबाधकोपन्यासश्च व्याप्त्यस्वीकारे न भवति इत्यादिकमभिप्रेत्याह **अतः परं**त्विति। भूयोदर्शनं नाम—अनेकसाध्यहेतुव्यक्तिविषयकानेकज्ञान-व्यक्तय **एव** स्वरसतः। एकमात्रवृत्तिहेतुसाध्यकस्थले पूर्वमेव तथात्वे निर्णीते किमित्यनुमानम् पार्थिवत्वलोहलेख्यत्वयोर्वज्रमणौ सामानाधिकरण्यभंगात् भूयोदर्शनं न निश्चायकमिति चेत्—व्यभि-चारादर्शनेऽपि श्यामत्वमित्रातनयत्वयोर्व्याप्तिर्निर्णेष्यते सत्यपि भूयोदर्शने। अतोऽप्रयोजकशंकापरिहार-कानुकूलतर्कोऽपेक्षितः। शेषमुपरिष्टात् ॥

व्याप्तिग्रहोपायो भूयोदर्शनं निरुपाधिकत्वनिश्चायकतर्कसहकृतमित्युक्तम्। बौद्धास्तु कार्यात् कारणा नुमानम् अग्निमान् धूमादिति; तादात्म्यादनुमानम्—अयं वृक्षः शिंशुपायाः इतीति कार्यत्वं तादात्म्यञ्चेति द्वयमेव व्याप्तिग्रहोपायं मन्यन्ते। तदनुवदति **तादात्म्ये**ति। **तदुत्पत्तिः** तस्मादुत्पत्तिः तत्कार्यत्वं तस्य कारणस्यानुमापकम्। **कार्ये**ति व्यावस्थापकः कार्यकारणभावः स्वभावश्च। स्वस्य भावः स्वरूपं स्वतादात्म्यमेव **स्वभावः**। प्रकारान्तरप्रयुक्तमविनाभावं वारयितुं **नियामका**दित्युक्तम्। बौद्धः परपक्षं प्रतिक्षिपति **दर्शनान्ननदर्शनादि**ति। नदर्शनादिति नशब्देन समासः। वस्तुनोऽन्वये सति दर्शनं भवति, व्यतिरेके तु न दर्शनम्। अतो दर्शनादर्शनशब्दौ तत्कारणयोरन्वयव्यतिरेकयोर्लक्षकौ। ययोरन्वयव्यतिरेकौ स्तः, एतदन्वये तदन्वयः तदभावे चैतदभावः इति, तयोरविनाभावनियमः—व्याप्य व्यापकभाव इति सर्वसाधारण्येन न वक्तव्यम्; तादात्म्यं तदुत्पत्तिरित्युभयमेव व्याप्तिग्राहकमिति तन्मतम्—इदं कणादादिभिः खण्डितम्, "संयोगि समवायि एकार्थसमवायि विरोधि च" (वैशे. 3.1.9.वै) इत्यादिकमपि दर्शितम्। अतस्तादात्म्यतदुत्पत्तिस्थलभिन्नेऽप्यविनाभावसत्त्वादनुमानत्वमबा-धितमिति उदाहरणप्रदर्शनेन निरस्यति **तदस**दिति। कार्यं वा, आत्मा (स्वरूपं) वा हेतुरिति न नियमः। कृत्तिकोदयं दृष्ट्वा रोहिण्युदयं भाविनमनुमिन्वते। तत्र कृत्तिकोदयो न रोहिण्युदयकार्यम्, नापि तयो-स्तादात्म्यम्। अतोऽकार्यादकारणस्य, हेतुतादात्म्यानापन्नस्य चानुमानमस्तीत्यर्थः। **आदि**ना कार्यत्वता-दात्म्यरहितरसरूपादिस्थलसंग्रहः। अन्यत्राविनाभावेऽनुपपत्तिं मन्यमानं बौद्धं प्रति तदिष्टस्थलेऽप्य-नुपपत्तिं दर्शयति **कथं**चेति। हेतुसाध्ययोस्तादाम्ये हेतुनिश्चयस्यैव साध्यनिश्चयरूपतयाऽनुमेयाभावात् **कथं** लिंगलिंगिभावः। लिङ्गलिंगिभावदर्शनात् तेन वृक्षशिंशपयोर्भेदे त्वदिष्टे **तत्** तादात्म्यं कथम्।

योरैक्यम्, सर्वोऽपि वृक्षः शिंशपैव स्यात्, न वा कश्चित् ॥ किं च
सति भावो न कार्यत्वं किं तु सत्येव भाविता। तस्माच्चेदविनाभावः स्यादात्माश्रयणं ध्रुवम्॥८२

॥ व्याप्तिविभागः ॥

व्याप्तिर्द्विधा—अन्वयव्यतिरेकभेदात्। साधनविधौ साध्यविधिरूपेण प्रवृत्ता व्याप्तिरन्वयव्याप्तिः ; यथा—यो धूमवान्, सोऽग्निमानिति। साध्यनिषेधे साधननिषेधरूपेण प्रवृत्ता व्यतिरेकव्याप्तिः ; यथा—योऽनग्निः स निर्धूम इति ॥

॥ उपाधिनिरूपणम् ॥

सेयमुभयविधापि व्याप्तिरुपाधिसंभवे दुष्यति। साधनाव्यापकत्वे सति साध्यसमव्याप्तः

---

वृक्षत्वशिंशुपात्वविशिष्टधर्म्यैक्यात् तादात्म्यम्। तत्तद्धर्मविशिष्टरूपेण भेद इति चेत्—तर्हि इयं शिंशपा वृक्षादित्यपि प्रयुज्यताम्। स हेतुर्व्यभिचरित इति चेत्—तर्हि तादात्म्यमात्रं न नियामकम्; किं तु तदन्तर्भूतत्वम्। यदि च वृक्षत्वमेव साध्यम्, शिंशुपात्वमेव हेतुः—तदा न तादात्म्यम्। तादात्म्यञ्च तयोर्धर्मधर्म्यैक्यादिति चेत्—यदि वृक्षत्वं शिंशुपात्वं चैकम्, तर्हि शिंशुपाभिन्नो वृक्षो न भवेत्; सर्वोऽपि वृक्षः शिंशुपा वा स्यात्। वृक्षान्तरवत् शिंशुपाऽपि वा वृक्षो न भवेत्। अतो वृक्षत्वशिंशुपात्वयोः सामान्यविशेषधर्मयोः न तादात्म्यं नवा कार्यकारणभाव इत्यन्यथैवाविनाभावः। तदुत्पत्तेरपि नियामकत्वाभावमाह **किञ्चेति**। **सति** भावः=तस्मिन् **सति** वर्तमाने अनन्तरक्षणे कस्यचिदुत्पत्तिः यथा कुलालादौ सति घटस्योत्पत्तिरिति घटस्य कुलालकार्यत्वमिति चेत्—कदाचित् रासभे सति पश्चात् घटोत्पत्तेर्दृष्टत्वात् रासभकार्यत्वमपि घटे स्यात्। घटेन रासभोऽनुमातव्यः स्यात्। यदि नैतावन्मात्रं कार्यत्वम्। किं तु **सत्येव भाविता**। अत्र रासभे सत्येव घटो भवतीति न; कुलालादौ सत्येव स इति चेत्—तर्हि एवकारलभ्यं किम्। तदभावेऽनुत्पत्तिः। तथा च यदभावे कार्यं न भवतीत्युक्तौ, रासभाभावः घटाभावश्च क्वचिन्मिलितौ, क्वचित् घटरासभावपीति तत्कार्यत्वापत्तिः। अतः सत्येव भावितेत्यनेन तदभाववदवृत्ति यत्, तत् अविनाभूतमिति वक्तव्यम्। तत्राविनाभूतत्वमपि तदभाववदवृत्तित्वमेवेत्यात्माश्रय इत्यर्थः। एवं नियतपूर्ववृत्तित्वमेव कारणत्वमिति कार्यत्वं व्याप्यत्वमेव।

**अन्वयव्यतिरेकभेदात्**। यत्र हेतु तत्र साध्यमिति अन्वयस्य=हेतुसाध्ययोः द्वयोः सत्त्वस्य व्याप्यव्यापकभावः। साध्यनिरूपिता हेतुनिष्ठा व्याप्तिः परामर्शविषयः। यत्र न साध्यं तत्र न **हेतुरिति** व्यतिरेकयोरविनाभावः, स्वाभावनिरूपितव्याप्तिमत्साध्याभावकत्वं हेतुनिष्ठं परामर्शविषयः।

निरुपाधिकतयेति प्रागुक्तम् किमिदमुपाधित्वमित्यत्राह **सेयमिति**। **उभयविधाऽपि** साधननिष्ठा साध्याभावनिष्ठा च दुष्यति भ्रान्तेरेव विषयीभवति। वस्तुतो नास्तीति यावत्। उपाधिलक्षणमाह **साधनेति**। धूमवान् वह्नेरित्यत्र वह्निसंयुक्तार्द्रेन्धनमुपाधि ; वह्निमदयोगोलके तदभावेन साधनाव्यापकत्वात्

साधनधर्मव्यतिरिक्तो धर्म उपाधिः। सावयवत्वादनित्यत्वसाधने कृतकत्वस्य, कृतकत्वादनित्यत्वसाधने सावयवत्वस्य, समव्याप्तहेतुप्रयोगे तत्स्वरूपस्य चोपाधित्वव्युदासाय विशेषणत्रयम्। पक्षेतरत्वादेरुपाधित्वव्युदासाय तु समशब्दः। इतरथा साध्यव्यापक इत्येता-

---

धूमरूपसाध्यसमव्याप्तत्वात् धूमापेक्षयाऽऽर्द्रेन्धनस्य भिन्नत्वाच्च। साधनाव्यापकत्वमित्यत्र व्यापकत्वमधिकदेशवर्तित्वम्। अतः साधने साधनव्यापकत्वाभावादव्यापकत्वमस्तीति साधनस्याप्युपाधित्वापत्तिः; तद्वारणाय **साधन**धर्मव्यतिरिक्तत्वनिवेशः। तच्च साधनभिन्नत्वमेव। ननु साधनेऽप्युपाधिलक्षणमस्तु; तावता को दोषः। न हि व्याप्तिरुपाधिगतैव साधने आरोप्यत इति वस्तुतः साधनं व्याप्तिरहितमिति वक्तुं शक्यते, उपाधिसाधनयोरेकत्वादिति चेत्—अत एव तस्यालक्ष्यत्वात् तत्र लक्षणसत्त्वेऽतिव्याप्तिर्दोष इति तद्वारणं कार्यमेवेति। साधनाव्यापकत्वमित्यत्राधिकदेशवर्तित्वरूपव्यापकत्वमनिवेश्य यावत्साधनाधिकरणवर्तित्वरूपव्यापकत्वनिवेशे तु साधने साधनाव्यापकत्वाभावादेव वारणात् साधनधर्मव्यतिरिक्तत्वदलं न निवेश्यम्। साध्यसमव्याप्तत्वं नाम साध्यव्यापकत्वे सति साध्यव्याप्यत्वम्। क्रमेण दलत्रयकृत्यं दर्शयति **सावयवत्वादि**ति। इदमनित्यं सावयवत्वात् इदमनित्यं कृतकत्वादिति हेतुद्वयमपि निरुपाधिकमिष्टम्। प्रथमदलानिर्देशे प्रथमे कृतकत्वमुपाधिः स्यात् कृतकत्वस्यानित्यत्वसमव्याप्तत्वात् सावयवत्वरूपसाधनभिन्नत्वाच्च। साध्यसमव्याप्तत्वानिवेशे द्वितीयानुमाने सावयवत्वमुपाधिः स्यात् कृतकत्ववति गुणादौ सावयवत्वाभावेन साधनाव्यापकत्वात् साधनभिन्नत्वाच्च। साध्यसमव्याप्तत्वनिवेशे तु अनित्यत्वव्यापकत्वस्य सावयवत्वेऽभावाद्वारणम्। समव्याप्त इत्यत्र व्याप्तत्वं व्यापनाश्रयत्वं व्यापकत्वम्। अनित्यं कृतकत्वादिति समव्याप्तहेतुः। तत्र तस्यैवोपाधित्वासंभवात् तद्वारणाय साधनभिन्नत्वनिवेशः। कृतकत्वं जन्यत्वम्; अनित्यत्वं ध्वंसप्रतियोगित्वम्। तदुभयं समनियतम्। न च प्रागभावे ध्वंसे चैकतरवति अन्यतराभावात् न समव्याप्तत्वमिति वाच्यम्, भावातिरिक्ताभावानङ्गीकारात्। तत्स्वीकारपक्षे तु भावत्वे सतीति विशेषणं पूरणीयम्। **समे**ति पदात् साध्यसमस्सन् व्याप्त इत्यर्थे साध्यस्य तत्स्यापि लभ्यं भवति व्याप्यत्वम्। तत् किमर्थमित्यत्राह **पक्षे**ति। पर्वतो वह्निमान् धूमादित्यत्र पक्षेतरत्वमुपाधिः स्यात्, धूमवति पर्वते तदभावेन साधनाव्यापकत्वात् साधनभिन्नत्वात् साध्यव्यापकत्वाच्च। वह्निव्याप्यत्वं तु तस्य न भवति ह्रदादावपि पक्षेतरत्वसत्त्वात्। **पक्षेतरत्वादी**ति आदिना किञ्चित्पक्षव्यक्तेस्तद्व्यक्तित्वेन ग्रहणेन तद्भिन्नत्वरूपोपाधिग्रहणम्। **इतरथा**=पक्षेतरत्वस्याव्युदसनीयत्वे। अयं भावः—पक्षे साध्यं वस्तुतोऽस्ति न वा; अस्ति चेत्, पक्षेतरत्वे वस्तुतः साध्यव्यापकत्वमेव नास्तीति न तस्योपाधित्वम्। अथापि पक्षे साध्यसंदेहात् उपाधौ साध्यव्यापकत्वसंदेहात् संदिग्धोपाधिरिति चेत्—उपाधिसंदेहो व्याप्तिसंदेहमेव जनयेत्। व्याप्तिसंदेहोऽनुकूलतर्केत एव निवर्तेतेति नास्य बाधकत्वम्। साध्यं वस्तुतः पक्षे नास्तीति चेत्—तत्र हेतोर्व्यभिचारित्वात् पक्षेतरत्वमपि काममुपाधिर्भवत्विति। उपाधिलक्षणे साध्यव्याप्यत्वस्यापि निवेशे

वता सावयवत्वादेरुपाधित्वव्युदासः शक्यः । सावयवमीश्वरविग्रहादिकं नित्यतया श्रुत्यादिसिद्धमनभ्युपगच्छतां सावयवत्वादि उदाहरणम् । अभ्युपगच्छतां तु द्रव्यत्वात् वाच्यत्वसाधने वस्तुत्वस्य, वस्तुत्वाद् वाच्यत्वसाधने द्रव्यत्वस्य चोपाधित्वव्युदासाय विशेषणद्वयमित्युदाहर्तव्यम् । न चोपाधिव्याप्त्योर्निरूपणे अन्योन्याश्रयता; यावत्साधनदेशमवर्तमानो यावत्साध्यदेशवर्तीत्युपाधिनिरूपणात् ॥

स च द्विधा—निश्चितः शंकितश्च । व्याप्तः पक्षे नास्तीत्यवधारितो निश्चितोपाधिः; यथा—विप्रतिपन्ना सेवा दुःखहेतुः, सेवात्वात्, राजसेवावत् इत्यनुमाने पापारब्धत्वम् । अयं च ईश्वरसेवायां नास्तीति शास्त्रतो निश्चितत्वात् व्याप्तत्वाच्च निश्चितोपाधिः । पक्षावृत्ति-व्याप्त्योरन्यतरस्यापि संदेहे संदिग्धोपाधिः । तत्राऽऽद्यो यथा—विप्रतिपन्नो जीवः एतच्छरीरावसाने मुक्तिमान् निष्पन्नसमाधित्वात् शुकादिवदित्यत्र कर्मात्यन्तपरिक्षयः । स च निष्पन्नसमाधौ विप्रतिपन्ने जीवे, अस्ति वा नास्ति वेति संदिग्धत्वाच्छङ्कितोपाधिः । यद्यपि योगिनामुत्तरपूर्वाघयोरश्लेषविनाशौ भवतः, तथापि प्रारब्धकर्मणामेकशरीर एव पर्यवसानमिति न नियमः, निष्पन्नोपायस्यापि प्रतिबन्धककर्मविशेषात् अनेकदिवसस्थितिवत् अनेकशरीरपरिग्रहोपपत्तेः । तथा च सूत्रितम्—"भोगेन त्वितरे क्षपयित्वाऽथ

---

वक्ष्यमाणरीत्या तस्योपाधिशब्दवाच्यत्वे औचित्यमपि दर्शितं भवति । यथा स्फटिकस्य जपाकुसुममुपाधिः, स्वगतारुण्यस्य स्फटिके समीपे स्थित्वा आरोपकत्वात्,—तद्वत् हेतौ स्वगतव्याप्त्यारोपकत्वादुपाधित्वमिति—तथापि व्याप्यत्वरहितस्यापि साध्यव्यापकत्वसाधनाव्यापकत्वोभयमात्रेण हेतुदूषकत्वसंभवात् व्याप्यत्वदलमर्वाचीनैरुपेक्षितमिति ध्येयम् । ननु अनित्यं सावयवत्वादित्यस्य निर्दुष्टत्वं कथम्, व्यभिचारादित्यत्राह **सावयव**मिति । सिद्धान्ते तस्य न सद्धेतुता । तदाऽन्यत्र दलकृत्यं वक्तव्यमिति । ननु साधनाव्यापकत्वं नाम साधननिष्ठव्याप्यतानिरूपकत्वम् । व्याप्तिश्चोपाधिरहितः संबन्ध इति मिथो घटनादन्योन्याश्रय इत्यत्राह **नचे**ति । **यावत्साधने**ति । किञ्चित्साधनदेशनिष्ठाभावप्रतियोगीत्यर्थः । **यावत्साध्ये**ति; साध्यसमानाधिकरणाभावाप्रतियोगीत्यर्थः । **व्याप्तः**=व्यापकः ; साध्यदेशं व्याप्नोतीति । साध्यव्यापकत्वेन पक्षावृत्तित्वेन च निश्चितो यः स आद्यः । **विप्रतिपन्ना** विवादास्पदभूता परमात्मसेवा । **शास्त्रत** इति । सुकृतदुष्कृतधूननानन्तरमेव लभ्यत्वात् स्वाभाविकानुभवपरीवाहत्वात् स्वसंकल्पकृतत्वाच्चेति भावः । शंकितमाह **पक्षे**ति । न वृत्तिरवृत्तिः आधेयत्वाभावः पक्षनिरूपिताधेयत्वाभावः व्याप्तिरित्यनयोरित्यर्थः । **अन्यतरस्ये**ति सामान्ये नपुंसकम् । **आद्यः** संदिग्धपक्षावृत्तित्वकः । **निष्पन्नसमाधित्वात्** प्रीतिरूपापन्नदर्शनसमानाकारज्ञानवत्त्वात् । **उत्तरपूर्वे**ति । दर्शनसमानाकारज्ञाने प्राप्ते सद्य एवाश्लेषविनाशावुक्तौ । तत्र विनाशः संचितमात्रविषयः । प्रारब्धकर्मणां **पर्यवसानं**

संपद्यते" इति, "यावदधिकारमवस्थितिराधिकारिकाणाम्" इति च। "विनिष्पन्न-समाधेस्तु मुक्तिस्तत्रैव जन्मनि" इत्यादिस्मृतिस्त्वनिष्पन्नसमाधेः शरीरान्तरयोगनियम-परतया प्रायिकविषया। अतो नास्य साधनव्यापकत्वम्।

अपक्षनिष्ठतया निश्चितोऽपि संदिग्धव्याप्तिको यथा—विप्रतिपन्नश्च अधर्मः, निषिद्ध-त्वात्, ब्राह्मणहिंसावदिति हिंसाव्यतिरिक्तसमस्तनिषिद्धपक्षीकारेण प्रयोगे हिंसात्वमुपा-धिरिति यदि कश्चिद् ब्रूयात्, तदा अग्नीषोमीयादिषु विपक्षेषु हिंसालक्षणमस्ति वा न वेति सांख्यवेदान्तिविप्रतिपत्त्या संदिहानस्य हिंसात्वं संदिग्धव्याप्तिकं भवति। पक्षे च स्वम्पतित-जन्तुभक्षणादौ निषिद्धेऽपि हिंसात्वं नास्त्येवेति निश्चितमिति॥

उपाधेश्च साधनाभिमतधर्मे स्वगतव्याप्यत्वाध्यासहेतुत्वादुपाधिशब्दवाच्यत्वम्।

---

नाशो न प्रपन्न इव तद्देहावसाने नियमेन। **अनेकदिवसे**ति। इदं, "स खल्वेवं वर्तयन् यावदा-युषम्", 'प्रायणान्तमोंकारमुपासीत' इत्यादिसिद्धम्। **भोगेने**ति। इतरे प्रारब्धपुण्यपापे भोगेनैव क्षपयित्वा भोगसमाप्त्यनन्तरमेव संपद्यते योगी। भोगश्चैकशरीरमात्रसाध्य इति न नियम इत्यर्थः। इदं साधारणयोगिविषयेऽपि। आधिकारिकवसिष्ठादिविषये तु सुस्पष्टमनेकजन्मपश्चाद्भावित्वमित्याह **यावदधिकार**मिति। **विनिष्पन्ने**ति। तुशब्दार्थे नैर्भर्यात् अनिष्पन्नसमाधेस्तत्र जन्मनि न मुक्तिरित्ये-तत्परमिदं वचनम्। विनिष्पन्नसमाधेस्तत्र न भवेदिति न, तत्रैव भवेत्, अन्यत्र वेति। एवमत्र विश-ब्दस्वारस्यात् अवताररहस्यचिन्तनविशिष्टसमाधिनिष्पत्तिमतः "पुनर्जन्म नैति" इति गीतत्वात् तत्रैव जन्मनि, न जन्मान्तरे इत्यर्थः सुवचः। एतद्गीताभट्टव्याख्यानं द्रष्टव्यम्। अस्त्वेतत्। प्रकृतं संदिग्धपक्षा-वृत्तित्वकत्वम्। तदाह **अत इ**ति। **विप्रतिपन्न**मिति हिंसाव्यतिरिक्तसर्वनिषिद्धपक्षीकार इति वदत्येव। **व्याप्ति**पदेनोपाधिनिष्ठासाध्यव्याप्तिर्विवक्षिता। **साध्यसमव्याप्त** इति प्रागुक्ततया तत्रापि संदेह-संभवात्। हिंसालक्षणं मरणोद्देश्यकव्यापारत्वमिति सांख्याः। तत् मीमांसकादिदृष्ट्या अधर्मत्व-रूपसाध्याभाववदग्नीषोमीयहिंसायामपि; अतो व्याप्तिर्नास्ति; वेदान्तिपक्षे अधिकसुखानुदर्कवेदनाजनकव्यापारत्वं हिंसालक्षणम्। तत् अग्नीषोमीयहिंसायां नास्तीति साध्यव्याप्तिरस्तीति स्यात्। अतः संदिग्ध-व्याप्तिकत्वम्॥ पक्षावृत्तित्वांशे निश्चयोऽस्तीति प्रदर्शनाय **पक्षे चे**ति। स्वयंपतितजन्तुभक्षणे हिंसात्वभ्रमेण शंकायामेतद्वाक्यं प्रवृत्तम्। साध्यव्यापकत्वसंदेहस्तु न प्रदर्शित.। पक्षान्तर्भावेन तस्य सर्वथैवोपाधौ सत्त्वेनाप्रयोजकत्वात्। पक्षातिरिक्ते क्वचित्—साध्यसंदेहात् भवत्विति चेत् तत्र हेतुसत्त्वात् यत्र यत्र हेतुस्तत्र साध्यमिति व्याप्तिभंगः स्पष्ट इति किमुपाधिकथनेन। अतः साध्ये सति उपाधिसंदेहात् साध्यव्यापकत्वसंदेहो भाव्यः। तदा पर्वतो धूमवान् वह्नेरित्यत्राऽऽर्द्रेन्धनसंयोगस्योपाधित्वे यस्य अयोगोलकादौ अग्निसंपर्कारम्भदशायां धूमसत्त्वेऽपि आर्द्रेन्धनसद्भावे संदेहः तस्य संदिग्धोपाधित्वमिति

तदेवं हेतोः सोपाधिकत्वे व्याप्यत्वासिद्धिः ; निरुपाधिकसंबन्धे व्याप्यत्वसिद्धिः ॥

केचित्तु व्यापकाभावात् व्याप्याभावप्रतिपादनमुखेन साध्यव्यापकस्योपाधेर्दूषणत्वमाहुः। तदा साधनाव्यापकत्वे सति साध्यव्यापक इत्येव वक्तव्यम्; तथापि सर्वस्य पक्षेतरत्वस्य नोपाधिता, पक्षस्य साध्यविपर्ययानिश्चये तद्व्यतिरिक्तत्वस्य व्यापकत्वानिश्चयात्।

नन्वतीन्द्रियोपाधिशङ्कायां कथं साध्यनिश्चयः॥ मैवम्, अनुमानाप्रामाण्यवादिभिरतीन्द्रियस्य शङ्कितुमप्यशक्यत्वात्। तत्र प्रामाण्याभ्युपगमे तु क्वचिन्निरुपाधिकत्वसिद्धावन्यत्रापि

---

चिन्त्यम्। ननु साध्यव्याप्तेरुपाधौ संदेहः स्यान्नाम; तावतोपाधेर्दूषकत्वं कुतो नेत्याशंकायामाह **उपाधेश्चेति**। उप—समीपे हेतौ स्वगता व्याप्तिराधीयतेऽनेनोपाधिनेति उपाधेरुपाधित्वम्। अतः स्वस्य साध्यव्याप्तिमत्त्वे सत्येव तदारोपः साधनेऽस्तीति साधनस्य स्वाभाविकव्याप्त्यभावः सुवचः स्यात्। अतो लक्षणे व्याप्तिघटनेन समव्याप्त एवोपाधिः सर्वत्र परिशीलनीय इति प्राचामाशयः। नव्यास्तु उपाधिशब्दव्युत्पत्तिनिमित्तपरिशीलने तथा प्रतीतावपि व्याप्त्यारोपं विना प्रकारान्तरेणापि साध्यव्यापकसाधनाव्यापकवस्तुमत्त्वज्ञाने हेत्वाभासत्वावगमात् तत्साधारण्येन तावदेवोपाधिशब्दप्रवृत्तिनिमित्तमस्तु, व्युत्पत्तिनिमित्तापेक्षयाऽन्यप्रवृत्तिनिमित्तकथनस्य गोपदादौ दृष्टत्वादित्याहुः। तदाह **केचित्तु** इति। **आहुरिति**। उपाधेः सत्प्रतिपक्षोन्नायकत्वमुक्तम्। इदमुपलक्षणम्, साध्यव्यापकोपाधिव्यभिचरितत्वेन हेतुना साधने साध्यव्यभिचारित्वानुमानात् व्याप्यत्वासिद्धेरपि सुवचत्वात्। तथापि साक्षादनुमितिप्रतिबन्धकत्वे संभवति तत्करणप्रतिबन्धकत्वकल्पनं न युक्तमिति इदमेवोक्तम्। नन्वेवं पक्षेतरत्वमुपाधिः स्यात्; समव्याप्त्यनिवेशेनैव पूर्वं तद्वारणादित्यत्राह **तथापीति**। सर्वस्येति। यत्र अग्निरनुष्ण इत्यत्रेव पक्षे बाधनिश्चयः, तत्र पक्षेतरत्वस्योपाधित्वमिष्टम्; अन्यस्य पक्षेतरत्वस्य नोपाधित्वमित्यर्थः। ननु पूर्वमेव बाधनिश्चये तत्रोपाधिना किं कर्तव्यमिति चेत्—मा भूत् कर्तव्यम्। तस्योपाधित्ववारणमपि न कर्तव्यम्। साध्याभाववति हेतुसत्त्वे व्यभिचारात् व्यभिचारोन्नायकस्यापि तत्र सत्त्वौचित्येन बाधेनोपाधेरुन्नयनस्य नैयायिकेष्टत्वात्। **व्यापकत्वानिश्चयादिति**। नन्वनिश्चयेऽपि संदिग्धत्वात् संदिग्धोपाधिः स्यादिति चेत्—न; साध्यव्यापकत्वसंदेहस्यास्य पक्षे साध्यसंदेहाधीनतया संदेहभञ्जकत्वाभावात्। साध्यसंदेहस्यानुमितिकारणतया प्रत्युतोपयोगित्वात्। किञ्चोपाधेः सत्प्रतिपक्षोन्नायकत्वमिति प्रकृत संदिग्धोपाधेर्न दूषकत्वम् व्यापकाभावनिश्चयेनैव व्याप्याभावस्यानुमेयत्वात् अत्र तदसंभवात्। अत एव संदिग्धोपाधेर्दूषकत्वं न स्यादिति मणिकारेण सत्प्रतिपक्षोन्नायकत्वपक्षः खण्डितः। अत्रापि ग्रन्थे **केचित्तु आहुरित्यनेन** संदिग्धोपाधेर्दूषकत्वासंभवरूपोऽस्वरसोऽभिमतः स्यात्। व्यापकत्वसंदेहमूलकसंदिग्धोपाधिरपि मणिग्रन्थादवसीयते; दीधितिव्याख्यायाञ्च—अथापि साध्यसंशयपर्यवसानान्न तस्य दूषकत्वं व्यभिचारोन्नयनपक्षेऽपि।

**नन्विति**। शंकितोपाधेरपि दूषकत्वे, सर्वत्रानुमाने अतीन्द्रियोपाधिशंकासंभवादनुमानोच्छेद एवे-

**तदविशेषात् । अपि च शंक्यमानोऽतीन्द्रिय उपाधिः सार्वत्रिको वा न वा । पूर्वत्र वह्न्यादेरपि सार्वत्रिकत्वप्रसङ्गः । उत्तरत्रापि नित्यो वा अनित्यो वा । नित्यत्वे साध्यस्यापि सदातन-त्वापातः । अनित्योऽपि हेतु[illegible], उभयाव्यापकः, अन्यतरव्यापको वा । आद्ये, साधनाव्यापकत्वाभावादनुपाधित्वम् [illegible] । द्वितीयेऽपि, उभयाभावेऽप्युभयव्याप्य-तामात्रेऽपि साध्यसमव्याप्त्यभावात् । तृतीयेऽपि साधनमात्राव्यापकस्य विशेष्यविशेषणयो-रभावात् । साध्यमात्रव्यापकस्य तु साधनाव्यापकत्वं पक्षादन्यत्र हेतोः स्वव्यतिरेकेण वृत्तेर्वा पक्ष एव वा स्यात् । न प्रथमः, तथा सति साध्यव्यापकव्यतिरेकेण वृत्तौ हेतोः साध्यव्यभि-चारः क्वचिदन्यत्र दृष्ट इत्युक्तं भवति । स एव प्रत्यर्थितां भजते ; अन्यथा तथाभूतोपाधेर-संभवः । द्वितीये तु सर्वत्र सपक्षे योऽसौ साध्यवदनुगत उपाधिः, तस्य तेनैव हेतुना पक्षे साधनात् हेतोस्तद्व्यभिचारस्याप्यसंभवात्, पक्षे चातीन्द्रियस्य तस्याभावस्याप्यदर्शनात् तेनापि**

---

त्याशयः । मैवं प्रष्टव्यम् । **अशक्यत्वादिति** । तस्यातीन्द्रियतयाऽनुमानेनातीन्द्रियतत्साधनेनोपाधित्वशंका कार्या । तदनुमानमपि तेषामप्रमाणमिति । **क्वचित्**=अतीन्द्रियोपाध्यनुमापकहेतौ । ननु मा भूदनुमानम् । तथापि तत्संदेहे निवृत्तिः कथमिति चेत्—निर्बीजशंकायाः सर्वत्र सुलभत्वात् तथाशंकनमनुचित-मित्येकं समाधानं कुसुमाञ्जल्युक्तम् । मुखान्तरेण शंकां परिहरति **अपि चेति** । अत्र बहुधा विकल्पे अन्ते “द्वितीये तु सर्वत्र सपक्षे” इति वक्ष्यमाणं समाधानं सारभूतम् । **व्यापको न वा**=सार्व-त्रिको न वा । **पूर्वत्रेति** । उपाधिरयं साध्यसमव्याप्तो विवक्षितः उत साध्यव्यापक एव । आद्ये साध्यव्याप्यस्योपाधेः सार्वत्रिकत्वे साध्यमपि सार्वत्रिकमेवेति उपाधेर्दूषकत्वमेव न स्यादित्यर्थः । साध्यव्यापकत्वमात्रविवक्षायां तु समाधानमन्ते वक्ष्यमाणं द्रष्टव्यम् । **उत्तरत्र** असार्वत्रिकत्वे । **नित्यत्व इति** । नित्यस्योपाधेः साध्यसमव्याप्तत्वे व्याप्यस्य तस्येव व्यापकस्यापि नित्यत्वं स्यादिति । अनित्यत्वपक्षे विकल्पयति **अनित्योऽपीति** । उभयाव्यापकत्वं किमुभयसामानाधिकरण्यस्यैवाभावात् । उतोभयव्याप्यत्वा-दिति विकल्पमभिप्रेत्याह **द्वितीयेऽपीति** विशेष्यविशेषणयोरिति पाठः । साधनाव्यापकत्वमपि नास्ति, साध्यसमव्याप्तत्वमपि नास्तीत्यर्थः । **स्वव्यतिरेकेण**=उपाधिं विना । **न प्रथमः**—पक्षादन्यत्र साधनाव्यापकत्वमिति न । तदा च पक्षादन्यत्र साधनसत्त्वे उपाधेर्नास्तीत्युक्तं भवति । उपाधिश्चायं साध्यव्यापक इत्युक्तम् । तथा च साध्यव्यापकाभाववति हेतुसत्त्वे साध्याभाववत्यपि हेतुसत्त्वं सिद्धमिति व्यभिचार इत्यर्थः । **साध्यव्यापकमन्तरेणेति** पाठः सम्यक् ; न तु **साधनव्यापकस्य हेतुमन्तरेणेति** । **स एव**=हेतोः साध्यव्यभिचार एव । उपाधित्वशंकां विना हेतोः साध्यव्यभिचारशंकैव क्रियतामिति भावः । **अन्यथा** हेतोः साध्यव्यभिचारित्वशंकाप्रसरकत्वाभावे । तस्योपाधेः । **साधनादिति** । यथा जगत् सकर्तृकं कार्यत्वादित्यत्र शक्यक्रियत्वमनुपाधिरित्युक्तं, तस्यापि पक्षे कार्यत्वहेतुना साधनसंभवात्

निरुपाधिक एव संबन्ध इति । साध्यवत् साध्यसामग्रीवच्च हेतुबलादेव सोऽपि पक्षे समापतन् न स्वनिवृत्त्या साध्यं निवर्तयितुमलमिति स कथमुपाधिः ? ॥ अथ तेनैवाप्यतीन्द्रियेणातीन्द्रियोपाध्यन्तरप्रयुक्तः संबन्ध इति शङ्क्येत, तथासति अनवस्थापातः । अपि च—

उपाधित्वेन शङ्क्यस्य संबन्धो निरुपाधिकः । अन्यथोपाधिता नास्ति तद्वदन्यत्र गृह्यताम् ॥८३

तत्त्वरत्नाकरे तु एवमुपाधेः स्वरूपं प्रमाणमवान्तरभेदो दूषणत्वप्रकारश्चोपपादितः । यथा—
"केनचिद्यस्य संबन्धे योऽवच्छेदक एव हि । तस्योपाधिर्यथा वह्नेरार्द्रेन्धो धूमसंगमे । श्रोत्रत्वयोगे नभसो यथा वा कर्णशष्कुली । संसारयोगे जीवस्य कर्माविद्यादि वा यथा ॥ साध्यव्यापकः साधनाव्यापक इति तं लक्षयन्ति केचित् । साधनाव्यापकः साध्यसमव्याप्तिरिति च—"

---

साधनव्यापकतया नोपाधिता, तथाऽस्यातीन्द्रियोपाधेरपि हेतुना साधनसंभवादिति भावः । **संबन्ध** इति हेतुनेति शेषः । **अन्यथा** साध्यसामग्र्यप्युपाधिः स्यादिति भावः । निरुपाधिकसंबन्धस्तस्य कथं सिद्ध इत्यत्राह **अथेति** ॥

उपाधेरुपाधिशब्दवाच्यत्वं जपाकुसुमादिवत् स्वगतधर्मारोपकत्वात् । साध्यसमव्याप्ते तद्दर्शनात्; अन्यत्र तत्प्रयोगस्तु दूषकत्वस्य तदैकरूप्यादिति तार्किकरीतिरेवं दर्शिता । **भट्टपादै**स्तु सर्वोपाध्यनुगतमुपाधिशब्दवाच्यतानियामकमन्यदुक्तम्, तत् प्रदर्शयन् अन्यविषयेऽपि तत्कृतं शोधनमादत्याह **तत्त्वरत्नाकरे** त्विति । **केनचिदि**ति । स्वनिष्ठकिञ्चित्प्रतियोगिकसंबन्धः यद्वस्त्ववच्छिन्ने एव स्वस्मिन् भवति; नान्यथा ; तत् वस्तु स्वस्योपाधित्वेन लोके व्यपदिश्यते, यथा आकाशस्य श्रोत्रत्वरूपधर्मसंबन्धं कथनीयं कर्णशष्कुल्यवच्छिन्न एव कथयामः, न तु शुद्धे इति कर्णशष्कुली उपाधिरिति सर्वलोकज्ञेयं तार्किकोक्तश्चेदम् । यथा च शास्त्रानुसारात् जीवस्य संसारो न स्वाभाविकः ; किंतु कर्मवशादज्ञानवशाच्चेति ज्ञातत्वात् तत्र जीवे संसारसंबन्धः कर्माद्यवच्छिन्ने इति कर्मादेरुपाधित्वम्—एवमेव यद्धर्मावच्छिन्नस्य साध्यव्याप्यत्वरूपसंबन्धे कथ्यमाने किञ्चिद्वस्तु तद्विशेषणं व्याप्यतायामवच्छेदकं=व्यावर्तकं दृश्यते, स तद्धर्मावच्छिन्नस्योपाधिरित्युच्यते । धूमवान् वह्नेरित्यत्र वह्नेर्धूमव्याप्यत्वे कथ्यमाने आर्द्रेधविशिष्टवह्नावेव धूमव्याप्यत्वस्य वस्तुतः सत्त्वात् वह्निविशेषणं व्यावर्तकमवच्छेदकमार्द्रेन्धनमुपाधिर्भवतीति । एवं लोकप्रसिद्ध एवार्थ इहाप्युपाधिशब्दस्येति भट्टपादाशयः । हेतुसंबन्ध्युपाधिमात्रानुगतं तदन्यावर्ति तस्य लक्षणं तु तार्किकैरुक्तं साध्यव्यापकत्वे सति साधनाव्यापकत्वम् । **साध्यव्याप्त** इति पाठेऽपि **व्याप्त** इति कर्तरि प्रत्ययात् साध्यव्यापक इत्येवार्थः । केचित्=तार्किकाः मीमांसकाश्च स्वगतव्याप्त्यारोपकत्वरूपोपाधित्वाभिप्रायेण साध्यसमव्याप्तिकत्वं साध्यव्यापकत्वस्थाने निवेश्य लक्षणमाहुः । तन्मते साध्यव्याप्त्यतिरिक्तमुपाधितया नेष्यते । साध्यव्यापकत्वमात्रविशिष्टोपाधिस्थलेऽपीदृशोपाधिरपि अवश्यं भवेदिति तदाशयः । सर्वमिदमवच्छेदकत्वरूपोपाधित्ववचनलभ्यमेव । अग्नौ धूमसंबन्ध इत्यनुक्त्वा आर्द्रेन्धनावच्छिन्नाग्नौ धूमसंबन्ध इत्युक्तितो

इत्यादिना स्वरूपं निदर्शितम्। "किमस्य ज्ञापकम्? साधनस्य क्वचित् साध्यासंबन्धस्यापकम्, संबन्धग्रहणवेलानुयायिस्वरूपवैकल्यं वा। असंबन्धस्यापकं च व्यभिचारदर्शनम्। तच्च साध्यविरुद्धधर्मकतया निश्चिते, प्रमाणबाधिते पक्षे विपक्षे वा हेतोर्दर्शनम्। अग्नीषोमीयश्रुत्याबाधिते पक्षे दृष्टं हि हिंसात्वं निषिद्धत्वमात्मन उपाधिं कल्पयति। प्रमेयत्वं च नित्यात्मादिविपक्षे दृष्टमनित्यत्वसाधने कृतकत्वादिकमुपाधीकरोति। सपक्षेषु च यावद्रूपविशिष्टतया साधनं साध्यसंबन्धित्वेन दृष्टम्; तदन्यतररूपविकलं चेत् पक्षे दृश्यते, तदा व्यापकरूपाप्रत्यभिज्ञानात् सर्वरूपविशिष्टमेवोपाधयति; यथा—भाविततनयश्यामलिमनि अनुमेये मित्रापुत्रत्वं भूतपुत्रेषु दृष्टं

---

हि तदनवच्छिन्ने धूमसंबन्धो नास्तीति ज्ञायत इति आर्द्रेन्धनाभावे धूमाभाव इति सिद्ध्याऽवच्छेदकस्येन्धनस्य धूमव्यापकत्वम्; अग्निं प्रति चेन्धनस्यावच्छेदकत्वं विशेषणत्वम्। विशेषणञ्च विशेष्यनिष्ठाभावप्रतियोगि। यथा घटविशेषणं नैल्यम्; अनीलघटव्यावर्तनाय तदुक्तेः। प्रकृते इन्धनस्य सामानाधिकरण्यसंबन्धेन विशेषणात् तेन संबन्धेनाग्निनिष्ठाभावप्रतियोगित्वम्। इदमेव साधनाव्यापकत्वम्। तथा उपाध्यवच्छिन्ने हेतौ साध्यसंबन्धकथने उद्देश्यतावच्छेदके विधेयसंबन्धावच्छेदकत्वलाभात् उपाधौ साध्यसंबन्धावच्छेदकत्वसिद्धिः, अवच्छेदकत्वञ्चानतिरिक्तवृत्तित्वं व्याप्यत्वमेवेति साध्यव्याप्यत्वस्याप्युपाधौ लाभः। इदञ्च देशकालरूपावच्छेदकविलक्षणमिति। इदं तु गौरवग्रस्तम्। आरोपं विनाऽप्युपाधित्वं ह्यस्माभिरुपपादितमिति। एवं स्वरूपं शोधितम्; प्रमाणं दर्शयति **किमस्ये**त्यादिना। व्यभिचारदर्शनं भूयोदर्शनसमयगृहीतकिञ्चिदंशादर्शनं च प्रमाणम्। पर्वतो धूमवान् वह्नेरित्यत्र पक्षे वह्नेर्धूमासंबन्धः स्यादित्येतज्ज्ञापकं भवति अयोगोलके व्यभिचारदर्शनम्, तथा यत्रयत्र धूमदर्शनं तत्रतत्र वह्निना सहाऽऽर्द्रेन्धनस्यापि दर्शनात् विशिष्टवह्नौ साहचर्यदर्शनात् विशेषणीभूतार्द्रेन्धनराहित्यं दृश्यमानं सोपाधिकत्वे प्रमाणमित्यर्थः। व्यभिचारदर्शनं शास्त्रप्रमाणात् लोकानुभवाच्चेति द्वेधोपपादयति **तच्चे**ति। **निश्चिते** लोकत इति शेषः। **साध्यविरुद्धधर्मः** साध्याभावव्याप्यः साध्याभावश्च। अस्मन्मतेऽभावोऽपि भाव एव। **प्रमाणबाधित** इति शास्त्राभिप्रायेण। **अग्नीषोमीये**ति। अग्नीषोमीयं पशुमालभेतेति शास्त्रेण **बाधिते**=अधर्मत्वरूपसाध्याभाववत्तया निश्चिते **पक्षे**=वैधहिंसाऽप्यधर्मः हिंसात्वादित्यनुमाने पक्षभूताग्नीषोमीयहिंसाया हेतुभूते हिंसात्वे निषिद्धत्वमुपाधिर्भवति। इदमनित्यं प्रमेयत्वादित्यनुमाने प्रमेयत्वस्य नित्येष्वात्मादिष्वपि दृष्टतया तद्व्यावृत्तं कृतकत्वं तत्रोपाधिः। द्वितीयं प्रमाणं विवृणोति **सपक्षेषु** चेति। भूयोदर्शनस्थलेष्वित्यर्थः। **यावद्रूपविशिष्टतया** आर्द्रेन्धनादिरूपविशिष्टतया वह्निर्धूमसंबन्धित्वेन **दृष्टः**। अतः केवलवह्नौ आर्द्रेन्धनादितावद्रूपाविशिष्टवह्निरुपाधिर्भवतीत्यर्थः। व्यभिचारदर्शनप्रसक्तिरहितमुदाहरणमत्र दर्शयति **यथा भावी**ति। **भाविनि** भविष्यति तनये=मित्रापुत्रे श्यामलिमा—श्यामत्वं साध्यम्। तत्र हेतुः मित्रातनयत्वं पूर्वजातेषु पुत्रेषु सर्वत्र शाकाद्याहारपरिणतिविशिष्टमेव दृष्टम्। स परिणाम एव तत्रोपाधिः। ननु बाधव्यभिचारादिदर्शनस्थले तत एव दुष्टत्वं हेतोरवसीयत इति किं तत्रोपाधि-

सिषाधयिषितधर्मविशिष्टो धर्मी पक्षः; यथा अग्निमत्त्वादिसाधने पर्वतादिः। तस्मिन् अभिन्नप्रकारेण स्वायोगव्यवच्छेदेन सर्वत्र वर्तमानत्वं पक्षव्यापकत्वम् ॥ सिषाधयिषितसजातीयधर्मवान् सपक्षः; यथा महानसादिः। तस्मिन् सर्वत्र, कतिपयव्यक्तौ वा वृत्तिः सपक्षे सत्त्वम्; सर्वसपक्षावृत्तिराहित्यमित्यर्थः। कृतकत्वादयः सपक्षव्यापकाः। धूमवत्त्वादयः सपक्षैकदेशवर्तिनः। तत्र सपक्ष एव हेतुधर्मेणापि समन्वितः साधर्म्यदृष्टान्तः। तस्य

---

सत्प्रतिपक्ष इत्यत्र बहुव्रीहिः। तथात्वज्ञानं साध्यानुमितिप्रतिबन्धकमिति हेतोरसत्प्रतिपक्षत्वमावश्यकम्। असत्प्रतिपक्षितत्वमिति पाठे—सन् प्रतिपक्षः सत्प्रतिपक्षः; सञ्जातसत्प्रतिपक्षः सत्प्रतिपक्षितः; तद्भिन्नोऽसत्प्रतिपक्षितः; तत्त्वमित्यर्थः। यद्यपि बाधज्ञाने सत्प्रतिपक्षज्ञाने च पक्षे साध्याभाव इति पक्ष एव विपक्षो भवतीति विपक्षसत्त्वमेव हेतोः। अतो विपक्षासत्त्वरूपाभावादेवासद्धेतुत्वसिद्धिः— अथापि साक्षादनुमितिप्रतिबन्धकत्वरूपविशेषव्युत्पादनाय चतुर्थपञ्चमरूपद्वयघटनम्। रूपाणामेषामन्वयप्रकारो वक्ष्यत एव। पक्षसपक्षविपक्षशब्दानामर्थमाह **सिषाधयिषिते**त्यादिना। संदिग्धसाध्यकः इत्युक्तौ यत्र साध्यसंदेहाभावेऽपि साधनेच्छयाऽनुमानम्, तत्र पक्षता न स्यात्। अतः **सिषाधयिषिते**ति। साधयितुमिष्टेत्यर्थः। धर्मः साध्यम्; यत् साध्यते, तत् साध्यम्। यत्र साध्यते, स पक्षः। **पक्षव्यापकत्व**मित्यस्य यत्रयत्र पक्षः, तत्रतत्र हेतुरित्यर्थोऽनन्वितः। अतः पक्षं साक्षात्संबन्धेन व्याप्नोतीत्यर्थमाह **तस्मिन्**निति। **अभिन्नप्रकारेण** एकरूपेण। येनाविच्छिन्नमूलत्वादिधर्मेण धूमस्याग्निसाधकता, तेन रूपेण सर्वपक्षव्यक्तिवृत्तित्वमावश्यकम्। **स्वायोगव्यवच्छेदेने**ति। अविच्छिन्नमूलत्वविशिष्टधूमायोगे केवलधूमसत्त्वमात्रे न साधकतेति। सपक्षशब्दार्थमाह **सिषाधयिषिते**ति। निश्चितसाध्यवानिति न वक्तव्यम्; साध्यवति सर्वत्र साध्यनिश्चयस्य कस्मिन्नपि पुरुषे उपपादनासंभवात्। अतः साध्यतावच्छेदकधर्मावच्छिन्नवान् सपक्ष इत्यर्थः स्यात्। एवञ्च पक्षोऽपि वस्तुगत्या साध्यवत्तया सपक्षः स्यादिति चेन्न— **सिषाधयिषितजातीये**त्यस्य सिषाधयिषितव्यक्तिभिन्नः साध्यतावच्छेदकावच्छिन्नः इत्यर्थात् पक्षवृत्तिसाध्यव्यक्तेः सिषाधयिषितत्वात् तदन्यसाध्यव्यक्तेस्तत्राभावात्। ननु यत्रैकव्यक्तिरेव साध्यं पक्षसपक्षवृत्ति तत्र कथं सिषाधयिषितभिन्नत्वमिति चेत्—पक्षभिन्नः साध्यवान् सपक्ष इत्यत्र तात्पर्यात्। पक्षव्यापकत्वमिव सपक्षव्यापकत्वं न विवक्षितमित्याह **तस्मिन्** इति। **कतिपये**त्यनेन नानेकव्यक्तिग्रहणम्; भूयोदर्शनौचित्याय तथोक्तिः; एकव्यक्तिमात्रे हेतुसत्त्वेऽपि साधकत्वमेवेति ज्ञापनायाह **सर्वसपक्षे**ति। सपक्षावृत्तिः—सपक्षे वर्तमानत्वाभावः। **तद्राहित्यं तदभावः**। तथाच सपक्षवृत्तित्वमेव सपक्षसत्त्वमिति भावः। **सर्वत्रे**त्यत्रोदाहरणमनित्यत्वसाधने कृतकत्वम्, बहिरिन्द्रियग्राह्यगुणवत्त्वसाधने भूतत्वमित्यादि। धूमवत्त्वमयोगोलके सपक्षे नास्तीति किञ्चित्सपक्षवृत्ति तर्हि सपक्षेऽयोगोलके हेत्वभावात् दृष्टान्ते साधनवैकल्यं स्यादित्यत्र साध्यहेतूभयवानेव दृष्टान्तः, नान्य इत्याह **तत्रे**ति। विपक्षलक्षणमाह

व्याप्तिदर्शनस्थानत्वादुभययोगापेक्षा ॥ साध्यतज्जातीयशून्यो विपक्षः; यथा महाह्रदादिः । तत्र सर्वत्रावृत्तिः=विपक्षवृत्तिरहितत्वम् । इदं च क्वचिद्विपक्षाभावात्, क्वचित् तत्संसर्गाभावादिति द्विविधम् । पूर्वं केवलान्वयिनि, द्वितीयमन्वयव्यतिरेकिणि[इदं?]चानन्तरं द्रष्टव्यम्

अन्ये तु विपक्षाद्व्यावृत्तिरितीदं रूपम(रूपं)कल्पयित्वा केवलान्वयिनश्चतूरूपत्वमाहुः; तदसत्; विपक्षवृत्त्याख्यदोषस्याभाव एव ह्यत्र रूपत्वेन विवक्षितः । तावदेव चान्वयव्यतिरेकिण्यपि रूपम् । तच्च रूपं तुल्यं केवलान्वयिन्यपीति । विपक्षसद्भावस्तु व्यति-

---

साध्येति । साध्यः पर्वतीयाग्निः, तज्जातीयमग्न्यन्तरम् । तत्तद्वान् न विपक्षः । साध्याभाववत्कतिपयव्यक्तीनामस्माभिरज्ञातत्वेऽपि विपक्षत्वात् तत्संग्रहासंभवात्, 'निश्चितसाध्याभाववान् विपक्षः' इति नोक्तम् । एकव्यक्तिसाध्यकस्थले साध्यतज्जातीयेति द्वयाप्रसिद्ध्या साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववान् विपक्ष इत्युक्तौ साध्याभाववति साध्यसाधकासद्धेतौ पक्षस्यापि विपक्षत्वं स्यादिति चेत्—पक्षभिन्नः साध्याभाववान् विपक्ष इति विवक्षणीयम् । यत्किञ्चिद्विपक्षावृत्तित्वमात्ररूपत्वे धूमवानग्नेरित्यत्राग्निरपि सद्धेतुः स्यात्, ह्रदरूपविपक्षेऽग्नेरवृत्तेः । अतः विपक्षे सर्वत्र वर्तमानत्वाभावो वक्तव्यः । स च विपक्षवृत्तित्वावच्छिन्नप्रतियोगिताकाभावः ।

ननु केवलान्वयिसाध्यके हेतौ इदं तृतीयं रूपं न भवति; साध्याभावाप्रसिद्ध्या विपक्षस्य दुर्वचत्वादित्यत्राह स चेति । क्वचित्—केवलान्वयिसाध्यके । केवलान्वयिस्थले विपक्षो नास्तीति व्यवहारवत् विपक्षावृत्तित्वं हेतोर्नास्तीत्यपि सुवचमित्याशयः । एतदुपपादनं केवलान्वयिनिरूपणे इत्याशयेन अनन्तरं द्रष्टव्यमित्युक्तम् । तार्किकाः हेतुं अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकीति त्रेधा विभज्य तत्र प्रथमे पञ्चरूपसंपत्तिः; द्वितीये विपक्षस्य दुर्वचत्वात् विपक्षव्यावृत्तिरिति रूपं न वक्तव्यम्; तृतीये सपक्षाप्रसिद्धया सपक्षसत्त्वं दुर्वचमिति तत्रोभयत्र रूपचतुष्टयसंपत्तिरलमित्याहुः । तत्र केवलव्यतिरेकिणोऽस्माभिरस्वीकारात् तत्रोक्तमुपेक्ष्यम् । केवलान्वयिनस्तु विपक्षासत्त्वमपि सुवचमिति वक्तुमाह अन्ये त्विति । विपक्षात् व्यावृत्तिरित्यस्य विपक्षनिष्ठाभावप्रतियोगित्वमर्थः; विपक्षाप्रसिद्ध्या तद् दुर्वचमिति तार्किकाशयः । अत्र अकल्पयित्वा कल्पयित्वेति पाठद्वयमस्ति । तत्र कल्पयित्वेति पाठे विपक्षासत्त्वमित्युनुक्त्वा विपक्षाद् व्यावृत्तिरिति तद्रूपकल्पनां कृत्वेत्यर्थः । अकल्पयित्वेति पाठे रूपमिदं तत्रास्वीकृत्येत्यर्थः । विपक्षेति । तद्रूपं विपक्षनिरूपिताधेयत्वाभाव इति निरुच्यते । तत् केवलान्वयिन्यप्यस्तीति भावः । विपक्षाप्रसिद्धौ कथमिदमिति चेत्—तत् उपरि वक्ष्यते । यदि विपक्षाभावेऽपि विपक्षघटितं रूपं स्यात् तर्हि विपक्षघटितव्यतिरेकव्याप्तिरपि स्यादित्यत्राह विपक्षेति । अंगम्—प्रयोजकम् । विपक्षावृत्तित्वं हि विपक्षवृत्तित्वरूपधर्मस्याभावः । विपक्षघटिताकारस्यापि विपक्षाभावेऽभावः सुवचः । व्यतिरेकव्याप्त्यादिकं तु तथाविधाभावरूपत्वाभावात् विपक्षसद्भावसापेक्षमिति वैषम्यमिति भावः । सपक्षनिरूपणावसरे

रेकव्याप्तेरङ्गम्, विपक्षवृत्तिरूपदोषस्य च ; न पुनस्तदभावस्य। विपक्ष एव हेतुना शून्यो व्यतिरेकदृष्टान्तो भवति। हेतुमानपि हि विपक्षोऽस्त्येव ; येन हेतोरनैकान्त्यादि वक्ष्यते। ततश्च [अनैकान्त्यादि] अनुपदर्शितव्याप्तिकत्वादिपरिहाराय व्यतिरेकदृष्टान्तस्योभय-निवृत्त्यपेक्षा। व्याप्तिदर्शनस्थानं हि दृष्टान्तभूतमाहुः॥

प्रबलेन प्रमाणेन पक्षे निश्चितसाध्याभाववत्त्वं बाधितविषयत्वम् ; यथा—महाह्रदो वह्निमानित्यादौ। तदभावस्त्वबाधितविषयत्वम् ; यथा पर्वतः परभागेऽग्निमानित्यादौ। समबलतया प्रतीयमानप्रमाणोपरोधाभावः असत्प्रतिपक्षत्वम् ; यथा धूमानुमानादः॥

॥ हेतुविभागः ॥

द्वेधा च व्याप्यम्—अन्वयव्यतिरेकि, केवलान्वयि चेति। तत्र पूर्वोक्तपञ्चरूपोपपन्नं विपक्षवत् अन्वयव्यतिरेकि ; यथा—पर्वतोऽग्निमान् धूमवत्त्वात् ; यो धूमवान् सोऽग्निमान् ; यथा महानसम्(सः) ; योऽनग्निः स निर्धूमः ; यथा महाह्रद इति। यद्यपि

---

सपक्षस्य हेतुमत्त्वेऽन्वयदृष्टान्तत्वम्, न तु साध्यसत्तामात्रेणेत्युक्तम्। तद्वदिह विपक्षस्य हेतुमत्त्वाभाव एव व्यतिरेकदृष्टान्ततेत्याह **विपक्ष एवे**त्यादिना। सपक्षे क्वचित् हेत्वभाव इव विपक्षे क्वचित् हेतोः सत्त्वात् विपक्षसामान्यं न व्यतिरेकदृष्टान्तः, तत्र व्यतिरेकव्याप्त्युपदर्शनासंभवादिति। **ततश्चे**ति। **अनैकान्त्यादी**ति न तत्रे। साध्याभाववद्वृत्तित्वं हि हेतोरनैकान्त्यम्। सर्वत्र विपक्षमात्रे हेतुसत्त्वे विरुद्धता ; अप्रयोजकस्थले विपक्षेहेतुशंकया व्याप्यत्वासिद्धिरिति **आदि**पदविवक्षितम् रूपत्रयमुपपादितम् ; चतुर्थं रूपमबाधित-विषयत्वं वक्तुं तत्प्रतियोगिस्वरूपमाह **प्रबलेने**ति। प्रबलं प्रमाणं प्रत्यक्षं वा श्रुतिर्वा। हेतोरिति शेषः। निश्चितसाध्याभाववत्पक्षकत्वं बाधितविषयत्वम्। तदभावश्चतुर्थं रूपम्। पञ्चममाह **समे**ति। साध्य-व्याप्यवत्त्वज्ञानेन साध्यानुमितौ जननीयायां साध्याभावव्याप्यवत्ताज्ञाने जाते तस्य पूर्वज्ञानतुल्यबलत्वे च प्रतीयमाने, तद्वत्ताबुद्धौ तदभावव्याप्यवत्तानिश्चयस्य विरोधित्वात् तत्कृतो भवत्यु**परोधः**=व्याप्यवत्ता-ज्ञानाधीनानुमितिप्रतिबन्धः। तत् सत्प्रतिपक्षितत्वम्। तदभावोऽसत्प्रतिपक्षितत्वम्। **परभागे** इति पर्वतोऽग्निमानित्यनुमाने पर्वतीये प्रत्यक्षविषयभूते पुरोभागे अग्न्यभावप्रत्यक्षनिश्चयेऽपि न बाधितत्वम्, अदृश्ये भागान्तरेऽग्निसद्भावसंभवात् सामान्यतस्तत्राग्निसाधने वा परभागेऽग्निसाधने वा बाधकत्वायोगात्, सर्वावच्छेदेनाग्न्यभावस्याप्रत्यक्षत्वात्।

व्याप्यस्य व्याप्यत्वोपयोगिरूपनिरूपणमासीत् ; व्याप्यं विभजते **द्वेधे**ति। तार्किकसंमतस्तृतीयप्रकारः केवलव्यतिरेकिसंज्ञो निरसिष्यते ; अतस्तत्त्यागः। अन्वयश्च व्यतिरेकश्चान्वयव्यतिरेकौ ; तावस्य स्त इत्य-**न्वयव्यतिरेकि**। **अन्वया**दिपदं तत्तत्प्रयुक्तव्याप्तिपरम्। इदं **व्याप्तिद्वयेने**ति पदेनोपरि ज्ञापयिष्यते। केवलः व्यतिरेकशून्योऽन्वयोऽस्येति केवलान्वयि ; अन्वयव्याप्तिमात्रवत्। **विपक्षवत्**=साध्याभाववत्किञ्चिन्निष्ठा-

स्वसाध्यसाधनेऽन्वयव्यतिरेकयोरन्यतरेणैवालमिति तावता व्यपदेशोऽपि युक्तः ; तथाप्युभयसद्भावज्ञापनाय असाधारणकेवलान्वयिभ्यां व्यावृत्तिज्ञापनाय च व्याप्तिद्वयेन व्यपदेशः॥ तादृशमेव विपक्षरहितं केवलान्वयि ; यथा—ब्रह्म शब्दवाच्यम्, वस्तुत्वात् द्रव्यत्वाद्वा घटादिवत्। अनुभूतिरनुभाव्या, वस्तुत्वात्, घटादिवदित्यादि। न ह्यशब्दवाच्यमननुभाव्यं वा किंचिदस्ति, येन विपक्षः स्यात् ॥ असदस्तीति चेन्न ; व्याहतवचनत्वात् ; निरुपाधिकनिषेधासंभवाच्च। सोपाधिकनिषेधे सत एवासच्छब्देनाप्याकारान्तरनिमित्तेन व्यपदेशः। तथा च यदि तत्र वस्तुत्ववाच्यत्वादिहेतुसाध्यव्यतिरेक उच्यते, तदा व्याघातः। अव्याहतस्थलेषु त्वन्वयव्यतिरेकित्वमेव स्यात्। न च स(त)दतिरिक्तमसदिति किंचित् प्रतीमः, येन तत्र व्यतिरेकमनुसंदधीमहि। एतेन, असतो व्यतिरेकदृष्टान्तत्वमिच्छन्तो निरस्ताः, तथासति अभावरूपेषु साध्येष्वसतोऽन्वयदृष्टान्तत्वस्याप्यवर्जनीयत्व-

---

भावप्रतियोगि। केवलान्वयिव्यावर्तनायेदं दलम्। **असाधारणेति**। सपक्षविपक्षव्यावृत्तो हेतुरसाधारणहेत्वाभासः। व्यतिरेकव्याप्तिमात्रोक्तौ असाधारणेऽपि तत्सत्त्वादसाधारण्यशंका स्यात्। अन्वयव्याप्तिमात्रोक्तौ केवलान्वयिसद्धेतावपि तत्सत्त्वात् तत्त्वशंका स्यादित्युभयवचनमिति भावः। **तादृशमेव** पञ्चरूपोपपन्नमेव। **ब्रह्मेति**। अद्वैतिमतनिरासार्थैते अनुमाने। विपक्षराहित्यमुपपादयति **नहीति**। नन्ववाच्यमवस्तु चासत् तुच्छमनुपाख्यं शशविषाणादिकं विपक्ष एवेत्यत्राह **असदिति**। असदित्यस्य नास्तीत्यर्थः। यन्नास्ति तदस्तीति व्याहतम्। असदित्यस्याभावार्थकत्वे तस्य अत्रेदानीमिदं नास्तीत्येवं देशकालप्रतियोगिरूपोपाधिविशिष्टत्वमेवानुभविकम्। केवलं नास्तीत्यप्रयोगात् निरुपाधिकत्वमभावस्य न भवति ॥ अतस्तादृशाभावोऽस्तीति वक्तुं न शक्यते इति सिद्धं विपक्षराहित्यम्। अत्रेदानीं घटो नास्तीत्यादिप्रतीतिसिद्ध—सोपाधिकाभावस्यासत्पदार्थत्वे तस्य घटाभावस्य घटप्रागभाव.घटध्वंसाद्यात्मकतया तस्य च मृत्पिण्डकपालादिरूपत्वमेवेष्टमिति तस्य कथं विपक्षत्वम्? तथाच घटाभावादिः प्रकृतविपक्ष इति वचनं व्याहतम्। ब्रह्मानुभाव्यं वस्तुत्वादित्यत्र तस्याविपक्षत्वेऽपि ब्रह्माहमर्थः आत्मत्वादित्यादौ अहमर्थत्वाभाववत्तया मृत्पिण्डादिर्विपक्ष इति चेत्—भवतु ; न हि तत् केवलान्वयि, किंत्वन्वयव्यतिरेकि। ननु मृत्पिण्डादिकं नासत्, सत्त्वात्। सत्त्वावच्छिन्नप्रतियोगिकभेदाश्रयो ह्यसत्पदार्थः ; स एव विपक्ष इति चेत्—सत्त्वस्य केवलान्वयितया तदसदप्रसिद्धमित्याह **न चेति**। **येनेति**। प्रसिद्धत्वे किलेत्यर्थः। एतेन-असत्वे विपक्षत्वायोगवचनेन। **असत इति**। ब्रह्म सत् अबाध्यत्वादित्यादौ शशविषाणादिर्व्यतिरेकदृष्टान्त इत्यद्वैतिनः। "लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः" इति गौतमः। असतः प्रतीयमानत्वमेव नास्ति ; नतरां तत्र बुद्धिसाम्यमिति भावः। **अभावरूपेष्विति**। धूमाभाववान् अग्न्यभाववादित्यादिषु। ननु धूमाभाववान् ह्रदत्वादित्यादौ तुच्छे हेत्वन्वयायोगान्नान्वयदृष्टान्ततेति शंकायाम्—मिथ्यात्वलक्षणे बाध्यत्वमात्रोक्तौ

प्रसङ्गाच्च । हेतोश्चाप्रतीयमानत्वादेरभावात्मकस्य वा(स्यैव?)यस्य कस्यचित् प्रयोक्तुं शक्यत्व त् । भाष्यादिषु तु क्वचित् शशविषाणाद्युदाहरणं प्रतिबन्द्यभिप्रायेण, परमतेन वेति द्रष्टव्यम्, "पिशाचानां पिशाचभाष्यैवोत्तरं देयम्" इत्यादिन्यायात् । स्वयमेव निरुपाधिनिषेधासंभवस्य शून्यवादनिराकरणे दर्शितत्वाच्चेति ॥ तर्हि विपक्षरहितस्य केवलान्वयिनो विपक्षवृत्त्यभावः कथमिति चेत्, हन्त! किं तस्य विपक्षवृत्तित्वमस्ति? तदपि नास्तीति चेत्, तर्हि तावदेवानुमानाङ्गमित्युक्तम्; तदभावेऽपि तद्वृत्तिलक्षणविशिष्टस्यासिद्धेरिति ।

---

तुच्छेऽतिव्याप्तिरिति प्रतीयमानत्वनिवेशात् इदं तुच्छे ह्यक्षतमित्याशयेनाऽऽह । अप्रतीयमानत्वादेरिति । ननु सतः पक्षादेरप्रतीयमानत्वरूपहेतुमत्त्वं कथमिति चेत्-किञ्चित्प्रतीतिविषयत्वाभावरूपस्य विशेषस्य हेतुत्वमस्तु। आदिना बाध्यत्वग्रहः । रजतत्वं पुरोवर्त्यवृत्ति बाध्यत्वादित्यत्र तुच्छमन्वयदृष्टान्तो भवत्विति । ननु सिद्धान्ते बाध्यत्वमपि शशविषाणे दुर्वचम्, शशविषाणं नास्तीति प्रतीतेरप्रसिद्धप्रतियोगिविषयकत्वादुपगमायोगाद्, बाधज्ञानविषयत्वस्यैव बाध्यत्वरूपतया भावस्य तस्य तुच्छे दुर्वचत्वाच्चेत्यत्राह अभावात्मकस्य वेति । धूमाभावादौ अग्न्यभावादिरेव हेतुस्तुच्छान्वय्यस्त्विति भावः। अभावात्मकस्यैवेति पाठो युक्तः। वाकारपाठे वेत्यस्य अन्यस्य वेत्यर्थे प्रयोग इत्यादिरीत्या निर्वाहः । वस्तुतः सिद्धान्ते भावातिरिक्ताभावानङ्गीकारात् भावरूपोऽभावस्तुच्छे दुर्वच एवेति न तस्य दृष्टान्तत्वादीति निगूढम् । अतो भाष्यादेरन्याभिप्रायकत्वमाह भाष्येति । अनुभूतेरननुभाव्यत्वे गगनकुसुमवत् तुच्छत्वमेव स्यादिति असद्दृष्टान्तीकरणं प्रतिबन्द्यभिप्रायेण ; न तु अनुमानप्रयोगाभिप्रायेण । अनिष्टापादनरूपप्रतिबन्द्यां तु असतोऽप्युक्तिर्युज्यते । अत एव हि भावरूपाज्ञानानुमाननिरासावसरे प्रतिप्रयोगाश्चेत्यादेः अज्ञानं न ज्ञानमात्रब्रह्माश्रितमित्यादिभाष्यस्य प्रसञ्जनरूपप्रतितर्कविषयकतया व्याख्यानमिति भावः । अनुमानत्वमेवानुमत्याह परमतेनवेति परैस्तुच्छस्य दृष्टान्तत्वमिष्टमिति । शून्यवादनिराकरणे=सर्वथानुपपत्तेश्चेत्यधिकरणे ।

एवं शशविषाणादिर्विपक्षोऽस्तीति वक्तुमशक्यतया विपक्षराहित्यरूपदलं केवलान्वयिलक्षणघटकमुपपादितम् । तर्हि विपक्षराहित्ये विशेषणाभावात् विपक्षासत्त्वरूपं विशिष्टं कथमिति पृच्छति तर्हीति । विपक्षवृत्त्यभावः विपक्षनिरूपिताधेयत्वाभावः । किमिति । अभावे आक्षिप्यमाणे हि प्रतियोगि स्वीकार्यं स्यादिति भावः । तदपि विपक्षवृत्तित्वमपि । अपिना विपक्षासत्त्वग्रहणं शंकित्रभिमतम् । तर्हीति । विपक्षासत्त्वमपि न भवतीति भवदुक्तिर्युक्ता न वेति विचारस्तावदास्ताम् । विपक्षसत्त्वं नास्तीति त्वदुक्ततया पञ्चमरूपसिद्धिरेव । तदभावेऽपीत्यपेः विशिष्टस्येत्यत्रान्वयः । विपक्षाभावे विशिष्टस्याप्यसिद्धेरित्यर्थः । ननु केवलान्वयिसाध्यस्याभावाप्रसिद्ध्या तद्वान् विपक्षः तद्वृत्तित्वं सर्वं दुर्वचमेवेति प्रतियोग्यप्रसिद्धौ कथमभावप्रसिद्धिः । शशविषाणमस्तीतिवत् शशविषाणं नास्तीति प्रयोगोऽपि नेष्ट एव । अन्यथा अभावप्रतियोगितया प्रतीयमानत्वादिभावरूपधर्मोऽपि तत्र स्वीकार्यः स्यादिति चेत्—साध्याभाववद्वृत्तित्व

एतेन, केवलान्वयि नानुमानं, विपक्षरहितत्वात्, सर्वमनित्यं सत्त्वादित्यादिवदिति हेतुकदुर्दरूट(दर्दुर)दृष्टिर्दूषिता ॥

ननु, यदि केवलान्वयि प्रमाणम्, अग्निरनुष्णः, पदार्थत्वात्, घटवदित्याद्यपि प्रमाणमेवेति चेन्न, बाधितत्वात्। तर्हि धर्मादयः कस्यचिदिन्द्रियग्राह्याः, प्रमेयत्वात्, मीमांसकानामप्रत्यक्षत्वाद् वा, अस्मत्सुखादिवदित्यादि स्यादिति चेन्न, विपक्षे बाधकाभावादेरुक्तत्वात्। अनुभूतेः स्वयंप्रकाशाया अप्यननुभाव्यत्वे अनुभूतिपदप्रयोगस्यैव निरर्थकत्वप्रसङ्गात्। परस्यानुभूतिविषयानुभवसिद्ध्यर्थमेव हि तत्प्रयोगः। एवं वाच्यत्वविपर्ययेऽपि बाधः स्पष्टः। तस्मात् व्याहतसाध्यविपर्ययं केवलान्वयि प्रमाणमिति संक्षेपः। अत एव महाविद्यादिरूपकेवलान्वयिनामप्यनवकाशः, अव्याहतसाध्यविपर्ययत्वात्; अन्यथा तेषां सर्वसाधकत्वसामर्थ्याभ्युपगमभङ्गप्रसङ्गात् ॥

---

हेतोर्नास्तीत्यस्य हेतुमन्निष्ठाभावप्रतियोगित्वं साध्ये नास्तीत्येतत्समानविषयकतया तत्तात्पर्यकतया तद्रूपसंभवात्। यथा शशविषाणं क्वापि नास्तीत्यस्य किञ्चिद्देशसंबन्धिविषाणाश्रयत्वं शशे नास्तीत्यर्थपरत्वम्; तथेति ॥ महाविद्यारूपकेवलान्वयिवत् इतरत् केवलान्वय्यपि नेष्यते विडम्बनग्रन्थकर्त्रा वादीन्द्रेण। तदेव युक्तम्; अन्यथा केवलान्वय्याभासानामपि सद्धेतुता स्यात्। अतो विपक्षरूपव्यतिरेकदृष्टान्ताभावे सर्वमसदेवेति हैतुकवादं निरस्यति एतेनेति। व्यतिरेकदृष्टान्ताभावेऽपि विपक्षासत्त्वाख्यरूपस्यापि सत्त्वेनेत्यर्थः। हैतुकदर्दुरेति पठित्वा दर्दुरो वराक इत्येका व्याख्या। हैतुकदुर्दुरूटेति पठित्वा दुर्दुरूटः दुराक्षेपक इति व्याख्याय दुरपूर्वात् दुल उत्क्षेपे इति धातोरौणादिकः कूटप्रत्यय इति वैयाकरणोक्तं दर्शितमन्यत्र। सर्वमनित्यमित्यनुपसंहारी; दृष्टान्तद्वयस्याप्यभावात्। अतोऽन्वयव्याप्तेरप्यभावात् न सदनुमानता। मीमांसकानामित्येतदर्थः प्रागेवादर्शि। स्वयं प्राक् दर्शिते केवलान्वय्युदाहरणे विपक्षबाधकसद्भावान्न दुष्टता। न च अनुभूतिरननुभाव्या अनुभूतित्वादित्यनेन सत्प्रतिपक्षितत्वं शंकनीयम्, प्रतिपक्षहेतोः बाधितत्वादित्याह अनुभूतेरिति। तस्मादिति। व्यतिरेकदृष्टान्तराहित्यमात्रेण केवलान्वयित्वाभावात् अत्यन्ताभावाप्रतियोगिसाध्यकमेव केवलान्वयीत्यर्थः। सर्वस्याप्यनित्यत्वसाधनवत् नित्यत्वस्यापि साधनसंभवादव्याहतिः। अव्याहतिसद्भावादेव महाविद्यानुमानं नेष्टमित्याह अत एवेति। न केवलान्वयित्वं तदनुमानत्वाभावप्रयोजकम्, किंत्वव्याहतसाध्यविपर्ययकत्वम्। महाविद्यानुमानम्—ह्रदः अग्निभिन्नह्रदवर्तिधर्मभिन्नधर्मवान् वस्तुत्वादिति। अग्निभिन्नत्वं ह्रदवर्तिधर्मविशेषणम्, पक्षभिन्ने सर्वत्र ह्रदावर्तिधर्मः सिद्धः। पक्षे तदसंभवात् प्रथमधर्मेऽग्निभिन्नत्वेन विशेषिते अग्निभिन्नधर्मभिन्नोऽग्निरेव ग्राह्यो भवतीति तत्साधकत्वमस्य। अन्वयव्यतिरेकिसाध्यविशेषपर्यवसानाय केवलान्वयिसाध्यनिर्देशमुखेन प्रवृत्तो हेतुर्महाविद्या। हेतोरप्रयोजकत्वात् पक्षे साध्यविपर्ययव्याहत्यभावात्=विपक्षे बाधकाभावात् नासौ केवलान्वयिसद्धेतुः ॥

॥ केवलव्यतिरेकिभङ्गः ॥

ननु न द्विविधं व्याप्यम्, केवलव्यतिरेकिणोऽपि भावात्; तथाहि—अनुभूतिरननुभाव्या अनुभूतित्वात्; यदनुभाव्यम्, न सा अनुभूतिः; यथा घटः। न चान्वयव्याप्त्यभावादव्याप्तिरिति भाव्यम्, व्यतिरेकव्याप्त्यभावात् केवलान्वयिनोऽप्यव्याप्तिप्रसङ्गात्। द्वयोरपि व्याप्त्योः प्रत्येकमन्वयव्यतिरेकिणि प्रदर्शनीयत्वाभ्युपगमाच्च। उक्तं च वरदविष्णुमिश्रैरपि—"तत् पुनरन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकीति त्रिविधम्—" इत्यादि। तत्त्वरत्नाकरेऽप्युक्तम्—"अक्षपादस्त्रैविध्यसूत्रवत्—" इत्यादीति चेन्—न तावदिह संप्रदायविरोधः, "केवलव्यतिरेकि तु साधनदशामेव नासादयति, सपक्षान्वयविरहात्, असाधारणवत्—" इत्यादिना आत्मसिद्धौ भगवद्यामुनमुनिभिः प्रपञ्चितत्वात्। उक्तं च न्यायकुलिशे स्वप्रकाशवादे श्रीमद्रामानुजार्यैः—"न च सिद्धान्तिनोऽयं प्रसङ्गः, केवलव्यतिरेकिप्रामाण्यानभ्युपगमात्" इति। अतो वरदविष्णुमिश्रोक्तमेकदेशिमतम्, परमतानुसारेण वोक्तम्। तत्त्वरत्नाकरेऽपि "अक्षपादस्त्रैविध्यसूत्रवत्" इत्युपक्रम्योक्तम्; न तु स्वमततया ॥

यत्तु तत्रैव हेत्वाभासनिरूपणेऽप्युक्तम्—"इयं ह्यनध्यवसितकेवलव्यतिरेकिणोर्भि(भि)दा—विद्यमानसपक्षोऽपि पक्षमात्रवृत्तिः प्रथमः। अन्यस्त्वविद्यमानसपक्षो विपक्षाद् व्यावृत्त इति। तत्र द्वे

---

केवलव्यतिरेकिरूपतृतीयहेतुप्रकारं विस्तरेण खण्डयिष्यन् तदस्वीकारे दर्शनविरोधवत् संप्रदायविरोधोऽपीति शंकामादावुद्भाव्य परिहरति **नन्विति**। **अव्याप्तिः** व्याप्यत्वाभावः। **अव्याप्तिप्रसंगात्** व्याप्यत्वाभावप्रसंगात्। व्यतिरेकव्याप्तेरन्वयव्याप्तिसंपादनमुखेनैवोपयोगित्वेऽभ्युपगमविरोधमाह **द्वयोरपीति**; **उक्तमिति**। त्रैविध्यमिति शेषः। **त्रैधम्** त्रिविधत्वम्। सूत्रस्यैवं त्रैविध्यपरत्वमेवेत्यस्य तद्भाष्येऽनवगमात् तदुपेक्ष्य संप्रदायविरोधं परिहरति **न तावदिति**। कूटस्थोक्ति-पश्चात्तनब्रह्माचार्योक्ति-विरुद्धार्थस्य साम्प्रदायिकत्वं दुर्वचमिति भावः। **साधनदशाम्**—साधकत्वम्। यथा शब्दोऽनित्यः शब्दत्वादित्यत्र हेतोः सपक्षे घटादावनन्वयात् व्यतिरेकव्याप्तेः सत्त्वेऽप्यसाधकता, तत एवासाधारणहेत्वाभासता च—तथा सपक्षरहितस्य केवलव्यतिरेकिणोऽपि अन्वयव्याप्त्यग्रहणस्य तुल्यत्वादसाधकत्वमेवेति। कूटस्थकथितस्य स्वाचार्यपर्यन्तं सम्प्रदायानुस्यूतिरित्याशयेनाह **उक्तञ्चेति**। **श्रीमद्रामानुआचार्याः**=आत्रेयवादिहंसाम्बुदाचार्याः स्वाचार्याः। **परमते**; तार्किकमते इत्यर्थः। **स्वमततया**—तत्त्वरत्नाकरग्रन्थकारभट्टपादमततया। भट्टपादाभिमतं तदेवेति शंकते **यत्त्विति**। **इयमिति**। वक्ष्यमाणेत्यर्थः। **अनध्यवसितकेवलव्यतिरेकिणो**रिति द्विवचनपाठस्ताले। द्वितीयव्याख्यायामपि तथाऽर्थो वर्णितः। **अनध्यवसितः** असाधारणहेत्वाभासः. तस्य केवलव्यतिरेकित्वेन व्यवहारो नास्ति। असाधारणधर्मज्ञानस्य साधारणधर्मज्ञानस्येव संशायकत्वं न भवति, किन्त्वनध्यवसायज्ञानजनकत्वमिति प्रशस्तपादभाष्यानुरोधेनासाधारणहेत्वाभासस्यान**ध्यवसित**मिति नाम। तयोर्मिथोभेद उच्यत इत्यर्थः। 'विरुद्धासिद्धसंदिग्धमलिंगं काश्यपोऽब्रवीत्' इति कणादाभिमते हेत्वाभासत्रित्वे **प्रशस्तपादश्च**तुर्थं हेत्वाभासमनध्यवसितमसाधारणपर्यायमभाषिष्ट, तस्य संदिग्धेऽनन्तर्भावाभिप्रायेणेति ध्येयम्। **व्यतिरेकिण** इत्येकवचन-

साध्यवति सपक्षे साधनस्य ततो व्यावृत्तौ अन्वयबाधादाभासत्वं स्पष्टम्। अदृष्टे तु तस्मिन् साध्यान्वयाक्षेपकपूर्वोक्तप्रमाणावतारादनाभासत्वं सुवचम्" इति, तदनादरभाषितमिति मन्यामहे ; अन्यथा सपक्षैकदेशवृत्तेराभासत्वप्रसङ्गात्। साध्यान्वयबाधस्य तावतापि सुवचत्वात्। लक्षणनिरूपणे चाभिप्रायव्यक्तेः ; साध्यान्वयाक्षेपकाणां च सामान्यतोपि निराकरिष्यमाणत्वात्॥

नन्‌ सपक्षैकदेशवर्तिनः साध्यान्वयोऽप्यस्तीति कथं साध्यान्वयबाधशङ्का? सपक्षे सत्यपि पक्षमात्रवर्तिनो वा पक्ष एव साध्यान्वयसंभवे कथं तद्बाधः? तथाप्यन्यत्र कचित् साध्यसंबन्धो न दृष्ट इति चेत्, तुल्यं केवलव्यतिरेकिण्यपि। साध्यमपि तत्र कचिन्न दृष्टमिति विशेष इति

---

पाठे तु असाधारणहेतौ व्यतिरेकव्याप्तिमात्रसत्त्वात् अनध्यवसितनामकत्वाच्च अनध्यवसितकेवलव्यतिरेकिपदेन तस्यैव ग्रहणम्। तदा सद्धेतुभूतस्य केवलव्यतिरेकिणः असाधारणकेवलव्यतिरेक्यपेक्षया भेद एष इत्यर्थः। दृष्टे **सपक्षे** गवादौ **साधनस्य** शब्दत्वस्य **अन्वयबाधात्** साध्यसामानाधिकरण्याभावज्ञानात्। केवलव्यतिरेकिणि तु सपक्षस्यैवाभावात् साध्यवति हेत्वभावरूपसाध्यसामानाधिकरण्याभावग्रहायोगात् पक्षे साध्यान्वयस्याऽऽक्षेपकं यत् प्रमाणं साध्याभावे हेत्वभावज्ञानसहकृतं पक्षे हेत्वन्वयज्ञानं तस्या**वतारात्** कार्यकरत्वात् सद्धेतुतेति केवलव्यतिरेकिणः सद्धेतुत्वमुपपादितमिति। **अनादरभाषितम्** असाधारणाद् वैलक्षण्यमीषदस्तीति तावता सद्धेतुत्ववादिनो ये. तेषामाशयानुवादमात्रम्। **अन्यथा**=अनाभासत्वं सुवचमित्यस्याऽऽदरपूर्वकत्वे वह्निमान् धूमादित्यत्रापि अयोगोलके सपक्षैकदेशे हेत्वभावात् सामानाधिकरण्याभावादाभासता स्यादिति महानसे सामानाधिकरण्यमस्तीति चेत्, तत्राह **साध्यान्वयेति**। असति सपक्षेऽनाभासत्वम्, सति सपक्षे आभासत्वमिति ह्युक्तम्। सपक्षैकदेशे हेत्वभावेऽपि सत्सपक्षकत्वात् स्यादाभासतेति भावः। केवलव्यतिरेकिणि साध्यान्वयाक्षेपकप्रमाणावतारो लक्षणनिरूपणघट्टे तत्त्वरत्नाकरे निराकरिष्यते। **सामान्यतः**=लक्षणतदितरसर्वकेवलव्यतिरेकिसाधारण्येन। अतः पूर्वोक्तमनादरभाषितमेवेत्यर्थः। **नन्वित्यादि**। अयं भावः—कोऽयमाभासताप्रयोजकः साध्यान्वयबाधो नाम किं हेतुनिष्ठसाध्यसामानाधिकरण्यात्मकसंबन्धरूपसाध्यान्वयस्य सामान्याभावनिश्चयः, उत किञ्चिदधिकरणावच्छेदेन तदभावनिश्चयः साध्यवन्निष्ठाभावप्रतियोगित्वनिश्चयरूपः? आद्ये असाधरणहेतौ पक्षे साध्यसंदेहे सति, हेतौ सामान्यतः साध्यान्वयाभावनिश्चयायोगः। द्वितीये अयोगोलकनिष्ठाभावप्रतियोगित्वनिश्चयात् धूमस्याऽऽभासता स्यादिति। **सपक्षैकदेशवर्तिनः** धूमस्य। **कथमिति**। साध्यसामानाधिकरण्यत्वावच्छिन्नप्रतियोगिताकाभावो दुर्वच इति प्रश्नः। समाधत्ते **सपक्षे सत्यपीति**। पक्षमात्रवर्तिन्यसाधारणे पक्षे साध्यसामानाधिकरण्यसंदेहसत्त्वात् कथं सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावनिश्चयः। अतः सोपि सद्धेतुः स्यात्। अतः साध्यवत्किञ्चिद्वृत्तित्वाभावोऽप्यलमिति वक्तव्यम्। तत् धूमादावप्यस्तीति। ननु पक्षव्यतिरिक्तसाध्यवन्निष्ठत्वसामान्याभाव एव साध्यान्वयबाध इति पृच्छति **तथापीति**। पक्षव्यतिरिक्तत्वविशेषणाघटितसामान्याभावासंभवेऽपीत्यर्थः। **तुल्यमिति**। केवलव्यतिरेकिण्यपि पक्षातिरिक्तं साध्यवन्नास्ती-

चेत्, हन्त! दोष एव गुणीभवत्यायुष्मतः॥ साध्यादर्शने साध्यासंबन्धोपि न दृष्टः स्यादिति चेत्, तर्ह्यसंबन्धदर्शनं दोष इति सपक्षैकदेशवर्तिनोप्यसौ दुस्त्यजः॥ क्वचित् संबन्धदर्शनात् तस्य दोषपरिहार इति चेत्, तर्हि क्वचिदपि संबन्धादर्शनात् केवलव्यतिरेकिणः साध्यसंबन्धप्रतीत्यनुत्पत्तिरेवेति किं बाधेन? तेनैव पक्षे संबन्धः प्रतीयत इति चेन्न; सिद्धे संबन्धे व्याप्याद्व्यापकधीः, व्यापकप्रतीतौ च संबन्धधीरित्यन्योन्याश्रयणात्॥

अथ साध्याभावः साधनाभावेन व्याप्तः; साधनाभावश्च निवर्तमानः स्वव्याप्यं साध्याभावमपि निवर्तयन् साधनस्य साध्यव्याप्यतामुपादायैव विश्राम्यतीति प्रतिबन्धसिद्धिः; अभावव्याप्तिवैपरीत्येन भावव्याप्तेः सार्वत्रिकत्वात्, साध्यसाधनविरुद्धधर्मद्वया-

---

तन्निष्ठत्वं दुर्वचमिति भावः। शंकते **साध्यमपी**ति। असाधारणे सपक्षो दृष्टः; तत हेतुर्न दृष्टः, केवलव्यतिरेकिणि सपक्ष एव न दृष्ट इति वैलक्षण्यमित्यर्थः। **दोष एवे**ति। साध्यवतः सत्त्वे हेतोस्तद्वृत्तित्वमस्ति न वेति विचार्य सपक्षव्यावृत्तत्वमुपपाद्यम तस्यैवासत्त्वे तु सुखेनोपपाद्यमिति भावः। **दोष एव**=त्वत्पक्षप्रतिकूलमेव। **आयुष्मतः**=स्वयमायुष्मत्तया स्वपक्षस्यायुरभावं पश्यतः। साध्याप्रसिद्धौ साध्यसामानाधिकरण्याभावनिश्चयरूपबाधो दुर्वच इति शंकते **साध्यादर्शन** इति। प्रकारान्तरेण परिजिहीर्षुः प्रागुक्तमेव पुनराह **तर्ही**ति। सामानाधिकरण्याभावनिश्चयो दोषः; अयोगोलकावच्छेदेन सामानाधिकरण्याभावनिश्चयो धूमेऽप्यस्तीति। स आह **क्वचिदि**ति। महानसे इत्यर्थः। विवक्षितमाह **तर्ही**ति। एतावता भवता किमुक्तं भवति—अनुमितौ व्यतिरेकव्याप्तिज्ञानवत् हेतौ साध्यसामानाधिकरण्यज्ञानमपि कारणम्; असाधारणे तदभावादाभासतेत्येव। एवञ्च केवलव्यतिरेकिण्यपि अनुमितेः प्राक् तज्ज्ञानाभावादाभासतैव। तथा च सामानाधिकरण्यप्रतीत्यभाव एवोच्यताम्, सामानाधिकरण्याभावनिश्चयरूपबाधवर्णनमनपेक्षितमिति। पक्षान्तर्भावेण सामानाधिकरण्यप्रतीतिरिति शंकते **तेने**ति। पक्षान्तर्भावेण प्रतीतिः तेन हेतुनैवोत्पाद्या; तदनन्तरमनुमितिः, अनुमित्यैव सामानाधिकरण्यधीरित्यन्योन्याश्रयः। अनुमितिरेव सामानाधिकरण्यप्रतीतिरिति चेत्—तस्य तत्कारणत्वे आत्माश्रयः इत्यर्थः। अत्र व्यतिरेकव्याप्त्यधीनानुमितौ साध्यसामानाधिकरण्यबाधः कथं प्रतिबन्धकः, व्यतिरेकव्याप्तिप्रतिबन्धकत्वं वा तस्य कथम्। अतः सामानाधिकरण्यज्ञानं कारणमित्येव वक्तव्यम्। तदपि न भवति केवलव्यतिरेकिणीति च विवक्षितम्। ननु व्यतिरेकव्याप्तिरन्वयव्याप्त्युद्भावनमुखेन हेतुः; साध्यान्वयबाधे चान्वयव्याप्तिभंगः स्यादिति बाधाभावोऽपेक्षित इत्यभिप्रायेण शंकते **अथे**ति। **प्रतिबन्धसिद्धिः**=व्याप्तिग्रहः। अयं केवलव्यतिरेकिहेतुः प्रकृतसाध्यनिरूपितान्वयव्याप्तिमान् तद्व्यतिरेकव्याप्तिमत्त्वात्, यो यद्व्यतिरेकव्याप्तिमान् स तदन्वयव्याप्तिमानिति प्रयोगः। न चात्राप्रयोजकशंका। सा किं विषमव्याप्तव्यतिरेकिणि, उत समव्याप्ते। नाद्यः; अभावव्याप्तिव्युत्क्रमेण भावव्याप्तेः सर्वेष्टत्वात्,

न्वयसमव्याप्तेश्च साध्यसाधनसमव्याप्त्यव्यभिचारित्वसिद्धेरिति चेत्, मैवम्—

व्याप्यानां व्यापकाभावव्यापकाभावयोगिता। कथं नाम नियन्तव्या केवलान्वयिवादिनः ८४
केवलान्वयिनि व्याप्ये न हि सर्वसपक्षगे। तद्व्यापके वा क्वापि स्यादभावप्रतियोगिता॥ ८५

अपि च अनध्यवसितेपि तथा व्याप्तिः सुवचा। नित्यत्वाभावो हि गन्धवत्त्वाभावेनाबादिषु व्याप्तः। गन्धवत्त्वाभावश्च पृथिव्या निवर्तमानः स्वव्याप्यं नित्यत्वाभावमपि निवर्तयन् गन्धवत्त्वस्य नित्यत्वव्याप्यतामुपादायैव विश्राम्यतीति। नन्वेवमनित्यत्वेनापि व्याप्तिस्तस्य ग्रहीतुं शक्यत इति चेत्, तर्हि केवलव्यतिरेकिसाध्येन वस्त्वन्तरासाधारणस्वभावस्यापि व्याप्तिर्ग्रहीतुं शक्यत इति समो दोषः। तथा हि—घटः स्वप्रकाशः, घटत्वात्; न यदेवम्, न तदेवम्; यथा पट इति व्याप्तिः सुग्रहा॥ अनुभूतेरनुभाव्यत्वे घटादि-

नान्यः, विरुद्धधर्मद्वयरूपाभावसमव्याप्तौ तत्प्रतियोगिसमव्याप्तेश्च संप्रतिपन्नत्वादित्यर्थः। परिहरति मैवमिति। गगनादेरवृत्तिपदार्थत्ववादितार्किकमते इदं गगनाभाववत् दिगभावादिति प्रयोगे अभावव्याप्त्या भावव्याप्त्यनुमानभंगादिदमयुक्तम्। अस्मन्मते ईश्वराभाववान् कालाभावादिति प्रयोक्तव्यम्। यथाऽन्वये सति व्यतिरेकेण भाव्यमिति न नियमः, तथा व्यतिरेके सत्यन्वयेन भाव्यमित्यपि न नियमः। तस्मादभावव्याप्तौ भावव्याप्त्युन्नयनं न भवतीति विवक्षुः प्रथमांशमुपपादयति कारिकाद्वयेन। **केवलान्वयिवादिनः**= महाविद्यारूपकेवलान्वय्यनुमाननिरासाय सर्वकेवलान्वयिदूषकवादीन्द्रपक्षास्वीकारेण केवलान्वयिहेतुविभागं स्वीकृतवता अन्वयव्याप्तिमतः केवलान्वयिसाध्यकहेतोः अभावाप्रसिद्ध्या साध्याभावव्यापकीभूताभावप्रतियोगितारूपव्यतिरेकव्याप्तिः कथमुच्येत। तत्र पक्षव्यतिरिक्तस्य सर्वस्य सपक्षत्वात् व्याप्यव्यापकोभयवत्त्वात्, अभावस्य दुर्वचतया अभावप्रतियोगितायाः व्यापके व्याप्ये च दुर्वचत्वादित्यर्थः। तथाच यथा सर्वस्यापि सपक्षतया तत्र व्यतिरेकव्याप्त्यसंभवः, तथा केवलव्यतिरेकित्वाभिमते सर्वस्यापि विपक्षत्वात् अन्वयस्य प्रदर्शनायोगात् अन्वयव्याप्त्यभाव एवेति भावः।

एवं व्यतिरेकव्याप्त्याऽन्वयव्याप्त्युन्नयने पूर्वम् अनध्यवसित.केवलव्यतिरेकिणोर्वैलक्षण्यमुपपादितं न घटत इत्याह अपि चेति। **अनध्यवसितेऽपि** असाधारणहेत्वाभासेऽपि केवलान्वयिदृष्टान्तेन व्याप्त्यन्तराहित्यमुक्तम्; असाधारणसाम्येन केवलव्यतिरेकिण आभासत्वमिह विवक्षितमिति ध्येयम्। अनुमितेः प्राक् हेतौ साध्यसामानाधिकरण्यनिश्चयोऽनुमानेऽपेक्षितः। तदभावोऽसाधारणकेवलव्यतिरेकिसाधारण इति विवक्षितम्। पृथिवी नित्या गन्धवत्त्वादिति स्यादिति भावः। पृथिव्यनित्या गन्धवत्त्वादित्यपि प्रयोगापत्त्या तदयोगे, अनुभूतिः स्वयंप्रकाशा अनुभूतित्वादितिवत् घटः स्वयंप्रकाशः घटत्वादिति इयं पृथिवीपदवाच्या गन्धवत्त्वादितिवत् जलं पृथिवीपदवाच्यं जलत्वादित्याद्यपि व्यतिरेकव्याप्तिसत्त्वे, स्यादिति भावः। **वस्त्वन्तरम्**=अनुभूतिपक्षकस्थलस्य प्रकृतत्वात् अनुभूतितोऽन्यद् वस्तु घटादि। असाधा-

वत् अननुभूतित्वप्रसङ्ग इति केवलव्यतिरेकिणो विपक्षे बाधकमस्तीति विशेष इति चेन्न ; घटस्यानुभाव्यत्वे पटवदघटत्वप्रसङ्ग इति सुवचत्वात् ।

किं च सपक्षवति असाधारणे साध्यं क्वचित् प्रसिद्धमिति तद्व्यतिरेकव्याप्तिर्ग्रहीतुं शक्या; इह तु साध्यधर्मस्य पूर्वमप्रसिद्धतया तद्व्यतिरेकव्याप्तेस्तत्प्रतियोगिकत्वेन प्रवृत्ताया दुर्ग्रहत्वमेव ॥ अथानुभाव्यत्वरूपतद्व्यतिरेकः सुग्रह इति चेन्न ; तथापि यदनुभाव्यं न सा अनुभूतिरिति व्याप्तिग्रहणदशायामेव प्रतियोगिभूतानुभूत्यनुभाव्यत्वदर्शनेन व्याघातात् । भावसाध(ध्य)ककेवलव्यतिरेकिषु च यदि साध्यं पक्षे प्रसिद्धम्, तर्हि व्यर्थमनुमानम् । यद्यन्यत्र, तदा सपक्षे सति केवलव्यतिरेकित्वं न स्यात् । न चोभयातिरिक्तमस्ति, व्याघातात् । न हि भावाभावात्मना विकल्पेपि कोट्यन्तरसंभवः, "परस्परविरोधे तु न प्रकारान्तरस्थितिः" इति न्यायात् । तुल्यं चेदमभावसाध्य(ध)कत्वेपि ; विशिष्टसाध्यादिव्यतिरेकमुखेन व्याप्तेर्ग्रहीतव्यत्वात् ; अन्यथा कस्य केनैषा व्यतिरेकव्याप्तिः ? स्वरूपतः प्रवृत्तापि हि व्यतिरेकव्याप्तिः । सा प्रकृतव्यतिरेकत्वपरामर्शाभावे कथं प्रकृतस्योपकरिष्यति ।

न च सामान्यतः क्वचिदिति विदितं साध्यं केवलव्यतिरेकिणा पक्षरूपे विशेषे व्यवस्थाप्यत इति वाच्यम्; तथाविधसामान्योपस्थापकप्रमाणाभावात् ॥ वेद्यत्वं किंचिन्निष्ठात्यन्ता-

---

रणतोऽपि निहीनत्वमाह **किञ्चेति** । **साध्यधर्मस्य** अननुभाव्यत्वरूपसाध्यस्य । **अप्रसिद्धतयेति** । अनुभाव्यत्वरूपप्रतियोगिन एव सर्वत्र सत्त्वादिति भावः । अत्राभावस्यैव साध्यतया तदभावरूपो व्यतिरेकोऽनुभाव्यत्वमेव । तच्च प्रसिद्धम्—यदनुभाव्यम्, न सा अनुभूतिरिति व्यतिरेकव्याप्तिरिति भावः । **तथापीति** । व्यतिरेकव्याप्तेः सुवचत्वेऽपीत्यर्थः । एतत्पदाकूतं तु व्यतिरेकव्याप्तिर्दुर्ग्रहेति, अननुभाव्यत्व प्रमेयत्वाभावासंभववादितार्किकादिदृष्ट्या न साध्यम् अप्रसिद्धत्वादिति च । **परस्परेति कुसुमाञ्जलि**कारिका । भावाभावरूपमिथोविरुद्धप्रकारेण विभागे तदन्यः प्रकारो न संभवतीत्यर्थः । **विशिष्टसाध्यादीति** । साध्यतावच्छेदकाकारविशिष्टनिरूपितान्वयव्याप्तिवत् अनुभाव्यत्वप्रतियोगिकाभावत्वरूपसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ननिरूपकताकव्याप्तिमत्त्वं हेत्वभावे ग्राह्यमित्यर्थः । धूमाभाववान् अग्न्यभावादित्यत्र धूमव्यापकीभूताभावप्रतियोगी अग्न्यभाव इति व्याप्तिज्ञानमनुमितिहेतुर्भवति किलेत्यत्राह **स्वरूपत** इति । धूमाभावाभावत्वाकारं विना धूमत्वाकारेण प्रवृत्ताऽपि व्यतिरेकव्याप्तिर्वेन हीष्टा । अतः धूमोऽयं धूमाभावाभाव इति व्यतिरेकत्वपरिशीलनाभावे कथं कार्यकरी । अतस्तज्ज्ञानसहकृततद्व्याप्तिज्ञानकारणत्वकल्पनापेक्षया धूमाभावाभावत्वेन तद्घटितव्याप्तेरेव हेतुत्वमुचितमिति भावः । तथाचानुभाव्यत्वाभावाभावत्वेन ग्रहणस्याऽऽवश्यकतया अनुभाव्यत्वाभावस्याप्रसिद्धौ कथं सेत्युक्तं भवति । पुनः शंकते **न च सामान्यत** इति । अनुभाव्यत्वाभावाधिकरणस्य विशिष्येदन्त्वेनाग्रहणेऽपि सामान्यतं

भावप्रतियोगि, धर्मत्वात्, घटत्ववदित्याद्यस्तीति चेन्न; स्ववचनविरोधात्, किंचिदिति निर्दिश्यमानस्य वेद्यत्वे तदभावाधिकरणत्वविरोधात्; अवेद्यत्वे तत्र किंचिच्छब्दप्रयोगस्यैवानुपपत्तेः। यत्किंचिद्धर्मात्यन्ताभावलक्षणधर्मेण चानैकान्त्यात्। तस्य च सर्वत्र वृत्त्यनभ्युपगमे पुनर्व्याघातः। तथा सति हि कस्यचित् सर्वधर्मविशिष्टत्वमेष्टव्यम्। तथा च तत्र तद्वत्त्व-तदभाववत्त्वयोः समुच्चयः स्यात्। संविदोपि यत्किंचिद्धर्मात्यन्ताभावविरहे तन्निष्ठात्यन्ताभावसाधनविरोधः, तद्विरहेण पुनस्तत्सिद्धेश्च। यत्र यदत्यन्ताभावविरहस्तत्र तस्य स्वरूपावश्यम्भावात्। न च स्वरूपमेवात्र तद्विरहः, तदारोपसहे तदयोगात्। एवं किंचिच्छब्दवाच्यत्वलक्षणधर्मेणाप्यनेकान्तो वाच्यः। यदि क्वचित् किंचित्त्वं न स्यात्, अलीकतैव स्यात्। कथं च क्वचिदिति निर्दिष्टे किंचित्त्वं न स्यादित्युच्यते?

एवम्, इच्छादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रिताः, अष्टद्रव्याश्रितत्वायोगे सति गुणत्वादित्यत्राष्टद्रव्यातिरिक्तद्रव्यासिद्धौ व्यतिरेकिवैयर्थ्यम्। असिद्धौ स एव दोषः॥ गुणत्वेन द्रव्याश्रितत्वेनुमिते अतिरेकानतिरेकविप्रतिपत्त्या च संशये अष्टद्रव्याश्रितत्वकोटावनिष्टप्रसङ्गेनाभिमतकोटिपक्षपातिनी शङ्का जायते, तद्बलेन तदेककोटिगोचरस्मृतिसंततिर्वा। इदमेव च संभावितत्वं

---

किञ्चित्त्वेन ग्रहणमस्त्विति भावः। किञ्चित्त्वेन तद्ग्राहकमानमपि नेत्याह **तथाविधेति**। किञ्चिदिति गृहीते वेद्यत्वस्यैव सत्त्वात् तत्र प्रकृतसाध्यं न भवतीत्याह **स्वेति**। वचनविरोधवत् किञ्चिद्धर्मात्यन्ताभावरूपधर्मे किञ्चिच्छब्दवाच्यत्वरूपधर्मे च क्रमेण व्यभिचारमप्याह **यत्किञ्चिदिति**। किञ्चिद्धर्मात्यन्ताभावस्य केवलान्वयितया तत्र साध्याभावादिति भावः। **तस्यचेति**। क्वचित् किञ्चिद्धर्मात्यन्ताभावो नास्तीत्यभ्युपगमे तत्प्रतियोगि तत्रास्तीति वक्तव्यम्। सर्वस्यापि यत्र स्वीकारः, तत्रैव किञ्चिद्धर्मात्यन्ताभावो न भवितुमर्हति। न च सर्ववत् किञ्चिद्भवेत्। ततस्तत्र सर्वाभाववति सर्ववत्त्वोक्तौ व्याघातः। एवं सर्ववत्त्वतदभावयोरपि सर्वधर्मान्तर्भावात् सर्वं स्यादित्यर्थः। **संविदोऽपीति**। संविदि अनुभाव्यत्वाभावोऽस्ति न वा। नास्तीति चेत्—तर्हि वेद्यत्वमित्यादिनोक्तेऽनुमाने किञ्चिन्निष्ठात्यन्ताभावेति संविन्निष्ठाभावग्रहणं कथम्। धर्मात्यन्ताभावविरहे स्वीकृते तस्य प्रथमाभावप्रतियोगिस्वरूपतया तद्धर्मसिद्धिः स्यात्। ननु धर्मात्यन्ताभावविरहो धर्मिभूतसंविद्रूप एव। अतो न धर्मवत्त्वापत्तिरिति शंकां निरस्यति **न च स्वरूपमेवात्र तद्विरह** इति। निरासे हेतुमाह **तदारोपे**ति। अहं संवेद्मीति ज्ञाने सत्येव अहं किञ्चिद्धर्मात्यन्ताभाववानिति ज्ञानस्यापि सत्त्वात् संविदस्तदारोपसहत्वात् तत्प्रतिबन्धकत्वाभावात् तस्याः तद्विरहरूपत्वायोगादित्यर्थः। व्यभिचारस्थलं द्वितीयमाह **एवमिति**। किञ्चिन्निष्ठाभावेत्यत्र किञ्चित्पदेन संविदस्तेनैव गृहीततया संविद्यपि तत् सिद्धमिति ध्येयम्।

एवं भावसाध्यके अभावसाध्यके च व्यतिरेकिणि साध्यप्रसिद्धिर्दुर्वचेत्युक्तम्; तार्किकस्वीकृतपरिशेषानुमानरूपकेवलव्यतिरेकिण्यपि दर्शयति **एवमिति**। संभावनात्मकज्ञानविषयत्वात् प्रसिद्धत्वमेवेति शंकते

**वस्तुन. । अतः संभावनासिद्धत्वेनाप्रसिद्धविशेषणत्वव्यतिरेकासिद्धयोरसिद्धेरिति चेन्न—संभावनायाः प्रमाणत्वे पूर्ववत् प्रमाणान्तरानपेक्षणात्, अप्रमाणत्वेऽनुपयोगित्वात् ॥ साध्यमानस्य पक्षमात्रे हि शङ्का गुणाय ; न तु सार्वत्रिकी ॥**

**यद्विपर्ययेऽनिष्टप्रसक्तिः, तत् प्रमाणयोग्यमिति निश्चिते विप्रतिपत्तिवाक्यजनितसंशयाधीनसंभावनापदमिदं च तथेति सामान्यतः प्रमाणविषयत्वे सिद्धे विशेषापेक्षायां व्यतिरेकिसाफल्यमिति चेन्न ; इदं च तथेत्युपनयस्य निराश्रयत्वात्। सिषाधयिषितानुमानेन तत्सिद्धावन्योन्याश्रयणात्। प्रमाणयोग्यमित्यनेनैव प्रामाणिकत्वसिद्धौ प्रमाणविशेषचिन्तायाश्च निष्प्रयोजनत्वात्**

**यच्च—गुणत्वादिति सामान्यतोदृष्टेन द्रव्याश्रितत्वे सिद्धे तत्र चान्वयव्यतिरेकव्याप्तिनिरूपणे अष्टद्रव्याश्रितत्वानुपपत्तिसाचिव्यात् तत एव हेतोरतिरिक्ताश्रितत्वं सिध्यतीति—तदपि न ; तत्राप्यतिरिक्तविशेषाकारस्य क्वचिदप्यसिद्धेः ॥ इच्छादयोऽनुपपन्नव्यतिरिक्ताश्रिता इति सामान्यसाधने तु—यो यद्द्रव्याश्रितत्वानुपपत्तौ सत्यां द्रव्याश्रितः, स ततोऽतिरिक्तद्रव्याश्रितः ; यथा गन्धादिः ; इच्छादयश्च तथा—इत्यन्वयस्यापि सिद्धौ न केवलव्यतिरेकिता ॥ अस्त्वेवम्**

---

**गुणत्वेने**ति । **अभिमतकोटिपक्षपातिनी** उत्कटतयाऽतिरेककोटिविषयिणी। **शंका** संशयः । गुणाश्रयोऽयमतिरिक्तः स्यादिति संभावना **तद्बलेन**=शंकाधीनसंस्कारसंततिकृता । **इदमेव**=शंका-तदधीनस्मृत्यन्यतरविषयत्वमेव । संभावनापदमुत्कटैकतरकोटिकज्ञानवाचीति भावः। **नेत्या**दि । संभावना प्रमाणं चेत्, अनुमानं किमर्थम् । अप्रमाणश्चेत्—मानाविषयत्वादप्रसिद्धत्वमेव । ननु साध्यसंदेहस्यानुमानोपयोगित्वात् कथं संदेहमुखेन दूषणमित्यत्राह **साध्यमानस्येति** । क्वचित्प्रसिद्धस्य पक्षे संदेहो गुणाय ; सर्वत्र संदेहस्तु न गुणाय; अप्रसिद्धिदोषायैवेत्यर्थः । अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वानुमानात् पूर्वं तस्य प्रमाणयोग्यत्वेन रूपेण सामान्यतः सिद्धतया प्रसिद्धत्वमिति शंकते **यद्विपर्यये** इति । यदि अतिरिक्तद्रव्याश्रितत्वं न स्यात्, प्रकृतहेतुर्न स्यादित्यनिष्टप्रसंगः । यत्रैवमनिष्टप्रसंग, तत् प्रमाणयोग्यमिति व्याप्तिग्रहणम् । **विप्रति-पत्ती**त्यादिनोपनयप्रयोगः । अस्मन्मतेऽवयवपञ्चकनिर्बन्धाभावात् प्रतिज्ञादित्यागः । **विशेषापेक्षायां**=किं तत् प्रमाणमिति बुभुत्सायां व्यतिरेक्यनुमानप्रयोग इति । दूषयति **इदञ्चे**ति । उपनयघटकेदंशब्दस्य कोऽर्थः । अतिरिक्तद्रव्यस्याप्रसिद्ध्या तद्घटितार्थायोगात्, प्रमाणयोग्यत्वमिदं किं प्रमाणनिष्पन्नप्रमितिविषयत्वम्, उत संभावितप्रमाणकत्वम् । अन्त्ये दोष उक्तः ; आद्ये पश्चाद् व्यतिरेक्यनुमानवैयर्थ्यमित्याह **प्रमाणयोग्यमितीति** । कश्चिदाह—अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं न साध्यम्—तथासति हि तद्घटितव्याप्तेर्ग्राह्यत्वादप्रसिद्धिदूषणापत्तिः । द्रव्याश्रितत्वमेव साध्यम्; गुणत्वमात्रं हेतुः । एतत्सामान्यव्याप्तिज्ञाने सति तत्समकालं क्लृप्तद्रव्यानाश्रितत्वज्ञाने च सति जायमानानुमितिरर्थादतिरिक्तद्रव्याश्रितत्वरूपविशेषे पर्यवस्यतीति । तद् दूषयति **यच्चे**ति । **तत्रा**पि अनुमितिमात्रे तद्भानस्वीकारेऽपि पृथिव्याद्यष्टकातिरिक्तद्रव्यस्य प्रागगृहीतस्य भानं न भवतीत्यर्थः ॥ पृथिव्याद्यष्टद्रव्येत्यनुक्त्वा प्रकृतगुणाश्रयत्वानुपपत्तिविषयद्रव्यातिरिक्तद्रव्येति साध्यकोटौ निवेशे गन्धादेरपि तदाश्रयत्वानुपपत्तिविषयजलाद्यतिरिक्तद्रव्याश्रिततया

तथापि पश्चात् केवलव्यतिरेकिणापि जीवितुं शक्यमिति चेन्न; "संदिग्धे न्यायः प्रवर्तते" इति न्यायेनाशक्यत्वात् ॥

अथ सामान्यतःसिद्धेच्छाद्याश्रयपक्षीकारेण, विगीतोऽष्टद्रव्यव्यतिरिक्तः, इच्छाद्याश्रयत्वादिति साध्यते ; तदा गुणादौ सपक्षे तिष्ठति त्वय्यैवाभासतेष्य(तोच्य)ते । गुणादिनिष्ठ[तया] हेत्वन्तरप्रयोगे तु अन्वयित्वमेव । तत्र तु गुणादेरपि पक्षीकरणे अंशतः सिद्धसाध्यत्वम् । तदसिद्धौ पुनरप्रसिद्धविशेषणता ।

यच्च—इच्छादेः कार्यत्वादिना सामान्यतः समवायिकारणसिद्धौ, शरीरमिच्छासमवायिकारणवत्, प्राणादिमत्त्वात्; न यदेवं न तदेवमिति सर्वदोषपरिहारः इति ; तदपि न, संबन्धमात्रसाधने घटादेः सपक्षत्वापातात्, शरीरत्वादिलक्षणसंबन्धविशेषसाधने त्वप्रसिद्धविशेषणत्वात्; अन्यथा घटः इच्छासमवायिकारणवान्, घटत्वात्; न यदेवं न तदेवमित्यपि प्रसङ्गात्, अन्यतो विशेषनिर्णयेऽस्य निरवकाशत्वात् । न च वह्न्यादिसंबन्धसाधनेऽप्येवं संबन्धविकल्पप्रसङ्गः ; वह्निसंयोगित्वस्य स्वरूपतः सिद्धस्य पक्षधर्मताबलेन पर्वतनिष्ठत्वमात्रविशेषलाभात् । अत्र त्विच्छासमवायिकारणसंबन्धविशेषस्यैव साध्यधर्मस्य स्वरूपतः क्वचिदप्यसिद्धत्वेन तस्य शरीरनिष्ठत्वसाधनायोगादिति ॥

यत्तु सर्वं कार्यं सर्ववित्कर्तृपूर्वकम्, कादाचित्कत्वात्, वेदाः सर्वज्ञप्रणीताः, वेदत्वादित्याद्युदाहरणम्; तत्रापि सर्ववित्कर्तृपूर्वकत्वादेः क्वचिदप्यग्रहणात् तद्व्यतिरेकस्य साधनव्य-

---

प्रसिद्धिरस्तीति विमर्शे अन्वयव्याप्तिरेव भवतीति समाधत्ते **य इति । जीवितुंशक्य**मिति । अप्रसिद्धिदोषो नास्ति हीति भावः । सिद्धसाधनदोष इत्याह **संदिग्धे** इति । **प्रवर्तत** इति । 'न निर्णीते नाप्यप्रसिद्धे' इति न्यायशेषः । **आभासते**ति । असाधारण हेत्वाभासतेत्यर्थः । असति हि सपक्षे केवलव्यतिरेकितेति त्वन्मतमिति । **गुणादिनिष्ठे**ति । बहिरिन्द्रियाग्राह्यत्वे सति ग्राह्यत्वादित्यादिः । **गुणादेरपी**ति । तथाच सपक्षासत्त्वात् नाभासता । तथाच इच्छाद्याश्रय- गुणादिसमुदायोभयमष्टद्रव्यातिरिक्तं तदुभयत्वादिति प्रयोगः । एवञ्चास्य केवलव्यतिरेकितेति भावः । **तदसिद्धौ**=अष्टद्रव्यातिरेकस्य कुत्राप्यसिद्धौ साध्याप्रसिद्धिरिति । ननु अष्टद्रव्यातिरिक्तद्रव्येति न साध्यघटकम्; किंतु इच्छादयोऽष्टद्रव्यातिरिक्तकिञ्चिदाश्रिताः अष्टद्रव्यानाश्रितत्वे सति आश्रितत्वादित्यनुमानम् । इच्छाद्याश्रयस्य द्रव्यत्वसिद्धिस्तु, द्रव्यानाश्रितत्वादिहेतुभिर्भविष्यति, 'अद्रव्यद्रव्यत्वमुक्तम् । क्रियावत्त्वात् गुणवत्त्वाच्च' (वैशे.द.२.1.) इति न्यायादिति चेत्—तर्हि गुणत्वकर्मत्वादिरूपान्वयिदृष्टान्तसत्त्वेनान्वयव्यतिरेकितैव; न केवलव्यतिरेकितेति । गुणत्वादिति हेतुप्रयोगे च गुणत्वादिसपक्षसत्त्वादाभासतेति ॥ **संबन्धमात्रे**ति । **समवायिकारणव**दित्यत्र मतुबर्थः किं संबन्धसामान्यम् उत समवायिकारणनिष्ठात्मतानिरूपितशरीरत्वम् । आद्येत्यर्थः । **सपक्षत्वापातादि**ति । तत्र संयोगकालिकादिसंबन्धसत्त्वादिति भावः । प्राणादिमत्त्वादित्यत्रापि मतुबर्थस्य संबन्धसामान्यत्वे व्यभिचारः । वस्तुत्वादित्येवालमिति च स्यात् । **तार्किकरक्षो**क्ते केवलव्यतिरेक्यन्तरेऽपि साध्याप्रसिद्धिमतिदिशति **यत्त्वि**ति

तिरेकेण व्याप्तत्वग्रहणमनुपपन्नम् । यदि प्रत्येकव्युत्पन्नसर्वविदादिपदसमुदायसमभिव्याहारमात्रेण साध्यसिद्धिरिति मन्यसे, तदा शशविषाणादिवत् अयोग्यपदसमभिव्याहारमात्रेण भ्रान्तिसिद्धं साध्यमित्युक्तं भवति । यदि बाधकाभावादत्रायोग्यत्वं नास्तीत्यभिप्रायः, तदप्यसारम्, सामान्यतः सिद्धस्यैव विरोधस्य साधकाभावे बाधकत्वात्, तस्यैवानुमानस्यैतत्साधकत्वेऽन्योन्याश्रयणात् । न चागमतया नानि पदानि तदर्थमुपस्थापयन्ति, अनभ्युपगमात्; आप्तोक्तत्वनित्यत्वयोरभावे तदनुपपत्तेश्च । अथाऽऽगमसिद्धं सर्वज्ञमात्रमुपजीव्य तत्पूर्वकत्वं साध्येत, तथापि तत्पूर्वकत्वस्याप्रसिद्धिस्तदवस्थैव । तस्यापि चेत् प्रसिद्धिरागमतो गृह्येत; सा चेत् पक्षे, कृतमनुमानेन । विपक्षे चेत्, व्याघातः । सपक्षस्तु नात्र त्वयेष्यते, तथा सति अन्वयव्यतिरेकित्वापातादिति । एवं केवलव्यतिरेक्युदाहरणान्तरेष्वपि दूषणमुन्नेयम् ॥

सर्वत्र च केवलव्यतिरेकिणि सत्त्वादिभिः केवलान्वयिभिः सार्वत्रिकसाध्यदर्शनलब्धजीवितैः प्रतिरोधो बाधो वा ग्राह्यः । एवं केवलव्यतिरेकिणि साध्याप्रसिद्धेस्तद्व्यतिरेकव्याप्तिर्दुर्ग्रहा । अन्वयव्यतिरेकिण्यपि अन्वयव्याप्तिरेव प्रधानभूता । व्यतिरेकव्याप्तिरप्यन्वयसिद्धप्रतियोगिलाभात् समीची । तत्रान्यतरव्याप्त्युदाहरणमात्रेणापि परार्थप्रयोगोपि चरितार्थ इति ॥

---

**प्रत्येकव्युत्पन्ने**ति । प्रत्येकं प्रसिद्धार्थकेत्यर्थः । **सर्वविदादि**पदेति । सर्वपद.वित्पदादीत्यर्थः । **सामान्यतः सिद्धस्यै**वेति । शशविषाणेत्यत्रापि बाधकाभावात् योग्यत्वमस्तु । यत्रयत्र शशत्वं तत्रतत्र विषाणाभावः इति सामान्यतो विरोधे, अत्रापि विरोधः सिद्ध इति । **एतत्साधकत्वे**=व्यतिरेकव्याप्तौ अभावप्रतियोगितया घटकस्य सर्ववित्कर्तृपूर्वकत्वस्य साधकत्वे व्यतिरेकव्याप्तिसिद्धावेव तत्साधनसंभवादन्योन्याश्रय इत्यर्थः । तर्हि यत्रयत्र वेदनत्वं तत्रतत्र किञ्चिन्मात्रविषयकत्वम्, यत्र कर्तृत्वं तत्र किञ्चिद्ज्ञत्वमिति नियमात् यः सर्वज्ञः सर्ववित्, द्यावाभूमी जनयन् देव एकः इत्यादावपि विरोधादनन्वयः स्यात्, तत्राज्ञातार्थज्ञापकत्वसंभवेऽत्र कथं नेत्यत्राह न **चागमतये**ति । अनुमानप्रयोगस्याऽऽप्तोक्तस्य प्रमाणान्तरप्रतीतार्थविषयकत्वावश्यम्भावात् तदभावादबोधकत्वमिति भावः । **साचे**दिति । आगमतः सर्वज्ञपूर्वकत्वसिद्धिः पक्षे वा विपक्षे वा सपक्षे वा । नाद्यः, अनुमानवैयर्थ्यात्, न द्वितीयः, तस्य विपक्षत्वायोगात्, न तृतीयः, सपक्षाभावादेव व्यतिरेकव्याप्तिकथनात् घटदेः सपक्षत्वे केवलव्यतिरेकित्वायोगादित्यर्थः । **उदाहरणान्तरेषु**—वेदाः सर्वज्ञप्रणीताः वेदत्वात्, शरीरं सात्मकं शरीरत्वात्, बुद्धः सर्वज्ञः बुद्धत्वादित्यादिषु । सर्वसाधारणदूषणं **सर्वत्र चे**ति । **सार्वत्रिके**ति । केवलान्वयितया सर्वस्थलवर्तीत्यर्थः । अनेनाव्यभिचरितभूयोदर्शनभूमा दर्शितः । अनुभूतिरनुभाव्या सत्त्वात्, क्षित्यादिकं कर्तृतया किञ्चिद्ज्ञेतराभाववत् सत्त्वादिति प्रत्यनुमानम् । तत्र प्रथमे अनुभाव्यत्वस्य प्रामाणिकत्वात् सत्प्रतिपक्षहेतोर्बलवत्तया बाधः । द्वितीये सर्वज्ञप्रणीतत्वानुमानप्रतिरोधमात्रम्; पश्चादागमेनैव तत्सिद्धिरिति विवेकः । नन्वेवं व्यतिरेकव्याप्तिरेव मा भूत् । उभयोरप्यावश्यकत्वे केवलान्वय्यपि न स्यादित्याशंकायां केवलान्वयितो वैलक्षण्यं केवलव्यतिरेकिणि दर्शयन्, उभयानपेक्षत्वं व्यतिरेकव्याप्त्युपयोगञ्च दर्शयति **एव**मित्यादिना । प्रथमवा-

॥ लक्षणनिरूपणम् ॥

ननु यदि केवलव्यतिरेकि न प्रमाणम्, लक्षणमिति किमपि न स्यात्, तस्य तदात्मकत्वात्। तदभावे च कथं परस्परव्यावृत्त वस्तुव्यवस्था? ततश्च विलीनं लौकिकपरीक्षक वैदिक व्यवहारैरिति—चेन्न, लक्षणस्य केवलव्यतिरेकित्वाभावात्। उक्तं हि तत्त्वरत्नाकरे—

"अर्थासाधारणाकारप्रतिपत्तिनिबन्धनम्। सजातीयविजातीयव्यवच्छेदेन लक्षणम् ॥"
इत्युक्त्वा 'सचायं जात्यादिराकारः प्रमेयं निष्कृष्य लक्षयतः प्रमाणस्य सजातीयविजातीयव्यवच्छेदांशे सहकारीति लक्षणमुच्यते' इति। एतेन तत्त्वप्रतिपादकं प्रमाणं तत्त्वनिष्कर्षं शरणमित्युक्तं भवति। एतेन लक्षणानिरुक्तिमात्रेण लक्ष्यमपलपन्तो निराकृताः। न हि प्रतीत-

---

क्यस्योत्तरवाक्यशेषत्वान्न पौनरुक्त्यम्। अन्वयव्यतिरेकिणि न व्यतिरेकव्याप्तेरसमचीनता; प्रतियोगिप्रसिद्धिसत्त्वात् ॥ कस्तद्व्याप्त्युपयोगः, 'ऋजुमार्गेण सिध्यन्तं को हि वक्रेण साधयेत्" इति न्यायात् अन्वयव्याप्तिमुपेक्ष्य तद्ग्रहणासंभवादिति चेत्, भावव्याप्तिव्यतिरेकेणाभावव्याप्तिरस्तीति ज्ञापिते, यत्राभावव्याप्तिमात्रं व्यवहृतम्, तत्रान्वयव्याप्त्याक्षेपेणानुमेयसाधनं फलम्; व्यवहर्तिच्छाया नियन्तुमशक्यत्वादिति। **तदात्मकत्वात्** केवलव्यतिरेकित्वात्। **तदभावे** लक्षणाभावे। **कथ**मिति। लक्षणमेव हि इतरभेदानुमितिजनकं सत् व्यावर्तकपदवाच्यमिति भावः। **अर्थेति** ॥ अर्थस्य गवादेरसाधारणाकारः गोत्वादिः; तत्प्रतिपत्तेः **निबन्धनं** कारणम् असाधारणाकारग्राहकं 'सास्नादिमान् गौः' इतिवाक्यादिरूपं प्रमाणमेव सजातीयमृगान्तररूपद्रव्य-विजातीयगुणादिव्यवच्छेदकत्वात् लक्षणमित्युच्यत इति कारिकार्थः। असाधारणाकारप्रतिपत्तिरेव इतरभेदज्ञानम्। अतस्तत्प्रतिपत्तिकरत्वात् तदेव व्यवच्छेदकञ्च भवति। सास्नादिदर्शने महिषादिभ्रान्तेरजायमानत्वात् सास्नादिरेव भेदः। सास्नादिमान् गौः, पृथिवी गन्धवतीत्यादिवाक्येन धर्मस्य गोपृथिव्याद्यसाधारण्यं ज्ञाप्यते। तेन तस्य धर्मस्येतरव्यावृत्तिरूपत्वावगमः। तर्हि सास्नादिधर्मस्य लक्षणत्वं कथ्यमानं कथं घटत इत्यत्र तदुक्तमाह **सचाय**मिति। **जात्यादिः**। अस्मन्मते जात्याकारयोरैक्यमेव। **निष्कृष्य लक्षयतः** इतरवैलक्षण्येन प्रतिपादयतः। प्रमाणवाक्यमेव व्यवच्छेदबुद्धिहेतुः धर्मविशेषप्रतिपादकत्वाभावे तस्य व्यवच्छेदबुद्धिहेतुत्वायोगात् धर्मस्तत्र सहकारिकारणमिति लक्षणत्वोक्तिः। तथाच धर्मस्य लक्षणत्वं नाम स्वज्ञानरूपव्यवच्छेदबुद्धिजनकवाक्यज्ञान. सहकारिभूतस्वोपस्थितिविषयत्वम्। असाधारणधर्मस्यैव तद्भावात् असाधारणधर्मो लक्षणमिति पश्चात्तनैरुक्तम्। **लक्षयती**त्यस्य व्यवच्छेदभूतधर्मं प्रतिपादयतीत्यर्थः; लक्षणं नाम लक्षकत्वं धर्मप्रतिपत्तिकरशब्दप्रयोगः। लक्ष्यत इति कर्मव्युत्पत्त्या तु धर्मे लक्षणपदप्रयोगो वक्ष्यते,। एवंरीत्या प्रतिपादन धर्मस्यानुमानविधया व्यावृत्तिबुद्धिजनकत्वमिति तार्किकमतिव्युदासाय। अतः केवलव्यतिरेकित्वमसंमतमिति। एवमसाधारणाकारस्य सहकारित्वमात्रोक्त्या लक्षकं प्रमाणं सर्वमसाधारणविषयकमिति न नियमः। तदभावेऽपि प्रमेयज्ञापनं भवतीति ज्ञाप्यते। तदुपपादनाभिप्रायेणाऽऽह **एतेने**ति। अनिर्वचनीयत्वात् वस्तु किमपि नास्तीति खण्डनकारः। **नहीति**

तमिति सर्वं निर्देष्टुमपि शक्यम्, सर्वलौकिकपरीक्षकव्यवहृतस्य घटस्यापि पृथुबुध्नादिमत्त्व- अङ्गुलिनिर्देशविषयत्वादेः साधारणत्वात्; तद्विशेषस्य तु दुर्वचत्वात्। उक्तं च दण्डिना— "इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्। तथापि न तदाख्यातुं सरस्वत्यापि शक्यते॥" इति।

असाधारणधर्मोपस्थापनेन व्यवहारव्यवस्थापकमाप्तवाक्यादिकमेव वा लक्षणम्; यथा— गन्धवती पृथिवीति। यत् गन्धवत् तत् सर्वं पृथिवीशब्देन व्यवहर्तव्यम्, नेतरदिति हि तदर्थः। प्रमाविषयः प्रमेयमित्यादिषु च लक्षणतया संमतेषु विपक्षशून्यत्वेन केवलव्यतिरेकित्वभङ्गप्रसङ्गः।

यद्वा अन्वयव्यतिरेकिविशेष एव लक्षणम्। स च समव्याप्तः। असाधारणो व्यापको धर्मो लक्षणमिति [वा] लक्षणम्। तत एवेतरप्रतिक्षेपस्तत्त्वं च सिध्यति यथा—शरीरादेः पार्थिवत्वादिसंदेहे, शरीरं पार्थिवम्, गन्धवत्त्वात्, घटवत्। शरीरमाप्यादिकं न भवति, गन्धवत्त्वात् घटवदित्यादि। तदेवं तत्त्वतदितरप्रतिक्षेपयोः साधनाल्लक्षणत्वं गन्धवत्त्वस्येति॥

नन्वनेकव्यक्तिसंग्राहकलक्षणे तथा स्यात्। एकव्यक्तिलक्षणे तु कथम्? यथा आकाशादेः शब्दमात्रवत्त्वादाविति चेन्न—आकाशादिशब्दानामपि आतिशब्दत्वात्। कल्पादिभेदापेक्षया बहवो ह्याकाशादयः॥ अस्तु तथा तेषु। ईश्वरादिलक्षणं तु कथम्? न हीश्वरस्य कल्पादिभेदेऽपि भेदोऽस्ति॥ सत्यम्; तत्र तु प्रागुक्तनीत्यैव धर्मिग्राहकेणैव लक्षणविशिष्टलक्ष्यसिद्धौ असाधारण-

---

लक्षणमुखेनानिर्देशेऽपि वस्तु प्रतीयत एवेत्यर्थः। घटस्य लक्षणं पृथुबुध्नोदरत्वम्। **बुध्नो** मूलभागः। 'मूलं बुध्नोऽङ्घ्रिनामकः' इत्यमरः। तस्य पृथुत्वं घटभिन्नेऽप्यस्ति। अंगुल्या वस्तुनिर्देशं कृत्वा व्युत्पाद्यते। अंगुलिनिर्देशविषयत्वमन्यत्रापि। अतोऽनुक्तांशमपि यथार्हं गृहीत्वा वैलक्षण्यं गृह्यते। अतो न सर्वत्र शब्दमात्रं प्रमाणम्। एवमितरभेदरूपाकारबोधकप्रमाणं लक्षणमित्युक्तम्। व्यवहारघटनेन लक्षणान्तरमाह **असाधारणेति**। व्यवहारव्यवस्थापकत्वमत्र निवेशितम्। व्यावर्तकत्वत्यागे कारणं सूचयन् केवलव्यतिरेकित्वमपि निरस्यति **प्रमाविषय** इति। केवलान्वयिलक्षणे व्यावर्तकत्वं दुर्वचमिति भावः। अत एव लक्षणस्य केवलव्यतिरेकित्वमननुगतमिति च तत् खण्ड्यम्। प्रमाणं लक्षणमिति पक्षं परित्यज्य धर्मो लक्षणमिति पक्षेऽपि केवलव्यतिरेकिस्थलेऽपि अन्वयव्यतिरेकिविशेषत्वमेव धर्मस्येत्याह **यद्वेति**। पृथिवी इतरभिन्ना गन्धवत्त्वादित्यनुमानेऽपि पृथिवीसामान्यं न पक्षः; किंतु विवादास्पद-घृतादिमात्रम्; घटादिकं तु प्रागेव भिन्नत्वेन ज्ञातमिति भावः। केवलान्वयिलक्षणसाधारण्यायान्यत् लक्षणलक्षणमाह **असाधारण इति**। लक्ष्येतरावृत्तिः, **व्यापकः**—सर्वलक्ष्यव्यक्तिवृत्तिः धर्मः। दलद्वयेन अतिव्याप्त्यव्याप्तधर्मव्युदासः। स्वव्यापकलक्ष्यतावच्छेदकव्यापकधर्मो लक्षणम्। प्रमेयत्वादिकमपि तथा। तस्य गन्धवत्त्वादिवत् इतरभेदानुमापकत्वाभावेऽपि तद्वदेव लक्ष्यतावच्छेदकधर्मानुमापकत्वमस्त्विति भावेनाह **तत एवेति**। इतरप्रतिक्षेपः=पृथिवेतरभेदादिः। **तत्त्वं** पृथिवीत्वादि॥

लक्षणस्यानुमापकत्वे क्वचित् केवलव्यतिरेकित्वमवर्जनीयमिति शंकते **नन्विति**। **ईश्वरादी**त्यादिपदेन एकव्यक्तिभूत प्रकृतिकालादिग्रहणम्। समाधत्ते **सत्यमिति**। **तत्र** त्विति। तस्यानुमानरूपत्वं नेष्यत इति

धर्मातिरिक्तव्यावृत्त्यभावान्न साध्यं किंचिदवशिष्यते। तथापि तत्रेश्वरादिलक्षणव्यतिरेकस्यानीश्वरत्वव्याप्तेः ब्रह्मादिषु केषुचिदीश्वरतया शङ्क्यमानेषु तेनानीश्वरत्वं साध्यते। तत्र चान्वयव्यतिरेकित्वमेव। प्रतियोगिनः प्रमाणसिद्धेश्च भावनिरूपणोपपत्तिः।

प्रयोगश्च—ब्रह्मादयोऽनीश्वराः, सकलजगत्सृष्ट्याद्यकारणत्वात्, घटवत्। कालो न प्रकृतिः, महदादिविकाररहितत्वात्, चेतनवत्। त्रिगुणं कालातिरिक्तम्, कलादिविकाररहितत्वात्, चेतनवत्॥ एवं तदात्मना शङ्क्यमानानां तद्व्यतिरेकसिद्धेस्तस्यापि तेभ्यो व्यतिरेकः सिद्ध इति लक्षणफलम्। अतः सर्वेषामप्यन्वयित्वमेव॥ एवं तर्हि सर्वस्मिन्नेव लक्षणे तदितरस्य तद्व्यतिरेको वक्तुं शक्यः; यथा—गवयो न गौः, सास्नादिरहितत्वात्, महिषवदित्यादीति चेत्—अस्त्वेवम्; तावतापि न लक्षणस्य केवलव्यतिरेकित्वम्। अयं गौः, सास्नादिमत्त्वात्; यथा अस्मदीयः; यो गोव्यतिरिक्तः, नासौ सास्नादिमान्; यथा महिष इत्यत्र, नायं गौः सास्नादिरहितत्वात्। यथा महिषः; यो गौः स सास्नादिमान्; यथा संमत इत्यत्र चान्वयव्यतिरेकित्वमेव॥

ये पुनः—विप्रतिपन्नः सर्वो गौरिति व्यवहर्तव्यः, अगोव्यावृत्तो वा, गोत्वात्, सास्नादिमत्त्वाद्वेति लक्षणस्य केवलव्यतिरेकित्वमाहुः; तेषामंशतः सिद्धसाधनत्वमपि दुष्परिहरम्

---

भावः। **प्रागुक्तनीत्या**=असाधारणधर्मेतरभेदयोरभेदेन वाक्यादेवेतरभेदसिद्ध्येत्यर्थः।

तत्रापि लक्षणस्येतरभेदग्राहकत्वं साक्षात् तदनुमापकत्वाभावेऽपि अनीश्वरादिष्वीश्वराद्येकव्यक्तिभेदानुमासपादने तत्कृते सति तुल्यवित्तिवेद्यतया लक्ष्ये ईश्वरादावलक्ष्यभेदोऽपि सिध्यतीत्युपपादयति **तथापी**त्यादिना। **प्रतियोगिनः** ईश्वरादेः **प्रमाणसिद्धेः**=तत्सिद्धत्वेन=शास्त्रावगतत्वेन। ईश्वरस्य लक्षणं सकलजगत्सृष्ट्यादिकारणत्वम्; प्रकृतेर्महदादिविकारित्वम्; कालस्य कलामुहूर्तादिविकारिता। एकव्यक्तिस्थल इवानेकव्यक्तिस्थलेऽपि लक्षणव्यतिरेकेणालक्ष्यवस्तुषु लक्ष्यभेदानुमानं तुल्यवित्तिवेद्यतया लक्ष्ये इतरभेदसिद्धिश्च भवत्वित्याशंक्य, भवतु; तावता प्रकृते किम्? केवलव्यतिरेकित्वं तु न कस्यापीत्याह **एवं तर्ही**त्यादिना।

अनेकव्यक्तिषु कतिपयपक्षीकारे ह्यन्वयव्यतिरेकिता स्यात्; सर्वव्यक्तिपक्षीकारोऽस्मदिष्ट इति तार्किकशंकामनूद्य दूषयति **येपुन**रिति। **अंशत** इति। कतिपयव्यक्तौ गोशब्दव्यवहार्यत्वस्य महिषादिभेदस्य च प्रागेव गृहीतत्वात् तत्र सिद्धसाधनं दोषः। न च सामानाधिकरण्येन साध्यसद्भावेपि अवच्छेदकावच्छेदेन साध्यसाधनं संभवतीति वाच्यम्—तथापि सकलव्यक्तीनामनुमितौ उद्देश्यतया भानमिष्टं न वा। आद्ये सिद्धसाधनमेव। अन्त्येऽन्वयित्वमेव। पक्षतावच्छेदकव्यापकत्वविशिष्टस्येतरभेदस्य साध्यत्वे तस्याप्रसिद्धिश्च। तत्रापि पक्षतावच्छेदकव्यापकत्वाविशिष्टं सास्नादिमत्त्वमेव लक्षणम्; हेतुस्तु विशिष्टमेव; अन्यस्याप्रयोजकत्वात्। तत्र सर्वलक्ष्यव्यक्तेः पक्षत्वाभावे प्रसिद्धव्यक्तेरन्वयदृष्टान्तत्वान्न केवलव्यतिरेकिता। कुत्रापि इतरभेदस्य प्रागगृहीतत्वे साध्याप्रसिद्धिदोषस्तदवस्थ इति ध्येयम्। नन्वंशतः सिद्धसाधनमित्ययुक्तम्। साध्याप्रसिद्धिरित्येव वक्तव्यम्। गोरिति व्यवहर्तव्य इत्यस्य हि

**सकलव्यक्तिसंग्राहकप्रवृत्तिनिमित्तस्य सकलेतरप्रतियोगिकव्यावृत्तेश्चासिद्धतया नैवमिति चेन्न— गौरिति व्यवहर्तव्य इत्यत्रापि गोत्वमेव व्यवहारनिमित्तमिति नियन्तुमशक्यत्वात्। अन्यस्याप्यसाधारणधर्मस्य तन्निमित्तत्वाविरोधात्। लाघवादेश्च समत्वात्। गोत्वनिमित्तगोव्यवहारवानित्येव साध्यार्थे प्राग्वत् अप्रसिद्धविशेषणत्वादिकम्। सकलेतरप्रतियोगिकव्यावृत्तिसाधने तु अपोहवादिन इवान्योन्याश्रयणम्। अपि च—**

**श्लो० लक्षणादधिके भेदे क्व वाऽवीतस्य संभवः। तस्यैव तत्त्वे किं केन किमर्थं साधयिष्यसि॥ ८६**

**किं च महिषादिसमस्तव्यावृत्तेरेकस्मिन् गवि सिद्धत्वादपरिहृतमेव सिद्धसाधनत्वम्। एतदेव चानूद्य तत्त्वरत्नाकरेऽप्युक्तम्—"क्षोण्यादि लक्ष्यं प्रमाणसिद्धं न वा? तदसिद्धौ आश्रयासिद्धिर्लक्षणात्मनो हेतोः। सिद्धौ च साधनं मुधा॥ स्वरूपसिद्धावपि व्यवच्छेदः साध्यत इति चेत्-तादृगेव तदपि। तथापि ह्यप्रसिद्धविशेषणः पक्षः स्यात्; इतरव्यवच्छेदस्य क्वचिदनालोचितचरत्वात्, सिद्धौ वा साधनवैयर्थ्यात्। किं च प्रमाणस्य स्वविषयव्यवस्थायां प्रमाणान्तरापेक्षणादनवस्थितिपरतःप्रामाण्ये प्रसज्येयाताम्॥**

---

सर्वानुगतगोपदप्रवृत्तिनिमित्तवानित्यर्थः। तस्यैकव्यक्तौ ज्ञातत्वे सर्वत्र ज्ञातत्वमेव। सर्वत्राज्ञातत्वे चासिद्धत्वमेव। एवमगोव्यावृत्तत्वमपि गोभिन्नसर्वभिन्नत्वम्। इदमप्यप्रसिद्धमेवेति शंकते **सकले**ति. निरस्यति **ने**ति। गोपदप्रवृत्तिनिमित्तवानिति साध्यं वा, सर्वानुगतगोपदप्रवृत्तिनिमित्तक इति वा, गोत्वरूपगोपदप्रवृत्तिनिमित्तक इति वा। आद्ये कतिपयगोव्यक्तिषु गोपदव्यवहारदर्शिना केनचित् तावन्मात्रे किञ्चित्प्रवृत्तिनिमित्तस्य गृहीतत्वे अंशतः सिद्धसाधनात्। द्वितीये सर्वसाधारणस्य गोत्वातिरिक्तस्यापि संभवशंकया सिद्धसाधनात्। तृतीये त्वप्रसिद्धिरेवेति भावः। एवमगोव्यावृत्तिरित्यस्य गोत्वावच्छिन्नेतरत्वावच्छिन्नभेदवानित्यर्थ उच्यते, उतेतरत् सर्वमेकबुद्ध्या विषयीकृत्य तद्बुद्धिविषयत्वावच्छिन्नप्रतियोगिताकभेद इत्युच्यते, लक्षणमेव मुखान्तरेणोच्यते वा, अश्वमहिषादितत्तज्जातीयभेदवानित्येवानुमीयते वा। आद्ये, अतद्व्यावृत्तिरूपापोहवादिबौद्धपक्ष इवान्योन्याश्रयः। द्वितीयेऽप्रसिद्ध्या **अवीतस्य**=केवलव्यतिरेकिणोऽसंभवः। तृतीये सिद्धसाधनम्। इदमुभयमुक्तं कारिकया। चतुर्थे अंशतः सिद्धसाधनम्। इदमुच्यते **किञ्चे**ति। **सकलेतरप्रतियोगिकव्यावृत्तेश्चे**त्युक्तांशे वक्तव्यमाह **सकलेतरे**ति। **लक्षणादधिके**= इतरभेदस्य लक्षणरूपभावधर्मातिरिक्तत्वे। **कुत्रत्य** इति (**क्वे**ति)। अप्रसिद्धत्वादिति भावः। केवलव्यतिरेकिभङ्गारम्भे भट्टपादाशयवर्णने **"लक्षणनिरूपणे चाभिप्रायव्यक्तेः"** इत्युक्तमिहावसरे प्रदर्शयति **एतदेवचे**त्यादिना। सर्वो गौरगोव्यावृत्तो गोत्वादिति प्रागुक्तरीत्या इतरभेदानुमानं लक्षणेनेति परकृतमनूद्येत्यर्थः। **क्षोण्यादिक**मिति पृथिवीलक्ष्यकगन्धवत्त्वलक्षणाभिप्रायेण। **व्यवच्छेदः** इतरभेदरूपधर्मः। **तादृगेव**—लक्षणानतिरिक्तत्वात् पक्षतुल्यतया सोऽपि सिद्ध एव। **तथापि** असिद्धत्वपक्षेऽपि। ननु लक्षणस्येतरभेदस्य चैकत्वेन लक्षणग्राहकप्रमाणेनेतरभेदसिद्धावपि अनुमानेन दृढीक्रियत इत्यत्राह **किञ्चे**ति। तथासति तस्यानुमानस्यापि मानान्तरनिरपेक्षमसाधकत्वमेवास्तु; तथाचानवस्था। असाधकत्वञ्च प्रामाण्यशंकया विवक्ष्यते चेत्—परतःप्रामाण्यमिष्टं स्यात्॥ स्वतःप्रामाण्येऽप्याप्रामाण्यकल्पनेऽनवस्थैव। **तस्मा**दिति

तस्माद्धर्मः प्रमेयात्मा धर्मिनिष्कर्षमाचरन् । लक्षणं न प्रमाणात्मेत्युक्तयैव दिशा गतिः ॥" इति ॥

तस्मात् यथोक्त एव लक्षणप्रकारः ; न पुनस्तस्य केवलव्यतिरेकित्वमिति ।

॥ अनुमानविषयविशेषनिरूपणम् तत्फलञ्च ॥

एवं केवलव्यतिरेकिणि निरस्ते प्रामाणिकानां हैतुकभङ्गभारस्य त्र्यंशोऽवरोपितः ॥ केवलान्वयिन्यपि व्याहतमहाविपर्ययव्यतिरिक्ताः सर्वे विपक्षेबाधकाभावान्निरस्ताः । अन्वयव्यतिरेकिण्यपि अत्यन्तातीन्द्रियार्थगोचरा अपि ऐन्द्रियकव्याप्त्युपजीवनेन प्रवर्तमानाः सपक्षानुगतव्याप्ताकारवैरूप्यात् सोपाधिकत्वादिभिर्निराकृताः । चन्द्रबिम्बपरभागादिकं तु नास्मदाद्यतीन्द्रियम् । पर्वतपरभागादिवत् इन्द्रियसंप्रयोगाभावादेव तदग्रहणोपपत्तेरिति युक्तं तदनुमानम् । सन्ति हि सतोऽप्यनुपलम्भहेतवो बहवः ; यथोक्तं सांख्यैः—

'अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।

---

तस्मात् लक्षणरूपो धर्मः स्वग्राहकप्रमाणप्रमेयस्सन् धर्मिणि इतरव्यावृत्तिरूप एव भूत्वा लक्षणतामश्नुते ; न तु केवलव्यतिरेक्यनुमानरूपप्रमाणतया व्यावृत्तिमनुमापयतीत्यर्थः । अत्र कारिकायामयमप्यर्थ उच्यते— लक्षणपदेन धर्मबोधकवाक्यं गृहीत्वा तस्यैव धर्मिनिष्कर्षकत्वेन लक्षणत्वमिति न ; धर्मस्यापि लक्षणत्वं धर्मिनिष्कर्षकत्वमस्त्येव । तच्च तज्ज्ञानस्येतरभेदज्ञानरूपतया प्रमेयभूतेतरभेदैक्यादिति । एतद्भट्टपादोक्तसंग्राहकमेव तत्त्वमुक्ताकलापे, (4-54)"संत्यक्तावीतहेतोरभिदुरमखिलं लक्षणाभावतः स्यात् ; मैवं ; लक्ष्मैव भेदस्तदवगमकमित्याप्तवाक्ये तदुक्तिः." इति पद्यम् । एतदभिप्रायेणैव पूर्वं वाक्यं लक्षणमिति पक्षं परित्यज्य धर्मो लक्षणमिति पक्षेण निर्वचनं कृतमिति ध्येयम् ॥

एवं केवलव्यतिरेकिखण्डनस्य महत् फलं दर्शयति एवमिति । त्र्यंश इति । त्रिष्वेकोंश इत्यर्थः । अन्यथा शब्दोऽसाधुः स्यात् । बहुव्रीहावुचितपदाध्याहारे क्लेशः । "तपष्षड्भागमक्षय्यम्", "शतांशेनापि शंक्यते," "यस्यायुतांशांशे" इत्येवंप्रयोगाः तत्रैकोंश इति विग्रहाभिप्रायेणैव प्रसिद्धाः । तदयमर्थः— हैतुकाः केवलव्यतिरेकि केवलान्वयि अन्वयव्यतिरेकीति त्रिविधैर्हेतुभिः स्वपक्षसाधने प्रयस्यन्ति । तत्रैको भागोऽनायासेन निरस्तः । तेन भारत्र्यंशावरोपणसिद्धिरिति । अन्ययोरपि द्वयोर्मध्ये अशतो निषेधं व्युत्पाद्य तन्मुखेनानुमानप्रमेयमियदिति निष्कर्षति केवलान्वयिन्यपीति । अभिधेयत्वादिकेवलान्वयिधर्मस्य विपर्ययो व्याहत इति तत्र हेतोः केवलान्वयिसद्धेतुत्वम् । महाविद्यानुमानं तु सिषाधयिषितमिव तदभावमपि साधयेदिति न प्रयुज्येतेति तत् केवलान्वयि वादीन्द्रवन्निरस्यते । तेन तादृशं भावरूपाज्ञानानुमानादिकमप्याभासभूतं वेदितव्यम् । अन्वयव्यतिरेकिण्यपीति । व्याप्तिग्रहणं प्रत्यक्षमूलं वा आगमाद्वा । आद्ये प्रत्यक्षजातीयमेव सिध्येत् ; न तु तद्विलक्षणम् । अत एव नित्यसर्वविषयकप्रत्यक्षशालिपुरुषधौरेयासिद्धिः ; नित्यपरमाण्वाद्यसिद्धिश्च । अनुपलब्धस्य ह्यनुमानम् । स्थितस्यानुपलब्धिः कुत इत्यत्र हेतवः सांख्यकारिकायां(7)दर्शिताः अतिदूरादिति । वियति विहगोऽतिदूरत्वान्नोपलभ्यते ; अक्षिस्थमञ्जनमतिसामीप्यात् ;

सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिधा(हा)राच्च ॥" इति ॥

यत्तु—"सौक्ष्म्यात् तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः । महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च ॥" इति—ईदृशविषयेऽनुमानं वार्यते; न तु दृष्टजातीयसूक्ष्मेषु; यथा—उष्णजलादौ वह्न्यादेः । यत्र तु शास्त्रेणैव व्याप्यव्यापकभावग्रहणम्, तत्रात्यन्तातीन्द्रियाणामप्यनुमानं न वारयामः ; यथा—तत्तज्जातिगुणकर्मवर्णप्रज्ञामेधागदादिषु दृष्टेषु तत्तत्कारणभूतादृष्टविशेषानुमानमिति । "अतीन्द्रियेऽर्थे सर्वत्र शास्त्रमेव प्रमाणम्" इति भाष्यमपि प्रत्यक्षसिद्धव्याप्त्युपजीवनेन अत्यन्तातीन्द्रियार्थसाधनबाधनप्रतिक्षेपपरम् ; न तु शास्त्रसिद्धव्याप्तिमूलातीन्द्रियानुमाननिषेधार्थम् ; तत्रापि शास्त्रमूलतया तस्मिन्नेव विश्रमात् शास्त्रमेव प्रमाणमिति वाचोयुक्तेरविरोधात् ॥

॥ सामान्यतोदृष्टादिनिरूपणम् ॥

एतेन अस्मदादिप्रत्यक्षयोग्यार्थानुमापकं विशेषतोदृष्टम्, तदयोग्यार्थं सामान्यतोदृष्टमिति परोक्तविभागस्यापि विषयः सिद्धो भवति । लौकिकेष्वेव [वा]सूक्ष्मासूक्ष्मविभागात् तत्सिद्धेः । किञ्चिज्जातीयात् तद्व्यापकजातीयस्यानुमानं सामान्यतोदृष्टम् । यथा धूमादग्नेः । व्याप्तिदशा-

---

अन्वेन घटादिरिन्द्रियघातात्; 'अन्यत्रमना अभूवम्, नापश्यमित्युक्ततया मनसः सहानवस्थानात् । **सौक्ष्म्यात्** परमाण्वादिसंनिकर्षे सत्यपि । कुड्यादिना **व्यवधानात्** स्थूलमपि । सौरप्रभया तिरस्कारात् नक्षत्रादि । वर्षबिन्दुस्तटाके पतितो न पृथक् । चकारेणानुद्भूतत्वादिग्रहणम् । अत्र **सौक्ष्म्यात् तुल्याभिघारादित्यधिकरणसारावलि**श्लोकोऽधिकप्रदर्शकोऽनुसंधेयः । तर्हि सांख्योक्तमत्यन्तातीन्द्रियप्रकृत्याद्यनुमानमप्येष्टव्यमित्यत्राह **यत्त्विति** । महदादिकार्येण प्रकृत्यनुमानमुक्तम् । युक्त्या न महदादिसिद्धिः । पृथिव्यादिमहदन्तेषूत्तरोत्तरस्य पूर्वपूर्वकारणत्वं युक्त्या स्थापयितुं न शक्यम् ; नतरां प्रकृतेरित्यर्थः । सरूपत्वं सिध्येत् । विरूपत्वं दुरनुमानम् । **वह्न्यादेरिति** । वह्नेस्त्वगिन्द्रियग्राह्यत्वेऽपि सूक्ष्मत्वमचाक्षुषत्वात् । उष्णस्पर्शमात्रं त्वचा गृहीतमस्त्विति विवादे प्रत्यक्षत्वानिश्चयात् । द्वितीये आह **यत्रत्विति** । **मेधागदादि**ष्विति । **गदो** रोगः । शास्त्रेणैवेति । 'रमणीयचरणा रमणीयां योनिमापद्यन्ते', 'वाचिकैः पक्षिमृगताम्' इत्यादिनेत्यर्थः ।

अन्वयव्यतिरेक्यवान्तरभेदेऽपि विषयव्यवस्थां दर्शयति **एतेनेति** । इदं द्रव्याश्रितं गुणत्वादिति सामान्यतोदृष्टम् ; तेन परिशेषानुमानात् इतरबाधेन वाय्वाकाशात्मादिविशेषसिद्धिरित्याहुः । तत्राष्टद्रव्यातिरिक्तद्रव्याप्रसिद्ध्या विशेषानुमानं न भवतीत्युक्तम् । तत्रैव पूर्वोक्तरीत्या इच्छादयः अनुपपन्नस्थलव्यतिरिक्ताश्रिताः क्लृप्तानाश्रितत्वे सति द्रव्याश्रितत्वादिति हेतौ, यो यद्द्रव्याश्रितत्वानुपपत्तौ सत्यां द्रव्याश्रितः स तदतिरिक्तद्रव्याश्रित इति सामान्यमुखी व्याप्तिर्कल्प्यते चेत्—तत् सामान्यतोदृष्टमित्यस्तु । एवं प्रत्यक्षत्वार्हावस्थापन्नमात्रसाध्यकत्वे विशेषतोदृष्टम्, सूक्ष्मासूक्ष्मसाधारणधर्मस्य साध्यतावच्छेदकत्वे सामान्यतोदृष्टमित्यस्तु । **लौकिकेष्वेव वेति** वाकारस्य ताले अदर्शनात् पक्षद्वयं विनाऽपि व्याख्यायेत । भूयोदर्शनविषयव्यक्त्यैव तथाविधव्यक्त्यनुमाने विशेषतोदृष्टमितीदं निरसितुमाह **किञ्चिदिति** । एतन्मते यत्

दृष्टयैव व्यक्त्या देशान्तर.कालान्तरादौ व्यापकतयादृष्टव्यक्तेरेवानुमानं विशेषतोदृष्टम्; यथा कृत्तिकया रोहिण्यनुमानमिति केचित्। तत्रापि निष्कर्षे कृत्तिकोदय.रोहिण्यासत्तिव्यक्तीनां भूयस्त्वात् तदातनेन कृत्तिकोदयेन तादात्विकी रोहिण्यासत्तिव्यक्तिरेवानुमीयत इति सामान्यत एव व्याप्तिग्रहः। अन्यथा व्याप्तिदशादृष्टमात्रविषयत्वे स्मृतिमात्रत्वप्रसङ्गात्। एवं स्वरविशेषात् पुत्राद्यनुमानेपि पूर्वस्वरवत् अद्यतनस्वरस्य पुत्रस्वरत्वानुमानात् सिद्धो भेदः॥ तेनैव शैलशृङ्गेण तस्यैव शैलस्य कथमनुमानमिति चेन्न—कथंचित् स्मृतिमात्रत्वात्। तत्कालवर्तित्वाऽऽर्ज-वाद्यतिरिक्तग्रहे तु तत्कालादिव्यक्तिभेदसिद्धिरिति॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ अनुमानाध्याये प्रथमं प्रतिबन्धाद्याह्निकम्॥

—o—o—

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

## ॥ अनुमानाध्याये द्वितीयमाह्निकम् ॥

### ॥ परार्थानुमानपदार्थशोधनम् ॥

तदिदमनुमानं स्वार्थं परार्थं चेति केचिद्विभजन्ते; तदयुक्तम्, सर्वेषामप्यनुमानानां स्वप्रतिसंधानबलेन प्रवृत्ततया स्वव्यवहारमात्रहेतुत्वेन च स्वार्थत्वात्। वाक्यप्रतिपन्नेऽपि तस्मिन् न वाक्यबलादर्थसिद्धिः; किंतु वाक्योत्थापितव्याप्तिप्रतिसंधानादिनैव।

---

सामान्यतोदृष्टत्वेनोक्तम्, इदं सिद्धान्ते विशेषतोदृष्टमेव। **स्मृतिमात्रत्वेति**। इदञ्च पूर्वदृष्टदेशकालरूपधर्मिविषयकत्वे। अन्यथा इदं द्रव्यं पृथिवीत्वादिति तयैव व्यक्त्या तद्व्यक्तेरेवान्यत्रानुमानं भवेदेवेति भाव्यम्॥

द्वितीयद्वितीये पुरुषान्तरेऽनुमानजननाय प्रयोक्तव्यानामवयवानाम्, कथातदङ्गानां, निरनुयोज्यानुयोगप्रमाणाभासरूपनिग्रहस्थानव्यतिरिक्तानां निग्रहस्थानानाञ्च निरूपणम्। तृतीये शिष्टयोस्तयोर्मध्ये प्रथमस्य, चतुर्थे द्वितीयस्य च प्रपञ्चनम्। आदौ तेष्ववयवेषु न्यायपदवाच्येषु परार्थानुमानसंज्ञा तार्किकेष्टा न युक्तेति व्युत्पाद्यते। अवयवप्रयोगे कृते परः हेतोर्व्याप्यत्वमवधार्य परामृश्य साध्यमनुमिनोति। अनुमितिजन्यहानोपादानादिव्यवहाररूपफलम्, अनुमितिः, तत्करणपरामर्शः, व्याप्तिज्ञानञ्च परनिष्ठमेव। परस्मिंस्तदुत्पादनाय विदुषा वाक्यप्रयोगः क्रियते। अनुमानं द्विविधं स्वार्थं परार्थञ्चेति वाक्ये अनुमानपदेन वाक्यग्रहणे स्वार्थमित्यत्र तदनन्वयः। अनुमित्यादिग्रहणे तस्य तत्कार्यस्य च परैकनिष्ठत्वात् विभिन्ननिष्ठत्वाभावात् परार्थमनुमानमिति न घटते। अनुमितिकरणं व्याप्तिज्ञानञ्च परस्मिन्नुदितं तद्गतानुमित्यर्थमेवेति। स्वगतं स्वमुखेन परगतञ्चेति अनुमानं द्विविधमिति तु स्यात्। अनुमानपदस्य वाक्ये प्रयोगः क्लिष्टश्च। तस्मादेव विभागो न चारुरितीह निरूप्यते। **अनुमानानां** हेतूनाम्। **स्वप्रतिसंधानेति**।

न च प्रतिवादिवाक्यं व्युत्थितस्य प्रमाणम्। आप्तश्चेद्ब्रूयात्, तत्रापि व्याप्तिमात्रे तेनोपदिष्टे श्रोता स्वयमेवानुमिनुयात्, न तु साध्यार्थज्ञानेऽप्युपदेशमपेक्षते। यदि च वाक्यप्रतिपादितत्वमात्रेणानुमानस्य परार्थत्वम्, तदा प्रत्यक्षागमयोरपि तथा विभागप्रसङ्गः; केषुचिदर्थेषु प्रमाणतया तयोरेवाभिधेयत्वात्। एतदुक्तं भवति—द्विविधानि प्रमाणानि—स्वयमेव सिद्धानि, परवाक्यपूर्वाणि चेति सामान्यत एव विभागः कार्य इति।

एतदेव ह्युक्तं तत्त्वरत्नाकरेऽपि—

"सर्वं प्रमाणं सामग्र्या स्वत एव प्रवृत्तया। जन्यते परवाक्येन वृत्तया चेति हि द्विधा॥
अतोऽनुमानं द्विविधं स्वपरार्थत्वभेदतः। प्रत्यक्षागमसामग्र्योः परवाक्ये प्रदर्शिते॥
वक्ष्यते व्यवहाराध्वन्यनुमानस्य तूच्यते (व्यवहारार्थमनुमानं निरुच्यते)।
अनुमोद्बोधकं वाक्यं प्रयोगः साधनं च तत्॥" इत्यादि॥

---

अनुमित्याश्रयगतव्याप्तिज्ञानादीत्यर्थः। स्वव्यवहारेति। अनुमित्याश्रयपुरुषकार्यहानोपादानेत्यर्थः। अर्थसिद्धिः साध्यनिश्चयः। ननु प्रतिज्ञानिगमनाभ्यां पक्षे साध्यबोधनात् वाक्यादेव साध्यसिद्धिरस्तु इत्यत्राह नचेति। व्युत्थितस्य श्रवणमात्रेणानुपरम्य मनने प्रवृत्तस्य। यद्वा विरोधेनोत्थितो व्युत्थितः (त.मु.462)। व्याप्तिनिश्चयजननमेव शाब्दबोधद्वारा वाक्यकार्यम्। अन्यथा शाब्दबोध एवेति अनुमानत्वमेव न स्यात्। नन्वनुमानं नाम लिंगमनुमितिकरणम्। तस्य स्वार्थत्वं नाम स्वतन्त्रस्वज्ञानाश्रयगतफलहेतुत्वम्; परार्थत्वं नाम स्वज्ञानाश्रय प्रतिपाद्यपुरुषान्तरगतफलहेतुत्वमित्यत्राह यदिचेति। प्रत्यक्षादिकमपि परेण ज्ञाप्यमानं कार्यकरमित्यविशेष इति भावः। केषुचिदिति। अर्थविशेषे कथ्यमाने केनचिदत्र किं प्रमाणमिति प्रश्ने, तत्र गत्वा प्रत्यक्षेण जानीहीत्याप्तोक्ते तथैव जानाति, पारलौकिकार्थे तथाप्रश्ने आगमविशेषे श्राव्यमाणे ततो जानीत इति तयोरपि परार्थत्वविभागोऽस्तीत्यर्थः। तथाविभागप्रसंग इत्येतद् विवृणोति एतदुक्तमिति। तीर्थकरैस्तथाविभागस्याकरणेऽपि कामं क्रियतामिति चेत्—कृत एव तत्त्वरत्नाकर इत्याह एतदेवेति। एतदेव—सर्वप्रमाणद्वैविध्यमेव। न तु परार्थानुमानशब्दार्थचिन्ता तत्र लक्ष्यते। सर्वं प्रमाणं=प्रत्यक्षादिप्रमितित्रयमपि स्वत एव परोक्तिनिरपेक्षं प्रवृत्तया इन्द्रियलिङ्गागमरूपसामग्र्या उत्पाद्यते। क्वचित् परप्रतिबोधनानन्तरप्रवृत्तया तयेति। तत् इतरवत् अनुमितिरपि स्वकीयहानोपादानार्थमपि भवति, तथा स्वयमनुमाय तयैव रीत्या न्यायप्रयोगमुखेन परत्र परामर्शद्वारा अनुमितिमुत्पाद्य परकर्तृकहानोपादानादिसाधने परार्थेति द्वैविध्यम्। तत्र प्रत्यक्षसामग्री—शाब्दबोधसामग्रीविषयकपरवाक्ये प्राक् दर्शिते। वाक्ये प्रदर्शिते इति द्विवचनान्तम्। अनुमानस्य तु न्यायरूपव्यवहाराध्वनि परवाक्यं वक्ष्यते इत्यन्वयः। उच्यत इत्यस्योत्तरत्रान्वयः। तदेव अनुमोद्बोधकवाक्यमिति, प्रयोग इति साधनमिति चोच्यत इत्यर्थः। यद्वा परवाक्ये प्रदर्शित इति सप्तम्यन्तम्। पूर्वं सामान्येन विभाग इति

॥ पञ्चावयववाक्यनिरूपणम् ॥

तदेवमनुमोद्बोधकं वाक्यं प्रतिज्ञादिपञ्चावयवम्। तत्र परप्रतिपिपादयिषया पक्षवचनं प्रतिज्ञा; यथा पर्वतोऽग्निमानिति। तत्र धर्मिणमुद्दिश्य साध्यधर्मो विधीयत इति वृद्धाः। साधकत्वप्रकाशकविभक्तिपदान्तरसमभिव्याहार(रादि)युक्तं लिङ्गस्य वचनं हेतुः; यथा—धूमवत्त्वात्, धूमवत्त्वेन, धूमोऽत्र विद्यते यत इत्यादि। प्रसङ्गद्वारेण वा—अन्यथा निर्धूमत्वप्रसङ्गादित्यादि। सम्यग्व्याप्तिनिर्देशपूर्वकं दृष्टान्तवचनमुदाहरणम्। तच्च व्याप्तेर्दृष्टान्तस्य च शैलीमनुरुध्य अन्वयोदाहरणं व्यतिरेकोदाहरणमिति भिद्यते। तत्र यो धूमवान् सोऽग्निमान्; यथा महानस इत्यन्वयोदाहरणम्। योऽनग्निः स निर्धूमः; यथा—महाह्रद इति व्यतिरेकोदाहरणम्। यत् उक्तसाधनं तत् उक्तसाध्यम्; यत् उक्तसाध्यं न भवति, तत् उक्तसाधनं न भवति; यथा संप्रतिपन्नमिति सामान्यतोऽप्युदाहरन्ति। अत्र च यदित्थं तत् तथेति साधारणप्रयोगादेव सर्वोपसंहारः सिध्यति; यथा—गौर्न पदा स्प्रष्टव्या इत्यादौ। अतो यद्यदिति वीप्सानपेक्षा। कस्यचित्तु सा स्पष्टयार्था। दृष्टान्तनिदर्शनेन व्याप्ततया पक्षे हेतुमुपसंहरत् वाक्यमुपनयः। सोपि पूर्ववत् द्विधा—अयं च तथा धूमवानित्यन्वयोपनयः; अयं न तथा निर्धूम इति व्यतिरेकोपनयः। हेतुपूर्वं पक्षे साध्यमुपसंहरद्वाक्यं निगमनम्। तत्रापि

---

प्रदर्शितं परवाक्यम्। तस्मिन् प्रत्यक्षागमसामग्रीविषये परवाक्यं पश्चात् कथास्वरूपविवेकावसरे वक्ष्यते। अनुमानस्य तु परवाक्यं व्यवहाराध्वगतं प्रसिद्धं संप्रत्युच्यते। तदेवानुमोद्बोधकवाक्यादिपदवाच्यं भवतीत्यर्थः। **अनुमान**शब्देन न्यायस्य व्यवहारस्तु न स्वरसः। पुरुषस्य व्याप्तिज्ञानरूपमनुमानं स्वस्मिन् अनुमित्युत्पत्तये, ईदृशव्याप्तिज्ञानसंपादकवाक्यद्वारा परस्मिन्ननुमित्युत्पत्तये च भवतीति अनुमानद्वैविध्यं न निषिध्यत इति। **वृद्धा** इति। साध्यनिर्देशः प्रतिज्ञेति सूत्रम्। तथापि विधेयतया साध्यनिर्देश इष्टः। उद्देश्यतया पक्षनिर्देशोऽर्थसिद्ध इति भावः। अत्र पक्षसाध्यसंबन्धो विशिष्टो विधेय इति पक्षान्तरं ज्ञाप्यते। **साधकत्वे**ति। साधकत्वं ज्ञापकत्वम्। तत्प्रकाशकविभक्तिः पञ्चमी तृतीया वा। तथा साधकत्वप्रकाशकः पदान्तरसमभिव्याहारो वा। चतुर्थं प्रकारमाह **प्रसङ्गद्वारेण वे**ति। एतदभिप्रायकमेव वैधर्म्यादिति सूत्रम्, अन्यथा तद्वैयर्थ्यादित्युक्तमस्माभिर्**न्यायभाष्यप्रदीपे**। तथाच हेतुगतसाधकत्वतात्पर्यकशब्दराशिर्हेतुवाक्यमित्यर्थः। **यो धूमवा**निति। यच्छब्देनोद्देश्यनिर्देशे उद्देश्यतावच्छेदकव्यापकत्वस्य विधेये भानं नियतम्। अतो व्याप्तिलाभः। यच्छब्दाभावेऽपि स्वरससिद्धं तत्। इदमेवाह **अत्रचे**त्यादिना। क्वचित् यच्छब्दवीप्सा हेतुसाध्यास्थलभूयस्त्वज्ञापनेन व्याप्त्यभंगदाढर्यं कस्यचित् जनयितुम्। **तत्रापी**ति। उपनयद्वैविध्येऽपि प्रतिज्ञावाक्यहेतुवाक्ययोर्व्युत्क्रमेण पुनर्वचनरूपत्वान्निगमनमेकरूपमेवेति सूत्रे भाष्ये च। अग्निमत्तासाधकव्याप्तिप्रदर्शनमेव व्यतिरेक्युदाहरणेऽपीति

पूर्वतुल्यन्यायतया द्वैविध्यमनुसंधेयम्; यथा—तस्मादसावग्निमान् इति, अयं निरग्निर्न भवतीति च ।

॥ पञ्चावयवानियमनिरूपणम् ॥

एते पञ्चाप्यवयवाः प्रयोक्तव्या इति नैयायिकाः । उदाहरणान्तं तदाद्यं वा त्रितयं प्रयोक्तव्यमिति मीमांसकाः । उदाहरणोपनयावेवेति सौगताः । वयं त्वनियमं ब्रूमः; नियमवत् अनियमस्याप्याभिमानिकतया सिद्धान्तत्वोपपत्तेः । दृष्टश्चानियमेन भाष्यादिषु प्रयोगः-क्वचित् पञ्चावयवः, क्वचित् त्र्यवयवः, क्वचिदवयवकल्पनारहितः, क्वचिदेकव्याप्तिकः, क्वचिद्व्याप्तिद्वयविशिष्ट इत्यादि । इदं च वादिनोः परस्परसंवादानुरूपयथाभिमतव्यवहाराभ्यनुज्ञालिङ्गम् । प्रतिवाद्यभिमतप्रस्थानेन व्यवहारमन्येऽपि केचिदिच्छन्ति, 'पिशाचानां पिशाचभाषयैवोत्तरं देयम्' इति न्यायात् । अतोऽप्यनियतावयव एव प्रयोगः ॥ उपपन्नश्च मृदुमध्यकठोरधियां विस्तरसंग्रहाभ्यां व्यवहारः । यद्यप्युदाहरणोपनयाभ्यामेव व्याप्तिपक्षधर्मतयोः सिद्धत्वात् तावदेव तत्त्वतो वक्तुमुचितम्; तथापि विवक्षितस्पाष्ट्याय प्रतिज्ञाहेतूदाहरणानि, उदाहरणोपनयनिगमनानि वा वाच्यानि । विवादविषयस्य साध्यार्थस्य अव्यक्तप्रतिपादनानुपपत्तेः ॥

ये तु—प्रतिज्ञादित्रयानन्तरं हेतोरसिद्ध्यन्यथासिद्धिपरिहारार्थ उपनयः; निगमने हेत्वंशः सिद्धसाधनतापरिहाराय, साध्यांशस्तु बाधपरिहारायेति वर्णयन्ति; तैर्नूनं तद्दोषपरिहाराय मन्त्रपाठोऽप्यमिष्टः; प्रतिज्ञाहेतुभ्यामेव तदर्थाभिधानसिद्धेः, अन्यथा, 'नायमसिद्धः,

---

ज्ञापनाय निगमनशब्दस्वारस्याय च अग्निमानिति प्रयोग एवोचितः । अथापि तस्मादित्यस्य धूमाभावाभावादित्यर्थे अग्न्यभावाभावत्वेन निर्देशः स्वरस इत्याशयः । परस्परसंवादः=एवं प्रयोक्तव्यमित्युभयकृतनियमबन्धः । वक्तृप्रतिवक्तृसंप्रतिपत्ताविति वक्ष्यति । अनियमस्वीकारः तत्तत्प्रतिवादिनं प्रति तथातथाव्यवहारायेति फलान्तरमाह प्रतिवादीति । सौगतमतमपि नानुपपन्नमित्याशयेनाऽऽह यद्यपीति । उपनयनिगमनयोरावश्यकत्वं तार्किकेष्टं निरसितुमाह येत्विति । साध्यव्याप्यहेतुमानयमित्युपनयार्थे हेतुमत्त्वांशेन हेत्वसिद्धिपरिहारः, व्याप्यत्वांशेनान्यथासिद्धिरूपाप्रयोजकत्वात्मकव्याप्यत्वासिद्धिपरिहारः ; निगमने हेत्वंशेन साध्यतादशावगमात् सिद्धसाधनतापरिहारः, साध्यान्वयबोधनेन बाधपरिहारश्चेति तार्किकाशयः । निगमने हेतुप्रयोगे साध्यताद्वारा तदन्वयाय साध्यनिर्देशस्याऽऽवश्यकतया पश्चात्साध्यदलवैयर्थ्यशंकनायोगेऽपि प्रथमतः साध्यनिर्देशप्रयोजनमबाधितत्वपरिहाररूपमुक्त्वा हेतुप्रयोजनं कथ्यत इति ध्येयम् । असत्प्रतिपक्षितत्वशंकापरिहारोऽपि निगमनकृत्यमिति तैरुक्तम् । मन्त्रपाठ इति । अनुष्ठेयार्थस्य मुखान्तरेण प्रागेव स्मृतत्वेऽपि मन्त्रप्रयोगबलान्मन्त्रेणैव स्मर्तव्यमिति नियमाद्दृष्टकल्पनवत् इहापीष्यत

नापि बाधितः' इति व्यक्तमेव वक्तव्यत्वात् । आभासोद्धारनिबन्धेन पुनरुक्तिश्चेति ॥ भगवद्यामुनमुनिभाष्यकारादिभिश्च पञ्चावयवा अपि हेतवः प्रयुक्ता इति चेत्, सत्यम्; अत एव ह्यनियमः सिद्धान्तितः । न च ग्रन्थेषु निबद्धमिति व्यवहारेऽपि तथेति नियमः, "स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते, स्वस्मै प्रकाशमानत्वात्" इत्यादावन्वयव्यतिरेकौ द्वावप्युक्ताविति तावता तयोर्द्वयोरप्यवश्यपठनीयत्वापातात् । यच्चेदं प्रयोगसंस्थानं निर्णीतम्, न तत्राप्यस्माकं निर्बन्धः, अत्र पर्वतेऽग्निरस्ति, यदत्र धूमो विद्यते; दृष्टं च धूमवतामग्निमत्त्वमित्यादिनापि तदर्थप्रतिपादनोपपत्तेः । दृश्यन्ते चैवंविधानि चित्राणि प्रयोगवाक्यानि सर्वसैद्धान्तिकानां ग्रन्थेषु । एवमेव च पदानामन्वयमात्रं प्रधानयित्वा लौकिकवैदिकव्यवहारा अपि वर्तन्ते । तत्त्वरत्नाकरेऽपि पञ्चानामवयवानां पृथक् प्रयोजनान्यभिधाय, "अतश्च सर्वत्र पञ्चावयववाक्यमाद्रियन्ते वेदाचार्यादय' —'पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित्—' इत्यादौ" इत्यभिधायैव पुनरनियमः प्रतिपादितः—न च 'सर्वदा सर्वेऽवयवाः प्रयोज्याः, न न्यूनाधिकाः' इति निर्बध्नीमः; वक्तृप्रतिवक्तृसंप्रतिपत्तौ लघूपायोपादानेऽपि दोषाभावात्; लोकेऽपि तथा व्यवहाराच्च" इति । साधर्म्यवैधर्म्यवचनप्रयोगे चोक्तम्—"यथोपयोगं प्रतिपत्त्रपेक्षया विकल्पसमुच्चयावेव; अविरोधात्" इति । अन्यच्चोक्तम्—"प्रतिज्ञायाः परं हेतूदाहरणयोर्न क्रमनिर्बन्धः; व्याप्तिहेतुप्रदर्शने विशेषाभावात्" इत्यादि । अत एव पक्षादिवचनदोषविशेषाणां केषांचित् तत्रैवोक्तानामपि नियमकथाविषयत्वं सूचितम्—"सोऽयं गवयपदाभिधेयः, गोसदृशत्वात्; य इत्थम्, स तथा, यथोक्तमासेन; अयं च गोसदृशः; ततस्तत्पदवाच्यः" इत्युक्त्वा—

---

इवेति परिहासः । ननु प्रतिज्ञाहेतुभ्यामेव तत्सिद्धौ उदाहरणमपि न प्रयोक्तव्यम् । अतः प्राक् तत्सिद्धिर्दुर्वचेत्यत्राह अन्यथेति । तच्चेत् प्रयोजनम्, पौनरुक्त्यशंकावहास्पष्टप्रयोगत्यागेन, 'नायमसिद्धः नापि बाधितः' इति व्यक्तमुच्यतामिति भावः । उदाहरणप्रयोगानन्तरं वाक्यानामेकवाक्यतायां पूर्वोक्तप्रतिज्ञाहेतुभ्यामेव सर्वसिद्धिरिति हृदयम् । आभासेति । प्रतिवादिना हेतोराभासत्वे शंकिते सर्वविधाभासतापरिहारस्य कार्यतया तेन पुनरुक्तिः स्यादित्यर्थः । संस्थानमिति । पक्षवाचकपदसामानाधिकरण्येन साध्यप्रयोगः प्रतिज्ञायाम्; पञ्चम्यन्तवचनं हेताविल्याद्याकारव्यवस्थेत्यर्थः । न्यूनाधिका इति । किञ्चिदवयवहानावपि, पञ्चभिरवयवैस्सहानुकूलतर्कस्याप्युदाहरणेऽधिकतया घटनेऽपि न दोष इत्यर्थः । साधर्म्यवैधर्म्येति । हेतुसाध्यान्वयव्यतिरेकेत्यर्थः । प्रतिपत्त्रपेक्षयेति । प्रतिपाद्यपुरुषाकांक्षानुरोधेनेत्यर्थः । व्याप्तिहेत्विति । न च यो धूमवानित्युदाहरणात् परस्तात् धूमादिति हेतुप्रयोगेऽन्वयक्लेश इति वाच्यम्—'अस्ति च पर्वते धूम इति प्रयोगसंभवात् । पक्षादिवचनेति । पक्षं प्रयुज्यैव साध्यं प्रयोक्तव्यम् ।

''व्याप्तौ दृष्टान्तदृश्या(दृश्यां?)यामवश्यं स निदर्श्यते । आगमाद्व्याप्तिसिद्धौ न व्याप्तिस्मृत्यर्थमीर्यते ॥ धूमवान् अग्निमानेवेत्याप्तोक्तायां तथा गतिः ।'' इत्यादि ॥

प्रज्ञापरित्राणे तु वरदविष्णुमिश्रोक्तानुसारेणैवमुक्तम्–''परार्थमनुमानस्य प्रयोगेऽवयवास्त्रयः, प्रतिज्ञा चाथ हेतुश्च तथोदाहरणं मतम् ॥'' इत्यादि ॥ अतो व्याप्तिपक्षधर्मताप्रतिपादनोपयुक्तेन येन केनापि प्रकारेण व्यवहरेत् । नियमकथायां तु यथानियममिति रहस्यम् ॥

॥ कथानिरूपणम् ॥

विचारविषयगोचरो वादिप्रतिवादिवाक्यसंततिविशेषः कथा । सा द्विविधा—वीतरागकथ विजिगीषुकथा चेति । [वादः]

पूर्वो (पूर्वा?) वाद इति सामान्यशब्देनैव विशेषतोऽपि निर्दिश्यते । सा (स?) चैवं न्यायतत्त्वे संयोगाधिकरणे लक्षिता(तः?)–''परस्य स्वोपदेशन्यायेन निश्चितार्थो व्यवहारो वादः'' इति[1]। शिष्याचार्यव्यवहारवत् प्रमाणत्वा(णतर्का)भिमानास्पदसाधननिश्चितार्थविषयो व्यवहारो वाद इत्यर्थः। तत्र स्वपक्षस्थापनं परपक्षदूषणमित्यवयवद्वयम् ॥ केचित्तु साधनसमर्थन.दूषणसमर्थनादिभिः सह पञ्चावयवतामाहुः । तदयुक्तम्, स्वपक्षदूषणोद्धार.तत्समर्थनादेरप्यवयवान्तरत्व-

---

ततो हेतुरेवेत्यादिक्रमभंगे दोषकथनं तथानियमबन्धेन कथाप्रवर्तन एवेति भावः ।

**निदर्श्यते** यथा महानसमित्यपि दृष्टान्त ईर्यते । तदीरणञ्च पूर्वानुभूतस्थलमुखेन व्याप्तिस्मृत्यर्थम् । आगमश्चेत् व्याप्तिबोधकः, यथा 'तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते' इति, तत्र दृष्टान्तो न वक्तव्य इति । **ईयते** गम्यते । **ईर्यत** इति पाठः स्यात् ।

**नियमकथायामि**त्येवं निर्दिष्टा केयं कथेत्यत्राह **विचारे**ति । **वादिप्रतिवादिवाक्ये**ति । उक्तिप्रत्युक्तिरूपेत्यर्थः । **विशेषपदे**न व्याप्तिपक्षधर्मताबोधनपर्यवसायित्वमुक्तम् । **वीतरागे**ति । स्वगृहीतार्थस्थापनरागरहिततत्त्वनिर्णिनीष्वित्यर्थः । **सामान्यशब्देनैव** । यथा प्राणशब्देन प्राणनवृत्तिविशेषविशिष्टवायुमात्रमपि पञ्चवृत्तिविशिष्ट इवोच्यते, तथा वादशब्देन वीतरागकथामात्रमुच्यते, कथासामान्यमिवेत्यर्थः **से**ति । पूर्वे ति,विजिगीषुकथेति वाऽर्थः । वादलक्षणमेवेह न्यायतत्त्वोक्तम् ; जल्पादिलक्षणमुपरि दर्शयिष्यते **पूर्व** इति पाठोऽशुद्धः । तदा सचेति पाठो युक्तः । **परस्य**=परं प्रति । यथा यथादृष्टार्थवादी आचार्य आप्तः शिष्यं प्रति स्वनिश्चितमेवार्थं निश्चायकप्रमाणमुखेनोपदिशति, तथा परस्परं प्रामाणिकतया स्वस्वगृहीतार्थस्य प्रमाणमुखेन कथनं वाद इत्यर्थः । **अभिमानास्पदे**ति । कोटिप्रतिकोटिसाधकन्यायद्वयरूपत्वात् कथायाः, तत्र वादेऽपि एकतरकोटिबाधकप्रमाणतर्कयोराभासत्वध्रौव्यात् अनाभासेति दुर्वचम्—अनाभासत्वाभिमतेत्येव वक्तव्यमिति भावः । आभासत्वाभिमानेऽपि अनाभासवत् प्रयोगो विजिगीषुकथायामेव । **तत्र**=वादे । **अवयवद्वयम्** अंशद्वयम् । स्थापनार्थो न्याय एकः, दूषणार्थश्चान्यः । अत एव ''प्रमाणतर्कसाधनोपालम्भः' इति गौतमसूत्रे । **आदिभिरि**ति **आदि**पदेन परपक्षदोषोद्धारनिराकरणं गृह्यत इति व्याख्यान्ति । शब्ददोषवर्जनं पञ्चममंगमिति

प्रसङ्गात्। यदि स्वपक्षसाधनादौ तदन्तर्भाव इति न पृथग्गणना; तदा स्वपक्षस्थापनपरपक्ष-प्रतिक्षेपयोरेव सर्वान्तर्भाव इति तावत्येव गणनोचिता। अत्र च बुद्धिपूर्वदुष्टवचनानि न संभवन्ति, अन्यानि तूद्भावितानि अभ्युपगन्तव्यानि; तत्त्वनिर्णयाय प्रवृत्तत्वात्।

विजिगीषुकथायां तु गत्यन्तरमलभमानस्य परव्यामोहनेनापि पाक्षिकविजयः समत्वं वा संभवेदिति बुद्धिपूर्वकदुष्टप्रयोगसंभवः। सा च द्विधा—जल्पो वितण्डेति। तत्रोभयपक्षोपन्यास-तत्प्रतिक्षेपवती कथा जल्पः। वादिपक्षोपन्यासतत्प्रतिक्षेपमात्रवती कथा वितण्डा॥

केचित्तु—वितण्डायामपि वीतरागविजिगीषुभेदात् भेदमाहुः। तदयुक्तम्; वीतरागस्य परपक्षप्रतिक्षेपपर्यन्तव्यापाराभावे तत्त्वनिर्णयासिद्धेः। विजयस्तु तावताऽपि संभवत्येव, अभ्युपगमनियतत्वात् (गमनीयस्य तत्त्वात्)।

वादे परपक्षस्य कालात्ययापदेशनिर्वाहे तु न पुनः स्वपक्षनिरूपणम्; तेनैव तत्फलस्यापि

---

सर्वार्थसिद्धौ 4.62. उक्तं ग्राह्यम्। तथाचैकैकेनापि स्वपक्षस्थापनं परपक्षदूषणं साधनसमर्थनं स्वकृतदूषण-समर्थनं शब्ददोषवर्जन(शब्ददोषानुद्भावन)वचनञ्च कार्यमिति केचिदित्यर्थः। निरस्यति तदयुक्तमिति। सर्वमिदं स्वीकृतमेव। अथापि पूर्वोक्तद्वय एवान्येषामिवैषामप्यन्तर्भाव.। परोक्तार्थदूषणस्यैवावयवत्वोक्त्या शब्द-दूषणस्य न प्रसक्तिः। वादेऽन्यतो दूष्यांशभेदं दर्शयति अत्रचेति। अत्र=वादे। अन्यानि अबुद्धिपूर्वाणि।

पाक्षिकविजयः। व्यामोहनस्य फलितत्वे विजयः। वाद्युक्तं यथावदविज्ञाय व्यामोहने, व्यामूढ-पुरुषदृष्ट्या विजयः, वाद्युक्तस्याज्ञाने व्यामोहकोक्तं तेनाप्यज्ञातमिति अज्ञानसाम्यात् समत्वम्। वादकथां निरूप्य द्वितीयां विभजते सा चेति। तत्प्रतिक्षेपेति। उभयपक्षप्रतिक्षेपेत्यर्थः। उभयकर्तृ-कस्वपक्षोपन्यासपरपक्षप्रतिक्षेपसमुदायो जल्पः। वादिकर्तृकस्वपक्षोपन्यास. प्रतिवादिकर्तृकतद्दूषणो-भयं वितण्डावत् वादजल्पयोरप्यस्ति। अतो मात्रेत्युक्तम्। स्वपक्षस्थापनारहितपुरुषकर्तृकपरोपन्यस्त-पक्षप्रतिक्षेपो वितण्डा। वादे दूषणं स्वपक्षरक्षणशेषभूतम्। वितण्डायां तु स्वतन्त्रमिति भेदोऽस्ति। केचित्त्विति। वीतरागः परपक्षप्रतिक्षेपमात्रं यदि कुर्यात्, साऽपि वितण्डैवेति न; प्रतिक्षेपफलं जिगीषा। तत्त्वनिर्णयो वा। वीतरागे विजिगीषुत्वाभावात् न विजिगीषुकथात्वम्। कथं तर्हि विजयहेतुकार्यकरत्वमिति चेत्, तत्राह विजयस्त्विति। परेण स्वकृतदूषणाभ्युपगमे स्वस्य विजयो नियतः। अथापि न तदुद्देशेन तत्कार्यकरणम्। विजिगीषुत्वाभावे विजिगीषुवितण्डा मा भूत्; वीतरागकथापि वाद. वितण्डाविशेषोभयरूपेण भिद्यतामिति चेत्—परपक्षविदलनपरमोद्देश्यकत्व एव वितण्डात्वम्। तत् वीतरागकथायां नास्ति। तत्त्वनिर्णयेच्छुकथैव वीतरागकथा। त.मु.4.53. निर्दिष्टेति पद्ये वीतरागवित-ण्डामुदाहृत्य वितण्डाशब्दस्तत्र स्वपक्षसाधनानुक्तिमात्रेणौपचारिक इत्युक्तम्। शिष्येण स्वपक्षानुक्तिर्गुरुपक्ष एवोपपत्तौ सत्यां सिध्यत्वित्याशयेन। तत्र परपक्षविदलनैदम्पर्यं नास्तीति। शेषं तत्रास्मदीये अलभ्य-लाभे द्रष्टव्यम्। वितण्डायामिव वादेऽपि कदाचित् स्वपक्षस्थापनत्यागस्य युक्तताऽप्यस्ति। तावता न

"व्याप्तौ दृष्टान्तदृश्या(दृश्यर्ा?)यामवश्यं स निदर्श्यते । आगमाद्व्याप्तिसिद्धौ न व्याप्तिस्मृत्यर्थ-मीर्यते ॥ धूमवान् अग्निमानेवेत्यागोक्तायां तथा गतिः ।" इत्यादि ॥

प्रज्ञापरित्राणे तु वरदविष्णुमिश्रोक्तानुसारेणैवमुक्तम्–"परार्थमनुमानस्य प्रयोगेऽवयवास्त्रयः प्रतिज्ञा चाथ हेतुश्च तथोदाहरणं मतम् ॥" इत्यादि ॥ अतो व्याप्तिपक्षधर्मताप्रतिपादनोपयुक्तेन येन केनापि प्रकारेण व्यवहरेत् । नियमकथायां तु यथानियममिति रहस्यम् ॥

॥ कथानिरूपणम् ॥

विचारविषयगोचरो वादिप्रतिवादिवाक्यसंततिविशेषः कथा । सा द्विविधा—वीतरागकथ विजिगीषुकथा चेति । [वादः]

पूर्वो (पूर्वा?) वाद इति सामान्यशब्देनैव विशेषतोऽपि निर्दिश्यते । सा (स?) चैवं न्यायतत्त्वे संयोगाधिकरणे लक्षिता(तः?)–"परस्य स्वोपदेशन्यायेन निश्चितार्थो व्यवहारो वादः" इति । शिष्याचार्यव्यवहारवत् प्रमाणत्वा(णतर्का)भिमानास्पदसाधननिश्चितार्थविषयो व्यवहारो वाद इत्यर्थः । तत्र स्वपक्षस्थापनं परपक्षदूषणमित्यवयवद्वयम् ॥ केचित्तु साधनसमर्थन.दूषणस-मर्थनादिभिः सह पञ्चावयवतामाहुः । तदयुक्तम् , स्वपक्षदूषणोद्धार.तत्समर्थनादेरप्यवयवान्तरत्व-

---

ततो हेतुरेवेत्यादिक्रमभंगे दोषकथनं तथानियमबन्धेन कथाप्रवर्तन एवेति भावः ।

**निदर्श्यते** यथा महानसमित्यपि दृष्टान्त ईर्यते । तदीरणञ्च पूर्वानुभूतस्थलमुखेन व्याप्तिस्मृत्यर्थम् । आगमश्चेत् व्याप्तिबोधकः, यथा 'तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते' इति, तत्र दृष्टान्तो न वक्तव्य इति । **ईयते** गम्यते । **ईर्यत** इति पाठः स्यात् ।

**नियमकथायामि**त्येवं निर्दिष्टा केयं कथेत्यत्राह **विचारे**ति । **वादिप्रतिवादिवाक्ये**ति । उक्तिप्रत्युक्तिरूपेत्यर्थः । **विशेषपदे**न व्याप्तिपक्षधर्मताबोधनपर्यवसायित्वमुक्तम् । **वीतरागे**ति । स्वगृहीतार्थस्थापनरागरहिततत्त्वनिर्णिनीष्विवत्यर्थः । **सामान्यशब्देनैव** । यथा प्राणशब्देन प्राणनवृत्तिविशेषविशिष्ट-वायुमात्रमपि पञ्चवृत्तिविशिष्ट इवोच्यते, तथा वादशब्देन वीतरागकथामात्रमुच्यते, कथासामान्यमिवेत्यर्थः **से**ति । **पूर्वे**ति,विजिगीषुकथेति वाऽर्थः । वादलक्षणमेवेह न्यायतत्त्वोक्तम् ; जल्पादिलक्षणमुपरि दर्शयिष्यते **पूर्व इ**ति पाठोऽशुद्धः । तदा सचेति पाठो युक्तः । **परस्य**=परं प्रति । यथा यथादृष्टार्थवादी आचार्य आप्तः शिष्यं प्रति स्वनिश्चितमेवार्थं निश्चायकप्रमाणमुखेनोपदिशति, तथा परस्परं प्रामाणिकतया स्वस्वगृहीतार्थस्य प्रमाणमुखेन कथनं वाद इत्यर्थः । **अभिमानास्पदे**ति । कोटिप्रतिकोटिसाधकन्यायद्वयरूपत्वात् कथायाः, तत्र वादेऽपि एकतरकोटिबाधकप्रमाणतर्कयोराभासत्वध्रौव्यात् अनाभासेति दुर्वचम्—अनाभासत्वाभिमतेत्येव वक्तव्यमिति भावः । आभासत्वाभिमानेऽपि अनाभासवत् प्रयोगो विजिगीषुकथायामेव । **तत्र**=वादे । **अवयवद्वयम्** अंशद्वयम् । स्थापनार्थो न्याय एकः, दूषणार्थश्चान्यः । अत एव "प्रमाणतर्कसाधनोपालम्भः" इति गौतमसूत्रे । **आदिभिरिति आदिप**देन परपक्षदोषोद्धारनिराकरणं गृह्यत इति व्याख्यान्ति । शब्ददोषवर्जनं पञ्चममंगमिति

॥ कथाङ्गनिरूपणम् ॥

अथ कथाङ्गानि—सभ्यानुविधेयसंवरणम्, वादिप्रतिवादिनियमः, कथाविशेषव्यवस्था निरूप्यनिर्णय इति चत्वार्येव। वरदविष्णुमिश्रस्तु—"जल्पश्चतुरङ्गः; अङ्गानि वादि-प्रतिवादि सभापति-प्राश्निकाः" इत्युक्तम्। वादे तु न सभ्यादिसंवरणनिर्बन्धोऽस्ति: अपलापादीनां प्रायश स्तत्रासंभवात्; वीतरागाः शिष्यगुरुसब्रह्मचारि-शिष्ट-श्रोत्रिय श्रेयोऽर्थिनो हि तदधिकारिणः। सभ्यानां दैवादागतानां त्ववर्जनम्। अनुविधेयसंवरणं तु सर्वथाऽनपेक्षितमेव; विजयफलप्रतिपादनाद्यर्थत्वादनुविधेयस्य॥ रागद्वेषरहिताः त्र्यवराः विषमसंख्याः सभ्याः स्युः, द्वैधे अधिकानां वचनस्य ग्राह्यत्वात्। एकोऽपि वा प्राज्ञतमः। ननु सिद्धान्तनियमोऽप्यवश्यापेक्षितः; तत् कथं चतुष्टयम्? सत्यम्: निरूप्यनियम एव तस्यान्तर्भावादनुक्तिः। न हि तमन्तरेण स उपपद्यते। यत्र तु नानासिद्धान्तानुमतोऽर्थो निरूप्यते, तत्र व्यवहारविशेषनियमार्थं सिद्धान्तविशेषनियमोऽप्यस्तु॥

केचित्तु-निग्रहसामस्त्यासामस्त्योद्भावनप्रतिज्ञान-कथापर्यवसाननियमाभ्यां सह षडङ्गान्याहुः। तदयुक्तम्, इच्छाकल्पितत्वेनावश्यापेक्षितत्वाभावात्। अनियतस्य (अनित्यस्य) चाङ्गत्वायोगात्; अन्यथाऽतिप्रसङ्गात्। वादे तावत् कथा हि तत्त्वनिर्णयपर्यन्ता वा स्यात्; अशक्तिपर्यन्त वा; न तत्र नियमकृत्यम्; द्वयोः संप्रतिपत्तेरेव पर्यवसानमित्युक्तं भवति। जल्पवितण्डयोरपि निग्रहपर्यन्ता। अतस्तत्रापि किं नियमेन?॥ उक्तं हि प्रज्ञापरित्राणे—

---

कथा निरूपिता; कथाप्रवर्तनापेक्षितान्यङ्गान्याह **अथेति**। **सभ्येति**। येषां मध्यस्थानां विदुषां समवायः सभा, ते **सभ्याः**। **अनुविधेयः** सभापतिः कथावसाने जयपराजयोद्घोषकः। तदुक्तानुसरणं सर्वैः कर्तव्यमिति तस्यानुसर्तव्यत्वात् अनुविधेयता। **अनु** पश्चात् कर्तव्यं जयोद्घोषणरूपं कार्यं यस्य सोऽनुविधेय इत्यप्याहुः। एवां **संवरणं** संभूयस्थितिप्रार्थना। **नियमः** अयमयं वादी' अयमयं प्रतिवादीति। **व्यवस्था**—वादो जल्पो वितण्डा वा; निग्रहस्थानादिषु कान्युद्भाव्यानि कान्युपेक्ष्याणि; का भाषा; अवयवप्रयोगरीतिः केत्यादिः। **निरूप्यस्य निर्णयः** इदमनया कथया निर्धार्यमिति प्रयोजनम्। **प्राश्निकाः** मध्यस्थाः। ते वादिनं प्रतिवादिनं वा तदुक्तार्थस्फुटत्वाय स्वयं पृष्ट्वा निष्कर्षेयुः। तेन प्रतिवक्तुर्विषयस्य चाक्षोभः स्यात्। **शिष्येति**। **'तं शिष्यगुरु'** इत्यादिगौतमसूत्रं मनसि निधायेदम्। **द्वैधे**=सभ्येषु कोटिपक्षे केषांचित्, प्रतिकोटिपक्षे चान्येषां स्थितौ। पञ्चमम्प्यंगमावश्यकमिति पृष्ट्वा समाधत्ते नन्विति। **सिद्धान्तविशेषनियमोऽपीति**। वेदप्रामाण्यं धर्मस्य फलहेतुत्वञ्च बहुसंमतम्। तत्र वर्णनित्यत्वात् प्रवाहनित्यत्वात् ईश्वरोक्तत्वादिति, स्वशक्त्या अपूर्वद्वारा देवताप्रीतिद्वारेति च मतभेदोऽस्ति। अतस्तत्र गृहीतमतानुसारेण वक्तव्यत्वात् विशेषनियमो ग्राह्यः। एवं स्वीकारादेव, उपरि, **तदेवमङ्गेषु चतुर्षु पञ्चसु वेति** वक्ष्यति। **निग्रहेति**। निग्रहाणां **सामस्त्येन** कार्त्स्न्येन **असामस्त्येन** यथेच्छम् उद्भावनप्रतिज्ञानं कार्यम्, कथावसानमेतस्मिन्नवसरे कार्यमिति नियमद्वयेनेत्यर्थः। **अतिप्रसंगादि**त्यस्य विवरणं समनन्तरे **यदित्वेतस्मिन्नि**त्यादिवाक्ये भविष्यति। अनावश्यकत्वं

"निग्रहस्थानपर्यन्ता विजिगीषुकथा मता। तत्त्वनिर्णयपर्यन्तो वादः स्याच्च पुनः पुनः"। इति॥
हेत्वाभासापसिद्धान्तानुयोज्यानुयुक्तयः। दृश्यन्ते यत्र तत्रैव वादोवसितिमान् भवेत्॥ इति
यदि त्वेतस्मिन्नेव निग्रहे (हस्थाने) कथापर्यवसानमिति नियमो जल्पवितण्डाङ्गमङ्गीक्रियते; तर्हि एतयैव भाषया भाषितव्यम्, गद्य(पद्य)दिनियमेनाभिधेयम् एतत्प्रमाणजातीयं वाच्यम्, महाविद्यादिरीतिरपि ग्राह्या, लिखित्वैव निरूप्यम्, गगनसूचन.भूतलविलेखनादिविकाराः परिहार्याः, मध्ये नान्येन संलपनीयमित्यादिनियमानामप्यङ्गत्वप्रसङ्गः॥

स्वारसिकस्तु कथासु निग्रहस्थाननियम उच्यते—वादे तावत् अपलापादिकं प्रायशो न संभवति। संभवदपि [वा] प्रतिज्ञान्तराज्ञानादिकमनुद्भाव्यम्। उद्भाव्यमप्यवाचकादि न कथाविच्छेदकम्। संप्रतिपत्त्या अनेकहेतुदृष्टान्तदूषणाद्यभिधानेऽपि न दोष इति(?)। जल्पवितण्डयोस्तु—यथाभ्युपगमं सर्वे निग्रहाः [इति?]॥

॥ कथास्वरूपविवेकः ॥

तदेवमङ्गेषु चतुर्षु पञ्चसु वा सिद्धेषु, यथावलेपं नियमान्तरेषु कृतेषु, अवहितेषु च सभ्यप्रतिवादिषु, तदभ्यनुज्ञातेन वादिना प्रथमं स्वसाध्यमुद्दिश्य तत्र विवक्षितः प्रत्यक्षादिरूपः प्रमाणविशेषो वाच्यः। प्रतिवाद्यापादितश्चाभास उद्धरणीयः। विपक्षेबाधकाभावादिप्रसङ्गे च तर्को वाच्यः। ये पुनः संक्षेपतो विस्तरतो वा आभासोद्धारं तर्कप्रयोगं चावश्यम्भाविनमाहुः, तैर्नूनम् "अस्मदवकरे (अस्मदपवरके) कांस्यं नास्ति" इति लोकवादोऽनुसृतः; अति(अनिष्ट)प्रसङ्गश्च। आभासोद्धारतर्कप्रयोगवाक्ययोरपि स्वयमेव दूषणोद्धारादेः कर्तव्यत्वप्रसङ्गात्। एवं तदुपर्यपीत्यनवस्था। प्रतिवादिनाऽपि तत्तदनुभाषणपूर्वकं तत्र दूषणं वाच्यम्। ततश्चैवं परस्परवाक्यानु-

---

दर्शयति वादेतावदिति। अननुयोज्यानुयुक्तिः निरनुयोज्यानुयोगः। 'वादे निग्रहस्थानं प्रायो न भवति। भवदपि न कथाविच्छेदकमित्याह स्वारसिकस्त्विति। संप्रतिपत्त्या अनेकेत्यत्र संप्रतिपत्त्यै इति चतुर्थ्यन्ततया पदविभागः। दोष इत्येतदनन्तरस्थित इतिशब्दः निग्रहा इत्येतदनन्तरं स्यात्।

चतुर्षु उक्तेषु सभ्यसंवरणादिषु। पञ्चसु सिद्धान्तविशेषनियमान्तेषु। यथावलेपमिति। स्वयमनेकभाषया व्यवहर्तुं पद्यरूपेण सर्वं प्रयोक्तुं ईदृशं तिङन्तसुबन्तकृदन्तादीतिनियमेन व्यवहर्तुं च समर्थ इति गर्वमूलकेषु नियमान्तरेष्वित्यर्थः प्रतिवाद्यापादित इति। प्रतिवादिनाऽऽभासापादने कृते इत्यर्थः। प्रसंगे इति। प्रतिवादिकृते इति शेषः। प्रतिवाद्यनापादनेऽपि स्वयमेवाऽऽशंक्य तत्तदुद्धारः कार्य इति पक्षं प्रतिक्षिपति येपुनरिति। अवकरे संकरे—सकलमलसमूहनस्थले। எங்கள் குப்பையில் வெண் கலயில்லை इति देशभाषाऽऽभाणकः। अनिष्टप्रसंग इति पाठं स्वीकृत्य अनवस्थारूपानिष्टप्रसंग इति व्याख्यातम्। अतिप्रसंग इति तालपाठः। एतद्वि वरणमेव आभासेत्यादि उपर्युपरि आभासशंकोद्भावनविपक्षबाधकाभावोद्भावनसंभवादिति भावः। अतिप्रसंगमुक्त्वा अनवस्थामप्याह एवमिति। एवं वादिकर्तव्यमियदिति शिक्षितम्; अथ प्रतिवादिकर्तव्यमपीदृशमित्याह प्रतिवादिनाऽपीति। अनुभाषणं वादि-

भाषणप्रतिक्षेपाभ्यामुक्तिप्रत्युक्तिपरंपरासिद्धेः (द्धि.?) ॥

अत्र (अत्रत्य)व्यवहारस्य प्रतिज्ञासाधनदूषणनिर्णयरूपेण चतुष्पात्त्वम्, प्रथमद्वितीययो, र्वादिनिष्पाद्यत्वम्, तृतीयस्य प्रतिवादिनिष्पाद्यत्वम्, तस्य च कदाचित् संप्रतिपत्त्यात्मकत्वम्, चतुर्थस्यापि वादिभ्यां सभ्यैर्वा कार्यत्वम्, प्रतिज्ञातविषये प्रत्यक्षानुमानागमेषु मनीषितस्य यथोचितमुपन्यासप्रकारः, प्रत्यक्षस्यासिद्धया दूषणे तद्दृश्यैरेव निर्णतव्यत्वम्, लैङ्गिकस्यासिद्धया दूषणे तस्यांश्यंशस्य प्रतिज्ञापूर्वकं साध्यत्वम्, प्रतिवादिना वादिना वा अनैकान्तिकत्वाद्युद्भावने कृते तेनैव तत्साध्यत्वम्, प्रत्यनुमाने समबलतया निरूपिते सति द्वयोरपि विजयाभावः, वैतण्डिकस्य तु तावतापि विजयः, प्रतिकक्ष्यं च वादिप्रतिवादिवचनयोर्लेखनीयत्वम्, छलजात्योरेकान्तविजयाभावेन त्याज्यत्वम्, कदाचिदवष्टम्भविजयावहत्वमात्रेण तत्त्वाध्यवसायसंरक्षकत्वम्, अन्यदन्यदपि विस्तरेण तत्त्वरत्नाकरे प्रत्यपादि ।

॥ निग्रहस्थानम् ॥

तदेवंविधेऽस्मिन् व्यवहारे निग्रहस्थानानि यथासंभवमाविर्भवन्ति । तानि च स्वनामधेयेन अर्थतो वा यथानियममुद्भाव्यानि ॥ कथायां स्वाश्रयस्य पराजयनिमित्तं निग्रहस्थानम् । तस्य तन्निमित्तत्वं तत्त्वाप्रतिपत्तिसूचनेन । तत्त्वाप्रतिपत्तिश्च अप्रतिपत्तिविप्रतिपत्तिप्रकारा; प्रतिपत्त्यभावे

---

कथितस्यानुवादः । दूषणं वाच्यमिति । स्वपक्षस्थापनस्योपलक्षणमेतत् । वितण्डायां तु तन्न । परम्परासिद्धेरित्यत्र सिद्धिरिति प्रथमान्तपाठेन वाक्यसमाप्तिर्युक्ता । एवं कथास्वरूपविवेकः कृतः । अत्र तत्त्वरत्नाकरोक्ता अर्थाः सौकर्याय संगृह्यन्ते अत्रेत्यादिना । सिद्धेरिति पञ्चम्यन्तपाठे उपर्यन्वयः । तदा ततश्चेत्यारभ्य तत्त्वरत्नोक्तानुवचनोपक्रम इति स्यात् । व्यवहारस्येति । वादिप्रतिवादिचर्चाक्रमस्येत्यर्थः । द्रमिडभाषायामप्ययं शब्द एतदर्थे प्रयुज्यते । प्रथमद्वितीययोः प्रतिज्ञारूपसाधनरूपपादयोः । वेति । वादिभ्यामेव निर्णयः क्रियते वादे ; जल्पादौ सभ्यैरिति । मनीषितस्य स्वाभिमतस्य । साध्यत्वम् उपपादनीयत्वम् । एकान्तेति । छलमिदं, जातिरियमिति ज्ञाने सति प्रतिवादिना छलत्वादौ ज्ञाते स्वस्य निग्रहः स्यादिति भिया जल्पादावपि तयोस्त्याग एव । कदाचित्=प्रतिवादिना तदज्ञानावसरे । अवष्टम्भविजयः=मया व्यामोहनार्थं प्रयुक्तमसदनेन न ज्ञातमिति तदवष्टम्भनेन विजय इति उक्तविशेषणरूपनिग्रहस्थानावसाने वक्ष्यति । अवष्टम्भशब्दः प्राच्यतर्कग्रन्थेष्वपि ।

तदिति । कथासम्बन्धिनां वादिप्रतिवादिदोषाणां मिथउद्भावनीयत्वस्य तत्त्वरत्नाकराद्युक्तत्वादित्यर्थः । यथानियमम् येषां दोषाणामुद्भावनीयत्वमुभयाभ्युपगतम्, तेषामित्यर्थः । संप्रति निग्रहस्थाननिरूपणस्य संगतिरेवमदर्शि । तच्छब्दार्थमाह कथायामिति । कथामध्ये कथासंबन्धितया उक्तहान्यादिकं भवत् पराजयनिमित्तं भवति स्वाश्रयस्य=उक्तहान्यादिकर्तुः । निग्रहः=पराजयः । तस्य स्थानं निमित्तम् । विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमित्युक्तं सूत्रे । ननु गुरुशिष्ययोर्वादेऽन्यतरपक्षभंगात् पराजयोऽस्तीति

विपरीतप्रतिपत्तौ च तत्त्वाप्रतिपत्तेरविशिष्टत्वात्। ततश्च तदुभयसूचनान्निग्रहस्थानद्वैविध्यम्। कर्तव्याकरणमकर्तव्यकरणमिति वा। त्रेधा च कश्चित् संग्रहः—वक्तव्यानुक्तिः, उक्तिदूषणम्, उक्तार्थदूषणं चेति। एतदवान्तरभेदान्निग्रहस्यानैवैचित्र्यम्। तथाहि—उक्तहानिः, उक्तविशेषणम्,

---

चेन्न; परेणापरस्याहंकारखण्डनं पराजय इति हि **न्यायपरिशिष्टम्**। वीतरागयोश्च नाहंकारप्रसक्तिः **अप्रतिपत्तिरज्ञानं** ज्ञानाभावः। **विप्रतिपत्तिः** विपरीतज्ञानम्। तत्काले सामान्यतः अज्ञानस्यासंभवेऽपि **तत्त्वाप्रतिपत्ति**रित्युक्तौ उभयानुगतिर्भवतीति भावः। **द्वैविध्यम्** अप्रतिपत्तिविप्रतिपत्तिरूपम्। अप्रतिपत्ते-रन्यनिष्ठाया अनुमेयत्वात् [ब.छिद्र] तत्फलभूतप्रत्यक्षसिद्धप्रकारत एव द्वैविध्यमाह **कर्तव्येति**। **वार्तिके** चान्वैवार्थे सूत्रतात्पर्यमित्युक्तम्। प्रतिज्ञाहान्यादिषु सामान्यलक्षणतमन्वयोऽप्यत एव; अज्ञानकार्यं कर्तव्यस्या-करणं=वक्तव्यस्यानुक्तिः। विप्रतिपत्तिकार्यमकर्तव्यकरणम् सदुक्तिदूषणं सदर्थदूषणञ्च। सामान्यतो निग्रहस्थानमेकविंशतिधा **विभजते तथाहीति**। एकोनविंशतिरत्राह्निके निरूप्यते; विंशमनन्तराह्निके; एकविंशं तदनन्तरे। **प्रमाणाभासाश्चे**त्यस्य **प्रत्येकं बहुविधा** इति विशेषणम्। असमासादेव एकैकस्य पृथङ्निग्रहस्थानत्वसिद्ध्या प्रत्येकमित्यस्य निग्रहस्थानानीत्यत्रान्वयो व्यर्थः। प्रत्यक्षानुमानादिभेदेन बहुविधत्वम्; तत्रापि प्रत्येकं बहुविधत्वं **प्रत्येक**पदगम्यम्। तत्र सूत्रस्थ**हेत्वाभास**पदस्थाने **प्रमाणाभासे**त्युक्तिः प्रत्य-क्षागमाद्याभासानामपि संग्रहाय। अस्तु वा **प्रत्येक**पदमुत्तरान्वयि। सूत्रकारेण द्वाविंशतिधा विभक्तम्। तत्र हेत्वन्तरस्य प्रतिज्ञान्तर एवान्तर्भावः सुकरः, यथा हेतुहान्यादेः प्रतिज्ञाहानावित्याशयेन तत्रैकं न पृथक्कृतम्। एषां सौत्रक्रमं विहाय क्रमान्तरेणोक्तावपि तदेकार्थत्वमेव। तत्र, प्रतिज्ञाहानिरिहोक्तहानिः; प्रतिज्ञान्तरमुक्त-विशेषणम्; प्रतिज्ञासंन्यास एवोक्तापलापः; प्रतिज्ञाविरोध उक्तविरोधः; हेत्वन्तरं उक्तविशेषणेऽन्तर्भूतम्। निरर्थकमेव अवाचकम्। अपार्थकमेवानन्वितम्। हेत्वाभासपदस्थाने प्रमाणाभासपदम्। अन्यत् सर्वं सूत्रस्थपदमेव। न्यायवैशेषिकदर्शने वैदिकतर्कशास्त्रे। वेदबाह्याश्च बौद्धजैनास्तर्कपराः। तत्र न्यायभाष्यतः प्राक् नागार्जुनादयः, न्यायवार्तिकतः प्राक् सिद्धसेनादयः, वाचस्पतिमिश्रतः प्राक् अकलङ्कदेवः, उदयना-चार्यतः प्राक् प्रभाचन्द्र इत्येवं बाह्याः वैदिकन्यायग्रन्थनिरासकाः। वात्स्यायनपूर्वकालेऽपि नागार्जुनादिबौद्ध-सद्भावावगमात् वार्तिककारोद्योतकरसमानकालिकसिद्धसेनप्रभृत्येव जैनैः संस्कृते तर्कप्रवर्तनात् जैनाः अर्वाचीनाः। बौद्धो धर्मकीर्तिः वादन्यायाख्ये ग्रन्थे किञ्चिन्निग्रहस्थानस्वीकारी। मल्लिषेणकृतस्याद्वादमञ्जर्यां छलजातिनिग्रहस्थानवादिगौतमापहासेऽपि अकलंकदेवो जैनो जातिनिग्रहस्थाने उपगच्छति। सर्वमिदं न्यायपरिशिष्टप्रवचनावसरे कस्मै चिदन्तेवासिने तदुपकाराय विस्तरेणास्माभिरुक्तमस्ति। अथ प्रभाचन्द्र-कृते प्रमेयकमलमार्ताण्डे **यौग**शब्देनैतान् निर्दिश्य **वार्तिका**द्युक्तजातिनिग्रहस्थानादिखण्डनमपि कृतं द्रष्टव्यम्। तत्र **उदयनाचार्यः** सूत्रभाष्यवार्तिकादिगतन्यूनतापरिहाराय, जातिनिग्रहस्थानपरिष्करणरूपं **न्यायपरि-शिष्टं** निबबन्ध। तत्र प्रतिज्ञाहानिविषयकसूत्रस्य भाष्योक्तोऽर्थः क्लिष्टः, वार्तिकोक्तं न सर्वलक्ष्यव्यापी-त्युक्त्वा, **प्रतिज्ञां**=निर्वाह्यं जह्याद् चेत्, प्रतिज्ञाहानिरित्युक्तम्। सोऽत्रस्य कथकेन निर्वाह्यत्वात् निर्वाह्यस्य

उक्तापलापः, उक्तविरोधः, अपसिद्धान्तः, अवाचकम्, अनन्वितम्, पुनरुक्तम्, अप्राप्तकालम्, अविज्ञातार्थम्, अर्थान्तरम्, न्यूनम्, अधिकम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणम्, निरनुयोज्यानुयोगः, प्रमाणाभासाश्च बहुविधाः प्रत्येकं निग्रहस्थानानीति ॥

॥ उक्तहानिः(1) ॥

कथायां स्वोक्ते परेण दूषिते स्वेनैव तत्परित्यागः उक्तहानिः। सा द्विविधा—शब्दतोऽर्थतश्च। यद्येतद् दुष्टम्, तर्हि त्यक्तमिदं मया इत्यादिः शब्दतः; अन्यत् किंचिदादीयते इत्यादिस्त्वर्थतः। एषा च प्रतिज्ञाहेतुदृष्टान्तप्रत्यक्षागमादित्यागभेदात् प्रतिज्ञाहानिहेतुहान्यादिभेदं भजते। तत्र

---

प्रतिवाद्युक्ताक्षेपपरिहरणासामर्थ्येन त्याग इत्युपपाद्य अन्ते 'उक्तं निर्वहेत् इति रहस्यम्' इत्यवोचत्। अत इह प्रतिज्ञाहेतुप्रभृतिसर्वविधोक्तसंग्रहाय **उक्तहानि**रित्येव नाम निरदेशि। इदं लक्ष्यं कियदिति विचार्य सर्वलक्ष्यानुरूपनामपरिकल्पनमिष्टम्; तदनुरूपलक्षणस्यानुगतस्य वचनं च लक्षणपरिष्करणम्। अथ प्रतिज्ञान्तरनिरूपणे न्यायपरिशिष्टे, 'प्रतिज्ञातार्थे दूषिते तत्प्रतिचिकीर्षया विशेषणान्तरप्रक्षेपेण पुनस्तद्वचनं प्रतिज्ञान्तरम्" इत्युक्तम्। तदनुसृत्य **उक्तविशेषण**मिति नाम कृतम्। परंतु **हेत्वन्तर**मित्येकं सूत्रानुसारेण तत्र पृथगेवोक्तम्। प्रतिज्ञान्तरसूत्रे 'हेत्वन्तरं कुतः पृथगस्मात् क्रियते' इत्याशंक्य साध्यसाधकभेदविवक्षयेति स्थितनिर्वाहमाचष्ट। तदनावश्यकमित्युपेक्ष्यात्रैकीकृत्य **उक्तविशेषण**मित्येव सामान्यत उक्तम्। प्रतिज्ञासंन्याससूत्रे च तत्र, 'अत्रापि **प्रतिज्ञापदम्** उक्तमात्रोपलक्षणपरम्। अपनयनम्—अपलापः' इत्युक्तत्वात् उक्तापलाप इति नाम निरदेशि। प्रतिज्ञाविरोधात् पूर्वमेतद्घटनञ्च, न्यायपरिशिष्टे, "उक्तदूषणे ह्यस्फूर्तिदशायां कश्चिदुक्तं त्यजेत्, कश्चिद्विशेषयेत्, कश्चिदपलपेत् इति त्रिधा प्रत्यवस्थानसंभव इत्युक्त्या तत्त्रयैकराश्यमनुचिन्त्येत्यवधेयम्। अपार्थकव्याख्याने, "तस्मादप्रतिसंबद्धार्थकम**नन्वितार्थक**मपार्थकं पदजातं वाक्यजातं वेत्यर्थः" इति अनन्वितार्थकपदप्रयोगात् तत्रैव, 'अनन्वितं न ब्रूयादिति रहस्यम्' इति अन्ते लेखाच्च स्पष्टार्थकतया तदनन्वितनाम्नैवात्र निरदेशि। स्वोक्तविरोधरूपोक्तविरोधानन्तरं स्वपूर्वपुरुषोक्तविरोधस्य वचनं प्राप्तावसरमिति अपसिद्धान्तोऽनन्तरमुक्तः। शब्दरूपनिग्रहस्थानानन्तरं तदभावादिक्रमभावरूपं निग्रहस्थानम्। छलजातिनिग्रहस्थानानि पृथक्सूत्रे निर्दिश्य लक्षितानि। निरनुयोज्यानुयोगरूपनिग्रहस्थाने छलजात्योरन्तर्भावः संभवतीतिहेतोः छलजाती पृथगत्र न गणिते। अत एव **न्यायपरिशिष्टे**ऽपि निरनुयोज्यानुयोगव्याख्याने उक्तम्, "स चतुर्विधः—छलं जातिराभासोऽनवसरग्रहणञ्चेति। **आभास** इति निग्रहस्थानाभासवचनं गृह्यते। सर्वमनन्तराह्निकारम्भे व्यक्तीभविष्यति। एवं लक्ष्येयत्तानिर्धारणौपयिकतया लक्ष्यनामशोधनमकारि। तदनुरूपलक्षणशोधनं भविष्यति ॥

**शब्दतः** त्यागवाचकशब्दप्रयोगेण। **अर्थतः** त्यागाक्षेपकवाक्यप्रयोगेण। **कैवल्यकथकेने**ति पदं न तालकोशे। पूर्वमीमांसकः स्वर्गाद्यैश्वर्यपरः; उत्तरमीमांसको ब्रह्मप्राप्तिपरः; सांख्यतार्किकादिः

प्रतिज्ञाहानिर्यथा–नित्यः शब्द इत्युक्ते (इति कैवल्यकथकेनोक्ते) अपसिद्धान्तेन दूषिते, तर्हि अनित्योऽस्त्वित्यादि। हेतुहानिर्यथा—अनित्यः शब्दः प्रत्यक्षत्वादित्युक्ते अनैकान्तिकत्वेन प्रत्युक्ते, 'तर्हि त्यक्तम्; अस्तु कृतकत्वादि[ती?]त्यादि। तत्रैव अस्तु [सामान्यतोपि]अन्यद्व्यापकं साध्य (साधन) मित्यादिवचने प्रतिज्ञाहान्यादि। दृष्टान्त(नित्यः शब्द इत्युक्ते बाधितत्वेन दूषिते तर्हि अनित्यः शब्द इति। हेतुहानिर्यथा—तत्रैव शब्दत्वादित्युक्ते असाधारण्यादिभिर्दूषिते, तर्हि कृतकत्वं हेतुरिति। दृष्टान्त)हानिर्यथा—तत्रैव सामान्यवदित्युक्ते साध्यसाधनविकलतया दूषिते, तर्हि घटो दृष्टान्त इत्यादि। एवं धर्मिवि(धर्मितद्वि)शेषण हेतुविशेषण दृष्टान्तविशेषणादेरपि हानिरूह्या। प्रत्यक्षहानिर्यथा—स्थिरः शब्दः प्रत्यभिज्ञानादित्युक्ते भ्रान्ततुल्यत्वेन प्रत्युक्ते, अस्तु तर्हि अनुमानेन आगमेन वेत्यादि। आगमहानिर्यथा—सर्वं क्षणिकं सर्वज्ञेन तथाभिधानादिति सौगतेनोक्ते बुद्धस्यानाप्तत्वेन प्रत्युक्ते, अस्तु तर्हि सत्त्वानुमानादित्यादि। एवं हान्यन्तराण्यपि चिन्तनीयानि। वादे तु सदुक्तं निर्वाह्यम्; असदुक्तं तु त्याज्यमेव, तन्निर्वहणस्य तत्त्वनिर्णयानङ्गत्वात्, तद्विपर्ययस्य तु तादर्थ्यादिति। (संभवरहस्ये)

दुष्टस्य त्यागान्निर्दोषः स्यामिति संकल्पादुक्तहानिसंभवः। निर्वाह्यमेव वदेत्। जल्पवितण्ड्योस्तु उक्तं च निर्वहेदिति रहस्यम्॥

॥ उक्तविशेषणम्(2)॥

अविशेषितपूर्वोक्ते दूषिते, तद्विशेषणनिक्षेपः उक्तविशेषणम्॥ अविशिष्टपरित्यागादेतदपि हानिरेवेति चेन्न, अविशिष्टत्वस्यानुक्तत्वात्, उक्तमात्रस्य चापरित्यागात्। साध्यसाधकांशविशेषणभेदादेतत् प्रतिज्ञान्तर हेत्वन्तरसंज्ञनिग्रहस्थानद्वयमक्षपादेन पठितम्। तदयुक्तम्, सामान्यसंग्रहस्य दृष्टत्वात्; अन्यथा हानिरपि तथैव प्रतिज्ञाहानिर्हेतुहानिरिति निग्रहस्थानद्वयं स्यात्, अविशेषात्। उक्तं च हेत्वन्तरं पृथगभिदधानैरपि वरदविष्णुमिश्रैः—

---

कैवल्यपरः। कैवल्यकथकसिद्धान्तः, वेदः स्वरूपतः प्रवाहतश्चानित्य इति। अनैकान्तिकत्वेनेति। सामान्ये इति शेषः। तत्रैव=अनैकान्तिकत्वशंकायामेव। सामान्यतोपीति क्वचिदस्ति। सामान्येऽपि यद् भवति तत् साध्यं भवत्वित्युक्ताविल्यर्थः। साध्यमित्यत्र साधनमिति क्वचित् पाठः। तदा व्यापकसाधनमिति स्यात्। धर्मिविशेषणेत्येव व्याख्यातृसंमतः पाठः। वादेत्विति। निग्रहस्थानं हि न वादे। उक्तमसच्चेत्, जह्यादेव वादी। सच्चेत्, निर्वहेत्; न त्यजेत्। तन्निर्वहणस्य=असतो निर्वहणप्रयत्नस्य। एकैकनिग्रहस्थानवचनस्य संभवे कारणं किञ्चिदस्ति; तथा तदापादनस्य च मूलम् एवं भाव्यमिति नियमरूपं किञ्चिद्रहस्यमस्ति। रहस्यपदस्थाने आदेश उपदेशः इत्यादि तत्रतत्र द्रष्टव्यम्। अत्र तदाह दुष्टस्येत्यादिना। निर्वाह्यमेव वदेत्; उक्तं निर्वहेदेति रहस्यमित्याह निर्वाह्यमिति।

प्रतिज्ञान्तरमिति सूत्रोक्तमेव उक्तविशेषणमित्युच्यतेऽत्र। अस्मिन् सूत्रे सर्वोऽपि प्रतिज्ञाशब्दः उक्तेति पदस्थाने प्रयुक्त इत्याशयः। हेत्वन्तरमपीदानीमत्रैवान्तर्भूतम्। इममन्तर्भावं वरदविष्णुमिश्रश्लोकेऽपि हेतुपदप्रयोगात् जानीमः। अथापि हेत्वन्तरस्य तैः पृथगभिधानं सौत्रपदस्यापरित्यागेन व्युत्पादनार्थम्

"पक्षदृष्टान्तहेत्वादिदूषणे कथिते सति । पुनर्विशेषणाऽऽदानं प्रतिज्ञान्तरमिष्यते ॥" इति ॥ द्विविधं चैतत्—सामान्यतो विशेषतश्चेति; यथा—अनित्यः शब्दः प्रत्यक्षत्वादिति वैशेषिकेण प्रयुक्ते, सामान्यादिभिरनैकान्तिकत्वे मीमांसकेनोद्भाविते, अस्तु तर्हि यत्किंचिद्विपक्षव्यावर्तकं विशेषणमिति सामान्यतः; अस्तु तर्हि जातिमत्त्वे सति अस्मदादिप्रत्यक्षत्वादिति इति विशेषतः । इदमपि पक्षसाध्यहेतुदृष्टान्तप्रत्यक्षागमादिरूपविशेष्यभेदाद् बहुविधम् । तत्र पक्षविशेषणं यथा अनित्यः शब्द इत्युक्ते मीमांसकेन अंशतः सिद्धसाधनताऽभिधाने, तर्हि वर्णात्मकः शब्द इत्यादि । साध्यविशेषणं यथा क्षित्यादिकं प्रयत्नवत्पूर्वकमित्युक्ते प्राचीनादृष्टसाधकप्रयत्नवज्जीवपूर्वकता-मात्रेण सिद्धसाधनत्वेऽभिहिते, अस्तु तर्हि साक्षादुपादानादिगोचरज्ञानचिकीर्षाप्रयत्नवत्पूर्वकमिति इति । हेतुविशेषणं प्रागुदाहृतम् । दृष्टान्तविशेषणं यथा—यत् सत् तत् क्षणिकम्; यथा घट इति बौद्धेनोक्ते साध्यविकलतया प्रत्युक्ते, अस्तु तर्हि कुर्वत्क्षणावच्छिन्नो घट इति । प्रत्यक्षविशेषणं यथा—भावरूपाज्ञानम् अन्धकारादिवत् सर्वलोकप्रत्यक्षमित्यद्वैतिनोक्ते बाह्यान्तरप्रत्यक्षविकल्पा-नुपपत्त्या दूषिते, अस्तु तर्हि साक्षिप्रत्यक्षमन्यदेवात्र प्रमाणमित्यादि । एवमुदाहरणान्तराण्यपि चिन्त्यानि ।

निर्विशेषणस्यैव दोषः, विशिष्टे तु स नागततीति व्यवसायादुक्तविशेषणसंभवः । प्रागेव पुष्कलं वदेत्; अपुष्कलोक्तं तु अल्पविशेषणयोस्तात्पर्यमेवादिना निर्वहेत्, न तु विशेषयेदिति रहस्यम् । अतो हानौ विशेषणे च पर्यनुयोज्योपेक्षणसध्रीचीनमिदं—निग्रहस्थानद्वयमुद्भाव्यम् । न च तथा सति स्वदोषोद्भावनं दोषः; व्यामोहनार्थं प्रयुक्तमसदप्यनेन न ज्ञातमित्यवष्टम्भविजयावहत्वात् । दूषणाधिक्यं तु न सर्वदा दोष इति ॥

---

अंशतः=ध्वन्यात्मकशब्दे । कुर्वदिति । वस्तूनां क्षणिकत्वसाधनाय बौद्धैरुक्तम्, यत्क्षणे कार्यं करोति तत्क्षणवस्तु यदा न करोति तत्क्षणवस्तुतो भिन्नम्, कुर्वत्त्वाकुर्वत्त्वयोर्विरोधादेकत्रासमावेशादिति । तन्मनसि निधाय एकक्षणग्रहणाभिप्रायेणैतद्विशेषणम् । **साक्षिप्रत्यक्ष**मिति । अन्तःकरणावच्छिन्न-चैतन्यं जीवः । अन्तःकरणोपलक्षितचैतन्यं तदेव साक्षीत्युच्यते । तद्ग्राह्यत्वं ज्ञानस्य तदिष्टम् । तत् साक्षि वृत्तिचैतन्यविलक्षणमिति तदाशयः । पूर्ववत् संभवरहस्ये अस्याप्याह **निर्वी**ति । **हानि-विशेषणरूप**योरनयोः कदाचित् पर्यनुयोज्योपेक्षणरूपनिग्रहस्थानेन सहोद्भावनीयत्वं भवतीत्याह **सत** इति । वाद्युक्तं सदेव=समीचीनमेव यदि प्रतिवादी आरोप्य दूषयति, तदा वादिना त्वदुक्तं कथमसदिति पर्यनुयोक्तव्यम्, तदकृत्वा यदि दोषसत्ताभ्रमेण हानिं विशेषणं वा कुर्यात्, तदा प्रतिवादी न केवलमिमं दोषम्, किंतु पर्यनुयोक्तव्यमुपेक्षितमिति दोषान्तरमप्युद्भावयेदिति । **अवष्टम्भविजय**शब्दौ न्यायपरि-शिष्टेऽपि । अवष्टम्भविवरणमसदपीत्यादिना । तृतीयनिग्रहस्थानेऽपि ईदृशमुद्भावनमस्तीति त्रयाणामेकरूपता । इदं तृतीयान्ते वक्ष्यते । अत एव प्रतिज्ञाविरोधं सौत्रं विहाय प्रतिज्ञासंन्यासरूपापलापस्य तृतीयतया गणनम् । ननु अधिकदूषणोक्तौ प्रतिवादी अधिकमिति निग्रहस्थानेन निगृह्येतेत्यत्राह **दूषणे**ति ।

॥ उक्तापलापः(3) ॥

स्वयमुक्तस्य सभ्यादिविदितस्य परेण दूषितस्य निगूहनमुक्तापलापः। स च बहुविधः— न मयैवमुक्तमिति वा, अन्यदेव मयोक्तमिति वा, त्वमेवोक्त्वा मय्यारोपयसीति वा, त्वदुक्तमन्योक्तं वा मयाऽनूदितमिति वा, पार्श्वस्थेनैवमुक्तमिति वा, अनुक्तमप्रक्रान्तमेव (अनुक्तमेव प्रक्रान्तमेव) त्वया भ्रान्तिवशादवगतमिति वा, अशरीरिवाक्यमिदमिति वा ।

ईदृशस्यापलापस्य संभवहेतुः पश्यतोहरेषु शिक्षणीयः। प्रतिज्ञाहेतुदृष्टान्तप्रत्यक्षागमाद्यपलपनीयभेदादयमपि बहुविधः पूर्ववदुदाहरणीयः। नियमपरिहरणीयहस्तचेष्टाद्यपह्नवसंग्रहाय कृतापलाप इति लक्ष्यलक्षणसिद्धिः। स्पष्टानि(नु)ष्ठितनिह्नवे च समर्थनीयान्तराभावात् परिषदनुविधेयैवेव स्थेयतया शरणम्; विश्वसाक्षिणां चतुर्दशानामपि तूष्णींभावात्। एवं सावैलौकिकप्रतीत्यपह्नवेऽपि। उक्तं च नारायणार्यैर्भगवद्गीताव्याख्याने—

"प्रसिद्धमपि विज्ञानं वादे यो नाम निह्नुते। स सद्स्यैर्नियन्तव्यो व्यवस्था नान्यथा यतः ॥" इति ॥

सभ्यादिविदितमुक्तं कृतं वा नापलपेदिति रहस्यम्।

अपलापमेव प्रतिज्ञासंन्यासशब्देनाक्षपाद उपचचार; तदिह हानिसंन्यासशब्दयोरैकार्थ्यभ्रमहेतुतया नाद्रियामहे। अत्रापि सदपलापे पूर्ववत् पर्यनुयोज्योपेक्षणसध्रीचीनता। एतानि त्रीण्यपि निग्रहस्थानानि तृतीयादिकक्ष्याभावीनि तदुत्तरकक्ष्योद्भाव्यानि ॥

---

हेत्वादेरधिकस्य कथनमेवाधिकमिति निग्रहस्थानम्; वैयर्थ्यात्। इदं तु कथकदौर्बल्यातिशयदर्शित्वात् जिगीषुर्नोपेक्षेतेति भावः ॥

प्रतिज्ञासंन्यासमुक्तापलापपदेनाऽऽह स्वयमिति। चतुष्प्रकारः संन्यासोऽयमुक्तो न्यायपरिशिष्टे; अत्र त्वधिकोक्तया बहुविध इत्युच्यते। कथं सभ्यानुविधेयादिषु साक्षिषु कश्चित् स्वोक्तमपलपेदित्यत्राह ईदृशस्येति। हानिर्विशेषणमपलाप इति त्रयमपि कुर्वन् स्तेनवदित्युक्त्वा विवृतं न्यायपरिशिष्टे 'सोऽपि हि द्रव्यत्यागेन वा निवृत्तिमिच्छेत्, भ्रमेण वा स्वीयतया विशेषयेत्, अपलपेद्वेति नालौकिकोऽयं व्यवहारः" इति। अत्रापलापो बहुषु साक्षिषु सत्सु कथमिति प्रश्ने पश्यतोहरो निदर्शितः। अपलापसौकर्यायैवान्यादृष्टेनापहरणम्। दृष्टेऽप्यपलापविधां तु पश्यतोहरो जानीयात्। नाम्नि उक्तेत्येतत्स्थाने कृतेति प्रयोगः कार्य इत्याह नियमेति। हस्तचेष्टादिकं विना वादः कार्य इति नियमे, यदि चेष्टित्वा तदपलपेत्, तन्निग्रहोऽपि कार्यः। स्वयमनुष्ठितेति क्वचित् पाठः। स्वयमनिष्ठितेति व्याख्यासंमतः पाठः। अपलापे निष्ठामप्राप्ते; स्वयं वादिनि अनिष्ठितापलापे सति; अपलापानभ्युपगमे तत्कृते। नाहं दुष्टमुक्तवान्। तस्मान्मदुक्तिर्नापलाप इति वदति सतीत्यर्थः। स्थेयः विवादविषयनिर्णेता। विश्वसाक्षिण" श्चतुर्दशमनूक्ताः, "स्वश्चैवान्तरपूरुषः। द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः। रात्रिः सन्ध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम्" इति। वादकथायामेतदभावो न्यायपरिशिष्टोक्तः। 'अबुद्धिपूर्वकस्तत्रापीयेके' इति पक्षान्तरमप्युक्तम् ॥

॥ उक्तविरोधः(4) ॥

स्वोक्तस्य स्वेनैव विरुद्धकरणमुक्तविरोधः । स द्विधा—पदवाक्यभेदात् । पदविरोधो यथा—ईश्वरोऽनीश्वर इत्यादि । वाक्यविरोधो यथा—ईश्वरः सर्वज्ञ एव; तथापि स्वज्ञानमेकं न जानातीत्यादि । स चायमवान्तरभेदाद् बहुविधः । तत्र प्रतिज्ञापदद्वयविरोधो यथा—ईश्वरो न सर्वज्ञ इत्यादि । पक्षहेतुविरोधो यथा—ईश्वरः कर्मवश्यः, जीवत्वादित्यादि । साध्यहेतुविरोधो यथा—क्षित्यादिकं सकर्तृकम्, अकर्तृकत्वादित्यादि । स्ववचनविरोधो यथा—यावज्जीवमहं मौनी मूको वेत्यादि । स्वक्रियाविरोधो यथा—सर्वदा निर्व्यापारोऽहमित्यादि । एवम्—'न किंचिदहं याचे, अतो मेऽर्था दीयन्ताम्'; 'अमृतं पीतवानहम्, तथापि मे तद्दर्णतः पलितमासीत्'; 'न कश्चिन्मे सिद्धान्तः, तथापि शून्यं चिन्मात्रं वा तत्त्वम्'; 'अवेद्यं ब्रह्म, तथापि तज्ज्ञानान्मोक्षः'; 'न किंचित् कारणं कार्यं वा, तथापि भूतपरिणतिविशेषाच्चैतन्यम्' इत्यादीनि तत्तत्सैद्धान्तिकानां व्याहतभाषितानि अवगन्तव्यानि । एषु चोक्तस्य क्वचिच्छाब्दो विरोधः, क्वचिदार्थः । अभ्युपगतनियमविरुद्धाचरणमप्यत्रैवान्तर्भवति; तत् यथा—संस्कृतमभ्युपगम्य अपभ्रंशेन भाषणम्; कृत्स्नानुभाषणाद्यभ्युपगमे दूष्यमात्रानुभाषणादिकम्; हस्तचेष्टादिवर्जनमभ्युपगम्य तत्करणमित्यादि । एवं शास्त्रान्तरपठितानि विसन्धि-यतिभङ्ग-भिन्नवृत्त-नेयार्थत्वादीन्यपि तत्तन्नियमापेक्षया दूषणान्यत्रैवान्तर्भवन्ति ।

जैन-कौमारिलादिनयेन विरोधतिरस्कारात्, अनवधानादेश्चास्य संभवः । स्ववचनस्वाभ्युपगमाविरुद्धमेवाऽऽचरेदिति रहस्यम् । अयं प्रथमादिकक्ष्याभावी तदनन्तरकक्ष्योद्भाव्यः ।

---

अत्र तथापीति पदानि विरोधप्रदर्शनाय । तत्त्यागेनापि वाक्यं प्रयोक्तुं युक्तम् । पलितमासीदिति, अमृतपानविरुद्धं सजरत्वमिति भावः । अभ्युपगतनियमेति । तादात्विकवादिप्रतिवाद्यभ्युपगमविषयनियमः सर्वाभ्युपगतसार्वकालिकनियमश्च गृह्यते । विसन्धीति । पद्यादौ दधि अत्रेत्यत्र दध्यत्रेतिवत् आवश्यकसन्धिहीनमित्यर्थः । यतिभंगः; यतिः=स्थापनम् उच्चारणविश्रमकरणम्, पादमध्ये एतदेतत्संख्याकवर्णावसाने विश्रमः कार्य इति नियमोऽस्ति; तद्भंगः । यथा 'प्रणम रघुनाथस्य श्रेयःप्रदं पदपंकजम्' इति पद्ये षष्ठवर्णोत्तरविच्छेदोऽपेक्षितः । नाथेति रूढपदे मध्ये प्रथमवर्णोच्चारणानन्तरं थकारात् पूर्वं विच्छेदस्य दुष्करत्वात् तद्भंगः । भिन्नवृत्तम्=पूर्णस्य पद्यस्यैकवृत्तत्वे आवश्यके पादे अर्धे वा वृत्तान्तरस्वीकारे वृत्तभेदः । नेयार्थत्वं क्लेशेनोपपादनीयापेक्षितार्थकत्वम् । आदिना कोशानुमतस्यापि अप्रसिद्धस्य पदस्य प्रयोगादि ग्राह्यम् ।

अत्र संभवहेतुं रहस्यञ्च क्रमेणाऽऽह जैनेति । सर्वमनेकान्तमिति जैनमतम् । गुणगुणिभेदाभेदः

॥ अपसिद्धान्तः (5) ॥

स्वाभ्युपगतसिद्धान्तविरुद्धाभ्युपगमोऽपसिद्धान्तः ; यथा–सांख्यस्य, आत्मा कर्तेति ; वैशेषिकस्य, आत्मा चिद्रूप इत्यादि । एवं स्वस्वसैद्धान्तिकानभ्युपगतं प्रमाणं पुरस्कुर्वन्नपि वस्तुतस्तत्प्रामाण्ये तदभावेऽप्यनेनैव निग्राह्यः ; तत्प्रमाणत्वे वक्तव्यदूषणान्तराभावात्, तदप्रमाणत्वे तद्धेतुसमर्थनप्रयासतोऽप्युद्भटस्याभ्युपगमनियतस्यास्यैवोद्भावयितुमुचितत्वात् । यस्त्वनुमानादिकमर्थापत्त्यादिशब्दमात्रेण व्यपदिशति, न स निग्रहीतव्यः । अभ्युपगततदैक्यस्य पर्यायपाठे विरोधाभावेन निरपराधत्वात् ; अन्यथाऽतिप्रसङ्गात् । अथ चेत् स एवावष्टम्भेन पृष्टः पृथक्त्वं प्रतिब्रूयात्, तथापि (तदा तु) अपसिद्धान्तावतारः । एवं कौमारिलादेरभ्युपगतबहिर्भावस्यार्थापत्त्यादेरन्तर्भावानुज्ञानेऽपि पूर्ववत् तद्याथार्थ्यायाथार्थ्ययोरयमेव निग्रहः । अत्र स्वाभ्युपगतसिद्धान्तविरुद्धकरणमात्रव्यवच्छेदायाभ्युपगमशब्दः । समस्ति हि वस्तुतो निग्रहस्थानान्तरेष्वपि स्वसिद्धान्तविरुद्धाचरणम्, परिहृतसर्वापराधेन कथा प्रवर्तनीयेति सर्वसैद्धान्तिकसंमतत्वात् । न चैतावता सर्वेषामपि निग्रहस्थानानामपसिद्धान्ततेति ॥ नन्वेवमपि अपसिद्धान्त उक्तविरोधेऽन्तर्भावनीयः, एतत्सिद्धान्तवर्त्मना व्यवहरिष्यामीति कथारम्भे प्रतिज्ञाय तत्पर्यवसानात् पूर्वं तद्विरुद्धभाषणात् ॥ सत्यम् ; त्वत्परिगृहीतसिद्धान्तविरुद्धोऽयमर्थस्त्वयाभ्युपगम्यते ; अतः पूर्वोक्तसिद्धान्ताभ्युपगमवाक्यविरोध इति वक्तव्यम् ; तत्र प्रथमपर्वणि स्थितस्योपजीव्यस्योद्भटस्य सिद्धान्तविरोधस्यैवोद्भाव्यत्वमुचितमिति पृथग्व्यपदेशः ।

स्वस्यापि तत्तच्छास्त्रकर्तैकात्म्याभिमानात्, प्रमादादेश्चास्य संभवः । अतीर्थकरः स्वस्वाभ्युपगतसिद्धान्तविरुद्धं नाङ्गीकुर्यादिति रहस्यम् ॥ कथं तर्ह्येकस्मिन्नेव दर्शने मतभेदप्रवृत्तिरिति चेत्, तीर्थकरवाक्यानां तत्तत्परत्वाभिमानात् ॥ कथं तर्हि वार्तिकादिसृष्टिरिति चेत्, स्वतन्त्रस्य (स्या)सतोऽभ्युपगमैकदेशस्य स्वयमंशतस्तीर्थकरत्वात् ॥ अस्त्वेवमपसिद्धान्तेपीति चेन्न ; पूर्वमेव

---

कौमारिलः । स्वोक्तं तन्नयेन साधूकर्तुं शक्यमित्यभिमानः केषाञ्चित् । प्रायिकं त्वनवधानम् ।

स्वसिद्धान्तविरुद्धप्रमेयकथनवत् असंमतप्रमाणपुरस्करणेऽपि अपसिद्धान्तरूपो निग्रह इत्याह एवमिति । तदभावेऽपि=प्रामाण्याभावे च । अनेनैव=अपसिद्धान्तरूपेणानेनैव । उपपादयति तत्प्रमाणत्व इति । इत्थमुक्तं न्यायपरिशिष्टे (अनभ्युपगतस्य प्रमाणस्य प्रामाण्यविषये) 'अविप्रतिपत्तौ कथाया एवाप्रवृत्तेः ; विप्रतिपत्तौ चोभयप्रामाण्यानभ्युपगमत्यागात्' इति । अप्रमाण्यस्थापकन्यायप्रयोगेण तद्दूषणप्रयासात् तदप्रामाण्यस्य पूर्वपुरुषेष्टत्वेन तद्विरोधोद्भावनमेव श्रेय इति । अवष्टम्भेन एतन्निर्वाहासामर्थ्ये अनेनैव निग्रहकामनया । लक्षणगतस्य अभ्युपगतेत्यस्य कृत्यमाह अत्रेति । सर्वसैद्धान्तिकेत्यनेन सर्वतन्त्रसिद्धान्तत्वं तस्योक्तम् । तथा च स्वाभ्युपगतेत्यस्य स्वतन्त्रमात्राभ्युपगतेत्यर्थः । अतीर्थकर इति । स्वयमपूर्वकिञ्चिन्मतप्रवर्तकश्चेत्—तं प्रति एतदुद्भावनस्य न प्रसक्तिः । स्वतन्त्रस्य सत इति पाठे वैदुष्यातिशयतः स्वातन्त्र्यसत्त्वादित्यर्थः । असत इति पाठे अस्वतन्त्रस्य ; पूर्वपुरुषपार-

तथाभ्युपगमाभावात्। अभ्युपगमे वा को नाम तत्रापसिद्धान्तमुद्भावयेदिति।

अस्य प्रायशो द्वितीयादिकक्ष्यासु संभवः। पृथुकव्यवहारेषु प्रथमकक्ष्यायामपि। द्वितीयकक्ष्यायां तु स्वसिद्धान्तविरुद्धसाधनेपि सिद्धसाधनत्वोद्घाटनादावस्यैव तत्संभवः॥

॥ सिद्धान्तः ॥

अथ कः सिद्धान्तः? प्रामाणिक इत्यभ्युपगतोर्थः। श्लो:—

अभिमानैकमूलत्वादन्योन्यं च विरोधतः। न कश्चिद् यदि सिद्धान्तो नैवं तत्सिद्ध्यसिद्धितः।
सिद्धान्ताभाव एवायं प्रामाणिक इतीष्यते। नेष्यते वा द्विधाऽप्येवं सिद्धः सिद्धान्तसंग्रहः॥

स त्रिविधः—सर्वतन्त्रप्रतितन्त्राभ्युपगमसिद्धान्तभेदात्। यमन्तरेण वादव्यवहारोऽपि न घटते, स सर्वाभ्युपगतः सर्वतन्त्रसिद्धान्तः; यथा—प्रमाणात् प्रमेयसिद्धिरित्यादि। अभ्युपगतो हि माध्यमिकादिभिरपि सांवृतादिसंज्ञातः प्रमाणप्रमेयव्यवहारः। स्वतन्त्र एव सिद्धः परतन्त्रैर्निषिद्धः, प्रतितन्त्रसिद्धान्तः; यथा-वैयाकरणस्य स्फोटः; सौगतस्य क्षणभङ्गः, दिगम्बरस्य सप्तभङ्गी, कौमारिलादेः शब्दभावनादिलिङर्थता, अस्मदन्तर्विदामीशितुः सर्वशरीरित्वादि। अमी च सिद्धा-

---

न्त्ये सत्येवेत्यर्थः। **पृथुकः** सिद्धान्ते विशेषतोज्ञानरहितः। **स्वसिद्धान्ते**ति। स्वसिद्धान्तविरुद्धार्थस्थापनेऽन्येन क्रियमाणे स्वयं सिद्धसाधनमिति यदि वदेत्, तदा प्रथमो ब्रूयात्, अपसिद्धान्तोऽयम्, त्वदूनैरनभ्युपगतत्वादिति।

सूत्रकारेण षोडशसु पदार्थेषु सिद्धान्त एक उक्तः। तस्य पृथक्कथनावसरस्यात्राभावात् अपसिद्धान्तरूपनिग्रहस्थाननिरूपणशेषतया तं निरूपयितुं तत्र जिज्ञासासंभवमाह **अथे**ति। सांख्य,तर्क वेदान्तादिनानामतान्यपि सिद्धान्ता एव। 'या वेदबाह्याः स्मृतयः' इति मनुश्लोकानुरोधेन सफलज्ञानविषयः सात्त्विक एक एव सिद्धान्तः; अन्ये तु सिद्धान्ताभासा एवेति तु न। अनिश्चितत्वात्। तदनुसारेण सर्वानुगतं लक्षणमाह **प्रामाणिक** इतीति। अन्तशब्दोऽत्र एकतरपक्षपरः। 'नित्यत्वमप्येकोऽन्तः, अनित्यत्वमप्येकोऽन्तः' इति तद्भाष्यात्। अभ्युपगमः भ्रमः प्रमा वा; प्रमाणिकत्वेन स्वहृदयसाक्षिकमभ्युपगतः सर्वोऽपि सिद्धान्त एव। **सिद्ध**पदस्य निश्चयघटितार्थकत्वात् निश्चयस्य च पुरुषभेदेन भिन्नरूपत्वात्। शंकते **अभिमाने**ति। तृतीयपादे इतीत्यध्याहारः। न कश्चित् सिद्धान्त इति चेदित्यन्वयार्थः। परिहरति **नैव**मिति। **असिद्धित** इति समस्यास्तसिः। त्वदुक्तस्य सिद्धौ असिद्धौ च **एवं** सिद्धान्ताभावरूपप्रकारो नेत्यर्थः। एतदुपपादनमेगोपरि। चतुर्विधत्वं सूत्रादौ दृष्टम्। त्रिविधत्वमेवाभिमतमित्याह **स त्रिविध** इति सर्वतन्त्रेत्यादिकं सिद्धान्तभेदनाम। पुल्लिंगता च बहुव्रीह्यादिवत्। **सांवृते**ति। अविद्यास्थाने तत्परिभाषा संवृतिरिति। तदधीन इत्यर्थः। **स्वतन्त्रे**=स्वस्य तन्त्रे। प्रतिनियतं तन्त्रमस्मिन्नर्थे इति **प्रतितन्त्रः**। **शब्दभावने**ति। यजेतेत्यस्य यागं भावयेदित्यर्थे सा भावना प्रवर्तकपुरुषगतप्रेरणारूपा वक्तुं न शक्यते, वेदस्यापौरुषेयत्वादिति हेतोः वेदे सा भावना लिङादिरूपशब्दगतैवेति कुमारिलपक्षः। प्रभाकरस्य तु सा भावना नियोगः अपूर्वमिति।

न्तान्तरानभ्युपगमप्रसिद्धिदशायामेव प्रतितन्त्राः ; यदि कश्चिदन्योऽपि तीर्थकरस्तानेवार्थान् अभ्युपगच्छेत्, तदा तेषामभ्युपगमसिद्धान्तत्वम्। न चापूर्वास्तीर्थकरा न भवन्तीति नियमः, तथात्वे प्राथमिकैकसिद्धान्तपरिशेषप्रसङ्गात्। न च तैस्तेऽर्था नाभ्युपगन्तव्या इति वाच्यम्, आवापोद्वापभेदानामिदानीमपि दर्शनात्, अभिमानमूलत्वाच्च सिद्धान्तानामिति ।

अव्यापकः, स्वतन्त्रस्य तन्त्रान्तरस्य च साधारणोऽभ्युपगमसिद्धान्तः ; यथा—नैयायिकादीनां सामान्य.विशेष.समवायादिः, सांख्यादीनां भेदाभेदादिः, सौगतादीनां प्रपञ्चमिथ्यात्वादिः । 'परतन्त्रे साधितः स्वतन्त्रे च समाश्रितः' इति वा, 'तन्त्रान्तरसिद्धसद्भावस्य वस्तुनो विशेषपरीक्षणम्' इति वा केचिदाहुः। अत्र स्वतन्त्र. परतन्त्रसाधारण्यमेव निष्कृष्टलक्षणं भवति ॥

केचित्तु कस्यचित् साधने अनुषङ्गसिद्धोऽन्य आधारसिद्धान्त इति चतुर्थं विभागमाहुः यथा—क्षित्यादेः सकर्तृकत्वसिद्धावीश्वरसिद्धिरित्यादि । अक्षपादश्च सिद्धान्तचातुर्विध्यं प्रकृत्याऽऽह, "यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः" इति ॥ तदयुक्तम्, तस्य सर्वैरभ्युपगमे सर्वतन्त्रसिद्धान्तत्वात्; स्वतन्त्रमात्रसिद्धौ प्रतितन्त्रत्वात्; परैरपि कैश्चिदभ्युपगमेऽभ्युपगमसिद्धान्तत्वात्। केवलं तु अयमस्य सिद्धान्त इति निर्णये अनुषङ्गसिद्धिर्लिङ्गं भवतीत्येतावता यदि पृथगभिधानम्, काममभिधीयतामिति ॥

॥ अवाचकम्(6) ॥

शब्दशास्त्रविरुद्धस्वरूपमवाचकम् ; यथा—कृत् तद्धित.समास.आख्यात लकार.आत्मनेपद.

---

अव्यापक इति। व्यापकत्वे सर्वतन्त्रसिद्धान्तता स्यात्। अतः किञ्चित्तन्त्रावृत्तित्वं विवक्षितम्। परतन्त्रे इति। 'साधितः परतन्त्रे यः स्वतन्त्रे च समाश्रितः' इति कथितं लक्षणं सर्वतन्त्रसिद्धान्तेऽप्यस्तीति तत्त्यागः। "अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः" इति सूत्रच्छायया अन्यकृतं लक्षणं तन्त्रान्तरेति। परीक्षां विनाऽभ्युपगते सिद्धान्तेऽस्याव्याप्तिरिति एतत्त्यागः। न्यायभाष्ये तु अपरीक्षितस्याभ्युपगमात्=परीक्षातः पश्चात् त्याज्यस्यैव परोक्तस्य, अभ्युपगमात्=स्वीकारारोपेण, तत्र विशेषपरीक्षणे तत् त्याज्यमभ्युपगमसिद्धान्तत्वेनोक्तम्। तद् वार्तिककारेणानादृतम्, किं परस्यासामर्थ्याऽऽविष्कारेणेति। स्वासंमतस्य स्वसिद्धान्तत्वमयुक्तञ्चेति अत्रापि तदुपेक्षितम् ॥ अधिकरणसिद्धान्तनामाऽन्यः कश्चित् सूत्रभाष्यवार्तिकादिसंमतोऽप्यत्रोपेक्षितः। अत एव त्रेधैव विभागः। तद् दर्शयति केचित्त्विति। केचिदित्यनेन स्वमतैकदेशिनोऽभिमताः स्युः, अक्षपादश्चेत्येवमुपर्युक्तेः। कस्यचित् साधन इति। वाक्येन साक्षादेकस्मिन्नर्थे कथिते इत्यर्थः। अनुषङ्गो=आक्षिप्यमाणो योयोऽर्थः, स सर्व आधारसिद्धान्तः। भाष्ये इन्द्रियव्यतिरिक्त आत्मा, 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' इति सूत्रार्थं गृहीत्वा अत्रार्थात् सिद्धमिन्द्रियनानात्वम्, तेषां विषयग्राहकत्वम्। विषयस्य धर्मधर्मिभावेन भेद इत्यादिकमित्युक्तम्। वार्तिके क्षित्यादेः सकर्तृकत्वानुमाने पक्षधर्मताबलसिद्धं सर्वज्ञकर्तृकत्वमुदाहृतम्। अस्तु सर्वोऽप्याधारसिद्धान्त इति; अथापि नास्य पार्थक्यमित्याह तस्येत्यादिना। प्रकरणशब्दः प्रकृतानुबन्धिपरः ॥ एवमपसिद्धान्तरूपनिग्रहस्थानशेषतया सिद्धान्तो लक्षितो विभक्तश्च। अथावसरप्राप्तमन्यत् (6) अवाचकमिति

परस्मैपद-सकर्मकाकर्मक-लिङ्ग-वचन-विभक्ति-वर्णादेशागमप्रभृतीनां विपर्यासन्यूनातिरेकादयः। उदाहरणानि तु अशिक्षितानां वचनान्येव द्रष्टव्यानि।

अपशब्दमपि सुशब्दयिष्यामीति वैयाकरणत्वगर्वात्, अशिक्षितत्व-अनवधानादिभिश्चास्योक्तिसंभवः। 'वक्तव्यतयाऽभ्युपगतभाषामूलव्याकरणसिद्धमेव नियमकथायां भाषितव्यम्' इति रहस्यम्। उक्तं च प्रज्ञापरित्राणे—

"साधुगीर्वाणवाण्यैव प्रयोगनियमे कृते। अपशब्द(भ्रंशा)न्यभाषाभिर्भाषणं चापि दूषणम्॥ अकृते नियमे सर्वभाषाभिरपि भाषणम्। स्खलने च पुनः साधुशब्दग्रहणमिष्यते॥" इति।

एवं सति अयमपि नियमविरोधः [उक्तविरोध?] इति चेत्, सत्यम्; तथापि स्वतोऽपशब्दस्य दूषणत्वसंभवादुपजीव्यत्वाच्चास्यापि पृथक् व्यपदेशः। "सर्वभाषाभिरपि" इत्युभयाभ्युपगतैकापभ्रंशभाषाविषयम्; न पुनस्तदातदा यथेच्छप्रव्यवस्थितभाषाभिप्रायम्, तथा सति परानभ्यस्तभाषयाऽपि भाषणप्रसङ्गे परस्परवार्तानभिज्ञतया वादिनोर्निष्फलपरिश्रमत्वप्रसङ्गात्। अतः उभयाभ्यस्तया नियमपरिगृहीतयैव भाषया व्यवहरेदित्यर्थः।

इदं च निग्रहस्थानं सर्वकक्ष्यासंभावितं (संभवि); तदैवोद्भाव्यं च॥

॥ अनन्वितम्(7)॥

उचितान्वयशून्यमनन्वितम्। तत् द्विधा—पदवाक्यभेदात्; यथा—स्तम्भः कुम्भः कुड्यं कुसुलमित्यादि। यथा च—'पर्वतो वह्निमान् महाह्रदोऽवकोटवान्' इत्यादि। व्यवहितान्वयमप्यनन्वयम्; प्रतीत्यभावाविशेषात्। न चास्य विपर्यासंकरः; पद्यनियमकथायां विपर्यासस्य क्षन्तव्यत्वेऽपि व्यवहितान्वयस्य दूषणत्वात्। विपर्यासे व्यवहितान्वयत्वाभावात्॥

संभावितसमस्तान्वयप्रकारविकल्पे तदनभ्युपगन्तुः 'विकल्पविषयाशेषानन्वयः' इत्याहुः॥

---

निग्रहस्थानम्। तत्तद्भाषामूलव्याकरणसिद्धं वाचकम्, तद्भिन्नमित्यर्थः।

सर्वभाषाभिरिति। सभ्य-वादि-प्रतिवाद्यभ्यस्ताभिरन्यभाषाभिरपीत्यर्थः।

(7)उचितान्वयेति। स्वरससिद्धान्वयेत्यर्थः। अवकोटः बकः। वाक्यद्वयं मिथोऽनन्वितमिह। अव्यवधानेऽनन्वय उक्तः। व्यवधानादनन्वयमपि द्वितीयमाहुः। तस्यैव व्यवहितान्वयपदेन निर्देश इह। गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यत्र व्यवधानादनन्वयः, व्यवहितेनान्वय इत्युभयसत्त्वादुभयथाऽपि युक्तम्। प्रतीत्यभावेति। मुख्यानन्वित इवात्रापि प्रतीत्यनुदयस्तुल्यः। उत्पन्नप्रतीतिबाधस्थले तु विरोधादिर्दोषः स्यात्। अस्य त्वनन्वित एवान्तर्भाव्यतेति भावः। अप्राप्तकालरूपविपर्यासेऽन्तर्भावशंकां परिहरति नचेति। अस्य व्यवहितान्वयरूपानन्वयस्य। पद्यैरेव व्यवहर्तव्यमिति नियमपूर्वककथायां विपर्यासो न दोषः। व्यवहितान्वयदोषस्त्विष्टः। अतो विपर्यासातिरिक्तता। विपर्यास एव त्यज्यतामिति न शंक्यम्, अनित्यः शब्द इति विपर्यासे व्यवधानानन्वयस्याभावात् विपर्यासस्यैव वक्तव्यत्वादिति। तृतीयमप्यनन्वयमुदयनाचार्याभिहितमाह संभावितेति। प्रयुक्ते वाक्ये नानाविधान्वयप्रकारान् विकल्प्य दूषणे कृते तेषां प्रकाराणां प्रयोक्त्राऽनभ्युपगमेऽन्यप्रकाराभावादनन्वयेऽपि अयं दोषः। विकल्पितेषु प्रकारेषु कस्यचिदभ्युपगमे तत्रोक्तदूषणप्राप्तिभिया तदनभ्युपगमात् तस्य विकल्पविषयाशेषानन्वय इति नाम कृतम्।

नन्वाकाङ्क्षासत्तियोग्यताभिरन्वयः । तासामेकैकाभावेऽप्यनन्वय इति सिद्धम् । ततश्च येषु वाक्येष्वाकाङ्क्षासत्त्योरभावः, तत्रानन्वितनिग्रहस्थानावकाशः ; यत्र तु योग्यताविरहादनन्वयः, तत्र विरोधनिग्रहस्थानमेव स्यात्, विरोधमन्तरेणायोग्यत्वस्याऽऽपादयितुमशक्यत्वादिति चेत्-अस्त्वेवम् ; तथापि पृथग्विषयलाभात् निग्रहस्थानद्वयं सिद्धम् । नन्वनन्वितस्यास्ति पृथग्विषयः, तथापि विरोधस्य सर्वस्यायोग्यतयैव क्रोडीकारान्न पृथग्विषयलाभ इति चेत्—सत्यम् ; तथाप्यन्वयायोग्यतानिमित्तस्य विरोधस्यैवोद्भटत्वात् तस्यैवोद्भाव्यत्वम् । न चैवमाकाङ्क्षासत्तिविरहयोरपि पृथगुद्भाव्यत्वम्, तयोर्द्वयोरप्यन्वयप्रतीतेरेवानुदयात् । इह तु शब्दस्वरसतो जातस्यान्वयबोधस्य विरोधेन बाधादिति । यत्र तु विप्रलम्भकादिवाक्ये प्रतिवादिवाक्ये च सामान्यतस्तत्तद्वस्तुस्वभावप्रयुक्तविरोधाभावेन दृढोदितेऽप्यन्वयबोधे प्रमाणान्तरपरामर्शात् बाधः, तत्र तु तत्तत्प्रमाणबलात् विशेषतः सत्यपि विरोधे तत्तत्प्रमाणबाध एवोद्भाव्यः, तस्यैव तत्रोपजीव्यत्वादिति ॥

॥ अप्राप्तकालम्(8) ॥

विवक्षितक्रमस्य विपर्यस्तकरणमप्राप्तकालम् ; यथा — सभ्यानुविधेयसंवरणादिकमकृत्वा प्रयोगे वादारम्भविपर्यासः; प्रतिज्ञाहेतुदृष्टान्तादेर्विपर्यासेन वचने अवयवविपर्यासः; अनित्यः शब्द इत्यादौ अवयवांशविपर्यासः; तर्कमभिधाय प्रयोगे अङ्गाङ्गिविपर्यासः; वादुक्तमशेषमदूषयित्वा प्रतिवादिना स्वपक्षसाधने वाग्विपर्यास इत्यादि ।

वाक्यस्य परप्रत्यायनार्थत्वात् विपर्यासेऽपि परप्रत्ययसंभवाभिमानात् तदुक्तिसंभवः । नियमकथायामभ्युपगतक्रमातिक्रमेण(मणं?) न कुर्यादिति रहस्यम् । अनित्यः शब्द इत्यादिप्रयोगस्तु विपर्यासेऽपि शीघ्रान्वयप्रतिपत्तेरनियमकथायां वादे च सोढव्य इत्यादि ॥

॥ अविज्ञातार्थम्(9) ॥

त्रिर्भङ्ग्यन्तराभिधानेऽपि प्राश्निकप्रतिवादिष्वन्यतमेनाप्यज्ञातार्थं वचनमविज्ञातार्थम् । तच्चाप्र-

---

आहुरित्यनेन केवलानन्वये, विकल्पविषयान्वयासंभवप्रयुक्तानन्वये चेषद्भेदसत्त्वेऽपि तत्रोपेक्षा सूच्यते, अयोग्यताप्रयुक्तानन्वयस्योक्तविरोधेऽन्तर्भावमभ्युपगच्छति अस्त्वेवमिति । तयोः विरहयोः । क्वचित् विरोधमपि विहायानन्वयस्योद्भाव्यत्वमाह यत्रत्विति । विप्रलम्भकादिवाक्यम्—नद्यास्तीरे पञ्च फलानि सन्तीत्यादि । आदिना भ्रान्तग्रहणम् । व्यर्थविशेषणविशिष्टहेतुप्रयोगे विशिष्टे व्याप्यत्वाभावात् हेतुत्वानन्वयात् सोऽपि कश्चिदनन्वय इत्याशंक्य, तस्य विरोधे हेत्वाभासे वा प्रवेश इत्युदयनाचार्योक्तत्वात् तद्रीत्या अयोग्यताप्रयुक्तानन्वये विप्रलम्भकवाक्यादौ च विरोधस्य प्रमाणबाधस्य चोद्भावनमत्र व्युदपादीति ध्येयम् ॥

(8) सूत्रे अवयवविपर्यासमात्रस्याप्राप्तकालपदाभिप्रेतत्वावगमेऽपि विपर्यासकरणसामान्यं तद्विवक्षितमित्याशयेनाऽऽह विवक्षितेति । अकृत्वाप्रयोगे इति । सभ्यादिसंवरणात् प्राक् कथाप्रवर्तने इत्यर्थः । पश्चादपि संवरणाकरणे यूनमिति निग्रहस्थानमिति न्यूने वक्ष्यते । तर्कमिति । अनुमानप्रयोगानन्तरं तर्कस्याभिधेयतेति क्रमः । शीघ्रान्वयेति । 'उद्देश्यवचनं पूर्वं विधेयस्य ततः परम्' इति नियमात् शब्दोऽनित्य इत्येव प्रयोक्तव्यम् ; परंतु तदा, किं नित्य इति पदच्छेदः उतानित्य इति शंका स्यात् ; उपरितनव्यवहारतस्तन्निर्धारणे च विलम्बादीति विचिन्त्य विपर्यासादर इति भावः । 9. त्रिर्भं(भ)ग्यन्तरेति ।

सिद्धप्रयोग,स्वसिद्धान्तमात्रसिद्धप्रयोग, अर्थान्तरसाधारणप्रयोगादिभेदात् बहुविधम्। तत्राप्रसिद्ध योगो यथा—अहार्यो वीतिहोत्रवानित्यादिः। स्वसिद्धान्तमात्रसिद्धप्रयोगो यथा—पञ्चस्कन्ध-द्वादशायतनादिप्रयोगः सौगतानाम्; अस्तिकाय, पर्याय, पुद्गलादिप्रयोगो दिगम्बराणाम्; यतमान" व्यतिरेक,एकेन्द्रिय,वशीकारसंज्ञादिप्रयोगः पातञ्जलानाम्; स्फ्य कपालादिप्रयोगो मीमांसकानाम्; सुतेजाः, विश्वरूपः, पृथग्वर्त्मा, बहुलः, रयिः, प्रतिष्ठेति अध्यन्तविदामित्यादि। साधारणप्रयोगो-यथा—महीभृत् लोहिताश्ववानित्यादिः। केवलयोगमूलप्रयोगो यथा—पयःपयोधिसंभवाकान्त" पदवैशेषिकगुणः उत्तरावध्युपलक्षितवस्तुसत्तावान्, पूर्वान्तोपलक्षितवस्तुसत्तायोगित्वात्, दण्डा_

---

सभ्यैः पुनरपि विशदं वक्तुं प्रेरितेन प्रथमोच्चरितवाक्यस्य तथैवोच्चारणेऽर्थानवगम एव स्यादिति शब्दान्तरेण, समानार्थपर्यवसाय्यन्यादृशवाक्यप्रयोगेण वा ज्ञापनेऽपीत्यर्थः। त्रिरिति पृथगिव त्रिभङ्ग्यन्तरेति समस्तपद" प्रयोग उपर्यधिकः। मिथोभिन्नभंगीत्रयेत्यर्थः। **प्राश्निकाः**-सभ्याः। **अहार्यो वीतिहोत्रवानिति** पर्वतो वह्निमानित्यर्थः। पञ्च स्कन्धाः=रूपवेदनाविज्ञानसंज्ञासंस्काराख्याः पञ्च स्कन्धाः। स्कन्धशब्दोऽनेकसमुदायपरः। एतद्विवरणं ब्रह्मसूत्रभाष्यादौ बौद्धनिरासघट्टे। **द्वादशायतनानि**='ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च। मनो बुद्धिरिति प्रोक्तं द्वादशायतनं बुधैः' इत्युक्तानि। कर्मेन्द्रियस्थाने पञ्च विषयाः; बुद्धिस्थाने धर्मश्च अन्योक्ताः। आदिना अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारो विज्ञानोत्पत्तिहेतवः, प्रतिसंख्यानिरोधो" ऽप्रतिसंख्यानिरोध इत्यादिग्रहणम्। परमतभंगोक्तचतुरार्यसत्य—अष्टादशधात्वादेश्च ग्रहणम्। **अस्तिकायः** अणुव्यतिरिक्तद्रव्यम्। जीव,धर्माधर्म, पुद्गलाकाशाः पञ्च अस्तिकायाः। **पर्यायो** द्रव्यस्यावस्थाविशेषः **पुद्गलः** वर्णगन्धरसस्पर्शवत् उपचयापचयात्मकं द्रव्यम्। **यतमानेति**। संज्ञाशब्दश्चतुर्ष्वपि संबध्यते वैराग्यस्येमानि चत्वारि पर्वाणि। यतमानसंज्ञा रागद्वेषादिपाकेन विषयेष्विन्द्रियप्रवृत्तिनिवारणे प्रयत्नः व्यतिरेकसंज्ञा=किमिन्द्रियकषायाणि पक्वानि, कानि नेति विवेचनम्। एकेन्द्रियसंज्ञा बाह्येन्द्रियेषु निवर्तितेषु मनसि परं तदौत्सुक्यावस्थानम। वशीकारसंज्ञा=दोषपरिशीलनातिशयभावितं पूर्णवैराग्यम्। एतदनु-संधानं श्रीगीतातात्पर्यचन्द्रिकायाम् (2)स्फ्येति। स्फयश्च कपालानि चाग्निहोत्रहवणी चेत्याद्युक्तानि यज्ञोपकरणानि। **सुतेजा** इति। वैश्वानरविद्योक्तानि वैश्वानरस्य ब्रह्मणो मूर्धचक्षुःप्राण,मध्यकाय,वस्ति-पादानां नामानि इमानि क्रमेण। षड्विधैतदवयवत्वेन भावितानि स्वर्लोकादित्यवाताम्बरसलिलमहीरूपबाह्य-द्रव्याणि। **साधारणः**=अनेकार्थकः। **महीभृत्** पर्वतो राजा च। लोहिताश्वः=अग्निः रक्तवर्णोऽश्वश्च **केवलयोगेति**। रूढैकपदबोध्यस्यार्थस्य बहुपदबोध्यार्थयोगेन क्लेशेनात्रधार्यतया कथनम्। शब्दोऽनित्यः कृतकत्वादिति वक्तव्ये वृथा विस्तरः **पय** इत्यादिः। क्षीराब्धिसंभवा लक्ष्मीः; तस्याः कान्तो विष्णुः; **तत्पद**माकाशः; तस्य विशेषगुणः शब्दः। शब्द इति वक्तव्ये एवं विस्तरः। **उत्तरावधिः** ध्वंसः; तस्य भावित्वात् तदुपलक्षितत्वं वस्तुसत्तायाः; तद्वत्त्वं स..यम्। अनित्य इति यावत्। अवधिशब्द-स्यानेकत्र प्रयोगात् ध्वंसरूपावधिप्रइणावगमाय **वस्तुसत्तेति** विशेष्यवचनम्। जन्यत्वादिति **हेतुमाह**

दिव्यापारनिष्पाद्यावयवसंयोगासमवायिकारणकद्रव्यवदित्यादिः । स्वोक्तिदोषतिरस्करणश्रद्धया प्रतिवादिव्याकुलीकरणाभिसंधेर्वा संभवोऽस्य । 'अप्रसिद्धैर्विवक्षितासाधारणैरगमितयोगैर्निरस्तग्राम्यादिदोषैः पदैर्व्याहरेत्' इति सारम् । प्रतिवाद्यभ्युपगमे तु प्रहेलिकाप्राया अपि व्यवहाराः प्रवर्तन्ते । अत एव हि द्वैर्महाविद्यादिरीतीनां प्रयोगोऽभ्युपगम्यत इति ॥

॥ अर्थान्तरम् (10) ॥

प्रकृतानुपयुक्तवचनमर्थान्तरम् ; यथा—क्षित्यादिकं सकर्तृकम्, प्रमेयत्वादित्युक्त्वा, स्वयमेव दूषणप्रतिभासे, प्रमाविषयः प्रमेयम्, तत्र च त्वप्रत्ययान्तं प्रमेयत्वपदमित्यादि । एवं कुशकाशावलम्बनेन प्रकृताननिवतराजवार्तावतरणादिकमपि । ईदृशानां स्वाज्ञानसंवरणार्थं परव्यामोहनार्थं च प्रयोगसंभवः । अन्वितमप्युपयुक्तमेव वदेदित्युपदेशः ॥

॥ न्यूनम् (11) ॥

वक्तव्यत्वेन स्वसिद्धान्तनिर्णीतस्यैकदेशकथनं न्यूनम् ; यथा—पञ्चावयववादिनो नैयायिकस्य त्र्यवयवप्रयोगः, कुमारिलादेर्द्व्यवयवप्रयोग इत्याद्यवयवन्यूनम् । वादिनः स्वपक्षसाधनमनाचरय्य परपक्षं दूषयितुमिच्छतो वादन्यूनम् । लम्भसंवरणादिकमकृत्वा स्वपक्षं साधयतः कथारम्भन्यूनम् ॥ न चात्र विपर्यासः ; तस्य क्रमत्यागात्मकत्वात्, अत्र तु क्रमिण एव त्यागात् । यदि न्यूनत्वोद्भावने, 'पश्चात् करिष्यामि' इति ब्रूयात्, तदा भवतु विपर्यास इति ॥ एवं यावत्संभवं विकल्पयतोऽपि संभावितकोट्यन्तरानुक्तौ विकल्पन्यूनत्वमाहुः । स्तम्भात्, मन्दबुद्ध्या वा अस्य संभवः । आरम

पूर्वेति । अन्तः अवधिः ; पूर्वावधिः कारणम् ; तदुपलक्षिता च वस्तुसत्ता कार्यता । घटवदिति दृष्टान्तमाह दण्डेति । तद्व्यापारो भ्रमणम् तज्जनितोऽवयवसंयोगः कपालद्वयसंयोगः; सोऽसमवायिकारणं यस्य तत् द्रव्यं घटः ; तद्वदिति । तिरस्करणं बुद्धेरन्यत्र व्यापारणात् । विवक्षितस्यार्थस्यासाधारणानि=तन्मात्रवचनानि । अगमितयोगैरिति । प्रकृतवस्तुपरम्परासंबन्धिवस्तुग्रहणेन तत्परम्परासंबन्धघटकसर्वपदार्थवाचिशब्दमालारूप.योगार्थपर्यवसायिभिन्नैरित्यर्थः । प्रहेलिका=ज्ञाप्यार्थस्य झटिति ग्रहणनिरोधनानुगुणवाक्यप्रयोगः । यथा—'तरुण्यालिंगितः कण्ठे नितम्बस्थलमाश्रितः । गुरूणां संनिधानेऽपि कः कूजति मुहुर्मुहुः' इति । नात्र कश्चित् पुरुष उच्यते ; किं तु ईषन्न्यूनत्वात् जलपूर्तिरहितो घटः । क्रियापदगोपनादिकमप्यत्रान्तर्भवति । विस्तरः काव्यादर्शे (3) । महाविद्येति । एतन्नामकमनुमानं प्रागेव व्युदपादि ।

(10)दूषणप्रतिभास इति । प्रमेयत्वहेतोर्व्यभिचरितत्वस्फूर्तौ परिहारमार्गमजानता प्रतिवादिनस्तद्दूषणे । मनःप्रवृत्तिकुण्ठनायान्यत्राऽऽकर्षणार्थमन्यप्रपञ्चनम् । कुशकाशावलम्बनम्—अवश्यवक्तव्यत्वौपयिकदृढसंबन्धाभावः ।

(11)द्व्यवयवेति । कुमारिलमतेऽवयवत्रयं न्यायः । अकृत्वेति । स्वपक्षसाधनं परपक्षदूषणञ्चेत्युभयं हि कार्यमिति भावः । विपर्यास इति । अप्राप्तकाले एतदन्तर्भाव इति शंका । क्रमिणः=क्रमवतो धर्मिणोऽपि । ब्रूयादिति । इदमभिसंधायैवाप्राप्तकालेऽस्य विपर्यासत्वोक्तिः । आहुरिति । संभावितः सर्वोऽपि कल्पो

सिद्धान्तसिद्धं पूर्णं च वदेदित्यादेशः ॥

॥ अधिकम्(12) ॥

अन्वितमुपयुक्तमपुनरुक्तं कृतकरणतया स्वसिद्धान्तनिर्णीतमधिकम् । तत्र हेत्वधिकं यथा—धूमवत्त्वात् आलोकवत्त्वादित्यादि । दृष्टान्ताधिकं यथा—मठवत्, महानसवदित्यादि । व्याप्त्यधिकं यथा—अन्वयव्यतिरेकयोर्द्वयोरप्यभिधानम् । तर्काधिकं यथा—एकविषये अनेकानिष्टप्रसञ्जनम् । दूषणाधिकं यथा-असिद्धोऽयं हेतुः, विरुद्धश्चेत्यादि । सामान्यत आदिशब्दोपादानेऽप्यधिकत्वमेव; यथा—धूमवत्त्वादेः, महानसादिवदित्यादि । एवमधिकतया स्वसिद्धान्तनिर्णीतानामवयवानामपि कथनं संगृहीतम्; यथा—सौगतादेःपञ्चावयवप्रयोगादि । पुनरुक्तिर्वा तत्र, तथैव तत्सिद्धान्तादिति, हेतुदृष्टान्तव्याप्तितर्काद्यधिकं तु वादे वस्तुतो न दूषणम्; येन केनापि तत्त्वनिर्णयाभिसंधेः । जल्पादौ यावत्प्रतिभासमनेकाभिधाननियमे तु भूषणमपि । यावत्संभवमनेकाभिधानं चासर्वज्ञेन अशक्यमिति प्रायशो न तथा नियमः संभवति । अनयोश्च न्यूनाधिकयोरुद्भावितयोरभ्युपगमे अपसिद्धान्तो वाच्यः ॥ अवयवाधिकादौ नित्यमपसिद्धान्तत्वं केचिदाहुः; तदसत्, अवयवन्यूनादावपि प्रसङ्गात् ॥ न्यूने विरुद्धं नोक्तमिति चेन्न; अनैकान्तिकादिप्रयोगेऽप्यपसिद्धान्तप्रसङ्गात् ॥ तत्र विरुद्धं नाभ्युपगम्यत इति चेन्न; अधिकावयवप्रयोगेपि समत्वात् ॥ वचनलिङ्गा हि वक्तुरभिप्राया इत्यभ्युपगमः कल्प्यत इति चेन्न, अपरामृश्यापि प्रयोगसंभवात् । (वचनलिङ्गादिभिर्वक्तु-

---

दूष्य इति प्रतिज्ञाविरहात् उपस्थितमात्रस्य खण्डनं नैतद्दोषापादकमिति स्वाशयः । आदेशशब्दो रहस्यशब्दस्थाने । एवमुपर्यन्यानि पदान्येतदर्थानि ।

12. क्रमेण अनन्वित, अर्थान्तर,पुनरुक्तानन्तर्भावज्ञापनाय अन्वितादिपदत्रयम् । कृतकरणतया; कृतं क्रियते अनेनेति कृतकरणत्वम् । अवयवत्रयवादिमीमांसकदृष्ट्या कृतकरतया निर्णीतत्वस्योपनयादौ सत्त्वेऽपि न नैयायिकस्य दोष इत्याशयेन स्वसिद्धान्तेत्युक्तम् । सूत्रे हेत्वाद्यवयवप्रयोगेऽपि लक्षणेऽवयवशब्दाप्रयोगः, अनुवादाधिक. दूषणाधिकयोरपि संग्रहायेति न्यायपरिशिष्टोक्तम् । अनेकानिष्टेति । धूमवान् स्यात्, आलोकवान् स्यादित्येवम् । यावत्संभवमिति । यावत्प्रतिभासमित्येव प्रतिज्ञा संभाव्यते; न तु यावत्संभवमित्यर्थः । ननु न्यूनाधिकस्थले अपसिद्धान्तदोष एव कस्मान्न भवतीत्यत्राह अनयोश्चेति । न्यायपरिशिष्टे, 'न्यूनाधिकवचनं हीदम्, न तु न्यूनाधिकाभ्युपगमः' इति अपसिद्धान्तता निराकृता । अतो न स दोषः । यदि न्यूनमपि अधिकमपि वक्तुं न युक्तमित्यभ्युपगच्छति, तदा स्यादपसिद्धान्ततेति प्रथमं न्यूनादिकमेवोद्भाव्यमित्यर्थः । अधिकादावपि तुल्यमिदमिति स्वयमाशयानः केषाञ्चिदाशयमनूद्य निरस्यति अवयवेति । आदिना पुनरुक्तग्रहणम् । नोक्तमिति । वक्तव्यावचनमेव हि न्यूने; न तु विरुद्धवचनमित्यर्थः । तर्हि अनैकान्तिकाद्याभासहेतुप्रयोगेऽपसिद्धान्तत्वमस्त्वित्याह अनैकान्तिकेति । तत्रेति । अपसिद्धान्तो हि सिद्धान्तविरुद्धाभ्युपगमः, न तु वचनमात्रम् । अतो न दोष इति चेत्—अधिकेऽपि वचनमात्रम्, न त्वभ्युपगम इति सुवचम् । वचनमेवाभ्युपगमोऽस्यास्तीत्यत्र लिंगमिति चेत्—अनैकान्तिकादावपि तुल्यम् । विरुद्धमित्यपरामृश्यापि अनाभासत्वबुद्ध्या प्रयोगस्तत्र स्यादिति

रभिप्रायः कल्प्यत इति चेन्न; (अपरागादिनापि प्रयोगसंभवात्।) पूर्वोक्तात् प्रसङ्गाच्च।

सर्वतोमुखी साध्यसिद्धिः स्थेयसी स्यादिति संप्लववाद.संस्काराादेरधिकस्योत्थानम्। साध्यसिद्ध्यपेक्षितमात्रसाधनमुपाददीतेति समयः ॥

॥ पुनरुक्तम्(13) ॥

स्वोक्तिवशात् परेण शब्दतोऽर्थतो वा प्रतिपन्नस्यैव निष्प्रयोजनं वचनं पुनरुक्तम्। तद् द्विधा—अर्थपुनरुक्तम्, आक्षेपपुनरुक्तं चेति। प्रथमम्—अनित्यः शब्दः, विनाशी ध्वनिरित्यादि। द्वितीयं तु—विवादपदं क्षित्यादिकं सकर्तृकमित्यादि। विवादपदमिति हि धर्मिनिर्देशे विवादस्यानेकप्रकारत्वेपि साध्यविशेषनिर्देशात् धर्मिविशेषोऽप्यर्थसिद्ध एव। एवं देवदत्तो गृहेऽस्ति, बहिर्नास्तीत्याद्यपि। नियमकथायामेवास्य दोषत्वम्; अन्यदा विशदप्रतीत्यर्थमुपयोगात् ॥

अन्ये तु—शब्दपुनरुक्तमिति भेदमाहुः; यथा—शब्दो नित्यः, शब्दो नित्य इति; तदसत्, एकार्थत्वे अर्थपुनरुक्तत्वात्; भिन्नार्थत्वे त्वदोषत्वात्। भिन्नार्थोऽपि स शब्दो न वाच्य इति नियमकथायामस्यावकाश इति चेत्, हन्त! तर्हि वर्णस्वरादिपुनरुक्तमपि भेदेन पठनीयम्; तत्रापि धृष्टानां नियमसंभवादिति ॥ [1]सकृदुक्तौ परेण सभ्यैर्वा यत् अप्रतिपन्नम्, तत्र तदपेक्षया पुनरभिधानं युक्तम्। तत्रापि त्रिरभिधानमित्येव नियमः; आत्मीयानवधानमतिमान्द्यादिशङ्कया तावन्मात्रस्य सभ्यैरपेक्षणोपपत्तेः। ततःपरं तु वचनदोषादेरेव सभ्यैरवधारणान्न भूयस्तदपेक्षा। यत्र तु प्रतिवादिसंमत्या वक्रानुमानादिप्रयोगः, तत्र वचनद्राघीयस्त्ववक्रिमादिभिरेव दुरवधरार्थतया यदि भूयोपि सभ्याकाङ्क्षा, तदा यावत्तदाकाङ्क्षाशमनमस्त्वभिधानम्। अत एव परिषदनुरोधलक्षणं त्रिरभिधानमिति केचित्। अचातुर्य.विशदीकरणाभिसंध्यादिभिरस्योत्थानम्। निष्प्रयोजनं न पुनर्वदेदिति रहस्यम् ॥

॥ अननुभाषणम्(14) ॥

---

चेत्—इदमधिकेऽपि। अन्यथा पूर्वोक्तः प्रसंगश्च=न्यूनेऽपि नित्यमपसिद्धान्तत्वप्रसंग इत्यर्थः।

अधिकसंभवे हेतवः संप्लवादयः। द्विर्बद्धं सुबद्धं भवतीत्यादिन्यायात्। प्रमाणानि न व्यवतिष्ठन्ते, किंतु संप्लवन्ते; एकप्रमेयेऽप्यनेकप्रमाणसमावेशो भवतीत्याशयेनाधिकप्रयोगः, तथा वादेऽधिकस्य दोषत्वाभावात् तत्संस्कारात्। आदिना प्रथमहेतौ दोषभ्रम-जल्पव्यवस्थाविस्मरणादिग्रहणम्। समयपदमिह रहस्यपर्यायः।

(13)क्वचित् पुनरुक्तं न दोष इत्याह [1]सकृदुक्ताविति। वक्रानुमानेति। आर्जवेन प्रयोक्तुमर्हे कुटिलप्रयोगः—प्रकृतिपरिणामेष्वन्तिमत्वेन प्रसिद्धवस्तुधरः तदेकान्तरितपरिणामवान् मशकव्यूहविनाश.हेतु—प्रसूत्वरवस्तुविशेषवत्त्वादित्येवम्. द्राघीयस्त्वमतिदीर्घत्वम्। अचातुर्येति। वक्तुश्च तुर्यमेकः पुनरुक्तसंभवहेतुः।

14. त्रिभङ्ग्यन्तरोक्तस्य प्राश्निकविदितस्यार्थस्यानुद्भावितस्याज्ञानेन यथोचितानुभाषणाभावः अननुभाषणम्। तच्च दूष्यैकदेशानुभाषण.तदधिकानुभाषण.विपरीतानुभाषण.केवलोत्तर.मौनभेदात् पञ्चविधम्। अधिकानुभाषणं तु अधिकाख्यनिग्रहस्थानमित्येके ॥

दूषणमात्रस्यैव परतिरस्कारार्थत्वाभिमानात् अप्रतिभानाद्वा अस्योत्थानम्। 'दूष्यमंशमेव तेनैव शब्देन शब्दान्तरेण वा अनुवदेत् यथानियमं नियमकथायाम्' इति संग्रहः ॥

॥ अज्ञानम् (15) ॥

वादिना त्रिभङ्ग्यन्तराभिहिते सभ्येष्वन्यतमेनापि विदितार्थे वचने, 'मया न ज्ञायते' इति वाद्यन्तरस्य वचनं [यद्वचनं तत्] तस्याज्ञानम्। वैशद्याय तस्यैवार्थस्य वचनव्यक्त्यन्तरेण प्रतिपादनं युक्तमिति सूचयितुं त्रिभङ्ग्यन्तरोक्तिः। वादे तु स्वाज्ञानाविष्करणं न दोषः। अत एव यावत्प्रतिवादिबोधं तत्राभिधेयम् ॥ परस्याविज्ञातार्थारोपहेतुत्वादार्जवादेव वा स्वाज्ञानाविष्करणम्। जल्पवितण्डयोः स्वाज्ञानं नाविष्कुर्यादिति संक्षेपः ॥

॥ अप्रतिभा (16) ॥

कथां प्रविष्टस्य साधनदूषणाद्यप्रतिपत्तिरप्रतिभा। उत्तरस्याप्रतिपत्तिरप्रतिभेति प्राचामुपदेशः साधनाप्रतिपत्तेरप्युपलक्षणार्थः; विशेषाभावात्; अस्य प्रथमपर्वण्यपि संभवात्। अनुभाषितेऽप्युत्तराभासस्याप्यवचनोपपत्तेः अननुभाषणादेर्भेदः ॥ गगनसूचन.भूविलेखन.केशविरचन.साध्वस.स्वेदादीनामप्येतन्निग्रहस्थानभेदत्वं केचिदाहुः; तदयुक्तम्, सदभिधानदशायां तेषां विद्यमानानामप्यनिग्रहत्वात्, असदभिधानदशायामवचनदशायां च तयोरेव दूषणत्वात्।

---

14. प्रतिवादिना दूष्यांशानुवादपूर्वकमेव वादिदूषणं कार्यम्, तदननुवादः अननुभाषणरूपनिग्रहस्थानम्।

(15) अप्रतिभाऽननुभाषणयोरप्यज्ञानसत्त्वात् तद्व्यावृत्तये विशिंषन्नाह **मये**त्यादि। वचनमज्ञानमिति अनन्वितमिति चेत्—वचनमिति करणे ल्युट्। अज्ञानवचनहेतुभूतमज्ञानमित्यर्थः। **यद्वचन तत्** अज्ञानमिति पाठे तु, यस्याज्ञानस्य **वचनं** स्वशब्देनाऽऽविष्कारः, तत् अज्ञानमित्यर्थः। वचनाविष्कृतमज्ञानमज्ञानपदविवक्षितमिति भावः। एतत्संभवहेतुमाह **परस्ये**ति। अविज्ञातार्थरूपनिग्रहस्थानं परस्मिन् आरोपयितव्यमिति धियैतदुक्तिरित्यर्थः। नन्वज्ञाने तेनैवाऽऽविष्कृते वादाद् बहिष्कार्य एवाऽऽसीदिति किमिति निग्रहस्थानोद्भावनमिति चेत्—कथातो निवृत्तेस्तदनिष्टत्वे एतदुद्भावनम्। एतदाशयेनोक्तं **संक्षेप** इति।

16. उत्तरस्याप्रतिपत्तिरप्रतिभेति सूत्रम्। वक्तव्यस्योत्तरस्यास्फूर्तिरित्यर्थः। तत् तथैव गृहीत्वेव, "अनुवादानन्तरमेवैतदुद्भावनम्" इत्युक्तं **न्यायपरिशिष्टे**। यथाश्रुतं निरसितुमाह उत्तरस्येत्यादि। उत्तरपदत्यागे साधनग्रहणे च कारणम् **अस्य प्रथमे**ति वाक्योक्तम्। अननुभाषणेऽनन्तर्भावेऽप्ययं हेतुः। तत्र

तत्तद्वर्जननियमकथायां तु तेषां भवत्येव निग्रहस्थानता। तदा चान्यत्रैव तेषामन्तर्भावः। अवचनसमकालभाविनस्त्वेते केवलाप्रतिभामूलत्वयथालिङ्गत्वादनृशंसबुद्धीनामप्रतिभानिग्रहस्थानाभियोगं निरुन्धते; तैरेव च सभ्यानां तत्पराजयवक्तेः। तदहंकारखण्डनं च तैरेव [प्रथम]दर्शितैः। वचनावसरे तूष्णीको न भवेदिति मर्यादा। अप्रतिभास्हेतुरनेकविधो द्रष्टव्यः॥

॥ विक्षेपः(17) ॥

कथामवगाह्यैव तद्विच्छेदमिच्छतोऽनावश्यकापसरणव्याजवचनं विक्षेपः; यथा—महदिदानीं मे कृत्यमतिवर्तत इत्यादि। आवश्यकानां तु लौकिकवैदिकानामनलीकानां विच्छेदाभिसंधिलिङ्गत्वाभावादनिग्रहः, यथा युयुत्सूनामेव मध्ये विश्रमाद्यर्थं निवृत्तिः। व्याजमभिधायापि कथाकरणे तु नैतन्निग्रहस्थानम्, विच्छेदार्थत्वाभावात्। तदानीं तदभिधानस्य प्रकृतानुपयोगादर्थान्तरत्वं तु तत्र स्यादेव। अपजयभयादेरपसरणसंभवः॥ वाक्छलगर्हितं वादादपसरणं न कुर्यादिति समयः॥

॥ मतानुज्ञा (18) ॥

स्वदोषमभ्युपेत्य परदोषप्रसञ्जनं मतानुज्ञा। यथा—त्वद्वचनं दुष्टमित्युक्ते तवापि

---

हेत्वन्तरमप्याह **अनुभाषित** इति। अनुभाष्योत्तराभासवचने आभासतोद्भावनमेव भवेत्। अतोऽनुत्तरकाले अप्रतिभेत्यर्थः। न्यायपरिशिष्टे गगनसूचनादावप्यप्रतिभोद्भावनमुक्तम्। तत् कुत्र्यते। तस्यैतन्निग्रहस्थानभेदत्वकथनं त्वयुक्तमित्याह **गगने**ति। गगनसूचनादेः प्रतिभाकालेऽपि संभवात् अवचनेन सर्वत्र स्थितेनैवाप्रतिभासूचनसंभवे तदन्यस्यानियतस्यापि क्रोडीकरणमयुक्तमिति भावः। **तयोरेवे**ति। आभासवचन आभासत्वमेवोद्भाव्यम्। अवचने तत एवाप्रतिभोद्भावनं सुकरमिति भावः। **निरुन्धत** इति। स्वकीयाप्रतिभायाः स्वयमेवाऽऽविष्करणमेतैर्जातमिति तदुद्भावनाद्विरतिः संभवितेत्यर्थः। **दर्शितै**रित्यस्य विशेष्यसाकांक्षत्वात् तैरेवेत्यस्य गगनसूचनादिभिरेवेत्यर्थः दर्शकः क इति चेत्—क्वचित् प्रथमदर्शितैरिति प्रथमपदश्रवणात् अध्यक्षेण, सभ्येषु प्रधानैर्वा दर्शितैरित्यर्थः स्यात्। प्रायो निवृत्ताहंकार एव गगनसूचनादि कुर्यात्। कदाचित् वक्तव्यार्थचिन्तनपरोऽपि। सर्वथा प्रकृतविषयावचनमेवाप्रतिभोद्भावनहेतुः। **अनेकविध** इति। अपरिचितत्वम्, विस्मृतिः, बुद्धेरशक्तिः, सभाकम्प इत्यादिविधः॥ (17) वादे प्रकृते उक्तस्य निग्रहस्योपमानतया दृष्टान्तमाह **यथा युयुत्सूना**मिति। **अर्थान्तरत्व**मिति। प्रथममेव कालव्यवस्थाकरणेन कथारम्भे तु अवसरे तज्ज्ञापनं न दोषायेति नार्थान्तरत्वप्रसक्तिः। नन्ववचनस्य गगनसूचनादेश्चेवास्याप्यप्रतिभासूचकत्वादप्रतिभायामेवान्तर्भावः स्यादिति चेत्—तन्न, व्याजोत्तरेण प्रविभातार्थवचनावसराभावस्यैव कथनात् अप्रतिभेति निग्रहो न युक्त इत्याशयात्।

18. "स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसंगो मतानुज्ञा" इति सूत्रम्। अत्र न्यायपरिशिष्टे,—पक्षदोषशब्दः सिद्धान्तप्रतिकूलपरः। स्वसिद्धान्तप्रतिकूलं परापादितमंगीकृत्य=अनुद्धृत्य परस्य प्रतिकूलापादनं

वचनं दुष्टमित्यादि ; त्वं चोर इत्युक्ते त्वमपि चोर इतिवत् । अत्र परदोषे सति असत्यपि स्वदोषाभ्युपगमोऽनुचित एवेति तेनांशेन निग्रहावहत्वम् ; न तु परदोषाभिधानांशेन । तर्हि तस्यांशस्य किमर्थं लक्षणे निवेश इति चेन्न ; स्वदोषमभ्युपेत्य तूष्णीकस्याप्रतिभाग्रस्ततया निग्रहान्तरकृत्याभावात् ; अतूष्णीकस्य तु प्रतिभावतोऽप्यनेनैव निवर्तनीयत्वादिति ॥ प्रतिबन्ध्यभिप्रायेण ममीकरणाय मतानुज्ञोदयः ॥ परापादितदोषानभ्युपगमेन तदुद्धारेणैव वा परपक्षे दोषं ब्रूयादिति शासनम् ॥

॥ पर्यनुयोज्योपेक्षणम् (19) ॥

अवश्योद्भाव्यस्य निग्रहस्थानस्यावसरेऽप्यनुद्भावनं पर्यनुयोज्योपेक्षणम् । एतत् सदस्योद्भाव्यमित्येके । एतत् परीक्षार्थमसदेव मयोक्तम्, तदप्यनेन मन्दमतिना न विदितमिति स्वेनापि सावष्टम्भेनोद्भाव्यमित्यपरे । सदस्यप्रतियोगिकपराजयाभावात्, वादिनश्च पाक्षिकापजयहेतौ बुद्धिपूर्वप्रवृत्त्ययोगात्, स्वदोषोद्भावनेन परनिरसनस्य च, 'पतितं मामयं

---

मतानुज्ञेत्यर्थ इत्युक्तम् । पुरुषत्वात् त्वं चोर इति परेणोक्ते, सिद्धान्तिना 'नाहं चोरः' इति बाधज्ञापनेन स्वपक्षस्थापने कार्ये, तर्हि त्वमपि चोरः स्याः इत्यापादनं मतानुज्ञा । प्रतिकूलपदेन साधनं दूषणं सर्वं गृह्यते । अत्र सिद्धान्तप्रतिकूलस्याभ्युपगमे अपसिद्धान्तनिग्रहस्थानं स्यात् । अतः पक्षेति पदं परित्यज्य, स्वदोषमभ्युपगम्य परदोषप्रसंजनमित्युक्तम् । दोषशब्देन स्ववचने स्थितः सर्वोऽर्थदोषो ग्राह्यः । पूर्वग्रन्थे, पुरुषत्वात् त्वं चोर इति वाक्यं मतानुज्ञोदाहरणतयोक्तम् । अत्र तु पुरुषत्वादिति हेतुमप्रयुज्य तत् लौकिकवाक्यरूपदृष्टान्ततया समुदाहारि ; न तु लक्ष्यतयेति लक्ष्यमन्यदुक्तम् परस्य परस्मिन् आपादितं तदिष्टमित्युक्तं तत्र ; अत्र तन्निरासाय सति असत्यपीत्युक्तम् । अनिष्टत्वेन निश्चितमेव प्रसञ्जयेदिति प्रसञ्जने नैर्भयं तत्र ; अत्र मतानुज्ञाशब्दस्वारस्येन स्वदोषाभ्युपगमांशे नैर्भयम् । प्रसञ्जितमिष्टमनिष्टं वा भवत्वित्याशयः । तर्हि लक्षणे प्रसञ्जनघटनं किमर्थमित्यत्राह तर्हीत्यादि । तथाच पुरुषत्वाच्चोर इत्यत्र त्वमपि चोरः स्या इति वाक्येऽनैकान्तिकत्वपर्यवसायिन्यपि त्वमपीत्यपिना स्वचोरत्वसमुच्चयात्, अनैकान्तिकत्वस्य स्वचोरत्ववारकत्वाभावात्, "अदत्तपरवस्तुसंबन्धवत्त्वस्यैव चोरत्वसाधकतया तदभावान्नाहं चोरः" इति वक्तव्यस्यानुक्त्या च चोरत्वसमतिचिन्तनया च मतानुज्ञोदाहरणं भवति चेत्, न तत् वार्यते । ननु चोरत्ववचनमिदं जातिरूपं स्यादिति चेत्—असदुत्तरं हि स्वव्याघातकं जातिः । तत्र पुरुषत्वात् त्वं चोर इति प्रथमवाक्यं नोत्तररूपम्, त्वमपि चोरः स्या इति द्वितीयवाक्यमनैकान्तिकत्वपर्यवसानान्नासदुत्तरम् । अस्य स्वचोरत्वाभावसाधकत्वाभावात् स्वचोरत्वाभ्यानुज्ञैव दोष इति ॥

19. **पर्यनुयोज्योपेक्षणं** प्रष्टव्यविषयस्याप्रश्नः, ततः फलितमाह **अवश्येति** । **एके** उदयनाचार्याः । **सावष्टम्भेन** लब्धच्छिद्रानुपेक्षणाभिमंधियुक्तेन । **दोषास्पृष्टयन्तरेति** पाठो दृश्यते । पतितसंसर्गरूपे

न जानाति' इति दोषास्पृष्टयन्तरो(दोषा(स्पृष्ट्य)न्तरो?) द्भावनवदपहास्यत्वादनिग्रहस्थानमेवेदमित्यन्ये। इदमत्र तत्त्वम्—जल्पवितण्डयोर्नैतत् सर्वदा निग्रहस्थानम्; केवलं सभ्यानुविधेयानामुभयमतिमान्द्यनिरूपणायोपयुक्तम्। षट्पक्षीसहनसमनन्तरोद्भावनं तु निग्रहस्थानान्तरस्यापि तुल्यम्। वादे तु सभ्यैः स्वेन च यथास्थानमुद्भावनीयम्, उभयथापि तत्त्वनिर्णयोपयोगात्; तादर्थ्येन च स्वदोषोद्भावनस्याप्यदोषत्वात्। अस्य चानेकनिग्रहस्थानसंनिपातेऽन्यतमद्उद्भावयतोऽन्यतमानुद्भावनेपि न दोषत्वम्। सर्वोद्भावननियमे त्वन्यतमोवनेऽपि नियमभंगेऽन्तर्भावः। तदा तु जल्पवितण्डयोः स्वेनाप्युद्भावनीयम्, परस्य निग्रहस्थानद्वयापत्तेः। तदनुद्भावनेन नियमभङ्गाभियोगस्याशक्यत्वाच्च। एवमन्यत्रापि परस्य निग्रहस्थानद्वयापत्तिदशायां स्वस्यावष्टम्भविजयावहत्वान्निग्रहस्थानान्तरोपसर्जनतयेदमुद्भाव्यमस्तु॥ पिहितस्वच्छिद्रोऽपि परच्छिद्रं नोपेक्षेतेति नीतिरिति। क्षुद्रस्खलितत्वभ्रमादेरुपेक्षासंभवः॥

---

दोषस्पर्शे केनचित् कथिते, साक्षात् पतितत्वमेव मेऽस्ति, अहो मे पातित्यरूपदोषस्पृष्टिमेव न जानातीत्यज्ञानाविष्करणाभिनिवेशेन प्रवृत्तो यथा स्वस्यान्यां दोषस्पृष्टिमेवाविष्कृतवान् भवेत्, तद्वदित्यर्थः। अत्र **दोषा** इति दीर्घपाठोऽशुद्धः। अथवा **दोषान्तरे**त्येतत्स्थाने **स्पृष्ट्यन्तरे**ति पाठान्तरम् तदुभयप्रज्ञापनचिह्नं कुण्डलं कृत्वा, (स्पृष्ट्य) इत्येवं लेखने कार्ये कुण्डलनोपेक्षणात् समापतित एवं पाठः। **नैतदि**ति। जल्पवितण्डयोर्जिगीषुकथात्वात् स्वपराजयस्य स्वयमाविष्करणायोगादिति भावः। **सर्वदे**त्यनेन कदाचित् संभवः सूच्यते। उपरि तथानिगमनात्। **षट्पक्षी**ति। एतत्तृतीयाह्निकान्ते षट्कक्ष्यां आभासकथां वक्ष्यति। तत्र सदर्थसाधनप्रवृत्तौ वादिप्रतिवादिभ्यामुपरि असदुत्तरपरम्परायां क्रियमाणायां सभ्याः षट् उक्तिप्रत्युक्तीः प्रतीक्ष्य समनन्तरमुभयगतानि निग्रहस्थानानि सर्वाणि प्रकाशयेयुः। तत्रेदमप्यन्तर्भवत् सभ्यप्रकाश्यमित्यर्थः। **वादे त्वि**ति। यद्यपि पराजयरूपनिग्रहस्य नात्र प्रसक्तिः। विजिगीषुकथात्वाभावात्; तथापि तत्त्वनिर्णयोपयोगित्वे सति सत्यां स्फूर्तौ अनुपेक्षणीयमेवेति भावः। एवं वादे उद्भाव्यत्वं कथान्तरयोरनुद्भाव्यत्वञ्चोक्तम्। अनेकनिग्रहस्थानसंनिपातेनापि कथान्तरयोस्तत्संभवासंभवविचारं वर्तयति **अस्यचे**ति। **न दोषत्वमि**ति। स्वदोषानाविष्करणेनैव जयलाभादिति भावः। सर्वदोषोद्भावनं कार्यमिति नियमबन्धपूर्वककथायामुद्भाव्यं किलेत्यत्राह **सर्वे**ति। तदा पर्यनुयोज्योपेक्षणमिति निग्रहस्थानं विहाय, कृतनियमभंगरूपं उक्तविरोधाख्यनिग्रहस्थानमुद्भाव्येत। तदेवालमिति भावः। वास्तवं पक्षमाह **तदा त्वि**ति। सर्वोद्भावननियमे सतीत्यर्थः। **स्वेनापी**ति। न सभ्यैरेवेति भावः। **अशक्यत्वाच्चे**ति। कथं नियमभंग इति प्रश्ने पर्यनुयोज्यस्योपेक्षणादित्येव ह्युपपादनीयम्। अतोऽन्यथा नियमभंगापादनं कर्तुमशक्यमित्यर्थः। **अन्यत्रेत्यस्य** सर्वोद्भावननियमाभावेऽपि जल्पवितण्डयोरित्यर्थः। न तु वादेऽपीत्यर्थ; **अवष्टम्भविजयवहत्वा**दित्येतदनन्वयात्। सर्वथा तत्रोद्भावनस्येष्टत्वाच्च। **पिहिते**त्यादि। इदं जल्पवितण्डाभि-

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ अनुमानाध्याये द्वितीयं प्रयोगाद्याह्निकम् ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

॥ अथानुमानाध्याये तृतीयमाह्निकम् ॥ निरनुयोज्यानुयोगः ॥ २० ॥

तन्निग्रहस्थानाभावे तन्निग्रहस्थानाभियोगः निरनुयोज्यानुयोगः । एतदेव सर्वमसदुत्तरम् । उत्तररूपतया, सर्वस्य च निरनुयोज्यानुयोगभेदस्य द्वितीयादिकक्ष्यास्ववसरः । तदनन्तरकक्ष्यायामेवोद्भावनम् । तद् द्विविधम्—दूषणव्याप्तमप्यसिद्धम्, सिद्धमपि दूषणव्याप्तिरहितं चेति। पूर्वमपि द्विविधम्—सिद्धदूष्यं कल्पितदूष्यं चेति। सिद्धदूष्यमपि द्विधा—अनवसरग्रहणं निग्रहस्थानाभासवचनं चेति ॥

---

प्रायेण । इष्टहानिशंकायां परदोषं नोपेक्षेतेति सामान्याकारो भाव्यः । **प्रमादे**रिति पञ्चमी ॥

( तृतीयमाह्निकम् )

न्यायदर्शने कथायां यान्यसदुत्तराणि, तानि छल.जाति.निग्रहस्थानरूपेण त्रेधा विभक्तानि । असदुत्तरत्वादेव सर्वेषां कथकपराजयरूपनिग्रहावकाशप्रदत्वात् निग्रहस्थितिहेतुत्वात् निग्रहस्थानत्वम् । एवं हेत्वाभासस्यापि निग्रहस्थानत्वम् । एवमविशेषेऽपि वादेऽप्युपयोगात् हेत्वाभासस्य, सिद्धत्व-दूषणासमर्थत्वरूपाकारद्वयेन जातेः, दूष्यस्य कल्पितत्वपर्यालोचनया छलस्य च गोबलीबर्दन्यायेन पृथक्करणेनान्येषां परं निग्रहस्थानत्वेन गणनमकारि । तत्र हेत्वाभासस्य निग्रहस्थानेऽन्तर्भावः निग्रहस्थानत्वरूपसामान्यधर्मवत्त्वमात्रेण ; न पुनः प्रतिज्ञाहान्यादिकलृप्तावान्तरविभागान्तर्भावेण। अत एव, "हेत्वाभासाश्च यथोक्ताः" इति विभागान्तरत्वं विभागसूत्रोक्तं सूत्र एव व्यक्तमदर्शि । छलजात्योस्तु सामान्यधर्मवत् तदवान्तरभेदरूपनिरनुयोज्यानुयोगत्वरूपाकारोऽप्यस्ति ; अप्रष्टव्योद्भावनरूपत्वाविशेषात् । छलजात्योर्बहिर्भावे निरनुयोज्यानुयोगस्य अनवसरग्रहणं निग्रहस्थानाभासवचनञ्चेति द्वैविध्यमासीत् । अन्तर्भावे चातुर्विध्यम् । इदं **न्यायपरिशिष्टे**ऽप्युक्तम्, स चतुर्विधः छलं जातिः आभासः अनवसरग्रहणञ्चेति । अस्य चातुर्विध्यवत् द्वैविध्यमपि तत्रैव ग्रन्थारम्भे गदितम्, "द्विधा भवति दूषणसमर्थमप्यसिद्धम्, सिद्धमपि दूषणासमर्थम् । प्रथममपि कल्पितदूष्यं यत्, तत् छलमुच्यते, अकल्पितदूष्य तु केवलनिरनुयोज्यानुयोगः" इति । **केवले**त्यस्य छलत्वाद्यनाक्रान्तेत्यर्थः । अत्र दूषणसमर्थपदं प्रयुक्तं तथैव सर्वार्थसिद्धौ समादृतम् । अत्र तु ग्रन्थे सामर्थ्यं नाम दूषणोपयोगिव्याप्तिपक्षधर्मतावत्त्वमेव । तत्रासिद्धमिति कथनात् तत्र पक्षधर्मत्वरूपवत्त्वाभाव उक्त इति सामर्थ्यं व्याप्तिमत्त्वरूपमेव शिष्यत इति विचार्य समर्थपदस्थाने दूषणव्याप्तपदम् असमर्थपदस्थाने दूषणव्याप्तिरहितपदञ्च प्रयुक्तम् । **सिद्धदूष्य**मिति बहुव्रीहिः ; दूष्यं वस्तुतोऽस्ति यस्य तत् । कल्पितं तु दूष्यमिष्यते छले । अर्थान्तरं कल्पयित्वा तस्यैव दूषणात् । अन्यत्र न कल्पनेति सिद्धत्वम् । तत्र

तत्रानवसरग्रहणं (1) यथा—चतुर्थकक्ष्यायां स्थितः प्रतिवादी वदति प्रथमकक्ष्यायां त्वयाऽपशब्दितम् इति। यद्वा सन्तमसन्तं वा कंचिदनैकान्त्यादिदोषमुद्भाव्य स्वयमेवाह—'यदि हेतुं विशेषयिष्यसि, तदा हेत्वन्तरेण निगृहीतोऽसि ; यदि त्यक्ष्यसि, तदोक्तहान्यैव' इत्यादि। वादे तु हेत्वाभासादिकं तत्त्वनिर्णयपरिपन्थित्वादतिक्रान्तकालमप्युद्भाव्यम् ; अन्यथा तन्मूलचिन्तासन्ततेर्निष्फलपरिश्रमत्वप्रसङ्गादिति।

न चानवसरग्रहणस्य विपर्ययेऽन्तर्भावः शङ्क्यः, अवश्यम्भाविनियतक्रमविषयत्वाद्विपर्यासस्य ; अनवसरे क्रियमाणस्य ग्रहणस्य त्ववश्यम्भावित्वाभावात् ; तस्य तत्पूर्ववाक्यस्य चाकाङ्क्षादिक्रमनियामकाभावाच्च। यदा चासतो दोषस्यानवसरे प्रतिपादनम्, तदा तु व्यक्त एवास्यावश्यम्भावित्वाभावः।

नन्वसिद्धत्वे सति दूषणव्याप्तस्यासदुत्तरस्य विभागोऽयमुदाह्रियते ; अत्र सतो दोषस्यानवसरोद्भावने तस्य स्वपर्वणि सिद्धत्वात् कथमसिद्धत्वम् ? उच्यते—अतिक्रान्तस्यैष्यतो वा पर्वणस्तदानीमदूष्यत्वात्, स्वपर्वणि सिद्धस्यापि दूष्यतया संनिहिते तदानीन्तने पर्वण्यसिद्धत्वात् युक्त एवायं विभागः। असतस्तु दोषस्यानवसरोद्भावितस्य स्वपर्वण्यप्यसिद्धिर्विशेष इति॥

(2)निग्रहस्थानाभासवचनमपि बहुविधम्—तन्निग्रहस्थानाभावे तदारोपणम्, निग्रहस्थानान्तरे तदन्यनिग्रहस्थानवचनम्, स्वसमये निग्रहस्थानत्वेनापरिसंख्यातस्य निग्रहस्थानतया प्रसञ्जनम्, क्षन्तव्यतयाऽभ्युपगतस्योद्भावनमित्यादि। तत्राऽऽद्यं यथा—संभावितानेककल्पसाधारणोक्तौ विकल्पितायामविवक्षितविकल्पत्यागेनोक्तहानिः ; प्रकरणाद्यापन्नस्य, स्वयमेव

---

केवलनिरनुयोज्यानुयोगस्यैव सूत्रे विवक्षितत्वात् तत् प्रथमीकृत्य द्वेधा विभज्य विवृणोति **तत्रानवसरे**त्यादिना। **चतुर्थकक्षाया**मिति। प्रथमतृतीयादिकक्ष्याः वादिनः ; द्वितीयचतुर्थादिकक्ष्याः प्रतिवादिनः। द्वितीयकक्ष्यायामुद्भाव्यस्य चतुर्थकक्ष्यायामुद्भावनसमये ग्रहणरूपमित्यर्थः। **हेत्वन्तरेण**=हेत्वन्तराख्यनिग्रहस्थानेन। **इतिशब्दः** उदाहरणोपपादनावसानप्रदर्शकः॥ अस्यान्यत्रान्तर्भावमाशंक्य परिहरति **नचे**ति। **विपर्यये**=विपर्यासवचनरूपाप्राप्तकाले। अवश्यम्भाविनामवयवानां नियतो यः क्रमः, तद्विपर्ययः विपर्यासः। **आकांक्षे**ति। **आकांक्षादिरूप**स्य क्रमनियामकस्याभावादित्यर्थः॥ सन्तमसन्तं वा दोषमिति यदुक्तम्, तत्र सन्तमित्ययुक्तमिति शंकते **नन्वि**ति॥ वाद्युक्तं हेत्वादिकं दूष्यम्। अतः सिद्धदूष्यकत्वमस्ति। तथापि दोषस्त्वनैकान्त्यादिरस्ति चेत्—तर्हि असिद्धत्वे सतीति लक्षणनिविष्टं दलं न भवतीति शंका। **दूष्यतये**त्यस्य **असिद्धत्वा**दित्यत्रान्वयः। सतोऽप्युद्भावनाव्यवहितप्राक्कक्ष्यायामभावेन तस्यासिद्धत्वेन व्यवहार इति भावः। **स्वसमये**=स्वकीयसिद्धान्ते। **अविवक्षिते**ति पाठः। वादिवाक्यं प्रतिवादी बहुधा विकल्पयति। तत्र

पूर्वोक्तस्य वा विशेषणस्य प्रकाशनेनोक्तविशेषणम्; पार्श्वस्थाद्युक्तस्याऽऽरोपितस्य वा अनभ्युपगमेनोक्तापलापः। एवमुत्तरेष्वपि भाव्यम्। द्वितीयं यथा—हान्यादौ अपलापादि, छले जातिः, जातौ छलम्, तदवान्तरविशेषेष्वपि विशेषान्तरवचनमित्यादि। तृतीयं यथा—कण्डूयन—केशविरचन—ताम्बूलचर्वणादिभिः निगृहीतोऽसीति। चतुर्थं यथा—तत्त्वनिर्णयाविरोधिनाम् उक्तविशेषण. मतानुज्ञादीनां वादे प्रकाशनम्। जल्पवितण्डयोश्च नियमविशेषवशादनुद्भावनीयानामुद्भावनं तत्र नियमभङ्गसध्रीचीनमिति विशेष इति ॥

(3)यत्तत् कल्पितदूष्यमसदुत्तरं तत् छलम्। वक्तुरविवक्षितमर्थमारोप्य तद्दूषणं छलमित्यर्थः।

ननु साधनवाक्येऽपि छलं संभवति; तथा हि—भूतचतुष्टयैकद्रव्यत्ववादी जैनः प्राह—'पाथः पार्थिवम्, पयस्त्वात्, यत् पयः तत् पार्थिवम्, यथा क्षीरम्' इति। 'पशुः स्वर्गसाधनं न भवति, स्वरत्वात्; यत् स्वर्गसाधनं तत् स्वरहीनम्, यथा हविरन्तरम्' इति। अत्र पयःशब्दस्वरशब्दयोः स्वयमेवार्थान्तरकल्पनात् युक्तं छलत्वम्। यथा जातित्वं महाविद्यादौ साधनेऽपि कैश्चिदुच्यते, तथा स्ववाक्यस्थशब्दस्यापि स्वयमेव वृत्त्यन्तरकल्पनेन प्रयोगाच्छलत्वं सिद्धम्। न चात्र पयःस्वरादिशब्दार्थविकल्पेनासिद्धि-साधनविकलत्वादिदूषणसंभवे किं छलत्वोक्त्येति वाच्यम्; नवकम्बलादिच्छलेऽपि नूतनत्व-संख्याविशेषविकल्पेन प्रत्यक्षविरोध-प्रस्तुतासङ्गतत्वादि-दूषणप्रसङ्गस्य तुल्यत्वादिति ॥

सत्यम्; निरनुयोज्यानुयोगभेदभूतोत्तररूपच्छलविवक्षयाऽत्र लक्षणमिति न विरोधः। अथवा संख्याविशेषरूपार्थस्य वक्तुर्विवक्षितत्वं प्रकाश्य तत्कथनद्वारैव प्रकृतासंगतिर्वाच्या। तत्र च अविवक्षितार्थविषयत्वं वचनस्वभावादेव व्यक्तम्। पयस्त्वादिहेतावुभयत्र विवक्षान्तरसद्भावे प्रमाणाभावाद् विकल्पमुखेनैव दूषणं वाचीयः। पयःशब्दवाच्यत्वमात्रविवक्षायां च न छलत्वम्। यदि तु वृत्तिद्वयविवक्षां स्वयमेवोद्भाव्य हेत्वसिद्धिं साधनविकलतां च परिजिहीर्षति, तदापि साधकतयोपन्यस्तहेतोः दृष्टान्तेऽनुदाहरणात् उदाहृतस्य प्रकृतानुपयोगादर्थान्तरनिग्रहस्थानता। अथार्थद्वयविवक्षामात्रेण च्छलत्ववाचोयुक्तिमिच्छसि, इष्यतां स्वैरमिति ॥

---

वादी स्वाविवक्षितं जहाति। तावता उक्तहानिर्न भवति। तत्रोक्तहान्युक्तिराभासवचनम्। अविवक्षित-विकल्पेत्यस्य विरुद्धो योऽविवक्षितः कल्प इत्यर्थः। एवमुक्तविशेषणत्वाद्यसंभवेऽपि तद्वचनमाभासवचन-मित्यर्थः। **केशविरचनं** केशसमूहनादिरूपम्। **सध्रीचीन**मिति सहितमित्यर्थः। नियमभंगेनानुद्भाव्योद्भावने नियमभंगरूप उक्तविरोधोऽपि दोषः, निग्रहस्थानाभासवचनमपि दोष इत्यर्थ।

द्वेधाविभक्तयोरसदुत्तरयोः पूर्वस्य द्वेधा विभज्य निरूपणमासीत्, द्वितीयमाह **यदि**ति। **तत्**=पूर्वोक्तम्। **नन्वि**ति। अविवक्षितोऽर्थो हि दूष्यते, स च कल्पित एव। पक्षान्वयि पयस्त्वं जलत्वम्, दृष्टान्ता-न्वयि क्षीरत्वम्। तथा स्वरत्वं पक्षान्वयि विद्यमानत्वम्। व्यतिरेकव्याप्तौ स्वरपदेन प्राणवत्त्वं विवक्षितम्। अतश्छलमिति शंका। **संख्याविशेषरूपे**ति। नवत्वादिसंख्यारूपेत्यर्थः। **विकल्पमुखेनैवे**ति। किं पयस्त्वम्? जलत्वं क्षीरत्वं वा। आद्ये दृष्टान्ते साधनवैकल्यम्, अन्त्ये पक्षे हेत्वसिद्धिरित्येवमिति।

तत् त्रिधा—वाक्छलम् उपचारच्छलं सामान्यच्छलमिति । तत्र नानार्थेषु शब्देष्वभिधेयान्तरारोपणेन तद्दूषणं वाक्छलम् ; यथा—नूतनकम्बलवत्त्वविवक्षया नवकम्बलोऽयमित्युक्ते संख्याविशेषमर्थमारोप्य कुतोऽस्य नव कम्बलाः ? एक एव हि कम्बलो दृश्यते इति । एवं दूषयतो वादिविवक्षितार्थाप्रतिपत्तेस्तदुत्तराप्रतिपत्तेश्चाप्रतिपत्तिः ; अदूषणे दूषणबुद्धेश्चान्यथाप्रतिपत्तिरिति ॥

अभिधोपचारविपर्ययारोपणेन तद्दूषणमुपचारच्छलम् ; यथा—गङ्गायां घोषः इत्यादौ कथं प्रवाहे घोषवासः ? इति । अग्निर्माणवक इत्यत्र कथमनुष्णो ज्वलनः ? इति । उभयथा लोकवेदयोः प्रयोगात् तत्प्रतिपत्त्यभावादेव चात्र निग्रहः । उपचारप्रयोगे मुख्यार्थासंभवात् बाधः उपचारच्छलमित्यन्ये ; तन्न, मुख्यप्रयोगेऽपि कस्यचिदौपचारिकार्थासंभवेन प्रत्यवस्थानोपपत्तेः । अस्य चौपचारिकार्थे मुख्यार्थताभ्रमेण वा, गत्यन्तराभावात् एवमपि किमयं व्याकुलीभवेदिति वा प्रयोगसंभवः ; यथा—पर्वतोऽग्निमानित्युक्ते, अग्निर्माणवक इति प्रसिद्धम् ; न चात्रेदानीं माणवकः इति कालात्ययापदिष्टो हेतुरिति । न चैतद्दूषणान्तरान्तर्गतम् । तस्मात् यथोक्तमेव लक्षणम् ॥

तात्पर्यान्तरारोपणेन तद्दूषणं सामान्यच्छलम् ; यथा—'अयमहो ब्राह्मणोऽनूचानः' इत्यत्र, सुक्षेत्रे शालिसंपत्तिवत् संभावितत्वविवक्षया 'किमाश्चर्यम्' इत्युक्ते, ब्राह्मणत्वसामान्ये व्याप्यत्वमारोप्य अनूचानत्वे च व्यापकत्वमविवक्षितमारोप्य ब्राह्मणत्वहेतोर्व्रात्यैरनैकान्तिकत्वकथनमिति । अत्र सामान्यच्छलमित्युपलक्षणसंज्ञा । अन्वर्थसंज्ञा तु तात्पर्यच्छलमित्येवेति ॥

---

**अभिधोपचारविपर्ययेति** । **अभिधा** शक्तिः **उपचारः** लक्षणा । तद्विपर्ययस्याऽऽरोपणेन—व्यत्यासकल्पनेन । उपचाराभिमतौ सत्यामभिधामारोप्य दूषणं अभिधाभिमतावुपचारमारोप्य दूषणञ्चेत्यर्थः । द्वितीयस्योदाहरणं दर्शयिष्यति **यथा पर्वत** इत्यादिना । **अनुष्ण** इति, माणवक इति शेषः । **प्रतिपत्त्यभावादिति** । अप्रतिपत्तिः छलप्रयोक्तुर्निग्रहस्थानम् ; विप्रतिपत्तिश्च

**तात्पर्येति** । सूत्रे वाक्छलं सामान्यच्छलमुपचारच्छलमिति क्रमः । शक्तिर्लक्षणा तात्पर्यवृत्तिरिति क्रमस्योचितत्वादत्रोपचारच्छलस्य मध्ये घटनम् । **उपलक्षणसंज्ञेति** । सूत्रम् , "संभवतोऽर्थस्यातिसामान्ययोगादसंभूतार्थकल्पना सामान्यच्छलम्" इति **अनूचानः**=सांगवेदाध्यायी । अनूचानत्वस्य **अतिसामान्येन**=अतिप्रसक्तेन सामान्येन—अनूचानत्वानधिकरणेऽपि वर्तमानेन ब्राह्मणत्वेन सह वाक्ये प्रयोगात् असंभूतस्य हेतुसाध्यभावस्य कल्पनेति सूत्रार्थः । उदाहृतस्थले ब्राह्मणत्वस्य सामान्यरूपत्वात् तथा नाम कृतम् । एकतात्पर्येण प्रयोगे तात्पर्यान्तरकल्पनेति लक्षणस्यैव सर्वलक्ष्यानुगतत्वात् तात्पर्यच्छलमिति नामैव युक्तमिति भावः ।

(अथ जातिः)

(4)निरनुयोज्यानुयोगे एतदाह्निकार्थे चतुर्विधे जात्यतिरिक्तं सर्वं न्यरूपि । अथ विस्तरेण जातिर्निरूप्यते, उपरि, "यदिदं सूत्रम्" इत्यारभ्य सूत्रोक्तान् जातिभेदान् परिष्करिष्यति । तत्र **प्रज्ञापरित्राणे** चतुर्दशजातिमात्रगणनेऽपि, यथासूत्रं वरदविष्णुमिश्रैश्चतुर्विंशतिनिरूपणे **नोदयनाचार्यदर्शितपरिष्कारोऽनुसृतः** । अत्र त्वेषु जातिभेदेषु येषां परिष्करणस्यावश्यकता, तावन्मात्रपरिशोधनं कृत्वाऽन्यांशस्तान्यग्रन्थत एव सुज्ञानतयो-

(4) यत् सिद्धमपि दूषणव्याप्तिरहितमसदुत्तरं तत् जातिः। व्याप्तिपक्षधर्मताविशिष्टेनैव हि हेतुना स्थापनं दूषणं वा। तयोरन्यतराभावे प्रतिषेधहेतुरपि दुष्टस्थैव। तत्र यथा छलस्य केवलनिरनुयोज्यानुयोगस्य वा पक्षीकृते वादिवाक्ये स्वयमसिद्धस्य पक्षधर्मत्वविरहान्न दूषकत्वसिद्धिः, एवं पक्षधर्मस्यापि जात्युत्तरान्तर्गतस्य हेतोर्दूषणव्याप्तिविरहान्न दूषकत्वम्; तथा हि—'नेदं स्वसाध्यसाधकम्, युक्ताङ्गानपेक्षप्रतिप्रमाणादिप्रतिरुद्धत्वात्' इत्यादिषु जातिप्रयोगेषु प्रतिषेधहेतोः पक्षधर्मत्वे सत्यप्यसाधकत्वेन व्याप्तिर्नास्ति, अन्ततः स्वस्मिन्नेव व्यभिचारात्।

तदेतदीदृशमसामर्थ्यविशेषं विवक्षित्वा प्रतिषेधासामर्थ्यं जातिलक्षणमुक्तं न्यायवार्त्तिके। तादृशासामर्थ्यमूलभूतं स्वव्याघातकत्वमेव न्यायाचार्येण लक्षणीकृतम्। तच्च युक्ततमम् (युक्तम्)

---

पेक्षा क्रियते। तत्राऽऽदौ सर्वोपयोगिनमुपोद्घातं वर्तयता जातिस्वरूपमुच्यते **यत् सिद्धम**पीति। साधर्म्यादिना प्रत्यवस्थानं जातिः। तत्र साधर्म्यादिकमस्त्येव, न त्वसिद्धम्। तथा येन हेतुना जातिवादी विपर्ययं साधयति, स हेतुरस्त्येव। परंतु तस्य दूषणसामर्थ्यं नास्ति। तच्चासामर्थ्यं प्रकृते व्याप्त्यभावरूपम्। ननु अनुमानमर्यादामतिक्रम्य व्याप्त्यभावेऽपि साधकत्वं मन्यमाने जातिवादिनि कथमेवं तन्निरास इत्यत्रोपपादयति **तथाही**ति। शब्दोऽनित्यः कार्यत्वात् घटवदिति प्रयोगे जातिवादी प्रत्यवतिष्ठते—यदि कार्यत्वसाधर्म्येण नित्यत्वस्थापनम्, तर्हि शब्दो नित्यः अमूर्तत्वादाकाशवदिति अमूर्तत्वेन नित्यत्वमेवास्तु इति। तत्र प्रत्युच्यते—अमूर्तत्वमनैकान्तिकं न नित्यत्वसाधकम्। साधर्म्यमात्रेण साधकत्वमिष्यते चेत्—अस्मदुक्तहेतुना वा प्रमेयत्वरूपसामान्यहेतुना वा त्वदुक्तहेतोरनित्यत्वसाधर्म्यसत्त्वात् तेनैव वा कथमनित्यत्वं न भवेदिति। अत्र न्यायपरिशिष्टे द्वितीयसूत्रे, 'नेदं स्वसाध्यसाधकं नियमानपेक्षप्रतिधर्मप्रतिहतत्वादिति (नेदं दूष्यदुष्टत्वबुद्धिजनकं त्वदुक्तहेतोरेव) इति तन्निरासो दर्शितः। तदनुसारेणात्रोच्यते **तथाही**ति। यदि व्याप्तिरूपयुक्तांगानपेक्षंसदेव किञ्चित् प्रमाणत्वाभिमतं प्रतिरोधकमिति मत्वा कार्यत्वादिति हेतुरसाधकः अमूर्तत्वरूपहेतुना युक्तांगानपेक्षं प्रतिरुद्धत्वादित्युच्यते, तर्हि त्वदुक्तहेतोरपि किञ्चित्प्रमाणप्रतिरुद्धत्वमस्ति, असाधकत्वं तु त्वया नेष्टमिति व्यभिचार इत्यर्थः। एतद्वैशद्यमुपरि **असिद्धिसमादि**निरूपणान्ते, 'वादिसाधनमसाधक'मित्यादिना, "सोऽयं वृषलविवाहमन्त्रन्यायः" इत्यन्तेन वाक्येन भविष्यति। अत्र युक्ताङ्गानपेक्षेति किमर्थं विशेषितमिति चेत्—सत्प्रतिपक्षहेतुप्रतिरुद्धत्वेऽसाधकत्वस्य सर्वसंमतत्वात् तद्वैलक्षण्यप्रदर्शनाय॥ अनपेक्षत्वे कथमनुमानप्रमाणत्वं तस्य हेतोरिति चेत्—प्रमाणपदस्य प्रमाणत्वाभिमतेत्यर्थः। शब्दोऽनित्य इत्येतस्य।नेऽत्र ग्रन्थे प्रथमजातिनिरूपणे स्थावरशरीरं भोक्त्रधिष्ठितं निद्राप्रबोधादियोगादित्युदाहरणं वक्ष्यते।

नन्विदं व्याप्तिराहित्यघटितं जातिलक्षणं पूर्वैर्नोक्तमित्यत्र वार्तिकग्रन्थाभिमतमिदमेवेत्याह **तदेत**दिति। अनयोः पदयोः क्लीबत्वात् जातिलक्षणमित्यत्रान्वयः। इदमेव लक्षणं प्रतिषेधासामर्थ्यरूपेणोक्तमित्यर्थः। **न्यायाचार्येण** उदयनाचार्येण न्यायपरिशिष्टकारेण। उक्तं हि परसंमतलक्षणानुवादानन्तरम्, "वयं तु ब्रूमः" इत्यारभ्य, "यतो जात्युत्तरं परसाधनमिव स्वात्मानमपि व्याहन्तीति, अत एव परसाम्यात्

साधारणस्य दूषणविशेषस्य स्फुटप्रतीतेः। किञ्च सूत्रकारस्य, "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" इति जातिसामान्यलक्षणं ब्रुवाणस्य न तदेव लक्षणं विवक्षितम्, सर्वजातिसंग्राहकत्वाभावात्। सदुत्तरप्रकरणसमाऽनभिमतहेत्वाभासयोरतिव्याप्तेश्च। अतो जातिविभागसूत्रे निग्रहस्थानवत् परस्परनिरपेक्षास्वपि जातिषु प्रयोगलाघवाय द्वन्द्वात् परतया सर्वजात्यन्वितं समशब्दं प्रयुञ्जानस्य तदेव लक्षणतया विवक्षितमिति भाष्यकारादिभिः वैरास्थितम्। तत्र यथा त्वदुक्तं साधर्म्यं वैधर्म्यं सहचरितं वा तत्राऽसदुत्तरपर्याप्त्यादिनाऽऽकारेण जातिवादिनाऽभिधीयमाने, स्वपरसाधनयोर्विशेषहेत्वभावे समशब्दार्थतया विवक्षिते, वस्तुतो विशेषहेतुसद्भावात् न समशब्दार्थसिद्धिः; आरोपितं तु साम्यमस्तीति गत्यन्तराभावे स्वीकार्यम्; सत्यसति वोत्तरे

---

सममित्युच्यते। तथाच स्वव्याघातकत्वं नाम सर्वजातिसाधारणं दुष्टत्वमूलं सूचितं भवति" इति।

सौत्रसमशब्दार्थस्यात्र न्यायाचार्यदर्शितत्वात् तत्र वक्तव्यं सर्वं विस्तरेण व्युत्पादयति **किञ्चे**त्यादिना। प्रथमाध्यायान्ते सूत्रोक्तं जातिसामान्यलक्षणं **साधर्म्ये**त्यादि। तत्र प्रत्यवस्थानत्वस्य छलादिसाधारण्यात् तत्रातिव्याप्तिवारणाय साधर्म्यवैधर्म्याभ्यामित्युक्तावपि **उत्कर्षसमा**दौ साधर्म्यादिमूलकत्वाभावादव्याप्तिः; सत्प्रतिपक्षादिस्थले सद्धेतौ च तत्सत्त्वादतिव्याप्तिश्च। वृत्तिकारो विश्वनाथपञ्चाननस्तु—सर्वं वाक्यं सावधारणमिति न्यायात् साधर्म्यवैधर्म्याभ्यामेवेति विवक्षा; एवकारेण व्याप्तिं विनेत्यर्थलाभः। तथाच व्याप्तिराहित्येन प्रत्यवस्थानमित्याह. तेनात्राऽऽरम्भे उक्तस्य व्याप्तिरहितमसदुत्तरं जातिरिति लक्षणस्य लाभात् सर्वत्र समन्वयो भवेत्। तथाच दूषणासामर्थ्यमिति वार्तिकोक्तस्यैतदभिप्रायकत्वमपि स्यात्। तथापि **सम**शब्दसूचितम् औदयनं लक्षणं समुचितमिति दर्शयति **अतो जातिविभागे**ति। **विभाग**पदेन जातिसामान्यसूत्रस्य प्रथमाध्यायस्थस्य कथञ्चित् सामान्यलक्षणप्रदर्शकत्वप्रयासो मा भूदिति सूच्यते। **निग्रहे**त्यादि। अयमर्थः—निग्रहस्थानविभागसूत्रे सर्वेषामसमासेन निर्देशः कृतः। तेनैकैकस्येतरनिरपेक्षत्वं व्यञ्जितम्। तद्वदत्रापीतरनिरपेक्षत्वसत्त्वादसमासो युक्तः। अथापि समासकरणम्, तदा **सम**शब्दस्य प्रतिजाति अन्वयस्याऽऽवश्यकतया बहुकृत्वः प्रयोगः कार्यः स्यादिति। अतो लाघवायान्ते **सम**शब्दनिर्देशेन समास आदृत इति तत्त्वम्। अथापि प्रतिषेधादिपदं विना सर्वान्वयिसमशब्दप्रयोगः सर्वजात्यनुगतमितरव्यावृत्तं सामान्यलक्षणमपि सूचयितुमित्यास्थीयत इति पूर्वसर्वव्याख्यातृसंप्रतिपन्नमिति। भाष्याभिमते **सम**शब्दार्थसिद्धे लक्षणे क्लेशं दर्शयति **यथा त्वदुक्त**मित्यादिना। "प्रत्यवस्थानमविशिष्यमाणम्" इति भाष्यात् वादिसाधनाविशेषः—साधनप्रत्यवस्थानयोरेकतरग्रहणे विशेषहेत्वभावः साम्यमित्युक्तौ सद्भूतवादिसाधनस्यासदुत्तरहेतोश्च वस्तुतः साम्यायोगात् वादिसाधनसाम्याभिमानः प्रत्यवस्थानगत इति वक्तव्यम्। तावत्तात्पर्यं भाष्ये कल्पयितुं तत्र सूचकं किमपि नोपलभ्यते। तर्हि भाष्यप्रतीतं किमित्यत्राह **सती**ति। असदुत्तरे सत्त्वं कथमिति चेत्—सत्त्वेनाभिमत्य कश्चित् प्रयुञ्जीत। कश्चिदसत्त्वं ज्ञात्वैव; सदप्यसत्त्वेन मत्वा साधर्म्यादिमात्रबुद्ध्या कश्चिदिति कतिपयवाक्यानन्तरमत्र वक्ष्यमाणं ग्राह्यम्। तथाच सर्वासामपि जातीनां प्रत्यवस्थानस्वरूपाकारसाम्यं तु ततो

प्रत्यवस्थानस्वरूप(पेऽपि)स्येपन्नाने तु भाष्योक्तोपयोगात् ॥ वार्तिकोक्तं प्रतिषेधासामर्थ्यं न साक्षात् समशब्दार्थः। समानुत्कृष्टमपकृष्टमुत्तरं जातिरिति वा, "जातिवादी समः साधारणः नोत्कृष्टः, अपकृष्ट इत्यर्थः। स च साधर्म्याद्युक्त (मुत्तर?) द्वारेणैवोन्नीयन इति उत्तरमेव सममपकृष्टमित्यर्थः" इति वा क्रमेणा(णानुत्कर्षेणा)पकर्षविशेषे लक्षणीयेऽपि क्लिष्टा गतिः। कुशकाशावलम्बेन तु लक्षणसिद्धिः स्यात् ॥ 'स्वस्य प्रतिवादिनश्च समीकरणाभिप्रायपूर्वकत्वात् समीकरणार्थत्वाद्वा जात्युत्तरं सममित्युच्यते' इति टीकापक्षोऽपि तथैव। न च तावता लक्षणसिद्धिः; छलादेरपि समीकरणाभिप्रायपूर्वकत्वादिसंभवात्। तथा सदुत्तरमपि कश्चिन्मन्दः समीकरणाभिप्रायेण प्रयुञ्जीत। समीकरणार्थत्वं च वास्तवं न व्यापकम्; तत्साधने जातिवादिनो वास्तवसमीकरणस्य दुर्लभत्वात्। अपिच कश्चिज्जातौ सदुत्तरत्वभ्रान्त्या स्वोत्कर्षाभिप्रायेणापि जातिं गृह्णीयात्; अतोऽस्मिन्नर्थेऽपि न लक्षणसिद्धिः। बुद्धिपूर्वा(र्वता) तु जातिः(ति)कार्येत्युच्यते ॥ प्रतिषेधरूपस्य जात्युत्तरस्य स्वपरसाम्ये समशब्दार्थे—येनाऽऽकारेण परस्य प्रतिषेधकं तेनाकारेण

---

लभ्यमिति भावः। साम्यबुद्ध्या प्रत्यवस्थानमिति, विवक्षितमस्त्विति चेत्—टीकाकारपक्षे वक्ष्यमाण ग्राह्यम्। वार्तिकदृष्टं विमृशति वार्तिकेति। तदभिमतलक्षणं प्रतिषेधासामर्थ्यम्। तत् समशब्दवाच्यं न भवति। समशब्दात् तल्लाभे श्रमं दर्शयति सममिति। सममित्यस्योत्कर्षापकर्षरहितमित्यर्थः। असदुत्तरे वायुक्तादपकर्षसत्त्वात् साम्यं न भवति। अत उत्कर्षाभावमात्रं ग्राह्यम्। तावता तस्यासत्त्वानवगमात् साम्यमित्यस्यापकर्षे पर्यवसानं विवक्षित्वा, स चापकर्षः प्रतिषेधासामर्थ्यमेवेति वक्तव्यम्। एवं स्वरसगतिं स्वयं प्रदर्श्य न्यायपरिशिष्टेऽनूदितं प्रकारान्तरमाह जातिवादीति। जातिवादीत्यादि, इत्यर्थ इत्यन्तं तत्रत्यं वाक्यम्। जातिपदस्य स्त्रीलिंगत्वात् समेति स्त्रीलिंगे प्रयोक्तव्ये सम इति पुल्लिंगनिर्देशात् पुरुषे साम्यं प्रथममुक्त्वा तन्मुखेन जातौ तत् आनेयमिति एषामाशयः। प्रत्यवस्थातुः वादिसाम्यञ्च प्रकृतोत्तरगतसाम्यमादायैव वक्तव्यमिति अन्ततः प्रागुक्तमुत्तरगतापकर्षरूपसाम्यमेव तदाऽप्यभिमतम्। क्रमेणेति। साम्यमुत्कर्षापकर्षराहित्यम्। तत्रोत्कर्षराहित्यमात्रग्रहणम्। ततोऽपकर्षे पर्यवसानम्। अपकर्षस्य छलादावपि सत्त्वात् दूषणव्याप्तिराहित्यरूपापकर्षविशेषे पर्यवसानं कार्यमिति क्लेश इत्यर्थः। कुशेति। लक्षणत्वसिद्ध्यर्थप्रयासः कुशकाशावलम्बनतुल्य इत्यर्थः। तात्पर्यटीकोक्तेऽपि क्लेश इत्याह स्वस्येति टीकायाम् समीकरणार्थमित्येतद्व्याख्याने, 'आभिमानिकं साम्यम्' इत्युक्त्या समीकरणबुद्धिजन्यत्वं समीकरणफलकत्वं वा प्रयोगस्य ज्ञायते। नायं समशब्दमुख्यार्थ इत्यर्थः। टीकोक्तार्थद्वयस्य लक्षणत्वे क्रमेणातिव्याप्तिमप्याह न चेति। समीकरण बुद्धिरपि कचिन्नास्तीत्याह अपिचेति। यथा त्वदुक्तं तथा मदुक्तमपीति वदन् जातिवादी कथमुत्कर्षमिच्छेदेत्यत्राह बुद्धिपूर्वेति। अनुत्कर्षबुद्धावपि जातेः कार्यत्वेऽपि उत्कर्षबुद्धौ तद्वारणमनभिमतमिति भावः।

न्यायाचार्यपक्षे साम्यं सम्यग्रूढमित्याह प्रतिषेधेति। सम इति पुंलिगनिर्देशः प्रतिषेधं त्यवस्थानशब्दार्थं मनसिकृत्य। प्रतिषेधस्य समत्वं नाम स्वपरपक्षप्रतिषेधकत्वम्। 'नेदं स्वपक्षसाधकं

स्यापि प्रतिषेधकं भवतीति स्वव्याघातकत्वमेव विवक्षितं स्यात्। न चातिव्याप्तिरव्याप्तिर्वा। ततश्च लक्षणसिद्धिः, साधारण.दुष्टत्वमूलसूचनं चेति लाभोऽप्यधिकः ॥

ननु छलेपि व्याघातकत्वं संभवति। तथा हि—आढ्योऽयं नवकम्बलत्वादिति नूतनकम्बलत्वविवक्षयोक्ते, कुतोऽस्य नव कम्बलाः इति प्रत्युक्ते, वादिना च पुनश्छलत्वोद्भावने, यदि छलवाद्याह. 'विवक्षितमविवक्षितं वेति किमनेन विभागेन? त्वदुक्तशब्दप्रतिपन्नं तावत् दूषितम्' इति–तदा तस्य सिद्धः स्वव्याघातः-अविवक्षितार्थदूषणेनापि परस्य भङ्गे छलवादिवाक्येऽप्यविवक्षितयत्किंचिदर्थदूषणेन भङ्गप्रसङ्गस्य दुर्वारत्वात्। अतः स्वव्याघातकत्वमतिव्याप्तमिति ॥

मैवम्; कुतोऽस्य नव कम्बलाः इत्यस्यां कक्ष्यायामविवक्षितदूषणाभिमानस्यानभिव्यक्तेः। तथाविधानुयोगस्य तदर्थविवक्षाभ्रमादपि संभवात्। यस्यां तु कक्ष्यायामविवक्षितदूषणेनापि परपराजयाभिमानो व्यज्येत, तदा जातित्वमेव; अविवक्षितस्य विवक्षितत्वारोपाभावेन छललक्षणासिद्धेः। एवं केवलनिरनुयोज्यानुयोगे जातिसंकरः परिहर्तव्यः। अतः सुष्ठूक्तं स्वव्याघातकत्वं जातिलक्षणम् ॥

ये तु साधनेष्वपि केषुचिज्जातित्वमिच्छन्ति, तेषां स्वसमानन्यायप्रसञ्जनेन स्वव्याघातकं जातिरिति सामान्यतो लक्षणम्। तत्र स्वव्याघातकसाधनं जातिसाधनम्; यथा महाविद्यादि। स्वव्याघातकमुत्तरं तु जात्युत्तरम्; यथा—तत्त्वोपप्लवखण्डनादिगतिरिति विभागः। स्वव्याघाती(ति)प्रसङ्गो जातिरिति वरदविष्णुमिश्रोक्तिरुत्तररूपजात्यभिप्रायेण। अक्षपादीयेषु च जातिविशेषलक्षणसूत्रेषु पुलिङ्गान्तसमशब्दनिर्देशः स्वपक्षस्थापनपरपक्षप्रतिक्षेपरूपेण द्विभागे प्रत्यवस्थाने प्रतिषेधभागेनात्र जातित्वं विवक्षितमित्युत्तररूपजातिविशेषाभिप्राय इति प्राहुः ॥

---

युक्तांगानपेक्षप्रमाणप्रतिरुद्धत्वात्' इति जातिवादिनोक्ते वादी प्रत्याह, 'त्वदुक्तमपि न त्वदिष्टसाधकं=न दूष्यदूषकं त्वदुक्तहेतोरेव' इति। अतः स्वव्याघातकत्वं सिद्धम्। **दुष्टत्वमूले**ति। जात्यंगेषु सप्तसु मूलाख्यमेकमंगम्। तदर्थः दुष्टत्वमूलमिति। तच्च तत्तत्त जातावसाधारणं किमप्यन्यदिव सर्वसाधारणं स्वव्याघातकत्वमपि। तदिदानीं स्पष्टं सूचितं भवतीत्यर्थः। सतांगानि वक्ष्यन्ते। प्रथमं दूषणव्याप्तिरहितमसदुत्तरं जातिरिति लक्षणमुक्तम्। इदानीं स्वव्याघातकमुत्तरमिति फलितम्। दूषणमात्रस्य जातित्वे इदं समञ्जसम्। साधनस्यापि जातित्वे इदमव्याप्तमिति उत्तरत्वाघटनेन सामान्यलक्षणमुक्त्वा महाविद्यानुमानादिकं साधनेऽन्तर्भाव्य तद् द्वेधा विभजते **ये**त्विति। **तत्त्वे**ति। खण्डनाख्यग्रन्थस्य गतिः तत्त्वोपप्लवरूपा जात्युत्तरपूर्णोदाहरणमित्यर्थः। **पूर्वं महाविद्यादि** इत्यत्र महाविद्यापदमपि तन्नामकग्रन्थपरं स्यात्। **वरदविष्णुमिश्रै**रुत्तररूपजात्युपन्यासस्य मूलं दर्शयति **अक्षपादीयेषु** चेति। प्रथमसूत्रे "साधर्म्यवैधर्म्यसमौ" इति प्रयोगात् जातेर्विशेष्यत्वे स्त्रीलिंगावश्यम्भावात् प्रतिक्षेपो विशेष्यत्वेनाभिमत इति तस्यैव जातित्वं तत्र ज्ञायत इति भावः। **आहु**रिति। तथा च **न्यायपरिशिष्टम्**, "प्रतिषेधभागसूचनाय पुल्लिंगनिर्देशः। द्विभागं हि प्रत्यवस्थानं परपक्षप्रतिक्षेपः स्वपक्षसाधनञ्च" इति।

तत्तज्जातिदुष्टत्वमूलविशेष परिज्ञानौपयिकं स्वव्याघातकत्व हेतुभूतार्थघटितमन्यत् जातिलक्षणमाह

(जातिसंग्रहे प्रकारान्तरम्)

अथायमपरो जातिसंग्रहः—मर्यादालङ्घनाभ्युपगमपूर्वकमुत्तरं जातिः । मर्यादा च प्रतिष्ठिता प्रमाणसरणिः । स्वव्याघातकत्वमपि तल्लङ्घनाभ्युपगमादेव । स च द्विधा—परिकरनियमानभ्युपगमः विषयनियमानभ्युपगमश्चेति । प्रथमो द्विधा—युक्ताङ्गत्यागः, अयुक्ताङ्गपरिग्रहश्चेति । अयुक्ताङ्गपरिग्रहोऽपि ह्यन्यूनानतिरिक्तविषयपरिकरनियमानभ्युपगम एव । द्वितीयोपि द्विधा—प्राप्तविषयत्वत्यागः, तदन्यविषयत्वाभ्युपगमश्चेति । एतेन "लक्ष्यं लक्षणमुत्थितेः स्थितिपदं (निरवसरो) मूलं फलं पातनम्" इति पठितेषु सदुत्तरेण जातीनामुद्धाराय प्रतिजाति प्रतिसंधानीयेषु (धाने) सदुत्तरापरिस्फूर्तौ जातिप्रसङ्गे चोपयोक्ष्यमाणेषु जातीनां सप्तस्वङ्गेषु साधारणमसाधारणं च दुष्टत्वमूलं दर्शितं भवति । विशेषतश्च जातीनां लक्ष्यलक्षणे वक्ष्येते ॥ "प्रमादः प्रतिभाहानिस्तासामवसरः [स्मृतः]" इति पूर्वे ।

---

अथेति । प्रमाणसरणिपरित्यागाभ्युपगमपूर्वकमुत्तरवचनं जातिरित्यर्थः । उत्तरमात्रस्य जातित्वाभिप्रायेणैवेदमपि । स चेति । न्यायपरिशिष्टे, 'दुष्टत्वमूलं द्विविधं साधारणमसाधारणञ्च । आद्यं स्वव्याघातकत्वम् । अन्त्यं युक्तांगहीनत्वम् अयुक्तांगाधिकत्वम् अविषयवृत्तित्वञ्चेति । एषु कस्यचिदेव क्वचिज्जातौ स्थितिः, न सर्वो सर्वत्रेति असाधारणत्वम् अत्र आद्यद्वयस्यानुगतैकधर्मसंभवम्, अन्ये- विभागद्वयसंभवञ्च विमृश्य विभाग एवं कृतः । युक्तमंगं व्याप्तिपक्षधर्मतारूपम् । अनंगस्यांगत्वेनादरणे अयुक्तांगता । अविषयेऽत्र विषयः साध्यम् । एतद्वैशद्यं तत्तज्जातिविशेषोदाहरणज्ञाने भविष्यति । एतान्येवासाधारणानि दुष्टत्वमूलानीत्याह एतेनेति । लक्ष्यमित्यादिपद्यं न्यायपरिशिष्टावसाने स्थितम् , तत्रोत्थितिः स्थितिपदमिति पाठः । स्थितिपदमिति पदं धृत्वा व्याख्यायां व्याख्यातञ्च । अत्रावसरपदप्रयोगस्तात्पर्यायत्वाशयेन । श्लोकानुपूर्व्या तदनुवादस्यानभिमतत्वात्, अवसरपदघटने वृत्तभंग इत्याक्षेपो नकार्यः । अवसरः=आस्पदम्, सर्वथा प्रकृते यत् दूष्यं तदेवात्र विवक्षितम् । तार्किकरक्षा द्रष्टव्या । यद्वा अवसर इत्यत्र स्थितिपदमित्येव पाठ इहाप्यस्तु । उत्थितिशब्दस्योत्थित्यवसरः उत्थानद्वारमित्यर्थः । सदुत्तरेणेत्यादि । सप्तांगविशिष्टतया जातिज्ञानं संपाद्यम् । तेन परोक्तजातीनामुद्धारः सदुत्तरेण सुकरः । अतः अंगानि प्रतिजाति प्रतिसंधानीयानि । यदा स्वयं सदुत्तरापरिस्फूर्तौ जातिप्रयोगमिच्छति, तदा त्वेषामुपयोगोऽस्ति । तत्रान्तर्गतं मूलं दुष्टत्वमूलरूपम् । तच्च प्रागुक्तधर्मरूपमिति भावः । उपात्तेष्वंगेषु लक्ष्यलक्षणरूपमाद्यद्वयं तत्तज्जातिनिरूपणावसरेऽवगम्यम् तत्र कियतस्तत्रतत्र लक्ष्यत्वम्, तावदनुगतं लक्षणं च किमिति विचारयिष्यते । जातेरुत्थितिः कथमित्यत्राह प्रमाद इति । प्रमादः= इयं जातिरित्यवधानाभावः । प्रतिभाहानौ प्रतिभा=माधुर्याभिमतसदुत्तरास्फूर्तिः । जातौ सदुत्तरत्वभ्रान्त्या प्रयोगेऽनवधानम् । सदुत्तरास्फूर्तौ जातित्वाभिमतप्रयोगे प्रतिभाहानिः । पूर्वे इति । उक्तं

**सभ्यानुमतिपूर्वकपरपरीचिक्षिषाऽपीत्यवष्टम्भविजयाभिलाषिणः । एवंच सत्येव वा असत्येव वा वादिसाधने जातेरुदय इति न नियमः, उभयत्रापि प्रमादादिसंभवात् । अत एव हि जात्यादेरुत्तरतया जात्यन्तराद्युदयः । फलं च प्रायशः परव्यामोहनम्; तद्धि स्वविजयः, साम्यं वा । तत्त्वाज्ञानं साधारणमुत्थानबीजम् ; तत्तदवान्तरस्वभावाज्ञानं तद्विपरीतज्ञानं चासाधारणमुत्थानकारणमिति च विभाव्यम् । [जाति?]वादिवाक्यस्य कस्मिंश्चिद्दूषणविशेषे निपातनमेव पातनम् । तच्चासाधारणदुष्टत्वमूलपुरस्कारेण साधारणस्वव्याघातप्रदर्शनौपयिकमिति भाव्यम् । व्याघातपर्यवसितं हि सर्वं दूषणम् । उपलम्भपर्यवसितं च सर्वं साधनमिति रहस्यम् ॥**

---

हि **न्यायपरिशिष्टे,** "प्रमादप्रतिभाक्षयौ चावसरः सर्वत्र" इति। **परीचिक्षिषे**ति। सदुत्तरस्फूर्तावपि असदुत्तरेणैव तद्विजयाभिलाषेऽपि जातिप्रयोगो भवति। परंतु स्वस्य यथावद्‌ज्ञानं स्थितं सभ्येभ्यो ज्ञापनीयम् । अन्यथा स्वस्य निग्रहो भवेदित्यर्थः । अत्र **वार्तिककृता** असाधुनिराकरणार्थत्वपक्षं खण्डयिष्यता साधुसाधननिराकरणार्थत्वमुक्तम् । तदत्र प्रमादादेः सार्वत्रिकत्वात्, साधुन्येवेति वा असाधुन्येवेति वा नियमो न युक्त इत्याह **एवञ्चे**ति । **अत एव**=साधुवादिसाधनस्थल एवेति नियमाभावादेव । **फलं चे**ति वाक्यमेकं **विभाव्य**मित्येतदनन्तरं स्यात् । यद्वा श्लोकदृष्टक्रमोपेक्षया व्याख्यानमिति मन्तव्यम् । व्यामोहनं=भ्रान्त्यापादनम्, परेण, इयं जातिरित्यनुद्भावनेऽस्य विजयः । परेणापि जात्यन्तरेणास्य व्यामोहने उभयोः साम्यम् । **स्थितिपद**मिति पदेन यद् वादिवाक्ये दूष्यतया मतम्, तत् गृह्यते । दूषणस्थितेर्मूलाधारत्वात् । तद्ग्रहणकालिकं तत्त्वाज्ञानं विपरीतज्ञानञ्चोत्थानहेतुः उपरि तत्रतत्र दूष्यमिति निर्देशोऽप्येतदाशयेन । **फलं** जातिवादिनाऽन्यस्य भ्रान्त्युत्पादनम् । स्वारोप्य यत् सत्प्रतिपक्षत्वाप्रयोजकत्वादि, तत्सत्ताभ्रमजननमेव फलमिति । अत एव तत्रतत्र आरोप्यं किञ्चित् ग्रन्थेषु प्रदर्श्यते । विवेकिनो भ्रमाभावेऽपि अस्य तदर्थप्रयास एव फलम् । पातनं नाम जातिवादिवाक्यस्य दुष्टत्वनिरूपणम् । तथाच वादिवाक्यं श्रुत्वा तत्रत्यदूष्यरूपोत्थानहेतुवशात् प्रमादप्रतिभाहान्यादिना दूषणार्थमुत्थाय दुष्टत्वभ्रान्तिरूपफलोद्देशेन जातिवाक्ये प्रयुक्ते, वादी इदं वाक्यमेतज्जातिरूपलक्ष्यास्पदम् एवं लक्षणवत्त्वादिति विभाव्य दुष्टत्वमूलं प्रदर्श्य परोक्तं पातयतीत्युक्तं भवति। स्वव्याघातकत्वे प्रदर्शिते तदुपरि वक्तुमवकाशः कथायां न दीयेतेत्याह **व्याघातपर्यवसित**मिति । **उपलम्भे**ति। तदाहुः— "परश्शतपरिक्षोदात्परस्तादपि वादिभिः । उपलम्भबले स्थेयं तदादौ किं न गृह्यते" **इति** । तथाच व्याघातोपलम्भे जोषम्भाव एवेति ।

स्वव्याघातित्वं हि स्वकृतपरघाततुल्यतत्कृतस्वघातास्पदत्वम् । तत्र भवति, जातिवादेन परघातासिद्धेरित्याशंक्य ; स्वव्याघातित्वं नाम स्वोद्भावितयुक्तिसजातीययुक्तिविषयीभूय स्वयं कार्याक्षमतया स्थितत्व-

(स्वव्याघातकत्वनिर्वचनम्)

ननु यत्पर्यवसायीनि जातीनां दूषणानि, क एष स्वव्याघातः ?। न तावत् स्वेनैव स्वस्य विरोधः ; तस्य भेदापेक्षया आत्माश्रयप्रसङ्गात्। स्वस्य सिद्धत्वे विरोधस्यानवकाशात्। असिद्धौ कस्य केन वा विरोधः। एतेन—यथा परं व्याहन्ति तथा स्वात्मानमपीति-निरस्तम्। किंच परव्याहतिसिद्धौ समीकरणाकाङ्क्षी जातिवादी तावतैव चरितार्थः। तदसिद्धौ तु कथं तन्निदर्शनेन यथेत्युच्यते। एतेन परस्य स्वेनेव स्वस्यान्येन व्याघाताक्षेपकत्वं स्वव्याघातकत्वमिति च प्रत्युक्तम्। आक्षेपकत्वं चात्र किमभिप्रेतम्—किमुत्पादकत्वम्, उत ज्ञापकत्वम्, यद्वा अन्यकर्तृकव्याघातप्रतियोगित्वेनावस्थानमात्रमिति ? न प्रथमः, असंभवात्। न द्वितीयः, परव्याहतिमात्रबोधनपरत्वात्। न तृतीयः, असदुत्तरान्तराणामपि जातित्वप्रसङ्गादिति॥ अत्रोच्यते—या परपक्षप्रतिक्षेपार्था युक्तिः प्रसज्यते, तस्याः प्रयोजकाकारेण तत्सजातीयस्वविषययुक्त्यन्तरक्रोडीकारः स्वव्याघातः। तथा च सति तया युक्त्या परपक्षस्य न दोषप्रसङ्गः; स्वयमेव तथाविधयुक्त्या दुष्यतीति न परपक्षस्य दोषमापादयितुं शक्नोति। यदि च तथाविधयुक्तिदुष्टमेवाभिमतसाधकमित्यभ्युपगम्यते, तथा(दा ?)पि परपक्षस्याभिमतसाधकत्वान्न काचित् क्षतिरिति जात्युत्तरस्य दूषकत्वं न स्यात्॥ स्वयमपि दुष्टं परस्यापि दूषकं भवत्विति चेत्, तथा सति सर्वं सर्वस्य दूषकं भवेत्, अविशेषात्। ततश्च मौनं वा नित्यकलहो वा शरणं कथकानाम्॥ जात्युत्तरबाधकयुक्तेरपि युक्त्यन्तरबाधितत्वात् प्रथमं निरुपद्रवमिति चेन्न; परस्तादपि प्रसङ्गेन द्वितीयस्यापि निरुपद्रवत्वात्॥ कुतस्तर्ह्यनवस्थानिवृत्तिरिति चेत्—प्रथमस्य परित्यागेन, यदभ्युपगममूलोऽयं प्रवाहः इति भाव्यम्; अन्यथा सर्वत्रानवस्थाप्रसङ्गे प्रथमसंरक्षणप्रसङ्गात्॥ समवायादिवादिभिरिष्यत एवायमर्थ इति चेत्—किं तदिष्टत्वमात्रेण तथैव वस्तुस्थितिः; अतिप्रसङ्गात्। सूत्रितं च वैशेषिकाधिकरणे अनवस्थापादकसर्व[विषय?]दूषणोपलक्षणतया समवायकल्पनेऽनवस्थानम्, "समवायाभ्युपगमाच्च साम्यादनवस्थितेः" इति। अतः साधने दूषणे वा यदभ्युपगमे तथाविधः प्रवाहः प्रसजति, तदेवादौ त्याज्यम्। न चात्र कारणानवस्थावत् गुणत्वम्; तद्वैषम्यस्य स्वस्थाने वक्ष्यमाणत्वादिति॥

---

मेवेत्याह नन्वित्यादिविस्तरेण। युक्तांगहीनत्वादिरेव व्याहतिः। **प्रथमस्य परित्यागेनेति**। यस्य प्रथमस्य जातिवादस्याभ्युपगमे एवं प्रवाहप्रसक्तिः, तस्य परित्यागेनैवानवस्थानिवृत्तिरित्यर्थः। **कारणानवस्थेति**। कार्यसामान्यस्य कारणसापेक्षत्वात् अनादौ काले कारणानवस्था स्वीकर्तुमर्हा। समवायानवस्थांगीकारे तु बुद्धौ तावत्समवायादिविषयकत्वावश्यकतया विषयेयत्ताभंगप्रसंग इति। कथमासां जाति-

(स्वाभिमतो जातिविभागः)

जातिर्द्विधा—प्रतिप्रमाणसमा, प्रतितर्कसमा चेति। तत्रानभ्युपेतमर्यादेन प्रतिप्रमाणेनानिष्टापादनं प्रतिप्रमाणसमा। यथा च अपकर्षसमादिष्वेकैकस्यां वा जातिविधायाम् असिद्ध्याद्यनेकदोषसंग्रहं व्याचख्युः, तथा प्रतिप्रमाणसमायामपि सर्वानिष्टसंग्रहे न कश्चित् दोषः। तादृशेन प्रतितर्केणानिष्टापादनं प्रतितर्कसमा। न चायं विभागोऽनादेशिक इति वाच्यम्, यथा परैः सूत्रकारानुपदिष्टाऽपि साधर्म्यवैधर्म्यसमादिसंग्राहिका प्रतिधर्मसमा उन्नीता, तद्वत् सर्वसंग्राहकविभागस्यात्यन्तोचितत्वात्। न च सूत्रोपदिष्टायां चतुर्विंशतौ सर्वजात्युदाहरणान्तर्भावः शक्यः, परैरपि कल्पितेनैव प्रतिधर्मसमेन प्रत्यक्षाभासादिमूलस्य प्रतिरोधस्य संग्रहोपलक्षणात्। तेनाप्यसंगृहीतस्य उदाहरणान्तरस्यास्माभिः प्रदर्शयिष्यमाणत्वाच्च। उक्तं च तत्त्वरत्नाकरे—"अमूषां जातीनामानन्त्याच्चतुर्विंशतिरसौ प्रदर्शनार्था; 'अन्यदन्यस्मात्' इत्यादिना जात्यन्तरसूचनात्" इति। प्रज्ञापरित्राणेऽप्युक्तम्—

---

शब्दवाच्यत्वमिति चेत्—न्यायभाष्ये, "प्रयुक्ते हेतौ यः प्रसंगो जायते स जातिः" इति भाषणात् जायमानत्वविवक्षयेति ज्ञायते। प्रसंगो नाम प्रत्यवस्थानमुपालम्भः प्रतिषेधः। तथाच स जायमान एव, न तु कार्यकर इत्यभिमतमिव। यद्वा जातिरनेकानुगतं सामान्यम्। वादिवाक्ये आरोपितस्य स्ववाक्येऽप्यनुगमात् जातितुल्यसामान्यधर्मोऽस्तीति जातिरिति। अन्ततः परिभाषेयं किञ्चिद्दोषमात्रे॥

तर्कशास्त्रे सप्तधाविभक्तस्य पदार्थस्य भावाभावरूपेण सामान्यविभागवत् बहुधाविभक्तानां जातीनां सामान्यतो द्वेधा विभागं सुग्रहत्वाय स्वयमाह जातिर्द्विधेति। अनादेशिकः असांप्रदायिकः। परैः=उदयनाचार्यतदुक्तवैशद्यकरवरदराजादिभिः। [तार्किकरक्षा वरदजगीया]। परंतु तत्र प्रतिधर्मसमेत्येतत्स्थाने प्रतिरोधसमेति नाम स्वयमाचार्यश्चिकीर्षति। प्रत्यक्षाभासेति। सूत्रे साधर्म्यवैधर्म्यमात्रोक्तावपि "प्रतिप्रमाणेन प्रतिरोधः" इति प्रतिप्रमाणसामान्यविवक्षणात् आगमाभासप्रत्यक्षाभासमूलकः प्रतिरोधोऽपि संगृहीतो भवतीत्युक्तम्। अन्यदिति। 'अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः' (2-2-32) इति सूत्रेण जात्युत्तरमुक्तं शब्दपरीक्षायाम्। पञ्चकृत्वः पश्यतीत्यादाविव पञ्चकृत्वोऽधीते इत्यत्रापि क्रियाभ्यासविषयस्य रूपादेरिव शब्दस्यापि स्थिरत्वावगमात् न तस्य क्षणिकत्वमिति शंकायाम्, द्विर्नृत्यतीत्यादौ अस्थिरक्रियाविषयेऽप्यभ्यासदर्शनात् अन्यत्वेऽपि=व्यक्तिभेदेऽपि अभ्यास इति समाहितम्। तदनन्तरमनेन सूत्रेण जात्या प्रत्यवस्थानम्—अन्यस्मादन्यदिति यद् भवतोच्यते, तत् स्वस्मादनन्यदेवेति तत्रान्यता न भवतीति। इत्यादिनेति आदिपदेन तत्रैव वक्ष्ये, 'अनियमे नियमान्नानियमः (2-2-47) इत्युक्तं गृह्यते। पूर्वं प्रकृत्यनियमादिति सूत्रेण, 'क्वचित् इकारो यकारस्य प्रकृतिः; क्वचिच्च यकार इकारस्येति प्रकृतेरनियमः' इत्युक्तम्। तदुपरि प्रत्यवस्थानम्—कथमनियम उच्यते? अनियमस्य नियतत्वान्नियम एव, धर्मधर्म्यभेदादिति। एवं गौतमेनैव सूत्रोक्तं जातिद्वयं गौतमदर्शितायां चतुर्विंशतौ

"आनन्त्येऽपि च जातीनां जातयस्तु चतुर्दश। उक्तास्तदपृथग्भूता वर्ण्यावर्ण्यसमादयः ॥" इति।

अत्र "चतुर्दश" इति स्वग्रन्थोदाहृतजातिभेदसंख्यानम्; न तु वस्तुनो न्यूनाधिकसंख्याव्यवच्छेदार्थम्। न्यायभूषणमतानुसारेणापि चतुर्विंशतेः प्रदर्शनार्थत्वमेवाभिमतम्। अस्मदुक्तं तु द्वैविध्यं सर्वजातिसंग्राहकम्। तयोरेव ह्यापाद्यापादकभेदभिन्नयोरवान्तरभेदाः सर्वजातयः। तथा हि—द्वे अपि द्विविधे—सामान्यतो विशेषतश्चेति। अत्र प्रतिप्रमाणसमायां सामान्यतो यथा—त्वत्पक्षवदस्मत्पक्षेऽपि किंचित् प्रमाणं संभवेत्, पक्षत्वाद्यविशेषादिति। सेयमुपपत्तिसमेति सूक्ता। विशेषतो यथा—यं कंचित् प्रमाणाभासमुपक्षिप्य, 'यथा त्वदुक्तं विवक्षितसाधकम्, तथेदमपि; न चेदेवम्, त्वदुक्तमप्यसाधकं स्यात्, अविशेषादिति। एतन्मुखभेदा एव प्रतिधर्मप्रतिदृष्टान्तप्रकरणसमादयः। प्रतिप्रसङ्गसमायां सामान्यतो यथा—यथा पक्षान्तरेऽनिष्टप्रसङ्गः, तथा त्वत्पक्षेऽप्यनिष्टप्रसङ्गः कश्चित् स्यात्, निपुणाभ्यूहने सर्वत्र दूषणसंभवात्, आपातरमणीयत्वस्य सर्वत्राविशेषादिति। विशेषतो यथा—एवं चेदनेन त्वयेदं साध्यते दूष्यते वा; तथा सति मदुक्तेनानेन तर्केण त्वदुक्तविपरीतं किं न स्यात्, अविशेषादित्यादि। एतदवान्तरविशेषा उत्कर्षसमादयः। तत्रापि स्वरूपस्पर्शिन्यः काश्चित्। प्रति-

---

नान्तर्भवन्ति हि। अतो जात्यानन्त्यमिति भट्टपादोक्तमित्यर्थः। उक्तमिति। आनन्त्येऽपीति पदेनानन्त्यमभ्युपगतं हीति भावः। चतुर्दशधा विभज्य गौतमोक्तानामन्यासां तत्रान्तर्भावस्तदुक्त इति ज्ञायते। स्वग्रन्थेति। स्वयमुदाहृतानां सौत्राणां स्वोक्तविभागान्तर्भावेऽपि अनन्तर्भूतानेकसत्त्वं तेन न बाध्यत इत्यर्थः। अभिमतमिति। संग्राह्यानेकसद्भावस्य सर्वसंमतत्वेऽपि सर्वसंग्राहकविभागप्रकारः कैरप्यनुक्त इति स इहोच्यत इति भावः। आपाद्यापादकभेदेति। जातीनां भेदः तत्र तत्राऽऽपाद्यांशानामापादकांशानाञ्च भेदादिति भावः। प्रतिप्रसंगः प्रतितर्कः। प्रतिदृष्टान्तेति। शब्दे घटदृष्टान्तेनानित्यत्वमेवेति कथम्, आकाशदृष्टान्तेन नित्यत्वमेवास्त्विति। अत्रेदं वक्तव्यम्—(श्लो०) प्राप्त्यप्राप्त्यविशेषाहेत्वनुपलब्धिप्रसंगकानित्यैः। सप्त प्रतितर्कसमाः,पराः समाः स्युः प्रतिप्रमाणसमाः इति तार्किकव्याख्यानुसारेण संग्रहोऽस्माभिश्चिकीर्षितः। अस्यायमर्थः—प्राप्तिसमा—अप्राप्तिसमा—अविशेषसमा-अहेतुसमा—अनुपलब्धिसमा—प्रसंगसमा—अनित्यसमाः सप्त प्रतितर्कसमाः। अन्याः प्रतिप्रमाणसमाः। जात्यंगानां सप्तानां निरूपणे तत्रतत्राऽऽरोप्य दूषणं यदुच्यते—तत् बाध—प्रतिरोध—असिद्धि—विरुद्धत्व—अनैकान्तिकत्वप्रकारं चेत्, तादृशबाधादिरूपदोषचोदनाभासरूपत्वात् प्रतिप्रमाणसमेति। परंत्विह समनन्तरमेवोत्कर्षसमादेः प्रतितर्कसमप्रभेदत्वकथनात् अन्यादृशं विभजनं युक्तम्। तथाच प्रतिप्रमाणमुखेनानिष्टापादनोपक्रमे प्रतिप्रमाणसमत्वम् प्रतिप्रसंगमुखेनानिष्टापादनोपक्रमे प्रतितर्कसमत्वमिति। प्रतितर्कोपन्यासस्यापि ह्यन्ततः प्रमाणाभासत्वज्ञापन एव पर्यवसानम्। अत एव हि चतुर्थाह्निके तर्कनिरूपणे तर्कः पञ्चविध इति विभज्य, "तत्रात्माश्रयादयश्चत्वारः स्वविषयेऽसिद्धिमावहन्ति; पञ्चमस्तु व्याप्यत्वासिद्ध्यादिकम्" इति वक्ष्यते। अतस्तर्के पर्यवसानमिति न; सर्वस्य प्रमाणाभासत्व एव पर्यवसानादिति। साक्षात् स्वरूपस्पर्शिन्यः। आपाद्यस्य साक्षादेव साधनांगेषु पक्षहेतुदृष्टान्तेषु दर्शिकाः। प्रतिबन्दीति,

बन्दीव्यवहितास्तु अविशेषसमादय इति भिदा ॥

एवं विभागे शक्येऽपि विशेषानवधारणात् । विविच्य सूत्रयामास गौतमो जातिसंततिम् ।
व्याघातमुखभेदादेरुत्थनादेश्च दर्शयन् । वैचित्र्यमन्तेवसतां तदानन्त्यं न्यदर्शयत् ।
न चानन्त्येपि जातीनां दुर्विवेचविशेषता । स्वस्यापि दूषणं जातिरिति सामान्यसंग्रहात् ।
अवान्तरविधाभेदस्यानन्त्येपि च गृह्यते । अशेषसंग्रहादेकमप्पृथिव्यादिलक्षणम् ।
विशोधयिष्यमाणेषु विभागेषु च तत्त्वत । विशेषलक्षणैस्तैस्तैः संग्रहोपि भविष्यति ॥

वरदविष्णुमिश्रैस्तु—"स्वव्याघातिप्रसङ्गो जातिः । सा च चतुर्विंशतिविधा" इत्युक्त्वा साधर्म्यादिसूत्रमुपादाय यथोदयनं प्रायो लक्ष्यलक्षणादिकमुक्तम् । एवमन्यैरपि । वयं तु तदेवेदानीं प्रतिसंस्कारमदूरविप्रकर्षेण प्रब्रूमः ॥

तत्र यदिदं सूत्रम्, "साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्य - कार्यसमाः" इति ; अत्र द्वन्द्वात् परत्वात् समशब्दः प्रत्येकमन्वेतव्यः । सर्वानुगतस्तदर्थ

---

यदीदं त्वया तत्रेष्यते केनचिद्धेतुना, तर्हि तद्वत् अन्येन हेतुना सर्वमन्यदपि सर्वस्य स्यादिति एकमविशेषं हेतूकृत्य सर्वाविशेषापादनं हि अविशेषसमायाम् । उपरि कतिपयजातिमात्रपरिष्करणमेव ; 'अन्यासामाकरत एव सुज्ञानत्वादत्रोपेक्षा । अथाप्यवसरे संग्रहीष्यामः **विशेषानवधारणा**दिति । सामान्यविभागतो विशेषाणामवधारयितुमशक्यत्वात् , विशेषाणामुक्तौ सामान्याकारस्याभ्यूहनसंभवादित्यर्थः । आनन्त्यमपि सूचितमेवेत्याह **व्याघाते**ति । **न दुर्विवेचविशेषता** छलादिव्यावृत्तसर्वजात्यनुवृत्तविशेष. तदवान्तरानेकानुगतसामान्यरूपविशेषग्रहणासंभवो नेत्यर्थः । **अबि**ति । नदीसमुद्रतटाकपल्वलादिभेदेऽपि द्रव्यत्वरूपसामान्यवत् तद्व्याप्य-अप्सामान्यानुगतधर्मकथनादिति भावः । प्रत्येकजातिविषयेऽपि लक्ष्येयत्ता लक्षणरीतिश्च शोधयिष्यत इति दर्शयति **विशोधे**ति । **यथोदयनम्** । न्यायपरिशिष्टादिकं परिशील्येति भावः । **एवमन्येऽपी**त्यनेन अस्मन्मतस्थानामन्येषां ग्रहणम् । **तदेव**=तदुक्तमेव प्रब्रूमः **प्रतिसंस्कारम्** प्रत्यग्रप्रतिनियतसंस्कारविशिष्टं यथा तथा ; प्रतिसंस्कृत्येति वा । **अदूरविप्रकर्षेणे**ति । तत्रत्येष्वंगीकृतांशोऽधिक इति भावः । तदेव परदृष्टान्तीकरणेनाऽऽरभते तत्रेति । **यच्छब्दस्य** प्रतिसंबधि **अत्रे**ति पदम् , साधर्म्यसमेत्येवं सर्वत्र समशब्दान्वयः सूत्राभिमत एवेत्याह **द्वन्द्वा**दिति । साधर्म्यपदमारभ्य कार्यपदपर्यन्तं द्वन्द्वः । तेषु समाः इति विग्रहः । **प्रदर्शित**मिति । व्याघातास्पदत्वं साम्यम् । जातिवाच्युक्त साधर्म्यादिद्वारक व्याघातास्पदत्वं साधर्म्यादिसमत्वम् । अत्र अवर्ण्यसमपर्यन्तं प्रत्येकं परिष्करणीयांशं विमृश्य लक्ष्याधिक्यमूलकलक्षणशोधनविधानानन्तरम् अन्तिमं कार्यसमं नामान्तरेण निर्दिश्य परिष्कृत्योपसंहरिष्यति अन्यास्तु जातयः न्यायपरिशिष्टतार्किकरक्षवरदविष्णुमिश्रग्रन्थादित एव सुग्रहा इत्याशय्य तदुपेक्षा । आदौ साधर्म्यवैधर्म्येत्येत-

एव च सामान्यलक्षणमिति प्रदर्शितम्। अत्र सूत्रकारोक्तयोः साधर्म्यवैधर्म्यसमयोरसूत्रित प्रतिधर्मसमावान्तरभेदतामन्ये व्याचख्युः। तत् कस्य हेतोः ?। तथाविधमानाभासमुखेन प्रतिरोधोदाहरणान्तराणां दर्शनात्, अन्यत्र तु छलादौ जात्यन्तरे वा तेषामनन्तभावाच्च जात्यन्तरस्य कल्पनीयत्वे सति, उक्तेनोपलक्षणस्योचितत्वात्; अवान्तरभेदकथनस्य सर्वत्रावान्तरभेदसद्भावज्ञापनेन सप्रयोजनत्वाच्चेति चेत्—एवं यद्यनुक्तोदाहरणान्तराणि संभवन्ति (बृहन्ति), तदा जात्यन्तरं वा, तत्संग्रहलक्षणं वा कल्पनीयमेव ॥ तदिह "अनभ्युपेतयुक्ताङ्गेन प्रतिप्रमाणेन प्रतिरोधः प्रतिधर्मसमः" इति परैः कल्पितम्। तत्र प्रतिरोधसम इति लक्ष्यसंज्ञाकल्पनमुचितम्; अन्वर्थसमाख्यासिद्धावुपलक्षणसंज्ञानिवेशस्य निष्फलत्वात्, असूत्रितत्वेन सूत्रानुविधानव्यसनाभावाच्च। तादृशेनैव बाधो बाधसमः। तत्रापि "प्रकरणसमः" इति समाख्या यौगिकी प्रक्रियमाणार्थसिद्ध्यभिमानद्वारा कथंचिन्निवेशिता। अनयोस्तत्तत्प्रतिरोधकबाधकमर्यादालङ्घनाभ्युपगमपूर्वकत्वात् स दुत्तरप्रकरणसमातीतकालोद्भावनाभ्यां केवलनिरनुयोज्यानुयोगाच्च व्यवच्छेदः। तादृशेनैवासिद्ध्यापादनमसिद्धिसमः। एवमनेकान्तसमादयोऽपि ग्राह्याः। एषां सामान्यसंग्रहस्तु प्रागुक्तप्रक्रिययाऽनभ्युपेतमर्यादेन प्रतिप्रमाणेनानिष्टापादनं प्रतिप्रमाणसम इत्येव। अत्र साधर्म्यसमादिसूत्रे असिद्धिसमादयो-

---

दूषणेन नामाकृत्वा अन्यथा स्वयं कथ्यमानं नानुचितम्—उदयनादीनामेव तत्र मार्गदर्शित्वादित्याह अत्र-सूत्रकारेत्यादिना। सूत्रकारेण स्वयमुदाजिहीर्ष्यमाणांशानुसारेण साधर्म्यसमेत्यादिनाप्रकरणेऽपि प्रत्यक्षागमादिप्रमाणान्तरमूलकप्रतिरोधानामप्युदाहरणसत्त्वात् प्रतिधर्मसमेति नाम तैश्चिकीर्षितम्। सूत्रकारप्रदर्शिताः प्रभेदाः नेतरव्यवच्छेदाभिप्रायेण, किं त्वेषां सद्भावमात्रेण। एतद्रीत्याऽन्येषामपि विमर्शः स्यादित्येव। अत साधर्म्यादिना प्रतिरोध इत्यनुक्त्वा प्रतिप्रमाणेन प्रतिरोधः प्रतिधर्मसम इति परैः उदयनानुसारिवरदराजादिभिस्तार्किकरक्षादौ अनुगतलक्षणकल्पना कृता ॥ तर्हि सदुत्तरेणापि क्वचित् प्रतिरोधात्, सत्प्रतिपक्षेणापि प्रतिरोधात् तत्रातिव्याप्तिरिति चेत्—तत एव अनभ्युपेतयुक्ताङ्गेनेति प्रतिप्रमाणं विशेषितम्। अपेक्षितांगाभ्युपगमेन हि तत्र प्रतिरोधः, न त्विहेव तदनभ्युपगमेनेत्याशयः। एवं प्रकरणसमपदविवक्षिते बाधसमेऽपि युक्तांगानभ्युपगमेन बाधापादनात् कालातीतरूपबाधितत्वोद्भावनापेक्षया प्रकरणसमस्य वैलक्षण्यं ग्राह्यम् ॥ बाधसमस्य प्रकरणसम इति कथं समाख्येति चेत्—प्रक्रियमाणार्थसिद्धिरिति कथञ्चित योगार्थश्चिन्त्यः। तत्र, 'प्रकरणस्य=प्रतिपक्षहेतुसाध्यस्य (वादिसाध्यविपर्ययस्य' इति तात्पर्यटीका। तत्र युक्तांगानभ्युपगमेनेति दलपूरणं जातित्वज्ञापनाय क्रियते, अत्रैवांगावश्यकत्वरूपमर्यादालंघनसत्त्वात्। अत एव जातिव्यतिरिक्तो निरनुयोज्यानुयोगोऽपि व्यवच्छिन्नो भवति [अत्र ग्रन्थे निरनुयोज्यानुयोगाच्चेति पञ्चम्यन्तप्रयोगात् षष्ठ्यन्तप्रयोगाभावात् व्यवच्छेदशब्दो

प्युपलक्षिताः । न च तासामसंभवोऽन्यत्र वाऽनुप्रवेशः, पृथगुदाहरिष्यमाणत्वात् ।

तत्र प्रतिरोधसमे तावत् सरूपं विरूपं चेति द्विविधं प्रत्यवस्थानम् । वादिना प्रत्यक्षादियज्जातीयेनार्थः साधितः, तज्जातीयेन प्रत्यवस्थानं सरूपम् । तत् त्रिधा—प्रत्यक्षे प्रत्यक्षेण, अनुमाने अनुमानेन, शब्दे शब्देनेति । अतज्जातीयेन तु विरूपम् । तच्च षोढा—यथा प्रत्यक्षे तदन्याभ्याम्, तथाऽनुमाने शब्दे चेति । एवं बाधसमादिष्वपि विभागो भाव्यः ॥

तत्र सरूपं यथा—प्रत्यक्षबलादेकश्चन्द्र इत्युक्ते अङ्गुल्यवष्टम्भादिसहकृतप्रत्यक्षेण 'अनेकः किं न स्यात्; न ह्येकं प्रत्यक्षं स्वार्थसाधकं, प्रत्यक्षान्तरं तु नेति राजाज्ञा । न च सहकारिभेदो दोषः, प्रतिप्रत्यक्षं सहकारिवैचित्र्यात् । घृतादिष्वतीन्द्रियेषु च गन्धादिग्रहणयोगादिसहकारिवैचित्र्याभ्युपगमात्' इति ॥

अनुमाने तु—साधर्म्येण वादिनोपसंहारे साधर्म्येण वैधर्म्येण द्वाभ्यां वा, तथा वैधर्म्येण द्वाभ्यां वोपसंहारे तथैव त्रिधा त्रिधेति नवधा भेदः । तत्र त्रिधोपसंहारेऽपि साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः । वैधर्म्येण तु वैधर्म्यसमः । द्वाभ्यां तु साधर्म्यवैधर्म्यसम इति । आद्यो यथा—स्थावरशरीरं भोक्त्रधिष्ठितम्, जीवनिद्रा-प्रबोधादियोगि-

---

भेदमात्रार्थकः] एवं सूत्रोक्त(प्रतिधर्मसमात्मक) साधर्म्यसम-बाधसमवत् असिद्धिसमानेकान्तसमादीनामपि संभवात् **प्रतिप्रमाणसमे**ति सर्वानुगतसंज्ञा तदनुरोधिलक्षणकथनञ्चात्र ग्रन्थे दृश्यते । प्रत्यक्षागमाद्याभासमूलक प्रतिरोधसंग्रहाय प्रतिप्रमाणेनप्रतिरोध इति प्रतिरोधसामान्यसंग्राहक—उदयनादिकल्पनाया इवास्यापि युक्तत्वादिति यद्यर्थः । सर्वत्रोदाहरणप्रपञ्च इह भविष्यति ।

अथ प्रतिप्रमाणसमान्तार्गतिं प्रतिरोधसमं विभजति **तत्रप्रतिरोधे**ति । **त्रिधे**ति । अस्माभिरर्थापत्यादेरत्रैवान्तर्भावकथनात् त्रिधेत्युक्तम् । तार्किकरीत्या चतुर्धेति स्यात्, मीमांसकादिभिः षोढेति वक्तव्यं स्यात् । अत्र सर्वत्र **प्रत्यक्षेणे**त्यादेः आभासभूतेनेति विशेषणं ग्राह्यम् । असदुत्तररूप जातेरेव प्रकृतत्वात् । इदमुदाहरणेषु व्यक्तम् । **घृते**ति । इदं घृतं तैलं वेति संदेहात् गन्धग्रहणं घृतत्वविशिष्ट । प्रत्यक्षसहकारि । अतीन्द्रियेषु चात्मादिषु योगसहकारवशान्मानसं प्रत्यक्षं विशदम् । **अनुमाने**त्विति प्रतिरोधसमेति शेषः । सूत्रोक्तमनुमानविषयमेवेति । तदेवाह **साधर्म्येणे**ति । **द्वाभ्यां** साधर्म्यवैधर्म्याभ्याम् । **तथावैधर्म्येणे**ति । वैधर्म्येण वादिनोपसंहारे वैधर्म्येण साधर्म्येण द्वाभ्यां वा प्रत्यवस्थानम्, द्वाभ्यां वादिनोपसंहारे साधर्म्येण वैधर्म्येण द्वाभ्यां वा प्रत्यवस्थानमित्यर्थः । सूत्रे साधर्म्यवैधर्म्यसमेत्यत्र साधर्म्यञ्च वैधर्म्यञ्च साधर्म्यवैधर्म्ये च साधर्म्यवैधर्म्याणीति विगृह्य समशब्दयोजनात् त्रयसिद्धिः । **निद्रा प्रबोध**पदाभ्यां मुख्यनिद्राप्रबोधग्रहणाय जीवपदम् । मृगमनुष्यादौ जीवनसाध्यतयादृश्यमाननिद्राजातीयवत्त्वं

त्वात्, मनुष्यादिशरीरवत् इति साधर्म्येण वा, यन्न भोक्त्रधिष्ठितं न तन्निद्रादियोगि, यथा घटः इति वैधर्म्येण वा, द्वाभ्यां वा वादिना साध्योपसंहारे कृते, जातिवाद्याह— यदि मनुष्यादिशरीरसाधर्म्याद् घटादिवैधर्म्यादुभाभ्यां वा स्थावरशरीरं भोक्त्रधिष्ठितमुच्येत, तदा घटादिसाधर्म्यात् पाणिपादादिरहितत्वात् तन्निरात्मकं किं न स्यादिति। एवं तत्रैव मनुष्यशरीरवैधर्म्यादित्युक्ते वैधर्म्यसमः। समुच्चये तु साधर्म्यवैधर्म्यसमः इति ॥

'आगमे यथा—अवैदिकहिंसा न धर्मः; निषेधशास्त्रं हि तथाऽऽह' इति नैगमिकेनोक्ते बाह्यो ज्वलति—नैवं नियन्तारः, आगमान्तरं हि तामपि धर्मयति, श्रेयस्साधनतया तेन तद्विधानात्। न चागमत्वे विशेषं पश्यामः। परिग्रहस्त्वार्यैः कस्यचित्, कस्यचित् पाषण्डिभिरिति को विशेषः? यथारुचि सर्वत्र परिग्रहात्, इति ॥

विरूपं यथा—स्फटिकादीनामबाधितप्रत्यभिज्ञया स्थैर्ये वैनाशिकः प्रतिब्रूते—यत् सत् तत् क्षणिकम्; यथा उभयवादिसिद्धः क्षणोपाधिः। सन्तश्चामी भावाः। न हि प्रत्यक्षं प्रत्यक्षमित्येवानुमानेन न बाध्यते, ज्वालाभेदानुमानेन तदैक्यप्रत्यक्षस्याप्यबाधप्रसङ्गात्। अविशिष्टा हि तत्र च अत्र च प्रत्यभिज्ञा; अनुमानं च भेदगोचरमविशिष्टमिति। एवमुदाहरणान्तराण्यपि पञ्च स्वयमेवोहनीयानि। असद्विषयाया अपि जातेरुक्तैव प्रक्रिया। तत्र जातिवादिनः पर्यनुयोज्योपेक्षणमपि स्यादिति विशेषः ॥ (बाधितसमः)

एवमनादृतप्रयोजकाकारतौल्येन प्रतिरोधे प्रतिरोधसम उदाहृतः। अथाङ्गीकृततुल्यभावेन तु बाधे बाधितसम उदाह्रियते—परशरीरमात्माधिष्ठितम्, वाक्यप्रयोगादिमत्त्वात्, स्वशरीरवत् इत्युक्ते प्रत्याह—स्वशरीरव्यतिरिक्तत्वात् तृणादिवदनधिष्ठितमेव स्यात्; न ह्यनुमानरूपेषु तस्य चास्य च विशेषं पश्यामः। तुल्यत्वे च तदेव साधकम्, इदं नेति को नियन्ता?। ततश्चानेन स्वसाध्यसाधनात् पूर्वबाध इति ॥

---

स्थावरेऽपि दिवा पर्णोल्लासेन नक्तं तन्मुकुलभावेन च सिद्धमिति भावः। **बाह्यः** तुरुष्कादिः **ज्वलति** क्रोधान्धो निर्मर्यादः प्रत्यवतिष्ठते। **वैनाशिकः** प्रतिक्षणसर्वभंगवादी बौद्धः। **प्रत्यक्षमित्येवेति**। प्रत्यक्षत्वहेतुनैवेत्यर्थः। **अनुमानञ्चेति**। एतत्क्षणवीजं पूर्वक्षणबीजाद्भिन्नं कुर्वद्रूपत्वविशिष्टसामग्रीभेदादित्याद्याकारकं स्फटिकादावपि। इदं ज्वालाभेदानुमानतुल्यमेवेत्यर्थः। **पञ्चेति**। विरूपं षोढेत्युक्तम्। तत्रैकमुदाहारि। अन्यानि पञ्चेत्यर्थः। **असद्विषयया इति**। वादिना सदर्थकथने जातयः परक्रियमाणाः प्रदर्शिताः। एवं वादिनैवासदर्थकथनेऽपि तदसत्त्वमनुद्भाव्य प्रतिवादिना जातिः प्रस्तूयते चेत्— तत्राप्येवमित्यर्थः। **पर्यनुयोज्येति**। असत् त्वयोक्तमिति पर्यनुयोगे प्रतिवादिना कर्तव्ये तदुपेक्ष्य जातिवादमारभतेति प्रतिवादिनस्तेनापि निग्राह्यतेत्यर्थः।

अथ बाधसममाह **एवमिति**। समबलत्वाभिमतेन प्रतिरोधः, प्रबलत्वाभिमतेन बाध इति मर्यादा। तदुल्लंघने तौल्यानादरेण प्रतिरोधप्रत्यवस्थानमुक्तम्। बाधे प्राबल्यानादरणे तुल्यत्वाभिमतेनापि बाधः प्रत्यवस्थातुरिष्ट इति ज्ञायत इति प्रदर्शनाय विशेषणघटनम्। इयं जातिः प्रकरणसमेति सूत्र एव निर्दिष्टा।

असिद्धिसमादीनां पुनरेवमुत्थानम्—अनित्यः शब्दः, कृतकत्वात्, इत्युक्ते प्रतिब्रूते—स्वयं सिद्धो हि हेतुः स्वसाध्यं साधयेत्; न चासौ सिद्धः, प्रत्यभिज्ञयैक्यसिद्धेः। सा चेदैक्यं न साधयेत्, मेदमपि कः साधयिष्यति? प्रमाणत्वप्रत्यक्षत्वादेरविशेषात् इति। एवमनेकान्तो विरुद्धो वाऽयं हेतुरित्युक्त्वाऽऽह—अनित्यत्वसाधकप्रमेयत्वहेतुः प्रमेयत्व-प्रस्तुतहेत्वन्यान्यानैकान्तिकान्यः, प्रमेयत्वात् इति। एवमनैकान्तिकपदस्थाने विरुद्धपदप्रक्षेपे विरुद्धता। तथाऽन्यदन्यदपि। यदि अनेन हेतुना अनैकान्तिकविरुद्धत्वादिकं न सिध्येत्, वादिहेतुनापि कथं साध्यं सिध्येत्? न हि वाद्युक्त एव हेतुः स्वसाध्यं साधयिष्यति, प्रतिबाधकस्तु नेति प्रथमं नियमकल्पनम्; इति। तत्रापि प्रतिरोधबाधसमयोरिव मर्यादालङ्घनाशयगर्भतया केवलनिरनुयोज्यानुयोगाद्विशेषः प्रतिसन्धानीय इति।

अत्र सर्वत्र युक्ताङ्गहीनप्रतिकूलप्रमाणोपलम्भः उत्थानहेतुः। दुष्टत्वमूलं च असाधारणं व्याप्त्यादियुक्ताङ्गान्यतमहानिः। साधारणदुष्टत्वमूलप्रदर्शनोपयुक्तं त्वेवं पातनम्—वादिसाधनमसाधकम्, युक्ताङ्गहीनप्रतिप्रमाणापादितदोषत्वात् इति हि जातिवाक्यार्थः; स एव स्वात्मानमपि व्याहन्ति, यथोक्तप्रक्रियया जातिवादिसाधनेऽपि येन केनापि युक्ताङ्गहीनप्रमाणेन

---

एवमसिद्ध्यादिहेत्वाभाससमानामपि ग्रहणं कार्यमिति स्वयं प्रागुक्तम्। तदुदाहरणमारभते **असिद्धीति**। **प्रत्यभिज्ञया**=सोऽयं गकार इत्यादिकया। **अयं हेतुः**=कृतकत्वादिति हेतुः। अनैकान्तिकत्वादिसाधनं महाविद्यानुमानेन करोति **अनित्यत्वेति**। प्रस्तुतहेतुपदेन यस्यानैकान्तिकत्वं विवक्षितं तद्ग्रहणम्। प्रमेयत्वकृतकत्वोभयान्यत् घटादि सर्वम्। तदन्यत्वं प्रमेयत्वे कृतकत्वे च। तद्रूपं यत् अनैकान्तिकम्, तदन्यत्वं साध्यम्। अत्रानैकान्तिकेत्यस्य किञ्चिदनैकान्तिकेत्यर्थः। अन्यथा पक्षे साध्या संभवात् बाधः स्यात्। अन्यान्यत् यत् किञ्चिदनैकान्तिकमिति प्रमेयत्वरूपानैकान्तिकग्रहणे तदन्यत्वस्य पक्षेऽसंभवात् कृतकत्वमेवान्यान्यरूपमनैकान्तिकं वक्तव्यम्; तदन्यत्वं प्रमेयत्वे; तत्र साध्यकोटौ कृतकत्वानैकान्तिकत्वस्य निविष्टत्वात् तत्साधकत्वमप्यस्य ॥ किञ्चिदनैकान्तिकेत्यर्थाविवक्षायामपि पक्षे साध्यस्य बाधेऽपि प्रमेयत्वकृतकत्वरूपानैकान्तिकत्वांशस्य घटकत्वादेव तत्सिद्धिरस्त्विति चेत्—तर्हि साध्यस्य केवलान्वयित्वं न स्यात्। महाविद्यानुमानं हि तादृशम्। तथाच हेतुरनैकान्तिकः स्यादिति।

लक्ष्यं लक्षणमुत्थितिः स्थितिपदं मूलं फलं पातनमिति सप्तस्वंगेषु प्रतिप्रमाणसमायाः अनुगतं लक्षणमुक्तम्, लक्ष्याणि प्रदर्शितानि, उत्थितिपदविवक्षितमुत्थानहेतुमाह **अत्र सर्वत्रेति**। स्थितिपद मित्यनेन दूष्यांशविवक्षा। वाद्युक्तं साध्यं वा हेतुर्वा अन्यद्वा दूष्यमित्युदाहरणावसर एव सुज्ञानम्। प्रतिरोधबाधासिद्ध्यादेरारोप्यत्वात् तद्वृत्ताभ्रान्तिरेव फलमित्यपि।

अथ वादिना जातिवाक्यस्य दुष्टत्वमाविष्कृत्य पातनं यत् क्रियते, तत्र दुष्टत्वमूलमाह **दुष्टेति**। सर्वसमन्वयसौकर्याय साधारणं दुष्टत्वमूलं प्रदर्श्य पातनप्रकारमाह **साधारणेति**। **वादीति**। प्रतिवादिना हि युक्ताङ्गहीनमेव किञ्चित् प्रतिप्रमाणतया कल्पयित्वा तद्दूषितत्वात् वादिसाधनमयुक्तमिति भर्त्सनं

तत्तद्दोषाणां तथा तथा दर्शयितुं शक्यत्वात् इति। न च व्याप्त्यादि युक्ताङ्गमेव न भवतीति वक्तुं शक्यम्, प्रागेव तत्समर्थनात्। अन्यथा जातिशाक्यस्य दूषणत्वाप्त्यनभ्युपगमे तत्प्रयोगनैष्फल्यप्रसङ्गात्। अतो नियमरहितस्यापि दूषणत्वनियममिच्छन् प्रतिक्षिपति, स्वीकरोति च नियममिति सोऽयं वृषलविवाहमन्त्रन्यायः॥ (उत्कर्षसमः)

अपि च हेतुसाध्ययोरन्यतरबलात् कस्यचिदनिष्टस्याव्याप्तधर्मस्य दृष्टान्तात् पक्षे, पक्षाद् दृष्टान्ते वा समुत्कर्षप्रसञ्जनम् उत्कर्षसमः। तत्र हेतुबलेन दृष्टान्तात् पक्षे समुत्कर्षो यथा—यदि कृतकत्वाद् घटवत् अनित्यः शब्दः, तद्वदेव तत एव सावयवोऽपि किं न स्यादिति। साध्यबलेन यथा—यदि घटवदनित्यत्वं शब्दस्येष्यते, अनित्यत्वसहचरितं सावयवत्वमप्यस्य स्यादिति। न च साधनशक्त्यैवोत्कर्ष इति राजाज्ञा, साध्यशक्त्यापि तदविरोधात्, अनिष्टत्वाद्यविशेषाच्च। एवमेव पक्षाद् दृष्टान्ते समुत्कर्षस्याप्यसंभवशङ्का निरस्ता। यथा हि कृतकत्वाच्छब्दो नित्यश्चेत्, तद्वदेव तत एव सावयवोऽपि स्यादित्युत्कृष्यते, तथा शब्दवदेव तेनैव घटोऽपि निरवयवः स्यादित्युत्कर्षः शक्यः; समं चोभयत्रानिष्टत्वम्, अनतिप्रसक्तप्रसञ्जकविशेषयोगश्च; शब्दघटयोः साधनाङ्गशक्त्योत्कर्ष इति लक्षणव्यवस्थितेश्च।

शब्दाद् घटे निरवयवत्वोत्कर्षे शब्दानित्यत्वस्य किमायातमिति चेत्, घटाच्छब्दे सावयवत्वो-

---

क्रियते। ईदृशमाभासभूतं प्रतिप्रमाणं प्रतिवादिनं प्रत्यपि सुवचमिति वादी पातयति। अत इति। प्रतिवाद्युक्तो हेतुर्नियमरहित एव। अथापि नियमेन तस्य दूषकत्वमभिप्रयन् असाधकत्वानुमानं प्रयुङ्क्ते, तत्र हेतौ; असाधकत्वेन व्याप्तिरस्तीति स मन्यते। एवं नियमराहित्यस्य नियमस्य च संमत्या, वृषलविवाहमन्त्रन्यायः। "वृषलपरिणये जैनभक्ता जपन्तु" इत्यधिकरणसारावलिचिन्तामणौ, वृषलाः परिणयावसरे पुरोहितोपदिष्टाः अश्मानं प्रहरन्ति; न प्रहरामीति च वदन्ति" इत्युक्तम्। मूले जपशब्दो मन्त्रतां दर्शयतीति, "अमन्त्रके तद्विवाहे मन्त्रोच्चारणं व्याघातमावहति" इत्युक्तमिह व्याख्यायाम्, न प्रहरामीति मन्त्रः; प्रहरणमनुष्ठेयमिति च व्याघातः।

प्रतिप्रसंगसमाख्यजातौ उत्कर्षसमादिरन्तर्गतः। तत्रापि लक्षणपरिष्करणमधिकलक्ष्यप्रदर्शनञ्च कार्यमिति वक्तुमारभते अपिचेति। अव्याप्तधर्मस्येति। अनिष्टस्यैवाऽऽपादनं कार्यम्। तत्र व्याप्तधर्मस्याऽऽप्रादनं तर्काभासो न भवतीति अव्याप्तत्वमुक्तम्। उभयोरेकतरस्याव्यापकत्वेऽन्यतरस्याव्याप्यत्वं सिद्धम्। एतल्लक्षणसूत्रे साध्यदृष्टान्तयोरिति षष्ठ्यन्तवत् सप्तम्यन्तमपीति परिशिष्टप्रकाशेऽप्युक्तम्। अत इहापि पक्षे इति दृष्टान्त इति च प्रयोगः। साध्यपदं पक्षपरम्, दृष्टान्तात् उत्कर्षो नाम दृष्टान्तगतधर्मस्य तत्रेवात्रापि प्रसञ्जनम्। यदि साध्यशक्त्याऽप्युत्कर्षः, यदि च दृष्टान्तेऽप्युत्कर्षः, तर्हि अनुगमकाभावात् यत्किञ्चिच्छक्त्या यत्र क्वापीप्युत्कर्ष इत्युक्तावतिप्रसंगः स्यादित्यत्राह अनतिप्रसक्तेति। शब्दघटयोः पक्षदृष्टान्तयोः परं स्थितं प्रसञ्जकमस्ति, साधनांगत्वस्य साध्ये हेतौ च सत्त्वादुभयानुगमोऽपि। तच्छक्त्याद्यापादनं पक्षसाध्ययोरेव स्यात्। अन्यगतधर्मापादने च स्वरसतः युक्त्याभासोपि न स्यादिति भावः। पक्षेऽनिष्टापादनं प्रकृतेपयुक्तं स्यात्, दृष्टान्ते तदापादनस्य प्रकृते क उपयोग इति

त्कर्षेऽपि तस्य किमायातमिति तुल्यम् ॥ तत्र निरवयवत्वे सति अनित्यत्वमभिमतं सावयवत्वेन व्याह-न्यत इति हेतुदूषणपर्यवसायिविशेषविरोधश्चोदितः स्यादिति चेत्, तथापि साध्यमानस्यानित्य-त्वमात्रस्य न किंचिद्दूषणम् ॥ प्रतिबन्द्यभिप्रायेणोपाध्यभिप्रायेण वा तदुत्कर्ष इति चेत्, तुल्यम् । घटस्य निरवयवत्वप्रसङ्गे कथमुपाधिव्यञ्जनमिति चेत्, शब्दस्य सावयवत्वे कथम्? ॥ सावयव-त्वमनित्यत्वप्रयोजकम्; ततश्च सावयवत्वप्रसङ्गः हि प्रयोज्ये पर्यवस्यन् प्रयोजकाभावं व्यनक्तीति चेत्—तर्हि प्रयोजकं सावयवत्वमन्तरेण यदि प्रयोज्यं शब्दे स्यात्, घटेऽपि तथैव स्यादिति प्रसङ्गे तात्पर्यात् तुल्यमुपाधिव्यञ्जनम् ॥ अथ व्यापकसावयवत्वनिवृत्त्या व्याप्यानित्यत्वनिवृत्तिः पक्षेऽभिप्रेता, इह तु न तथेति—तदप्यसत्, अपकर्षसमादविशेषप्रसङ्गात् । अत्रापि च घटे निरव-यवत्वविपर्ययदर्शनेन पक्षेऽपि तत्समानयोगक्षेमतया साध्यनिवृत्तिसमर्थनाभिप्रायस्याविरोधात्, इति । तिष्ठत्वेतत् ॥

तदिह कस्यचित् साधनाङ्गस्य किंचिदनिष्टं प्रति व्याप्यत्वाभिमानः उत्थानहेतुः । हेतुवि-पर्ययदूष्यप्रतिकूलतर्कयोगमुखेनाप्रयोजकत्वमारोप्यम्; विशेषविरुद्धत्वं वा । तद्भ्रान्तिः फलम् ।

---

पृष्ट्वा प्रत्याह **शब्दादिति** । **शब्दानित्यत्वस्येति** । तत् किल प्रकृते दूष्यमिति भावः । निरवयव-त्वे सति अनित्यत्वम्=निरवयवत्वविशिष्टानित्यत्वम् । **अभिमतमिति** । यथा क्षित्यादौ सकर्तृकत्वानुमाने कर्तृमात्रस्य साध्यतया निर्देशेऽपि सर्वज्ञकर्तृकत्वरूपविशेषोऽभिमतः, तद्वदत्रानित्यत्वमात्रनिर्देशेऽपि निरव-यवत्वविशिष्टानित्यत्वमभिमतमिति भावः । **साध्यमानस्येति** घटरूपे दृष्टान्ते यावदस्ति तावन्मात्रमेव वादिसिषाधयिषितं चेत्—किं दूषणमित्यर्थः । **प्रतिबन्दीति** । आपादितं निरवयवत्वं यथा घटे नेष्यते, तथा घटवत् शब्दस्याप्यनित्यत्वादि नेष्यतामिति प्रतिबन्दिः । **उपाधीति** । सावयवत्वमनित्यत्वप्रयोजकम्; न तु कृतकत्वमिति हेतोः सोपाधिकत्वमित्यर्थः । **घटस्येति** । शब्दे प्रसज्यमानस्य सावयवत्वस्योपाधित्वमुक्तं युक्तम् । घटे प्रसज्यमाने निरवयवत्वे कस्य कुत्रोपाधित्वं व्यज्यत इत्युपपाद्यतामित्याशंका; अत्रोत्तरं विवक्षन्, यत् युक्तमित्युक्तम्, तदेवोपपाद्यतामिति प्रष्टारं पृच्छति **शब्दस्येति** । **प्रयोज्यम**नित्यत्वम् । **तथैव**= सावयवत्वमन्तरेणैव । प्रष्टा वदति, 'न मे तथा प्रसंगे तात्पर्यम्, अपितु पक्षे उपाध्यभावात् साध्यनिवृत्त्यनु-मान एवेति; तदाह **अथेति** । साध्यनिवृत्तौ तात्पर्ये अपकर्षसमत्वमेव स्यात्; नोत्कर्षसमत्वमिति प्रत्याह **तदप्यसदिति** । नन्वपकर्षसमे प्रथममेवापकर्षापादनम्, इह तूत्कर्षापादनमुखेनापकर्षे पर्यवसानमिति भेद इत्याशंक्य दृष्टान्ते पक्षात् निरवयवत्वोत्कर्षेऽपि पक्षे साध्यनिवृत्तिपर्यवसानं सुकरमित्याह **अत्रापिचेति** । दृष्टान्तात् पक्षे धर्मप्रसञ्जनमेव न्यायभाष्योक्तम्, पक्षात् दृष्टान्ते प्रसञ्जनमपि व्याख्यातृभिरादृतमे-तावतोपपादितम् । इदं लक्ष्यलक्षणरूपांगशोधनमेतावति स्थाप्यताम् । उपरितनांगोपपादनमत्र वक्त-व्यमारप्स्यत इत्याशयेन ह **तिष्ठत्वेतदिति** । **साधनांगस्य**=साध्यस्यानित्यत्वादेः, हेतोर्वा कृतकत्वादेः, **अनिष्टं** सावयवत्वम् । **हेत्विति** । **विपर्ययाय** साध्याभावाय यो दूष्यः हेतुः तत्प्रतिकूलतर्कमुखेनेत्यर्थः । स्यात् । अप्रयोजकत्वमिति । सावयवत्वस्य शब्दे आपादनं हि सावयवत्वमेवानित्यत्वप्रयोजकम्, न तु

दुष्टत्वमूलं न युक्ताङ्गहीनत्वम्, व्याप्तिलक्षणाङ्गस्य जातिसाधने हानेः; न हि यत् कृतकं, तत्, सावयवमिति प्रक्रियया तदंशपक्षेषु व्याप्तिर्ग्रहीतुं शक्या, क्वचिद्विषये बाधदर्शनात्। अतो यद्यव्याप्यमव्यापकं न साधयेत्, कथं तन्निदर्शनेन साध्यस्य व्यापकस्य धर्मं प्रतिक्षिपेत? [व्याप्तं च कृतकत्वमनित्यत्वेन; अनित्यावस्थातिरिक्तस्य ध्वंसस्याभावात्; भावेऽपि भावत्वेन सतीति विशेषणेन वा, कृतकत्वलक्षणान्तरेण वा तद्व्यवच्छेदसिद्धेः, निवृत्तप्रतिबन्धस्वरूपप्राप्तमुक्तधीविकासे च तदतिरिक्तागन्तुकसाध्यत्वलक्षणकृतकत्वस्याभावात् इति।

अयुक्ताङ्गाधिकत्वं वा। युक्ताङ्गहीनप्रतितर्कराहित्यस्यापि साधनाङ्गत्वेन स्वीकरणात्; अन्यथा जातिसाधनेपि तादृशाङ्गयोगस्य सम्भवात् स्वव्याघातः; तथाहि—नेदं साध्यसाधकम्, अव्याप्तधर्मोत्कर्षमुखेन विरुद्धत्वात् संप्रतिपन्नविरुद्धवत्—इति हि जातिवाक्यार्थः। इदमपि साधनं न दूष्यं दूषयेत्; तत्रापि तथाविधाव्याप्तधर्मोत्कर्षस्य सुशकत्वात्; सन्ति हि धर्माः साध्यसाधनातिरेकिणस्तत्सहचरिताः संप्रतिपन्नविरुद्धवर्तिनः, अन्यथा पक्षदृष्टान्तवैधर्म्यासिद्धिप्रसङ्गात्। एवमुदाहरणान्तरेष्वपि प्रत्युत्तरं योज्यम्॥

नन्वेवमस्त्वव्याप्तधर्मोत्कर्षे स्वव्याघातः, व्याप्तोत्कर्षे तु कथम्? न कथंचित्; इष्टव्याप्तोत्कर्षे प्रकृतानुपमर्देनार्थान्तरनिग्रहस्थानत्वात्। अनिष्टव्याप्तापादने सत्तर्कत्वेन जातित्वाभावात्। अत एवेश्वरानुमानादिषु व्याप्तोत्कर्षस्याजातित्वं स्थितम्। उक्तं चानुमानिकैरपि, "व्याप्तौ सत्यां

---

कृतकत्वमिति विवक्षया। **विशेषविरुद्धत्वमिति**। सावयवत्वापादनं हि, निरवयवत्वविशिष्टानित्यत्वरूपः शब्दे वाद्यभिमतो यो विशेषः, तदभावव्याप्यमेव घटादौ कृतकत्वं दृष्टमिति भावः। **व्याप्तिलक्षणाङ्गस्य**=व्याप्तिरूपस्यांगस्य। दुष्टत्वमूलं पातनञ्चाह दुष्टत्वेति। आपादितं सावयवत्वं प्रति कृतकत्वस्याव्याप्यत्वात् अनित्यत्वं प्रति च व्याप्यत्वात् जातिवादुक्तं दुष्टमित्युपपादनात् पातनसिद्धिः। ननु ध्वंसे कृतकत्वसत्त्वेऽपि ध्वंसप्रतियोगित्वानित्यत्वाभावान्न व्याप्यत्वव्यापकभाव इति शंकां परिहरति अनित्यत्वस्थेति। अवस्थातिरिक्तस्य ध्वंसस्य सिद्धान्तेऽभावात् अनित्यत्वमप्यस्ति। तार्किकरीत्या चेत्, अस्तु भावत्वे सति कृतकत्वादिति हेतुः। कृतकत्वमुपादानसंबन्धिकृतिसाध्यत्वम्; ध्वंसस्य चोपादानास्वीकारान्न हेतुसत्ता। ननु मुक्तगते धर्मभूतज्ञानविकासे कृतके पश्चात् तस्य ध्वंसाभावात् साध्याभावादनेकान्त इत्यत्राह **निवृत्तेति**। तद्भिन्नत्वमागन्तुकसाध्यरूपकृतकविशेषणमिति भावः। यद्वा कृतकत्वं तद्भिन्नागन्तुकत्वम्। यद्वा साध्यत्वं कृतकत्वं कृतिसाध्यत्वम्। कृतीच्छयोर्वैलक्षण्यस्य सिद्धान्तेऽपीष्टत्वात् यत्रोत्पद्यमाने देहादिव्यापारस्यापि कारणत्वं तत्रैवेश्वरकृतेरपि कारणत्वम्, अन्यत्रत्विच्छामात्रस्येति तत्संकल्पायत्तोऽपि धीविकासः तत्साध्यकृतिविषयो न भवतीति न कृतकत्वमिति भावः। युक्तांगहीनत्वमुक्त्वम्, अन्यदप्याह **अयुक्तेति**। **उत्कर्षमुखेनेति**। प्रतिप्रमाणसमे प्रतिप्रमाणविरुद्धत्वमुक्तम्; अत्र प्रतितर्कमर्माशेपे उत्कर्षसमे उत्कर्षमुखेन विरुद्धत्वमेव हेतुरिति। **न कथञ्चिदिति**। व्याप्तिराहित्ये किल जातिता तदा तु अर्थान्तररूपं निग्रहस्थानमेव दोषः। **व्याप्तौ सत्यामिति** न्यायकुसुमाञ्जलिवाक्यम् (5-स्त)। यदि कार्यत्वहेतोः विशिष्य शरीरिवर्तृकत्वेन सह व्याप्तिरस्ति, तदा पक्षे तदिष्यते। व्याप्त्यभावे तु तदापादनमशक्यमिति तदर्थः। कथं शरीरजन्यत्वव्याप्तिः कार्यत्वे संभवति ;

नेदमनिष्टम्, असत्यां तु न प्रसङ्गः" इति। यद्यपि च कार्यत्वादिलक्षणहेत्वपेक्षया शरीरजन्यत्वादेर्व्यापकत्वं पक्षीकृतेष्वेव दूर्वादिषु बाधान्निरस्तम्; तथापि सिषाधयिषितसकर्तृकत्वाद्यपेक्षया तेषां व्यापकत्वस्य दुरपह्नवत्वात् साध्यमुखेनोत्कर्षे तस्य व्याप्यत्वान्न दोषः। वेदप्रणयनादिषु चेश्वरस्यापि सशरीरस्यैव कर्तृत्वं परेऽप्यनुजानते। तत्र चेद् व्याप्त्यैव शरीरपरिग्रहः, तुल्यमन्यत्रापि। अथ तन्निरपेक्षं क्वचित् कर्तृत्वम्, तदा त्वशरीर एव प्रणयतां वेदं समयकरणादिकं च; तस्याशक्यताभावात् इति॥ (अपकर्षसमः)

व्यापकाभासनिवृत्त्या कुतश्चित् कस्यचिद् व्याप्याभासस्यापकर्षणम् अपकर्षसमः। स चानेकधा—पक्षात्, सपक्षात्, उभयतः, विपक्षाच्चेति। पक्षादपि हेतुसाध्ययोरन्यतरस्य, द्वयोर्वा। तथा सपक्षात्; उभयतोपि। विपक्षात्तु व्यतिरेकदृष्टान्ताद्धेत्वभावसाध्याभावयोरन्यतरस्योभयोर्वा, विपक्षमात्राद्धेत्वभावस्य इति विशेषः। तत्र पक्षादपकर्षो यथा—यदि घटादिवत् कार्यत्वात् क्षित्यादि सकर्तृकं साध्यते, तदा आत्मादिवत् मनुष्याशक्यक्रियत्वात् कार्यत्वम्, सकर्तृकत्वम्, उभयं वा किं न बाध्येत। तच्चेत् साधयेत्, इदमपि बाधेत। न चेदिदम्, न तदपि; अविशेषादिति। अत्र हेत्वपकर्षे स्वरूपासिद्धिः, साध्यापकर्षे बाधः, उभयापकर्षे तूभयमिति।

असमीक्षितोदाहरणान्तरास्त्वेतावति विश्रान्ताः। सपक्षादपि हि तयोरपकर्षे साध्यविकलत्वसाधनविकलत्वोभयविकलत्वानि। व्यतिरेकदृष्टान्तीकृताद् विपक्षात् हेत्वभावसाध्याभावयोरपकर्षे साधनाव्यावृत्तत्वसाध्याव्यावृत्तत्वोभयाव्यावृत्तत्वानि। तत्रापि हेतुदोषचिन्तायामप्रयोजकत्वानैकान्त्यादि। अदृष्टान्तीकृतात् विपक्षमात्रात् हेत्वभावस्यापकर्षे तु विरोधः, साधारण्यं वा। न चैवमपकर्षणामसंभवः, उत्थानहेत्वाद्यविशेषात्। नापि जात्यन्तरेऽन्तर्भावः, तल्लक्षणानन्वयात्, अविशेषप्रसङ्गमात्राद्यविश्रान्तेश्च। नाप्यजातित्वम्, युक्ताङ्गहान्याद्यविशेषात्। अपकर्षसमसमाख्यानिरुक्तिमात्रेण संग्रहे संभवत्यनुक्तसमाख्यान्तरोक्तीतिश्चायुक्ता। न चाऽऽपाद्यदोषभेदाज्जात्यन्तरता, पक्षाद्धेतुसाध्ययोरपकर्षेऽप्यसिद्धिबाधलक्षणापाद्यभेदेन तत्प्रसङ्गात्।

---

अतस्तद्वाक्यमनुपपन्नमित्याशंक्य परिहरति यद्यपिचेति। कार्यत्वेन सिद्धे दूर्वाकुरादौ शरीरजन्यत्वस्य प्रागनुपलम्भादव्यापकत्वमिति कार्यत्वरूपहेतुमुखेन तदापादनासंभवेऽपि, सकर्तृकत्वस्यापि दूर्वादावसिद्धत्वात् सकर्तृकत्वरूपसाध्यव्यापकत्वस्य शरीरजन्यत्वे स्थित्या साध्यमुखेनापादनं भवत्येव। न च वेदप्रणेतृत्वेनाशरीर ईश्वरस्तदिष्ट इति वाच्यम्; उदयनाचार्यैरेव मायाविदृष्टान्तेन भूतावेशन्यायेन च तदा शरीरपरिग्रहस्योक्तत्वात्। ताल्वादिव्यापाराधीना हि वर्णा इति। अन्यत्रापि=दूर्वादावपि।

अपकर्षसमं निरूपयति व्यापकाभासेति। जातित्वसंपादनाय आभासपदम्। पक्षादपकर्षो नाम पक्षे संभावितस्य धर्मस्य तत्रैवाभावप्रसञ्जनम्। एवञ्च 'विपक्षादपकर्षः विपक्षे साध्याभावादेरभावप्रसञ्जनम्। पक्षादपकर्षमात्रस्योदाहरणं दृष्ट्वा तावत्यैव विरतं पूर्वैः। दृष्टान्तादितोऽपकर्षेऽन्य एव दोष उत्प्रेक्षितः। अत्र त्वपकर्षसमाख्यायाः सामान्यत्वात् पक्षापकर्षसमेति समाख्याविरहात् उदाहरणानां वक्ष्यमाणत्वाच्च सपक्षात् विपक्षादप्यपकर्षो व्युत्पाद्यते। तदिदमुच्यते असमीक्षितोदाहरणान्तरा इति। तत्प्रसंगादिति। हेत्वपकर्षे असिद्धिः, साध्यापकर्षे बाध इति दोषभेदे सत्यपि अनुमानदोषत्वाविशेषेण

तत्र सपक्षादपकर्षणं यथा–विगीतम् ईश्वरशरीरम्, ईश्वरतज्ज्ञानेतरद्रव्यत्वात्, संप्रतिपन्नरामकृष्णादिशरीरवत् इत्यनेश्वरेतरत्वं रामादिशरीरे दुर्वचम्, ईश्वरस्यैव सर्वत्र सच्छब्दा(सर्वशब्दा)र्थत्वात्। तद्व्यतिरेकव्यापकतया शशशृङ्गादिषु दृष्टस्यासत्त्वस्य संप्रतिपन्नशरीरे निवृत्तेरिति हेत्वपकर्षात् साधनविकलो दृष्टान्त इति। साध्यापकर्षणं यथा—रामकृष्णादिशरीरस्येश्वरशरीरत्वं नास्ति; ईश्वरो ह्यशरीरः; यत् शरीरम्, तत् शरीरिणः कर्मफलभोगायतनम्, यथा क्षेत्रज्ञशरीरम्। इदमपि चेदीश्वरशरीरं स्यात्, तत्कर्मफलभोगार्थत्वप्रसङ्गः। न च तदस्ति। अतो न तच्छरीरमिति। उभयतोऽप्यपकर्षणमप्येतेनैवोदाहर्तव्यम्।

विपक्षाद्धेत्वभावापकर्षणं यथा—धूमानुमाने कश्चिदाह, यदि महानससाधर्म्यात् पर्वतो महानससाधर्म्यान्तरवान्, तर्हि निर्धूमत्वव्यापकतया खपुष्पादिषु दृष्टस्यासत्त्वस्य व्यावृत्तौ निर्धूमत्वमपि व्यावर्तेत; न हि—व्याप्याद् व्यापकं सिध्येत्, व्यापकनिवृत्त्या तु व्याप्यभूतया व्यापिका व्याप्यनिवृत्तिर्न सिध्यतीति सुवचम्। ततश्च निरग्नौ महाह्रदे निर्धूमत्वनिवृत्त्या हेतुवृत्तेरनेकान्तः। एवं महाह्रदे व्यतिरेकदृष्टान्ततया निदर्शितेऽप्यसत्त्वनिवृत्त्या साधनाभावं साध्याभावमुभयाभावं वा व्यावर्त्य व्यतिरेकग्रहणं बाध्यमिति।

अत्र व्यापकनिवृत्तिवद् व्यापकाभासनिवृत्तेरपि व्याप्यत्वाभिमान उत्थानहेतुः। यथायथं पक्षहेत्वादि साधनाङ्गं दूष्यम्। बाधादिकमारोप्यम्। तद्भ्रमः फलम्। दुष्टत्वमूलं त्वसाधारणं युक्ताङ्गहानिः, व्यापकत्वमनादृत्य सहचरितमात्रनिवृत्त्या व्याप्येतरनिवृत्त्युपन्यासात्; व्याप्तिभङ्गश्च यथायथं तत्र तत्र प्रत्यक्षानुमानागमैर्ग्राह्यः। अयुक्ताङ्गाधिकत्वं वा, वस्तुसिद्धैः सहचरितसमस्तवस्त्वन्तरनिवृत्त्यभावापेक्षाङ्गीकारात्। अविषयवृत्तित्वं वा, व्याप्यनिवर्तनानुगुणव्यापकनिवृत्तिशक्तेः सहचरितनिवृत्तावपि संचरणादिति। एवमपि चेत् किंचिद्बाध्येत, तदा बाधिताबाधितव्यवस्थैव न स्यात्, सर्वत्र यत्किंचित्सहचरितनिवृत्तेः सुलभत्वात्। अत एव साधारणः स्वव्याघातः, जातिवादिसाध्यादिष्वप्यसाधकत्वादिषु सहचरितधर्मान्तरविरहस्यावश्यंभावात्, अन्यथा जातिसाधनेऽपि पक्षहेत्वादिविभागस्य दुर्वचत्वप्रसङ्गात्; वादिसाधनं स्वसाध्यसाधकं

---

अपकर्षेण संग्रहे हेतुवैकल्यादीनामपि तत एव संग्रह एवोचित इति भावः। **ईश्वरस्यैव सर्वशब्दार्थत्वा**दिति पाठे सर्वशब्दवाच्यत्वादित्यर्थः। तथाचेश्वरेतरत्वं कस्यापि न भवति। **तद्व्यतिरेकः**=ईश्वरेतरत्वम्। तत् शशशृंगमात्रे। **सच्छब्दार्थत्वा**दिति पाठे तु सत्पदं शशशृंगपदस्यापि शब्दतया ईश्वरस्य च सर्वशब्दवाच्यतया शशशृंगेऽपि ईश्वरेतरत्वं दुर्वचमिति शंकापरिहाराय। शशीयत्वविशिष्टशृंगमित्यर्थस्यासत्त्वात् शशशृंगपदस्य सद्विषयकत्वाभावान्न सच्छब्दत्वम्। सद्विषयकशब्दार्थत्वमेवेश्वरस्येत्याशयः। **उभयतोऽपी**ति। पक्षात् सपक्षाच्चेत्यर्थः। **एतेनैवे**ति। अत्रैव पक्षे ईश्वराभेदस्यावयवकतया हेतुसाध्ययोरभावोपपादनसंभवादिति भावः। साधारणं दुष्टत्वमूलं स्वव्याघातः; तद्वत् असाधारणं दूष्टत्वमूलं यत् त्रिविधं तत् सर्वमप्यत्र भवतीत्याह **दुष्टत्वे**त्यादिना। **व्याप्यनिवर्तने**ति व्यापकाभावे व्याप्याभावसंपादनशक्तिरस्ति; न तु सहचरितयत्किञ्चित्प्रतियोगिकाभावेऽपि। अतो जातिवाद्युक्तमसमीचीनम्। यदि तथेष्यते, जातिवाद्युक्ते असाधकत्वानुमानेऽपि असाधकत्वरूपसाध्यस्य तत्सचरितयत्किञ्चिन्निवृत्तिप्रदर्शनेन निवृत्त्यापादनं स्यात्। एवं हेत्वभावापादनमपि; पक्षे पक्षतावच्छेदकाभावापादनमपि;

न भवति, सहचरितनिवृत्त्यपहृतविषयत्वात्, निषिद्धत्वनिवृत्तिलुण्ठितसाध्यनैगमिकालम्भाधर्मत्व साधनवत् इत्यादिप्रक्रियया ह्यत्र जातिवाक्यविश्रान्तिः। अत्रासाधकत्वादिसहचरितदोषान्तरादिनिवृत्तेस्तद्बाधोपि दुर्वारः। न च, अस्तु सर्वं बाधितमिति शक्यं वक्तुम्, बाधस्याबाधे कस्यचिदबाधेन सर्वाबाधात्, तस्यापि बाधे बाधस्यैव बाधेन सर्वाबाधादिति। न चात्र प्रक्रियासमाख्यबाधसमेन संकरः; तुल्यबलत्वाभ्युपगमपूर्वकत्वात् तत्र प्रत्यवस्थानस्य। इह तु तदभावात्। हेतुबाधादिष्वसंकीर्णोदाहरणान्तरसंभवाच्च। प्रतिप्रमाणसमसेऽन्तामावं तु भवतु वा मा वा। उक्तप्रकारेण विवेकस्तावदुपपन्नः इति। (वर्ण्यसमादिविषयोपोद्घातः)

अथ वर्ण्यसमादेरुत्थानहेत्वादिव्यञ्जनायेदं तावद् ब्रूमः—पक्षदृष्टान्तौ प्रागेव लक्षितस्वरूपौ। हेतोश्च व्यक्तिभेदेऽपि सामान्याकारसंगृहीतता व्याप्तिश्च स्थापिता। तत्र पक्षवर्तिन्या हेतुव्यक्तेरसिद्धार्थत्वम्, साध्यज्ञापनाय प्रवृत्तत्वम्, व्याप्तिग्राहकप्रमाणेन विशेषतोऽनास्कन्दितत्वम्, संदेह-

---

पक्षत्व. साध्यत्व. हेतुत्वादिधर्माभावापादनमपीति विशिष्टार्थः। **निषिद्धत्वेति**। **नैगमिक आलम्भः** वैदिकाग्नीषोमीयादिहिंसा। सोऽधर्मः हिंसात्वादिति प्रयोगे निषिद्धत्वमुपाधिः। वेदविहितहिंसायां निषिद्धत्वनिवृत्त्या अधर्मत्वं लुण्ठितम्=निवर्तितम्। एवं लुण्ठितं यत् तदधर्मत्वरूपं साध्यं तस्य साधकं यत् हिंसात्वं तद्वत् इदमपि स्वसाध्यसाधकं न भवतीत्यर्थः। यदि सर्वबाधोऽप्यस्त्विति जातिवादी ब्रूयात्—तथा तेन दुर्वचमित्याह **नचास्त्वित्यादिना**। प्रकरणसमसांकर्यं वारयति **न चात्रेति**। प्रकरणसमलक्षणसूत्रे **प्रक्रिया**पदसत्त्वात् तत्प्रयोगः। तेन **प्रकरणसम**पदस्य बाधसमार्थकत्वं कथमिति शंकापरिहारः। **प्रक्रिया** नाम प्रकर्षेण क्रिया। साध्यसाधनक्रियापेक्षयाऽस्याः क्रियायाः प्रकृष्टता च न समबलत्वे, किंतु प्रबलत्वे। अतः **प्रक्रिया** बाधना। **हेतुबाधेति**। प्रकरणसमो हि साध्याभावरूपबाधसमः। यत्रोदाहरणे हेतुबाधादिमात्रं तत्र तस्य नावकाशः। तत्राप्यसिद्धिसमादेः सुवचत्वात् प्रतिप्रमाणसमान्तर्भावः स्यादिति चेत्=सर्वत्राप्यनुमानप्रयोगे हेत्वाभासत्वापादन एव पर्यवसानात् प्रतिप्रमाणसमान्तर्भावो भवेदेव। मुखभेदाद् भेद इति वक्तव्यम्। सर्वथाऽत्रोक्तः सर्वविधोऽप्यपकर्षः प्रतिप्रसंगसमान्तर्गतजात्यन्तरानन्तर्भूत इत्याशयेनैतावदुक्तमिति भावः॥

वर्ण्यसमावर्ण्यसमौ लक्षयिष्यन् एतज्जात्युत्थानहेतुः पक्षदृष्टान्तगतहेतुव्यक्त्योर्मिथो वैलक्षण्यमिति वक्तुं वैलक्षण्यं रूपपञ्चकात्मकं स्थितं पीठिकया प्रथमं व्युत्पादयति **अथ वर्ण्येति**। **वर्ण्यः** साध्यवत्तया ख्यापनीयः पक्ष इति **परिशिष्टे**। अत्र "वर्ण्यः साध्यः" इत्युक्तिरपि सूत्रे साध्यपदेन पक्षस्यैव प्रायो निर्देशात्। अवर्ण्यः=तद्भिन्नः दृष्टान्तः। हेतुतावच्छेदकत्वेनाभिमतं यद्रूपं तदवच्छिन्नहेतुमत्त्वमेव पक्षे दृष्टान्ते चापेक्षितम्। न तु तत्रतत्र हेतुव्यक्तौ स्थितानि यावन्ति रूपाणि तावद्विशिष्टतया हेतुमत्त्वम्। एवं स्थिते जातिवादी तावद्वत्त्वमपेक्षितं कृत्वा चोदयति। **तत्र** पक्षे हेतोर्नियमेन स्थितानि रूपाणि परिशिष्टोक्तानि विशदयन् आह **तत्रेति**। असिद्धार्थत्वं साध्यस्येतः परमेव साध्यत्वात् सिद्धत्वाभावात्। व्याप्तिग्राहक-

समानविषयत्वम्, स्वरूपभेदश्चेति पञ्च रूपाणि; सिद्धार्थत्वे पक्षस्वरूपव्याघातात्, साधननैरर्थक्याच्च; साध्यज्ञापनप्रवृत्त्यभावे हेतोरफलत्वात्, हेतुत्वव्याघाताच्च। व्याप्तिग्राहकप्रमाणेन विशेषतो विषयीकृतत्वे विप्रतिपत्त्यभावप्रसङ्गात्, प्रयोगनैष्फल्याच्च; संदेहाभावस्त्वनुल्लेखेन, निश्चयेन वा? पूर्वत्र किं साध्येत? उत्तरत्र सिद्धं किमर्थं साध्येत?। तथा सैव चेद्धेतुव्यक्तिः, तदा सिद्धार्थत्वादेरवश्यम्भावादुक्तदोषानतिवृत्तिः। कृत्तिकारोहिण्यादिषु चक्रप्रवाह(प्रवह?)वात्याविक्षेपादिवशात् तत्तदुदयादिव्यक्तिभेदा व्यवस्थिताः, अन्यथा तत्राप्यनुमेयपरिशेषाभावात्। एवं दृष्टान्तवर्तिहेतुव्यक्तेरुक्तरूपविपर्ययेण सिद्धार्थत्वादिरूपपञ्चकं शाश्वतिकम्, साध्यासिद्धौ सपक्षस्वरूपव्याघातात्, संप्रतिपत्त्यर्थं व्याप्त्युदाहरणासंभवाच्च। अत एव रूपान्तराणामपि विपर्ययः सिद्धः। अपि च स्वयं चेत् तत्र साध्यज्ञापनाय प्रवर्तेत, ततो दृष्टान्तान्तरमन्वेषणीयम्; तत्रापि तथेत्यनवस्था। अतस्तत्र साध्यमन्यतो वेदितव्यम्। व्याप्तिग्राहकप्रमाणाविषयत्वे संदिग्धार्थत्वे च पक्षदृष्टान्तयोरविशेषः, स्वरूपाभेदे च पूर्वोक्ता दोषाः॥ न च पक्षो नास्तीति प्रतिज्ञा तुं शक्यम्, एतत्प्रतिज्ञावाक्यार्थाभ्युपगमे पक्षाभ्युपगमात्, तदनभ्युपगमे पक्षप्रतिषेधासिद्धेः। एवं हेतुमात्रनिषेधोऽपि न शक्यः, कारकनिषेधे स्वकीयसर्वप्रवृत्तिविरोधात्॥ ज्ञापकनिषेधेऽपि परवाक्यतः स्वस्यार्थबोधमभ्युपगम्य परबोधार्थवाक्यप्रयोगायोगात्, हेतुनिषेधे च सहेतुके व्याघातात्, अहेतुके तथैव हेतुसिद्धेरपि विरोधाभावात्। एवं दृष्टान्तोऽपि सामान्यतो निषेद्धुं न शक्यः,

---

प्रमाणं भूयोदर्शनम्। तत्र दृष्टान्तगतहेतुव्यक्तीनामेव विषयत्वम्। **विशेषतः**=तद्व्यक्तित्वादिना **संदेहसमानविषयत्वं** साध्यवत्त्वसंदेहविशेष्यभूतपक्षकत्वम्। **स्वरूपभेदः** सपक्षवृत्तिहेतुव्यक्तिभिन्नत्वम्। एषामावश्यकत्वमुपपादयति **सिद्धार्थत्व** इत्यादिना। **अनुल्लेखेन**—साध्यस्यैव ज्ञानाविषयत्वेन। **सैव** सपक्षवृत्तिरेव। ननु देशविशेषे कृत्तिकादर्शनेनाऽऽविर्भविष्यन्ती रोहिण्यनुमीयते। हेतुभूतकृत्तिकाव्यक्तिः पूर्वदिनादिषु दृष्टा संप्रति दृश्यमाना चैकैवेति कथं तत्र हेतुव्यक्तिभेद इत्यत्राह **कृत्तिके**ति नक्षत्रैक्येऽपि कृत्तिकास्तमयरोहिण्युदयरूपधर्मयोरेव हेतुसाध्यरूपत्वस्वीकारात् व्यक्तिर्भिन्नैवेत्यर्थः। दिनादिभेदेनोदयादेर्भिन्नत्वे हेतुमाह **चक्रे**ति। सावर्तजलप्रवाहतुल्यत्वं वात्यायां विवक्षितम्। वस्तुनोऽत्र **प्रवहे**ति पाठो युक्तः तदा शिंशुमारचक्रसंबन्धिप्रवहाख्यप्रबलवायुकृतप्रेरणवशात् उदयादि भवतीत्यर्थः। तथाच (वि.पु.2-12-28.) "अलातचक्रवत् यान्ति वातचक्रेरितानि तु। यस्मात् ज्योतींषि वहति प्रवहस्तेन स स्मृतः" इति। **पञ्चक**मिति। सिद्धार्थत्वं साध्यसाधनायाप्रवृत्तत्वं व्याप्तिग्राहकप्रमाणविषयत्वं निश्चयसमानविषयकत्वं पक्षगतहेतुव्यक्तितोऽभिन्नत्वञ्चेत्यर्थः। **अत एव**=व्याप्त्यर्थमुदाहरणासंभवादेव। **स्वरूपाभेदे** पक्षवर्तिहेतुव्यक्त्यभिन्नत्वे। एवं पक्षे दृष्टान्ते **च हेतुव्यक्तेः रूपभेदे** उपपादिते पक्षहेतुदृष्टान्ता एव मा भूवन्, किमत्र विशेषचिन्तनेनेति वादं क्षिपन् क्रमेण तेषामावश्यकत्वमाह **न च पक्ष** इत्यादिना। ननु निर्मर्यादप्रश्नानामवसानाभावात् किमित्युत्तरमिति चेत्—सर्वोऽपि स्वक्रियाव्याघातप्रदर्शनपर्यन्तमेव पृच्छेत्। तत्रैवावसानमिति। हेतुरेव नेति किं कारकहेतुनिषेधः, ज्ञापकस्य वेति विकल्प्य निरस्यति **कारके**ति। **हेतुनिषेधे** इति। हेतुनिषेधविषये हेतुरस्ति न वा। आद्ये कथं हेतुसामान्यनिषेधः।

लौकिकपरीक्षकसर्वपुरुषसंमतत्वात्। तत्रापि च वाङ्मात्रेण निषेधे तावतैव तत्साधनस्याव्यविरोधात्। हेतुतो निषेधे अन्वयरूपस्य व्यतिरेकरूपस्य वा कस्यचिद् दृष्टान्तस्य दुस्त्यजत्वात् इति प्रतिष्ठितैव पक्षहेतुदृष्टान्तमर्यादा ॥ (वर्ण्यसमः)

एवं स्थिते दृष्टान्तवर्तिहेतुव्यक्तेः पक्षधर्मत्वापेक्षितासिद्धार्थत्वादिरूपविरहे साधनविकलत्वादिप्रसङ्गाद् दृष्टान्तस्यापि तादृग्रूपहेतुमत्तया वर्ण्यत्वेन प्रत्यवस्थानं वर्ण्यसमः; यथा—ब्रह्म सविशेषम्, पदार्थत्वात्; यः पदार्थः स सविशेषः, यथा घटः इत्युक्ते, जातिवाद्याह—पक्षे साधकतया प्रयुक्तस्य हि हेतोर्व्याप्तिर्दृष्टान्ते प्रदर्श्यते; नान्यस्य, अनन्वयादिप्रसङ्गात्। स च यादृग्रूपविशिष्टः पक्षे दृष्टः, तादृग्रूपविशिष्ट एव दृष्टान्तेप्युदाहरणीयः; अन्यथा सामान्यवत्त्वे सति अस्मदादिबाह्येन्द्रियग्राह्यत्वादिति विशिष्टहेतुप्रयोगे सामान्यवत्त्वादिमात्रस्य व्याप्त्युदाहरणप्रसङ्गात्। एवमेकदेशव्यतिरेकेण व्यतिरेकोदाहरणप्रसङ्गात्। ततश्च पक्षवर्तिनो हेतोरसिद्धार्थत्वादयो रूपविशेषास्तद्धेतुकरूपभेदश्च दृष्टान्तेऽस्ति वा न वा? अस्ति चेत्, असिद्धार्थत्वादिभिः साध्यविकलत्वादिकमनिवार्यम्; न चेत्, प्रकृतसाधनविकलत्वाद् दृष्टान्त एव तादृशहेतुमत्तया वर्ण्यः, अलं पक्षे साध्यवर्णनेति।

अत्र सपक्षवर्तिहेतुव्यक्तेः पक्षमात्रविवक्षितरूपवैपरीत्येनोपलम्भ उत्थानहेतुः।

---

अन्त्ये, यथा हेतुं विनैव हेतु निषधसत्ता, तथा हेतुंविना हेतोरेवसिद्धिः कथं नेति। अन्वयरूपस्य· हेतुसाध्यान्वयविशिष्टस्य। प्रतिष्ठितेति। पक्षादीनां मर्यादा, पक्षदृष्टान्तभेदेन हेतुव्यक्तेः रूपभेदमर्यादा च प्रतिष्ठिता। एतन्मर्यादोल्लंघनेन दृष्टान्तस्य पक्षत्वं वर्ण्यसमजातौ, पक्षस्य दृष्टान्तत्वमवर्ण्यसमजातौ च शंक्यते। तदाह एवमिति। विरहे एवं स्थिते सतीत्यन्वयः। प्रसंगदिति। यादृग्रूपो हेतुः पक्षे, तादृग्रूपतद्वत्त्वाभावे साधनविकलत्वप्रसंगात् तथावर्ण्यत्वम्। पक्षसम इत्यनुक्त्वा वर्ण्यसम इत्युक्तिः, वर्ण्यत्वरूपधर्मस्य प्रत्यवस्थानविषयत्वात्। साध्यसमोऽपि जातिविशेषः सूत्रे। तत्र पक्षस्येव दृष्टान्तादीनामपि साध्यत्वाकारः स्यात्; अन्यथाऽनुमानसंबन्धायोगादिति प्रत्यवस्थानम्।

अन्यथा=यावद्धर्मविशिष्टो हेतुः तावद्विशिष्टमादायैवान्वयव्याप्तिः तावद्विशिष्टहेत्वभावमादायैव च व्यतिरेकव्याप्तिर्वक्तव्येत्यस्यानंगीकारे। सामान्येति। शब्दो गुणः विशेषगुण इति वा, सामान्यवत्त्वे सति बाह्यैकेन्द्रियग्राह्यत्वादित्यनुमानम्। सामान्ये व्यभिचारवारणाय सामान्यवत्त्वनिवेशः। आत्मनि व्यभिचारवारणाय बाह्येति। घटादौ व्यभिचारवारणाय एकेति। इन्द्रियव्यवस्थाहेतुत्वादिति वा बाह्येन्द्रियग्राह्यत्वादित्यस्यार्थः। अतो न प्रभायां भर्जनकपालाग्नौ वा व्यभिचारः। प्रकृते च सामान्यवत्त्वांशमात्रेणान्वयव्याप्तिर्वा व्यतिरेकव्याप्तिर्वा नेष्यते किल। तद्वत् असिद्धार्थत्वादिहेतुविशेषणैरपि विशेषित एव हेतुरुदाहरणे प्रदर्शनीय इत्याह जातिवादी। शेषं सुगमम् ॥

दृष्टान्तादिकं दूष्यम् । साधनविकलत्वादिकमारोप्यम् । फलं तद्भ्रान्तिः । असाधारणं दुष्टत्वमूलं चायुक्ताङ्गाधिक्यम्; न हि दृष्टान्तवर्तिन्या हेतुव्यक्तेरसिद्धार्थत्वादिकं युक्तम्, तथा सति दृष्टान्तत्वभङ्गप्रसङ्गात् । व्याप्तिसंप्रतिपत्तिस्थानं हि दृष्टान्तं ब्रूमः । न चासिद्धार्थत्वादिसंभवे तद्भावसिद्धिः । अत एव युक्ताङ्गहानिरपि; दृष्टान्तवर्तिहेत्वङ्गस्य सिद्धार्थत्वादेस्त्यागात् । अविषयवृत्तित्वं वा; पक्षवृत्तिहेत्वङ्गानां दृष्टान्तवर्तिनि संचरणात् । एवमपि चेत् साधनविकलत्वादिः प्रसज्येत, तथा सति अनुमानजातीयमेवोच्छिन्नं स्यात् । न चैवमस्त्विति वाच्यम्, तत्र व्याघातादेः प्रागेवोक्तत्वात् ॥ अपि च, एवं पर्यनुयुञ्जानश्च जातिवादी किं दृष्टान्तवर्तिहेतुव्यक्तेः स्वभाववैषम्यमात्रं प्रकाशयति, उत तन्मुखेन वादिहेतोरसाधकत्वं साधयति? नाद्यः, अर्थस्थित्युपन्यासे विरोधाभावात्, अर्थान्तरनिग्रहस्थानप्रसङ्गाच्च । न द्वितीयः, 'वादिसाधनमसाधकम्, साधनविकलत्वादिदोषदूषितत्वात्, संप्रतिपन्नहेत्वाभासवत्' इत्यत्रापि पक्षसपक्षवर्तिहेतुव्यक्तिभेदस्य तद्रूपवैचित्र्यस्य च दुर्वारत्वात् । तदनभ्युपगमे स्वप्रयोगानुत्थानात्, तदभ्युपगमे च स्वोक्तपर्यनुयोगसाम्यादिति ॥

(अवर्ण्यसमः)

पक्षवृत्तिहेतुव्यक्तेर्दृष्टान्तापेक्षितसिद्धार्थत्वादिरूपविरहे त्वसिद्ध्यादिप्रसङ्गात् तादृग्रूपहेतुमत्त्वाभ्युपगमे पक्षस्य साध्यत्वाभावप्रसञ्जनम् अवर्ण्यसमः । वर्ण्यः—साध्यः; अवर्ण्यः—असाध्य इत्यर्थः; यथा—ब्रह्म शरीरित्वात्यन्ताभावरहितम्, आत्मत्वात्, अनीश्वरात्मवत्, इत्यत्र । यद्यप्यात्मत्वमात्रमनुवृत्तम्, तथापि तत्तद्विशेषणभेदेन विशिष्टताभेदात् पक्षदृष्टान्तयोर्भिद्येत । ततश्च दृष्टान्त इव पक्षेऽप्यसौ हेतुः सिद्धार्थत्वादिविशिष्टः, न वा? न चेत्, व्याप्यतयाऽनुसंहितविशिष्टहेत्वभावात् स्वरूपासिद्धिः; सकलसपक्षानुयायिस्वरूपवैकल्यात् सोपाधिकतादिश्च । तद्रूपविशिष्टश्चेत्, सिद्धसाधनत्वासाधकत्वनिर्णयसमानविषयत्वप्रसङ्गः । ततश्चासाध्यत्वं पक्षस्येति । अत्र पक्षनिष्ठहेतुव्यक्तेर्दृष्टान्तमात्रापेक्षितरूपवैपरीत्येनोपलम्भः उत्थानहेतुः । पक्षहेतू दूष्यौ । सिद्धसाधनत्वादिकमारोप्यम् । तथाभिमानः फलम् । प्रातिस्विकं दुष्टत्वमूलं वर्ण्यसमवत् । व्यत्यासेन त्रितयमपि, पक्षस्थहेतुव्यक्तेरनङ्गानां सिद्धार्थत्वादीनामुररीकरणात्, अङ्गानामसिद्धार्थत्वादीनां त्यागात्, दृष्टान्तवर्तिन्यपेक्षितानां पक्षवर्तिनि संचारणाच्चेति । तथा च स्वीकारे तथैव स्वव्या-

---

सकलसपक्षेति । धूमवान् वह्नेरित्यत्र सपक्षेषु महानसादिष्वनुयायि—आर्द्रेन्धनसंयुक्ताग्निरूपस्वरूपवैकल्यात् केवलवह्निर्यथा सोपाधिकः, तथा स्यादित्यर्थः । व्यत्यासेनेति । दृष्टान्ते प्रागुक्तं पक्षे प्रकृते उच्यत इति विशेषः । त्रितयमपि युक्तांगहानिः अयुक्तांगाधिकत्वम् अविषयवर्तित्वञ्चेति त्रयमपि ।

घातात् प्रतिक्रिया ; न हि पक्षादिकमपि सामान्यतः प्रतिक्षेप्तुं शक्यम्, न कश्चित् पक्ष इति पक्षप्रतिक्षेपवाक्यस्यापि पक्षादिगर्भितत्वात्। सिद्धसाधनतानुयोगश्चात्र स्वदूषणं भवति। यदि हि प्रतिवादी असिद्धमपि साधयन्ननेनोपायेन सिद्धसाधनं पुरस्कृत्य निगृह्येत, तदा स्वयमेव हि निगृहीतः, एतावन्तं कालं विगीतस्य(निगृहीतस्य) परसाध्यस्येदानीमभ्युपगमात्। तथा चोक्तविरोधापसिद्धान्तादि। अपिच इदमसाधकम्, सिद्धसाधनत्वात् इत्यत्र साधकत्वादसाधकमित्युक्तं स्यात्। न ह्यन्यतः सिद्धमिदं साध्यत इत्युच्यते, किं त्वेतद्धेतुशक्त्यैवेति व्याघातः॥ अस्त्वेवम्, तथापि सिद्धसाधनतानुयोगमुखेनैव स्वव्याघातो दुर्वचः ; इदमसाधकमिति जातिवादिनाध्यस्य सिद्धत्वाभ्युपगमे तदिष्टापादनात्, स्वोक्तस्वमतविरोधापाताच्चेति चेत्—तदेतदसमीक्षितवैषम्यं पिशाचभाषितम् ; न ह्यत्र जातिवादिवाक्यार्थं सिद्धं कृत्वा वयं स्वव्याघातं ब्रूमः, अपितर्हि, यद्येवंविधेन सिद्धसाधनत्वेन वादिसाधनं दुष्टमिष्येत, तदा तथाविधेनैव तेन जातिसाधनमपि दुष्टं स्यात्। दुष्टस्य च न दूषकत्वमिति निर्बाधा स्थापना। तच्चेत् तेनापि न दुष्टम्, तदा तद्वदेव स्थापनापि निर्दोषेति निरर्थकः श्रमः। अतो न ब्रूमो वयं नेदं दूष्यदूषकं सिद्धसाधनत्वादिति, किं तु स्वव्यापिदूषणसमाधिग्रस्तत्वादिति॥

---

**स्वव्यापि दूषणसमाधिग्रस्तत्वा**दिति। दूषणग्रस्तत्वादित्येवार्थः। त्वत्कृतदूषणस्य त्वत्प्रयोगव्यापितया तदेव त्वां प्रति समाधिरपीति **समाधिपदेन** ज्ञाप्यते।

एवं षट् जातिप्रभेदा निरूपिताः। तत्र वक्तव्यविशेषसद्भावात् आद्यांश्चतुरः प्रकारान् निरूप्य पक्षहेतुदृष्टान्तमर्यादाशोधनपूर्वकमुदयनोक्तरीत्यैव वर्ण्यावर्ण्यसमौ किञ्चिद्विशदं व्युत्पाद्य अवशिष्टा अपि प्रकारा एवमेव प्राच्यग्रन्थतः सुबोधा इति वक्तव्यविशेषाभावात् तान् उपेक्ष्य, या तत्रान्तिमा जातिः कार्यसमा, तत्र परं लक्ष्यलक्षणादि शिक्षणं कर्तव्यं मन्वानो नामान्तरेण तां परं निरूपयिष्यति। अन्तश सूत्रोक्ताश्च विकल्पसमादयः सप्तदश संग्रहेणात्रैवं निरूप्यन्ते(7)**विकल्पसमः**=विकल्पविषयो धर्मो विकल्पः, विरुद्धो धर्म इति। प्रकृतसाध्यविरुद्धधर्मरूपतदभावसाहचर्यरूपव्यभिचारापादनेन समः विकल्पसमः ; यथा शब्दोऽनित्यः कृतकत्वादित्यत्रानित्यत्वव्यभिचरितत्वस्य मूर्तत्वे दर्शनात् धर्मत्वाविशेषात् कृतकत्वमपि तथा स्यादिति। अत्रोत्तरम्—एवं तर्हि त्वदीयमसाधकत्वानुमानमपि धर्मत्वाविशेषात् व्यभिचारि स्यादिति॥ (8) **साध्यसमः**—यथा साध्यमनुमानविषयत्वात् साधनीयदशामध्यास्ते, तथा पक्षहेत्वादयोऽपि ; तथैव अनुमानविषयत्वादिति, आश्रयासिद्धिस्वरूपासिद्ध्याद्यापादनम्॥ (9) **प्राप्तिसमः**—साधकस्य साध्यमप्राप्यापि साधकत्वे गर्दभादेरग्न्यादिसाधकत्वापत्तेः प्राप्य प्रत्येव साधकत्वं वाच्यम्। तथाच प्रागेव प्राप्तत्वे साध्यविशिष्टस्य तस्य तथैव सिद्धत्वात् किमिति पश्चात् साधकत्वं न स्यादित्यनिष्टापादनम्॥ (10) **अप्राप्तिसमः**—साधकस्य साध्यमप्राप्यापि साधकत्वे अविशेषात् साध्याभावादिसाधकत्वमपि

स्यादित्यनिष्टापादनम् ॥ (11) **प्रसंगसमः**—दृष्टान्तं साध्यवन्तं प्रदर्श्यैव साध्यं साधनीयम्। तस्य साध्यवत्त्वे किं प्रमाणमिति चोदनायां दृष्टान्तान्तरं दर्शनीयम्, तत्रापि तथेत्यनवस्थापादनम्। एवं हेतोः सद्भावे साध्यसाधनं स्यात्; तत्र किं प्रमाणम्? तत्र हेत्वन्तरोक्तौ तत्राप्येवं चोदनेत्यनवस्था-प्रसंगोऽप्यत्र प्रसंगः ॥ (12) **दृष्टान्तसमः**—शब्दोऽनित्यः कृतकत्वादित्यत्र घटदृष्टान्तेनानित्यत्वसाधने गगनदृष्टान्तेन नित्यत्वमेव स्यादिति हेतुसत्त्वादिविमर्शं विना प्रतिदृष्टान्तमात्रेण बाधादिचोदना ॥ (13) **अनुत्पत्तिसमः**—पक्षहेतुदृष्टान्ताः साधनांगभूताः। तेषामुत्पत्तेः प्राक् तत्र पक्षादौ हेतोर्दुर्वचतया हेत्वसिद्धिरित्यापादनम् ॥ (14) **संशयसमः**—संशयेन प्रत्यवस्थानम्। संशयस्य हि कारणं साधारण-धर्मदर्शनादिकम्। शब्दोऽनित्यः कार्यत्वादित्युक्ते कार्यत्ववत् ऐन्द्रियकत्वरूपधर्मस्यापि सत्त्वात् तस्य च नित्यगोत्वानित्यघटोभयसाधारण्यात् तेनानित्यत्वं स्यादिति प्रतिहेतुना संशयोद्भावनात् सत्प्रतिपक्षशंका ॥ (15) **प्रकरणसमः**—प्रकरणं=प्रकर्षेण करणम्–प्रबलत्वाभिमतेन केनचित् साध्यविपरीतसाधनक्रिया। यथा शब्दोऽनित्यः कार्यत्वादित्यत्र शब्दत्ववत् शब्दस्यापि श्रावणत्वात् नित्यत्वमेवेति बाधचोदना ॥ (16) **अहेतुसमः**—दण्डादेर्घटादिहेतुत्वमुत्तरकालवर्तितया वा समकालवर्तितया वा पूर्वकालवर्तितया वा। न प्रथमः; घटस्य दण्डं प्रति कारणत्वापत्तेः। न द्वितीयः; सव्येतरविषाणयोरिव विनिगमकाभावादकारणत्वात्। न तृतीयः, तत्पूर्वकाले तदभावेन कार्यकारणभावसंबन्धस्य तयोर्दुर्वचत्वादिति प्रतिकूलतर्कोपन्यासः ॥ (17) **अर्थापत्तिसमः**—शब्दोऽनित्यः कृतकत्वादित्युक्तौ शब्दभिन्नं सर्वमपि नित्यमित्यापद्यते; अतो दृष्टान्तासिद्धिः। कृतकत्वादनित्यत्वे, अन्यस्मान्नित्यत्वमिति स्यात्। विशेषविधेः शेषनिषेधफलकत्वादित्यर्थापत्त्याभासेन देशना ॥ (18) **अविशेषसमः**—यदि कृतकत्वरूप-सामान्यधर्मस्याविशिष्टत्वात् शब्दो घटवदनित्यः, तर्हि सत्त्वरूपधर्माविशेषात् सर्वमेवानित्यं स्यादिति प्रति तर्केण चोदना ॥ (19) **उपपत्तिसमः**—शब्दोऽनित्यः कृतकत्वादिति यदि त्वत्पक्षः सप्रमाणकः, तर्हि तद्वदेव पक्षत्वात् मत्पक्षोऽपि सप्रमाणक इति शब्दस्यानित्यत्वबाधो वा प्रतिरोधो वेति ॥ (20) **उपलब्धिसमः**—अग्निमान् धूमादिति साधनं न भवति, आलोकादपि अग्निसिद्धेरुपलम्भात् धूमस्यासाधकत्वात् तथाच पर्वत एवाग्निमानिति वा, पर्वतोऽग्निमानेवेति वा, अग्निमान् धूमादेवेति वा न वक्तुं शक्यत इति चोद्यत इति ॥ (21) **अनुपलब्धिसमः**—शब्दस्य नित्यत्वे उच्चारणात् प्रागप्युपलम्भः स्यादिति नैयायिके आक्षिपति, मीमांसक आह कुड्याद्यावरणवशात् घटादिरिव शब्दस्तदा नोपलभ्यते आवृतत्वादिति; तत्र नैयायिकः प्रत्याह–नास्ति शब्दस्याऽऽवरणम्, कुड्यवदनुपलब्धेरिति। तत्र मीमांसको जातिं प्रयुंक्ते—अनुपलब्धेरनुपलम्भात् सा नास्तीति। इदमयुक्तम्; तदुक्तस्यानुपलम्भस्या-प्यनुपलब्ध्या निषेधसंभवादनवस्थाप्रसंगादिति। वस्तुतो मीमांसकोक्तमयुक्तं अनुपलब्धेरनुपलम्भादभावोक्तौ उपलब्धिरेवोक्ता स्यात्। आवरणोपलब्धिसत्त्वे हि तथा वक्तुं शक्यमिति ॥ (22) **अनित्यसमः**—शब्दस्य कृतकत्वादनित्यत्ववत् सत्त्वादिहेतुना सर्वस्याप्यनित्यत्वापादनम्। अविशेषसमे सर्वस्याविशिष्ट-

स्वोत्प्रेक्षितसाधनदूषणादिप्रतिक्षेप उत्प्रेक्षासमः ; यथा—शब्दानित्यत्वे वादिना प्रतिज्ञाते भण्डः प्रतिवाद्याह—अलमेतावता; शब्दानित्यत्वे प्रत्यक्षत्वं हि त्वया हेतुरभिधित्सितः; स च सामान्यादिभिरनैकान्तिक इति साधनोत्प्रेक्षया प्रतिक्षेपः। एवं शब्दो नित्यः कृतकत्वादिति हेतुं प्रयुज्य वादी स्वयमेवाह—असद्धत्वमिह दूषणं त्वया विवक्षितम्; तच्चात्र नास्ति, प्रत्यक्षत एव कृतकत्वसिद्धेरिति। निर्मर्यादा(?) ये(यं?) तु लक्षयन्ति—'असिद्धतां वादिहेतोरुक्त्वा तां साधयेत् स्वयम्। तद्दूषणान्मूलहेतुभङ्गः कार्यसमो मतः'

---

त्वायादनम्, अत्र साध्यवत्त्वापादनमिति विशेष इत्याहुः। (23) **नित्यसमः**—शब्दोऽनित्य इति साध्यते, तत्रानित्यत्वं नित्यं वा, अनित्यं वा। आद्ये, तस्य नित्यत्वे तदाश्रयस्यापि नित्यता स्यात्। अन्त्ये, अनित्यत्वस्यानित्यतया निवृत्तौ, पुनः शब्दो नित्य एव स्यादिति चोदना॥ एषामत्रानिरूपणञ्च विशेषाणामियत्ताविरहात् उक्तस्याऽऽकृतिगणत्वात् किमनैतावत्संख्यानेनेत्याशयात्।

अथान्तिमः कार्यसमोऽनेकलक्ष्यसंजिघृक्षया नामान्तरकरणेन निरूप्यते। न्यायपरिशिष्टाद्यभिमतं लक्षणं वक्ष्यन् प्रथमं स्वाभिमतमाह **स्वोत्प्रेक्षिते**ति। प्रतिक्षेपः स्वकृत इत्यर्थसिद्धम्। भण्डपदं निर्मर्याद इत्यर्थकतया व्याख्यातम्। मर्यादातिलंघन एव हि जातिवादिता। प्रथमं साधनप्रतिक्षेपोदाहरणम्। एवमित्यादिना दूषणप्रतिक्षेपोदाहरणम्। ननु तत्र प्रथमत एव वादिना तथा कथ्यते चेत्—कथं तस्य जात्युत्तरत्वमिति चेत्—प्रतिवाद्युक्तिमुत्प्रेक्ष्य तदुत्तरतयैव वादिना कथनादुत्तरत्वमक्षतम्। ननु, 'प्रत्यक्षत एव कृतकत्वसिद्धेः' इत्यस्य कथमसदुत्तरत्वमिति चेत्—हेतुः सन् असन् वा भवतु। उत्प्रेक्ष्य त्वया दूषणमुच्यते चेत्—मयाऽप्यन्यदुत्प्रेक्ष्य त्वद्दूषणं क्रियेतेति तादृशोक्तिरूपत्वादेवासत्त्वम्; **निर्मर्यादा ये तु लक्षयन्ती**त्यत्र निर्मर्यादा इति पदं क्वचिन्न। परंतु पूर्ववाक्ये '**इति मर्यादा**' इति वाक्यसमाप्तिर्दृश्यते। तदशुद्धम्। भण्डशब्दस्य निर्मर्याद इत्यर्थस्ताले लिखित इहैवं पतित इत्युत्प्रेक्ष्यते। **ये** इति यच्छब्दस्य प्रतिनिर्देशश्चोपरि न लक्ष्यते अतः **येतु** इत्यस्य अन्येतु इत्यर्थमाहुः। तथा पाठः स्यादित्याशय इव। **यं तु** इति पाठः स्यात्। अथवा **अयं** मेत्यस्य नदुक्त इत्यर्थः स्यात्। इदमपि व्याख्यायामुक्तम्। अस्तु वा **निर्मर्यादा** इति। तदर्थस्तु—कार्यसमस्य न्यायपरिशिष्टे निष्कृष्टमर्थमनुसृत्य कारिकायां कार्यायां तदतिलंघनेन किञ्चिदुदाहरणमात्रग्रहणेन लक्षणप्रणयनात् निर्मर्यादता। परिशिष्टे हि भाष्योक्तेऽनुपपत्तिमाशंक्यान्यथा व्याख्याय, "एवञ्च प्रवर्तते-अनित्यः शब्दः कार्यत्वादित्युक्ते, भवेदेव यदि शब्दः कार्य इति निश्चीयते। प्रयत्नानन्तरोपलब्ध्या हि तथा साधनीयम्। सा चानैकान्तिकी" इति निगमितम्। अथ च, "तदयमर्थः—पक्षहेतुदृष्टान्तेषु (साधनांगेषु) मध्ये यस्य कस्यचिदनुमानांगस्यासिद्धत्वमुद्भाव्य तत्साधकतया किञ्चित् स्वयमुत्प्रेक्ष्य तद्दूषणेनैव तत्साधकाभावोपसंहारः कार्यसमः" इत्युक्तम्। तदनुसारेणानुगतं लक्षणं वाच्यम्; अस्माभिस्तु नामाप्यन्यदेव परिकल्प्यते, विस्पष्ट-

इति, अयमपि अस्मदुक्तोत्प्रेक्षासमावान्तरभेद एव। न चैतदेव लक्षणं युक्तम्, उदाहृतोदाहरणान्तरासंग्रहात्। न च कार्यसमसमाख्यैव सर्वत्रोचिता, अवाचकत्वात्। युक्तस्त्ववान्तरविशेषमुदाहरतः सूत्रकृतस्तत्र तन्निवेशः। एवं दृष्टान्ततर्कोत्प्रेक्षादयोऽपि द्रष्टव्याः। नचात्र स्वोत्प्रेक्षितदूषणमात्रात् छलत्वं शक्यं वक्तुम्; शब्दार्थारोपणाभावात्, पाक्षिकपराभिमतिसंभवाच्च। यत्तु सौगतैरुक्तम्—

"साध्येनानुगमात् कार्यसामान्येनापि साधने। संबन्धिभेदाद् भेदोक्तिदोषः कार्यसमो मतः॥"

इति, अत्रापि यदि कार्यत्वहेतोः पक्षदृष्टान्तयोस्ताल्वादिपूर्वकत्व.मृद्दण्डादिपूर्वकत्वलक्षणविशेषप्रदर्शनमात्रे विश्रमः, तदा जातित्वमेव नास्ति; कुतस्तद्विशेषता ?। अनुपयुक्तवादी त्वयमर्थान्तरेण निग्राह्यः। अथ दृष्टान्तस्थविशेषस्य व्यापकत्वाभिमानेन साध्यापकर्षविवक्षा; तदा अपकर्षसमभेदोऽयम्। यदा तु साधनवैकल्यहेत्वसिद्ध्यादिष्वभिप्रायः, तदापि वर्ण्यावर्ण्यसमयोरनुप्रवेश इति न पृथग्जातिता। अतोऽस्मदुक्तप्रक्रियैवात्र साधीयसीति॥

अत्र परमतपारीणत्वाभिमानो वा स्वोत्प्रेक्षितातिरिक्तासंभवाभिमानो वा संभवेऽपि तुल्यन्यायत्वाभिमानो वा प्रतिवादिनस्तथाविधाभिमानजननमनोरथो वा स्यादुत्थानहेतुः। यथायथं सर्वं दूषणमारोप्यम्। तत्तद्भ्रमः फलम्। दुष्टत्वमूलं त्वसाधारणमविषयवर्तित्वम्। प्रतिवाद्युक्तमेव हि दूषणस्य विषयः, न तु तदभिप्रेतमप्यनुक्तम्; अनभिप्रेतं तु किं पुनः? अन्यथा उपर्युपरि साधनदूषणपरम्परोत्प्रेक्षणेनोपन्यासप्रक्रियया प्रतिवादिनोऽनवसरप्रसङ्गः; कथायाश्च विश्रमः कदाचिदपि न स्यात्॥ किं च, यदि सम्यञ्चं हेतुमन्यं प्रतिवादी अभिप्रैति, स्वयं तु सम्यञ्चमसम्यञ्चं वा कंचिदन्यमुत्प्रेक्ष्य दूषयति, तदा प्रतिवाद्यभिप्रेतस्य

---

नामत्यागेन क्लिष्टकल्पनस्यायुक्तत्वात्। **असिद्धता**मिति कारिकार्थस्तु—वादिनोक्तस्य कार्यत्वादिरूपहेतोरसिद्धिं प्रतिवादी वदन् तामसिद्धिमेव साधयेत्, कार्यत्वसाधनार्हस्य प्रयत्नानन्तरोपलभ्यमानत्वस्य स्वयमुद्भाव्य दूषणात्। प्रयत्नजन्ये घटादाविव प्रयत्नव्यंग्ये मूलकीलकादावपि तत्सत्त्वादनैकान्तिकत्वात्। तेन कार्यत्वरूपहेतोर्भंगो भवति। स कार्यसम इति। सूत्रकारेण तु स्वाभिमतोदाहरणानुरोधेन तथा नाम दर्शितम्। **दूषणमात्रात्**-दूषकत्वांशसद्भावमात्रेण। **शब्दे**ति वादिप्रयुक्तशब्दस्यार्थान्तरस्वीकारे सत्येव छलत्वमिति भावः। **तात्पर्यटीकादौ** खण्डितं **धर्मकीर्तिना न्यायबिन्दा**वुक्तं लक्षणमनूद्य निरस्यति **यत्त्वि**ति। **साध्येने**ति। अनित्यत्वरूपसाध्येन सह**अनुगमात्** व्याप्तिसत्त्वात् **कार्यसामान्येन** कार्यत्वरूपहेतुना तत्साधने क्रियमाणे **संबन्धिभेदात्** कारणरूपसंबन्धिभेदप्रयुक्तभेदमादाय घटे दण्डादिव्यापारः शब्दे ताल्वादिव्यापार इति भेदात् एकरूपहेत्वभावात् असिद्ध्यादिः **कार्यसम** इति सौगतोक्तम्॥

अथांगसप्तकं दर्शयितुमाह **अत्रे**ति। असदुक्तकार्यसमलक्षणलक्ष्ये इत्यर्थः।

हेतोः किमायातम्? । न च तस्य तुल्यन्यायता निश्चेतुं शक्यते, सामन्यतो विदिते प्रतिक्रियान्तरसंभवात्; विशेषतो विदिते तस्यैव दूषयितुं युक्तत्वात्। न च तस्य विशेषतो वेदनं शक्यम्, पराभिप्रायस्याप्रत्यक्षत्वात्, विशेषनिर्णायकस्य लिङ्गादेश्चासंभवात्। न च सिद्धान्तकोशलिखितमेवासौ वदिष्यतीति नियमः, प्रज्ञावतां स्वोत्प्रेक्षिकयाऽन्यकथनस्याप्यविरोधात्। अतस्तदभिप्रेतमेवोत्प्रेक्षापदमित्यपि दुर्वदम्। अस्तु वा लोकोत्तरप्रज्ञेन तदभिप्रेतमेव विदितम्, तथापि न तदनुक्तं दूष्यम्, इदं ममानभिप्रेतमित्यपह्नुवाने प्रतिवादिनि सभ्यानामपि तत्र साक्षित्वासंभवात्। विश्वसाक्षिणां च मौनावष्टम्भात्। शपथस्य चात्र दृष्टप्रत्यवायहेतोरनुपदेशात्; अदृष्टप्रत्यवायहेतोरनुपयोगात्। अपिच यदासौ निष्प्रतिभः स्यात्, तदाऽनायाससिद्धे विजये किं तदभिप्रेततया कस्यचित् पुरस्कारेण? सप्रतिभश्च यदाऽसावभिप्रेतं स्वयमेव वाचि निवेशयति, तदा पुरोभाविषु वचनदोषादिषु संभविष्यत्सु किं विगीयमानव्याप्त्यादिपरामर्शसापेक्षार्थानुवादतद्दूषणवृथाश्रमेण? ॥ वचनदोषानपि संभविष्यतो विदित्वा दूषयत्विति चेत्, हन्त! तर्हि प्रतिवाद्यपि वैयात्यात्, एवमपशब्दादेस्त्वया विवक्षित इत्युक्त्वा यदि निगृह्णाति, तदाऽसौ कथमपसरिष्यति?।

एतेन साधारणः स्वव्याघातोपि सुस्थः; न ह्यन्यतर उत्प्रेक्षितमपि दूषयिष्यते, नेतर इति राजाज्ञा; न च तथा आदौ नियमः कृतः ॥ अपिच निरपराधस्य तावन्न निग्रहः; अत्र च केनापराधेन प्रतिवादी निगृह्यते? परोत्प्रेक्षणीयदुष्टार्थाभिप्रायवत्त्वादिति चेत्, संदिग्धं तावदिदम् ॥ तथाविधाभिप्रायसंभावनाविषयत्वादिति चेत्, स्वस्यापि समानमित्येवमपि स्वव्याघातः ॥ इदमसमीचीनम्, मदुत्प्रेक्षितासमीचीनव्यवस्थापकत्वात् इति वाक्यार्थविश्रमेऽप्येवं विपरिवर्तो वाच्यः।

इयं तु जातिर्यद्यप्यादिमामपि कक्ष्यामास्कन्दति, आदावेव वादिनं विनिवार्य त्वदभिप्रेतमेवं दुष्टमिति वक्तुं शक्यत्वात्; तथाप्यर्थतो जात्यन्तरवद् द्वितीयैवेयं कक्ष्या, तदभिप्रेततया प्रथमस्यापि पर्वणः स्वयमेव पुरस्कारात्। साधनेष्वपि केषुचिज्जातित्वमिच्छतामपि दूषणरूपा जातयो द्वितीयादिकक्ष्याभाविन्य एवेति नियम इति ॥

---

प्रज्ञावतामिति। सिद्धान्तप्रमेयाविरोधेन पूर्वग्रन्थदर्शितसाधकोत्प्रेक्षणस्य सिद्धान्तपोषकतया तत्र सिद्धान्तविरोधो दुर्वच इति। दृष्टप्रत्यवायेति। असद्विषयकशपथे विजयभंगाप्रसक्तेरिति भावः। अदृष्टनरकादिकं न प्रकृतबाधकम्।

साधनेष्वपीति। अत एव महाविद्यानुमानं जातिरित्युच्यते, विवक्षितविपरीतसाधनस्यापि तेन सुकरत्वात्। नन्विदं जातिनिरूपणं व्यर्थम्; अत एव मल्लिषेणकृतायां स्याद्वादमञ्जर्यां गौतम उपहसितः,

एवं सप्ताङ्गसंपन्नजातितत्त्वावलोकिनाम् । सदुत्तरैस्तदुद्धारा(त्थाना)त् तत्त्वधीजयसंभवः ।
अन्यथा पण्डरतवद् भवेयुरफलाः कथाः । इति प्रख्यापनायात्र कथाभास उदाहृतः ।
अर्थिप्रत्यर्थिनोस्तावन्न द्वयोर्जयसंभवः । एकस्य विजयेऽपि स्यात् सफला सत्कथैव सा ।
यत्र द्वयोर्न विजयो न वा तत्त्वविनिश्चयः । कुकथां कथयन्त्येनामसदुक्तिपरम्पराम् ।
तां द्विकक्ष्यादिकामेके षट्कक्ष्यावधिकां विदुः । पूर्वत्रासंभवात् सभ्यैरुत्तरत्र निवारणात् ।
असदप्रतिभादौ तु पक्षैकत्वमपि क्वचित् । सभ्येष्वसत्स्वदक्षेष्वप्युपर्यपि च धावति ॥

**तथाहि—कथामभ्युपगम्य यदि वादी सभ्येषु दत्तावधानेषु प्रतिवाद्यनुयुक्तोपि तूष्णीमास्ते, प्रतिवादी च तदा मन्दचित्तवृत्तिरवश्योद्भाव्यमपि तादात्विकं निग्रहस्थानं न व्यनक्ति, तदा कस्यचिदपि पक्षस्यानुत्थानमेव । निग्रहव्यञ्जनेपि तावति समाप्तिः । यदा तु वादी सद्वा असद्वा ब्रूयात्, अनाहितप्रतिभस्तु प्रतिवादी न किंचिद्वक्ति, वादी च यदि तदा निग्रहमूढः,-तदा**

---

"स्वतो विवादग्रहिले वितण्डापाण्डित्यकण्डूलमुखे जनेऽस्मिन् । मायोपदेशात् परमर्म भिन्दन् अहो विरक्तो मुनिरन्यदीयः" इति । विवृतञ्च, "स्वरसत एव स्वस्वाभिमतव्यवस्थापनाविसंस्थुलो वैतण्डिकलोकः । तत्र च परमाप्तभूतपुरुषविशेषपरिकलितः परवञ्चनप्रवृत्तरचनोपदेशश्चेत् सहायः समजनि, तदा स्वत एव ज्वालाकलापजटिले प्रज्वलति हुताशने इव कृतो घृताहुतिप्रक्षेपः । ....एवञ्च, "गतानुगतिको लोकः कुमार्गं तत्प्रतारितः । मा गादिति च्छलादीनि प्राह कारुणिको मुनिः" (जयन्तभट्टन्यायमञ्जरी) इति कारुणिकत्वं परिहसनीयम्" इति—इत्याशंकायां जातिनिरूपणफलमाह **एवमिति** । वादिनां विचित्रबुद्धित्वात् विशृंखलत्वाच्च परप्रतारणेन विजिगीषया, भ्रमाच्च विपरीतवचनप्रपञ्चनं प्रवर्तमानमनिवार्यम् । अतः परिहरणार्थमुद्भावनार्थञ्च हेत्वाभासभिदा इव जातिप्रभेदा अपि ज्ञातव्याः । दुष्टकथकप्रागल्भ्यप्रशमनाय तत्रापि पाण्डित्यप्रदर्शनं परमास्तिकानामपि नास्थाने । न हि जातिप्रयोगमात्रमत्र व्युत्पाद्यते ; येन परपरिभावार्थत्वमुत्प्रेक्ष्येत । अपितर्हि जातौ सप्तानामङ्गानां प्रदर्शनेन तत्खण्डनप्रणाल्यपि हि प्रकटमुच्यते इति भावः । **सप्ताङ्गेति** । लक्ष्यं लक्षणं जात्युत्थानद्वारम् दूष्यांशः दूषणारोपणरूपं फलं जातिप्रयोगस्य दुष्टत्वमूलं पातनञ्चेति अंगानि सप्त । दुष्टत्वमूलोद्घाटनेन पातनं सदुत्तरेण कार्यम् । जातिवचनमात्रेण कथोपरतिर्न सत्कथा । अत्र कारिकाद्वयम् , "परेण जातौ प्रयुक्तायां वादिना सदुत्तरेण तदपोद्धारः कर्तव्यः । एवं हि वादे तत्त्वनिर्णयः, जल्पवितण्डयोश्च जयपराजयव्यवस्था स्यात् । अन्यथा षण्डमैथुनवन्नैकमपि" इति **न्यायपरिशिष्टो**क्तार्थानुवादरूपम् । वादे जयस्य नापेक्षा । जल्पवितण्डयोः जातिप्रयोगे सदुत्तरेण तदुद्धारे सत्येव जयस्य सम्यक्त्वम् । जिगीषामात्रेण प्रवृत्तौ प्रतिवादिनोऽपि जयः । **कथाभासः** षट्पक्षीपर्यन्तः कथयिष्यते **पूर्वत्रेति** । एकक्ष्यामात्रे कथात्वस्यैवासंभवात् **उत्तरत्र**=सप्तमकक्ष्याप्रसक्तौ सभ्यैर्निषेधात् द्व्यादिषडन्तत्वमेव कथाया इत्यर्थः । **असदिति** । स्वाभिमतार्थे वादिना कथिते प्रतिवादिनोऽपि सदर्थस्याप्रतिभायामसदुक्तिपरम्परारूपकथाभासस्य प्रकृतस्य न प्रसक्तिरित्यर्थः । **उपर्यपि** षट्कक्षानन्तरमपि ।

एकपक्षा कथा। द्वयोश्च न विजयः, वस्तुतः सद्वादिनोऽपि प्राप्तकालनिग्रहानुद्भावनात्। वादिना प्रतिवादिनिग्रहे तु तेनैव विजयिता स्यात्। यदा त्वजल्पसाधनोपक्रमायां कथायां प्रतिवादी सदुत्तरेण निगृह्णाति, तावति च सभ्याः प्रमाणीकृताः, तदा प्रतिवादिनो विजयः। असदुत्तरेण निग्रहे सभ्येषु भरन्यासे द्विपक्षी कुकथा। एवं तदुपरि वादिप्रतिवादिनोः अप्रतिभयोरसदुत्तरपरम्परायां पञ्चपक्षीपर्यन्ता कुकथाप्रवृत्तिः। सत्साधनोपक्रमायां तु षट्पक्षीपर्यन्ता; तत्र हि प्रथमः पक्षस्तावदनुपप्लवः प्रादुःष्यात्। प्रतिवादिनस्तु निरनुयोज्यानुयोगभेदचतुष्कावतरणात् द्वितीयपक्षप्रवृत्तिः। तत्र सभ्याः स्वयं कथायामनधिकृतत्वाज्ज्ञातेऽपि वाद्यनुयोगमपेक्षमाणाः तूष्णीमासते। तदा वादी सदुत्तराप्रतिभानात् तत्प्रतिभानेऽपि वा जडीकरणदुरभिलाषेण तज्जातीयमन्यद्वा किंचिदसदुत्तरं प्रयुञ्जीत, तथापि प्रतिवाद्यनुयोगमपेक्षमाणेषु प्रतिवादिनस्तथैव चतुर्थपक्षावतारः। तथाऽप्यवसरप्राप्तायोभयस्तम्भरूपायानुविधेयप्रश्नाय दत्तक्षणेषु वादिनः पञ्चमः पक्षः। अनुविधेयेऽपि देवानांप्रिये स्वयमानृशंस्यात् कथंकरणयोरप्रतिभया कथाविच्छेदकाङ्क्षिषु षष्ठः। ततः परं स्वदोषपरिहारायोभौ निवार्य कुकथात्वप्रकाशनेनाध्यक्षपातेन द्वावपि निगृह्णन्ति। सभ्याभावे, मन्दमतिव्यवहारेषु वा सभ्येषु मार्जारकलहवदेव दैवान्निवारणमिति॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ अनुमानाध्याये तृतीयं निरनुयोज्यानुयोगाह्निकम्॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः॥

---

**निग्रहमूढः**—अप्रतिभारूपनिग्रहस्थानोद्भावनानभिज्ञः। सद्वादे कथं वादिनो विजयाभाव इत्यत्राह **वस्तुतस्सदिति**। **सभ्याः विजयित्वायाऽऽसते** इति पाठे वादिनो विजयित्वमाविष्कुर्युरित्यर्थः। **भरन्यासादिति**। वादिना तृतीयकक्षायामप्रवर्तितायां दोषं मध्यस्था आविष्कृत्य कथां समापयेयुरिति भावः। **भेदचतुष्केति**। छलं जातिः अनवसरग्रहणं निग्रहस्थानाभासवचनञ्चेति चतुष्टयेत्यर्थः। जडीकरणं प्रतिवादिनो जडत्वापादनम्। **तज्जातीयं**=प्रतिवाद्युक्ततुल्यरूपम्। **उभयस्तम्भेति**। वादिप्रतिवादिनोः स्तम्भनरूपः प्रश्नस्तदाऽ**नुविधेयेन** अध्यक्षेण कर्तव्यः। तदर्थं प्रतीक्षमाणेषु सभ्येष्वित्येवार्थः (4-66) सर्वार्थसिद्धि संवादी। न तु व्याख्यातृक्तः। **देवानाम्प्रिये**। **देवानाम्प्रिय** इति मूर्खे। मूढपर्यायतयाऽपि मूर्खशब्दोऽमरकोशे। **कथंकरणयोः** कथमितिप्रश्नार्हयोर्वादिनोः। एवं कथाभासावसानमुक्तम्। एवं निरनुयोज्यानुयोगरूपं निग्रहस्थानं चतुर्विधमेतदाह्निकप्रमेयं निरूपितम्॥ श्रीः॥

**इति अभिनवदेशिक वात्स्यवीरराघवाचार्यकृतौ**

**न्यायतत्त्वप्रकाशिकायां द्वितीयतृतीयमाह्निकम्**

—•—०—

॥ द्वितीयाध्याये चतुर्थमाह्निकम् ॥

अथ प्रमाणाभासाः—अप्रमाणत्वे सति प्रमाणव्यवहारविषयास्ते । प्रमाणचातुर्विध्यात् तदाभासा अपि चतुर्विधाः । प्रत्यक्षानुमानागमस्मृत्याभासभेदात् । एषामवान्तरलक्षणं सामान्यलक्षणच्छाययैव सुगमम् । तत्र प्रत्यक्षाभासो यथा—द्वौ चन्द्रमसौ, पीतः शङ्खः इत्यादिः । विषयेन्द्रियादिदोषादस्योद्भवः । इमं च प्रमाणतयोपन्यस्यतोऽस्य हेत्वाभासवन्निग्रहो भवत्येव, अक्षपादसूत्रेऽपि हेत्वाभासग्रहणमुपलक्षणम्; चशब्दाद्वा अनुक्तसमस्तसंग्रहः । अनुमानाभासो यथा—बाष्पादिषु धूमत्वाद्यारोपेण धूमवत्त्वात् पर्वतोऽग्निमानित्यादिः ॥

अव्याप्तापक्षधर्मौ द्वौ हेत्वाभासौ समासतः । तयोरेव प्रपञ्चेन स्यादसिद्ध्यादिकल्पना ॥

यदुक्तं न्यायतत्त्वे—"असिद्धानैकान्तिकविरुद्धा हेत्वाभासाः" इति, तत्रासिद्धोऽपक्षधर्मः ।

---

अत्रानुमानाध्याये द्वितीयाह्निके परार्थानुमानप्रयोगरूपन्यायं प्रदर्श्य वादिप्रतिवादिन्यायद्वयात्मिकाः कथाः प्रस्तुत्य निग्रहस्थानानि परिगणय्य एकोनविंशतिं तद्विधास्तत्र निरूप्य तृतीये आह्निके विंशं निग्रहस्थानं निरनुयोज्यानुयोगरूपं चतुर्धा विभज्य न्यरूपि । अथात्र चतुर्थे एकविंशं निग्रहस्थानं निरूप्यते । तच्च हेत्वाभास इति सूत्रोक्तम् । हेत्वाभासकथन इव प्रत्यक्षादिप्रमाणान्तराभासकथनेऽपि निग्रहस्य सत्त्वात् प्रत्यक्षादिप्रमाणाभासा अपि गणनीयाः । अतो हेत्वाभासपदं सामान्यतः प्रत्यक्षाभासपरं ग्राह्यमित्याशयेन तथैव प्रागगणितम् । तन्निरूपणमारभते **अथ प्रमाणाभासा** इति । चतुर्विधे प्रमाणाभासे द्वितीयोऽनुमानाभासरूपो विस्तृतः । तदनन्तरम् आगमाभासस्मृत्याभासौ यथावसरं विशदयिष्यति । आदौ प्रत्यक्षाभासं संग्रहेणाह **तत्र प्रत्यक्षे**ति । चाक्षुषप्रत्यक्षाभास उक्तः ; इन्द्रियान्तरमूलाभासा अपि ग्राह्याः । **अक्षपादसूत्रे** इति । पञ्चमद्वितीयाद्यसूत्रे इत्यर्थः । एवमन्तिमसूत्रेऽपि । **चशब्दा**दिति । तथापृथगुक्तावपि प्रतिज्ञान्तरहेत्वन्तरयोरिव **प्रमाणाभास**पदेन सामान्येनैकीकरणं युक्तमिति भावः । **धूमवत्त्वा**दिति । इदञ्च स्वार्थानुमानरूपम् । परार्थप्रयोगे तु धूमशब्देन बाष्पं वक्तृबुद्धिस्थं जानाति चेत्—तदैवाभासताग्रहः । ननु अनुमानाभासो हि हेत्वाभासः । बाष्पे धूमत्वेन गृहीतेऽपि हेतुतावच्छेदकधूमत्वावच्छिन्ने व्याप्तेः पक्षधर्मतायाश्चाक्षतत्वात् कथमाभासत्वोपपादनमिति चेत्—धूमवतः पर्वतस्य पक्षत्वे पक्षधर्मत्वसंभवेऽपि बाष्पमात्रवति पक्षे तदभावादाभासत्वनियमः । तत्र परामर्शस्य धूमत्वेन बाष्पविषयकत्वात् बाष्पस्य पक्षधर्मत्वेऽपि धूमत्वस्य पक्षधर्मतावच्छेदकत्वाभावात् भ्रान्तिरूपतैव । अतोऽनुमितिरपि भ्रमः ।

हेत्वाभासं बहवो बहुधा व्यभजन् । स्वयं संग्रहेण द्वेधा विभजति **अव्याप्ते**ति । सद्धेतोर्द्वे रूपे व्याप्तिः पक्षधर्मता च । तत्रैकतरवैकल्येऽपि हेत्वाभासत्वं सिद्धम्; उभयवैकल्ये सुतराम्; यथा गां पक्षीकृत्याऽऽह—अयमश्वो गर्दभत्वादिति । **समासतः**—संग्रहेण । **असिद्ध्यादी**ति । प्रपञ्चश्चोपरि व्यक्तः । **असिद्धिः** व्याप्यत्वासिद्धिः स्वरूपासिद्धिरित्यादिः । न्यायतत्त्वे त्रित्वोक्तिः 'विरुद्धासिद्धसंदिग्धमलिंगं काश्यपोऽब्रवीत्' इति कणादकृतविभागमादृत्य । व्यापकसाध्यसामानाधिकरण्यं हेतोर्व्याप्तिः । तत्र साध्ये स्वव्यापकत्वभंगेऽनैकान्तिकता । साध्यसामानाधिकरण्यांशस्य भंगो विरुद्धे । व्यापकत्वभंगश्च

इतरावव्याप्तभेदौ हेत्वाभासौ। तावन्मात्रोक्तिश्च प्रदर्शनार्था। प्रयोजकान्तरेण वा तदन्यसंग्रहस्तत्र विवक्षितः। ये चासाधारणबाधितप्रकरणसमादयो भेदाः कथ्यन्ते, तत्रासाधारणस्याव्याप्तत्वं केवलव्यतिरेकिनिराकरणे प्रदर्शितम्। अनैकान्तिकभेदश्चासौ कैश्चिदुक्तः; तथा चोक्तमागमप्रामाण्ये—"स न तावदनैकान्तिकः; स हि द्विधा—साधारणासाधारणभेदात्" इति। बाधितस्य तु न पक्षधर्मत्वम्, नापि व्याप्तिरिति दूषणद्वयसमुच्चयः। न हि साध्याभाववत्तया निर्णीतस्य संदिग्धसाध्यत्वलक्षणं पक्षत्वम्; न च हेतुमति पक्षे साध्याभाववत्तया प्रमिते हेतोर्व्याप्यताग्रहणसंभवः। प्रकरणसमस्य तु प्रतिसाधनप्रतिरुद्धत्वलक्षणस्यानिर्णीतबलत्वाद् बलस्य च व्याप्तिपक्षधर्मतानतिरेकाद् व्याप्त्याद्यनिश्चयेन तयोरेवान्तर्भावः।

स्वपक्षसिद्धाविव परपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः कैश्चिल्लक्ष्यते। यथा—नित्यः शब्दः, पक्षसपक्षयोरन्यतरत्वात्, आकाशवत्। अनित्यः शब्दः, पक्षसपक्षयोरन्यतरत्वात्, घटव-

---

सुतराम्। साहचर्यनियमो व्याप्तिरित्युक्तावपि विरुद्धे साहचर्यस्यैव भंगः, अनैकान्तिके च तन्नियमभंगः। द्वेधा विभागे पूर्वकृते सर्वहेत्वाभासान्तर्भावेऽपि न्यायतत्त्वोक्ते सर्वान्तर्भावो दुर्वच इत्यत्राह **तावन्मात्रे**ति। **प्रदर्शनार्थे**ति। उदाहरणतया तदुक्तिः, न त्वितरपरिसंख्यानाशयेन। अतः प्रागुक्तविभागद्वय एव तात्पर्यमिति भावः। **प्रयोजकान्तरेणे**ति। विधात्रयवत् विधान्तरमपि पृथक् पृथक् तार्किकादिवदभिमतमस्त्वित्याशयः। अत एव वक्ष्यति **तदभिप्रेतौ** इति। ननु शब्दोऽनित्यः शब्दत्वादित्यत्रासाधारणहेत्वाभासत्वमिष्टम्। तत्राव्याप्तत्वमपक्षधर्मत्वञ्च न भवति। अन्वयव्याप्तिवत् तत्र व्यतिरेकव्याप्तिरप्यस्ति। विवादास्पदमुद्भूतरूपवत् पृथिवीत्वादित्यादौ बाधिते सत्प्रतिपक्षे च हेतोर्व्याप्तिः पक्षधर्मता च स्तः। अतो द्वैधमुक्तमयुक्तमित्यत्राह **ये चे**ति। **आदि**पदेनाश्रयासिद्धाप्रयोजकग्रहणम्। असाधारणस्थले पक्षादन्यत्र साध्यसामानाधिकरण्यग्रहाभावान्नान्वयव्याप्तिः। केवलव्यतिरेक्यनुमानञ्चासर्वं प्रागेव निरस्तमिति न सापि व्याप्तिस्तत्र। ननु न्यायतत्त्वे बाधितसत्प्रतिपक्षितयोरिवासाधारणस्यापि पृथक्कारे हेत्वाभासपाञ्चविध्यमपि न स्यादित्यत्राह **अनैकान्तिकभेद** इति। अनैकान्तिकविशेष इत्यर्थः। **बाधितस्येति**। ह्रदोऽग्निमान् जलादित्यत्र बाधितस्य जलस्य ह्रदवर्तित्वात् कथमपक्षधर्मत्वमित्यत्रोपपादयति **नहीति**। तथाचापक्षधर्मत्वमित्यत्र पक्षतावच्छेदकधर्माश्रयमात्रं न पक्षशब्दार्थः; किन्तु पक्षताविशिष्टः पक्षतावच्छेदकावच्छिन्न इति भावः। प्रतिरुद्धत्वलक्षणस्येति बहुव्रीहिवृत्तं प्रकरणसमविशेषणम्।

सत्प्रतिपक्षविशेषस्याव्याप्ते वा अपक्षधर्मे वा नान्तर्भाव इति शंकते **स्वपक्षे**ति। एतदारभ्य, **कतरस्यान्तर्भाव** इत्यन्तः शंकाग्रन्थः। तदुपरि समाधिः। हेतोस्त्रीणि रूपाणि पक्षसत्त्वं सपक्षसत्त्वं विपक्षासत्त्वञ्चेति प्रागेवोक्तम्। एक एव हेतुः साध्यं प्रतीव साध्याभावं प्रत्यपि त्रिरूपो भवति। सोऽपि सत्प्रतिपक्षत्वेन कैश्चिद् गण्यते। न तु स्वान्यप्रतिहेतुक एव सत्प्रतिपक्ष इति। कोऽसौ हेतुरित्यत्र प्रथमं तदुक्तमेवोदाहरणमाह **यथा नित्य** इति। **पक्षसपक्षयोः** शब्दचेतनयोः। अनित्यत्वे साध्ये

दिति। तदेवं लक्षणमसंभवीत्येके एकस्य पक्षद्वयेपि त्रैरूप्यासंभवात्। नित्यत्वे हि साध्ये शब्दाकाशयोरन्यतरत्वादिति हेत्वर्थः। अनित्यत्वे तु शब्दघटयोरन्यतरत्वादिति। न च शब्दसारूप्यमात्रेण हेतोरेकता, अतिप्रसङ्गात् इति। नत्र यद्यप्येतस्मिन्नुदाहरणे लक्षणमसंभवि, तथापि महाविद्यादिप्रस्थानेषु केषांचिद्धेतूनां साध्यतदभावयोः समानाकारतया संभवं पश्यामः; यथा—शब्दः स्वस्वेतरवृत्तित्वानाक्रान्तानित्यनिष्ठाधिकरणम्, प्रमेयत्वात्, घटवदिति शब्दानित्यत्वसाधने प्रवृत्तः प्रमेयत्वहेतुरेक एव, शब्दः स्वस्वेतरवृत्तित्वानाक्रान्तनित्यनिष्ठाधिकरणम्, प्रमेयत्वात्, आकाशवदित्यपि शब्दनित्यत्वस्थापने पूर्ववृत्तिरूप (पूर्ववत् त्रिरूप?) उपलभ्यते। अतो "नोदाहरणमादरणीयम्" इति न्यायात् लक्षणासंभवोद्यं (वचोद्यं?)हस्तालोचः। क्व तर्ह्यस्यान्तर्भावः?

---

पक्षसपक्षयोरिति शब्दघटयोर्ग्रहणम्। सिद्धान्ती उक्तमुदाहरणमाक्षिपेदित्यालोच्य स्वयमुदाहरणान्तरं विवक्षुः शंकिना तमाक्षेपं स्वयमेवोद्घाटयति। तत्रेति। तत्र=अन्यतरत्वादिति प्रकृतहेतौ। सपक्षपदेन क्वचित् चेतनस्य, अन्यत्र घटस्य च ग्राह्यतया शब्दचेतनान्यतरत्वे वा शब्दघटान्यतरत्वे वा एकत्र साध्यं तदभावञ्चादाय त्रैरूप्यं न हि भवतीत्यर्थः। न च चेतनत्वादिरूपं विना सपक्षत्वेन रूपेण निवेशेऽनुगमो भवत्येवेति वाच्यम्; सपक्षत्वस्य साध्यवत्त्वप्रकारकनिश्चयविशेष्यत्वरूपतया साध्यस्य च विभिन्नरूपतया ऐकरूप्यायोगात्। साधनीयत्वेन रूपेण सामान्यतः साध्यग्रहणे साध्यत्वस्य केवलान्वयितया विपक्षस्यापि साध्यवत्त्वप्रसंगात्। अतः प्रकृतसाध्येति निवेश्यम्। तथाच तस्य नित्यत्वतदभावरूपेण भिन्नत्वात् शब्दचेतनान्यतरत्व—शब्दघटान्यतरत्वरूपहेतावेव पर्यवसानम्। अतो नैकस्योभयत्रैरूप्यमिति। एवमत्रोदाहरणे स्थितमसौष्ठवं स्वयमाविष्कृत्य उदाहरणान्तरसंभवात्, त्रिरूपतया साधारणोऽपि सत्पतिपक्ष इति प्रागुक्तलक्ष्यमस्त्येवेत्याह यद्यपीत्यादिना। महाविद्यानुमानं लक्ष्यं दर्शयति यथा शब्द इति। तथा च तस्याव्याप्ते अपक्षधर्मे वा नान्तर्भाव इति शंका। स्वस्वेत्यादेरयमर्थः—स्वं शब्दः स्वस्वेतरोभयवृत्तिधर्मः वस्तुत्व,गुणत्व,शब्दतदितरोभयत्वादिः। तद्भिन्नधर्म एवोभयवृत्तित्वानाक्रान्तो भवति। स च शब्दमात्रवृत्तिधर्मः शब्दत्वादिः तदितरमात्रवृत्तिर्द्रव्यत्वादिश्च। तत्रानित्यनिष्ठधर्मपदेन द्रव्यत्वादिग्रहणे तदधिकरणत्वरूपं साध्यं शब्दे पक्षे दुर्वचम् अतः शब्दमात्रवृत्तिधर्म एव ग्राह्य.। तस्य चानित्यनिष्ठत्वं शब्दस्यानित्यत्वे सत्येव स्यात्। अत एतत्साधनस्य शब्दानित्यत्वसाधने पर्यवसानम्। एवं नित्यनिष्ठाधिकरणत्वरूपद्वितीयसाध्यस्यापि समन्वयो द्रष्टव्यः। शब्दे शब्दत्वादेः, तदितरत्र सर्वत्र तदितरत्वादेः सत्त्वात् केवलान्वयितया हेतोः साध्यव्याप्तिरक्षता। हेतोश्च केवलान्वयितया पक्षधर्मत्वमपि। न च साध्यस्य केवलान्वयितया साध्याभावाप्रसिद्ध्या कथं विपक्षासत्त्वम्; तदभावे च कथं त्रिरूपतेति शंक्यम्—केवलान्वयित्वेऽपि विपक्षासत्त्वस्य प्रागेवोपपादितत्वात्। अत्र पूर्ववृत्तिरूप इति पाठदर्शनात् पूर्वत्र वृत्तिर्येषां रूपाणां तानि पूर्ववृत्तीनि तद्रूपवानिति व्याख्यातम्। वस्तुतः पूर्ववत् त्रिरूप इत्येव पाठः स्यात्। लक्षणासंभवोद्यं त्रिरूपत्वद्वयात्मकलक्षणस्य क्वापि न संभव इति वचनमित्यर्थः। सुबन्ते उपपदे वदधातोः भावे क्यपि संप्रसारणे असंभवोद्यमिति रूपसिद्धिः; यथा (बृ-3-5-8) ब्रह्मोद्यमिति। हस्तालोच इति।

अविनाभावादिसंभावनायामपक्षधर्मे ; अन्यथा त्वव्याप्ते । यदि पक्षे व्यापकप्रतीत्यपर्यवसान-बलादनित्यत्वं साधयेत्, स एव हेतुः कथं न तद्विपरीतव्यापकप्रतीत्यपर्यवसानेन नित्यत्वमपि । ततश्चाविशेषादुभयत्रापि व्याप्तिं स्वाभाविकीत्यव्याप्तकोटौ निक्षेपः । यथा च परपक्षवत् स्वपक्षस्यापि बाधकमुत्तरं जात्युत्तरमिति व्यवहरन्ति, तथा वाद्यभिमतसाध्यवत् तद्विपरीतप्रतिवाद्यभिमतसाध्यस्यापि साधकत्वप्रसङ्गादर्थत उभयसाधकान्येतानि जातिसाधनानीति च केचिदूचुः । अपि चैषां साध्यतदभावसाधने समानाकारत्वादेवानैकान्तिकवत् अव्याप्तत्वं तुल्यकम् । उभयत्र विपक्षेबाधकाभावाच्च । न चोभयत्र तत्संभवः, व्याघातात् । एकस्मिन् विरुद्धयोरिव विरुद्धोभयप्रतिक्षेपयोरपि परस्परात्मनोरतिरिक्तयोर्वा समुच्चयासंभवात् । न च शीतोष्णव्यतिरेकवत् कोट्यन्तरोपलम्भः, भावाभावात्मना विरोधे, तत्-तदन्यात्मना विभागे च तदसंभवात् । अत एव ह्यनिर्वचनीयानेकान्तवादयोरनवतारः ।

अस्त्वन्यतरत्(त्र?)विपक्षे बाधकमिति चेन्न ; तथापि तादृशरीतेः कुटिलोन्नीतिकल्पनाया विपक्षे बाधकविरहादप्रयोजकत्वं सिद्धम् । प्रमाणान्तरबलात्तु सिध्यतः साध्यविशेषस्य विपर्यये बाधकम[स्य]स्तु ; न पुनर्महाविद्यादिहेतुभिरप्रयोजकैः सिध्यतः ।

अप्रयोजकोऽन्यथासिद्धः उपाधिमान् व्याप्यत्वासिद्ध इति चानर्थान्तरमित्यतोऽपि न द्वितीय-

---

हस्तस्पर्शमूलकत्वाच्चप्रत्यक्षमात्रेण तत्रत्यास्पृष्टवस्त्वन्तराग्रहणेन तदभाववादतुल्यमित्यर्थः । तथा च त्रिरूपैकदेशात्मकसत्प्रतिपक्षमत्त्वात् तत्रापि हेत्वाभासत्वमुपपाद्यमेवेति निगमनेन शंकां प्रकटयति **क्व तर्हीति** ॥

उक्तद्वय एवान्तर्भावः सुतरां इत्याह **अविनेति** । **आदिना** हेतोः शब्दवृत्तित्वग्रहः । **संभावनाया**मित्यनेनानुकूलतर्क[illegible] दर्श्यते । तथा चैकतरव्याप्यहेतुमत्ताज्ञाने तन्निश्चयात् पक्षे सन्दिग्धसाध्यकत्वाभावादपक्षधर्मत्वमित्यर्थः । **अन्यथेति** । उभयव्याप्यतायां प्रतीयमानायामेकतरपक्षानुकूलतर्कास्फूर्तावित्यर्थः । अतः साध्यसंदेहात् पक्षधर्मत्वे सत्यपि अव्याप्तत्वमेव वक्तव्यमिति एवञ्च अपक्षधर्मत्वमित्यत्र पक्षताया अपि विशेषणत्वे सद्धेतोरपि साध्यनिश्चयानन्तरं पक्षताविशिष्टधर्मिवृत्तित्वाभावात् हेत्वाभासता स्यात् । अतः पक्षत्वं न निवेश्यमित्युक्तावपि न क्षतिरिति ध्येयम् । **व्यापकप्रतीत्यपर्यवसानबला**दिति । महाविद्यानुमानसाध्यं हि व्यापकमनुमीयमानं शब्दनित्यत्वमप्रसाध्य न पर्यवस्यतीति हेतोरित्यर्थः । सत्प्रतिपक्षत्वेनोक्तेऽत्र दोषान्तरमप्यस्तीत्याह **यथाचेत्या**दिना । **जातिसाधनानि**—जातिरूपाणि साधनानि । **विपक्षे बाधकेति** । अनुकूलतर्केत्यर्थः । **अत एव हि**=मिथोविरोधसद्भावादेव हि । सदसत्त्वमिथोविरोधाद्धि सदसदनिर्वचनीयत्वेन किञ्चिद् दुर्वचमिति ब्रूम इत्यर्थः । **अन्यतर**दित्यत्र अन्यतरत्रेति पाठः स्यात् । उभयत्रेति प्राक् परास्तम् ; अन्यतरत्रेत्यस्यात्र परासः । उभयोः कोट्योर्मिथोविरुद्धतया एकतरपक्षस्यानुकूलतर्कावश्यम्भावादिति भावः । **तथापीति** । महाविद्यानुमानं सर्वमप्रयोजकमित्यर्थः ।

अप्रयोजकत्वेऽपि कुत्रान्तर्भाव इति प्रश्ने **अव्याप्तत्व**मिति प्रागुक्तं विशदयितुमाह **अप्रयोजकोऽन्य-**

(द्वितय?)बहिर्भावः ; तथाहि—

विपक्षे बाधकाभावादुपाधेर्वापि संभवात् । हेत्वाभासोऽन्यथासिद्ध्यन् अप्रयोजक इष्यते ॥
पञ्चभ्यः पृथगेवैनं कतिचित् संप्रचक्षते । व्याप्यत्वासिद्धभेदोऽयमिति त्वाहुर्मनीषिणः(परीक्षकाः) ॥
विपक्षे न हि निर्बाधे व्याप्तिः कापि प्रसिध्यति । प्रतिकूलेषु तर्केषु सत्सु धावाऽऽप्यनिश्चयात् ।
व्याप्तिस्वरूपदैवस्वकल्पितोपाधिकेषु नः । अप्रयोजकतावादः प्राचां प्रागेव दर्शितः ॥
अन्येऽप्याहुः-'समासमाविनाभावावेकत्र स्तो यदा तदा । समेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजकः'।
इति । शाबरवार्तिककारश्च—
"व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः । अस्मिन् सत्यमुना भाव्यमिति शक्त्या निरूप्यते ॥
अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः । दृष्टैरपि न तैरिष्टा व्यापकांशावधारणा ॥" इति ।
एनमेव संदिग्धव्याप्तिकं बाह्याः पठन्ति—
"साध्यादन्येन धर्मेण सपक्षेष्वनुयायिना । विना पक्षे स्थितो धर्मः संदिग्धव्याप्तिको मतः ॥" इति ॥
तस्माद्व्याप्तमेव एवायमप्रयोजकः। तत्स्वभावानतिलङ्घनाच्च श्रीमहाविद्या.मानमनोहर.प्रमाणमञ्जर्या-

---

थासिद्ध इत्यादि। हेत्वाभासोऽन्यथासिद्ध्यन्निति। अन्यथासिद्धरूपहेत्वाभास इत्यर्थः । आहुरिति । उदयनाचार्यैर्न्यायकुसुमाञ्जलौ(३) क पुनरप्रयोजकोऽन्तर्भवतीति पृष्ट्वा पार्थक्यं निरस्य व्याप्यत्वासिद्धेऽन्तर्भाव उपपादितः ; अनैकान्तिकान्तर्भावश्च निरस्त इति । प्राचाम् भट्टपराशरपादानाम् । अन्येऽपीति । एतदारभ्योक्तं सर्वं तार्किकरक्षायामपि । समेति । एकत्र एकसाध्यविषये समाविनाभावः=समव्याप्तः, असमाविनाभावः=समव्याप्तभिन्नश्चेति द्वौ धर्मौ यदा स्तः=यदि भवेताम् ; तयोर्मध्ये हीनः समव्याप्तिरहितः समेन समव्याप्तिकेन यदि नो व्याप्तः—समं प्रति व्याप्यो न भवति चेत्, साध्यसमव्याप्तिक(उपाधिः) साधनाव्यापको भवति चेदिति यावत् । तदा हीनो हेतुः=साध्यसमव्याप्तहेतोरव्याप्यत्वात् सोपाधिकः सन् अप्रयोजको भवति। यथा वैदिकहिंसा अधर्मः हिंसात्वादित्यत्र हिंसात्वरूप हेतुः अधर्मत्वरूपसाध्यसमव्याप्तिरहितः अधर्मत्वसमव्याप्तनिषिद्धत्वरूपधर्मान्तराव्याप्यः निषिद्धत्वोपाधिको भवन् अप्रयोजक इति सोपाधिकत्वमप्रयोजकत्वम् । सोपाधिकत्वं नाम उपाधिगतसाध्यव्याप्त्यारोपविशेष्यत्वमिति कुमारिलोक्तं दर्शयति व्याप्तेरिति। कश्चित् धर्मः अधर्मत्वं प्रति निषिद्धत्वादिः। प्रयोजकः आधारतया कारणभूतः। धूमे सति अग्निना भाव्यमिति अग्न्यन्वयप्रयोजकान्वयवत्त्वात् धूमः प्रयोजकः। अन्ये ईदृशान्वयरहिताः हिंसात्वादयः निषिद्धत्वादिप्रयोजकप्रयुक्तव्याप्त्यारोपविषयाः । अप्रयोजकस्यानैकान्तिकान्तर्भावं बाह्यसंमतमुदयनाचार्यनिरस्तं भंग्या दर्शयति एनमेवेति। व्याप्त्यसिद्धौ व्यभिचारसंदेह इति प्रथमगृहीतायाः व्याप्त्यसिद्धेरेव दोषत्वं तदुक्तम्। बाह्यदृष्ट्याऽपि प्रकृतस्याव्याप्तेऽन्तर्भावस्य न क्षतिरित्याशयः । साध्यादिति । श्लोकोऽप्रयोजकविषयकोऽभिमतः । साध्यादन्येन सपक्षेष्वनुयायिना=साध्यव्यापकेन धर्मेण उपाधिना विना पक्षे स्थितः धर्मः हेतुः सोपाधिकः संदिग्धव्याप्तिकत्वेनाभिमत इत्यर्थः । तत्स्वभावेत्युक्तहेतोः उपर्यन्वयो युक्तः। श्रीमहाविद्या, मानमनोहरम्,

दिपठितचक्रानुमानस्यापि तथात्वम्। एवं पक्षदृष्टान्ताभासानामपि हेत्वाभासेष्वेवान्ततो निवेशः। तेषां च तयोरितर(रन्यतर?)त्रैव विश्रमः, सर्वेष्वपि पक्षाभासेषु हेतोरपक्षधर्मत्वात्। न हि पक्षाभासधर्मस्य पक्षधर्मता। न हि साध्यसाधनोभयविकल-आश्रयहीनेषु दृष्टान्ताभासेषु हेतोर्व्याप्तिग्रहः शक्यः, सर्वेषु च दृष्टान्ताभासेष्वव्याप्तत्वात्। सिद्धसाधनेऽपि हि पक्षधर्मत्वं न सिध्यति, सिद्धधर्मविशिष्टस्यापक्षत्वात्। यदि पक्षीकृतेष्वेकत्र साध्यं प्रसिद्धम्, तदा अंशे सिद्धसाधनादंशतोऽपक्षधर्मत्वम्। यदा तु सिद्धमसिद्धं च साध्यद्वयं प्रयुञ्जीत, तदापि सिषाधयिषितस्य सर्वस्य साध्यत्वाभावादंशतः सिद्धसाधनादंशतोऽपक्षधर्मत्वम्॥ अतोऽतिपीडायां द्वावेव हेत्वाभासौ। पूर्वेषां तु पक्षाभासादिपृथगुदाहरणवत् स्फुटतया पृथगुद्भाव्यत्वायाऽधिकपरिगणनम्। तदनुसारेण ब्रूमः—

तत्र न्यायतत्त्वोक्तास्त्रयः, तदभिप्रेतौ कालात्ययापदिष्टप्रकरणसमाविति पञ्च हेत्वाभासाः। तत्र व्याप्तिपक्षवृत्तिनिश्चयरहितोऽसिद्धः। तद्भेदास्तु न्यायतत्त्वे संग्रहेणोक्ताः—"अज्ञातसंदिग्धविपरीतास्त्रिस्रोऽसिद्धयः" इति। सर्वत्रापि पक्षादिष्वज्ञानसंशयविपर्ययैस्त्रिविधो ह्यसिद्धिर्भवति।

---

प्रमाणमञ्जरीति ग्रन्थानां नामानि। एवं पक्षेति। हेत्वाभासपञ्चकनिरूपणानन्तरमेतन्निरूपणं भविष्यति तयोरितरत्रैवेत्यत्र तयोरन्यतरत्रैवेति पाठ एव युक्तः। तथाऽर्थो वा। एकत्रेति। अनित्ये वाङ्मनसे, करणत्वादित्यादौ वाचि अनित्यत्वं प्रागेव सिद्धम्। साध्यद्वयम्। पर्वतोऽग्निधूमोभयवान् धूमादित्यादौ। ननु सिद्धसाधने हेत्वाभासत्वमुच्यमानं स्वार्थानुमाने वा परार्थप्रयोगे वा। नाद्यः—तदा पक्षतारूपकारणाभावात् अनुमाने प्रवृत्तेरेवाभावात्। सिद्धेऽपि साध्ये यदि कस्यचित् व्याप्तिपरामर्शानुमित्युदयः तदा सद्धेतुत्वैवास्तु। तत्र सर्वं तत् स्मृतिरूपज्ञानमित्यपि युक्तम्। नान्त्यः, तदाऽपि हेतोर्दुष्टत्वं कुतः; अनपेक्षितार्थकथनादर्थान्तररूपनिग्रहस्थानमेव स्यादिति चेत्—परार्थप्रयोग एव सिद्धसाधनं दोषः, तच्च न सर्वत्र। पक्षे वा साध्ये वा अंशतो विवादे यदि निर्विवादांशमपि घटयित्वा प्रयुञ्जीत, तदैवेति ज्ञापनायैव, "एकत्र साध्यं प्रसिद्धम्," 'सिद्धमसिद्धञ्च साध्यद्वयम्' इत्युक्तम्। कार्त्स्न्येन सिद्धत्वे तु जिज्ञासाविरहान्न प्रयोगस्यावसर इति। एवं सर्वस्योक्तद्वयेऽन्तर्भावमुपपाद्य निगमयति एवमिति। अतिपीडायाम्=परोक्तानां शोधनेऽधिकं कृते इत्यर्थः। पूर्वेषामिति। पूर्वैर्ग्रन्थकारैरित्यर्थः।

त्रयः असिद्धानैकान्तिकविरुद्धास्तत्रोक्ताः। तेनैव क्रमेणोपरि हेत्वाभासा निरूप्यन्ते तत्रेत्यादिना। निश्चयेति। यद्यपि अव्याप्तापक्षधर्माविति प्रागुक्त्या व्याप्तिरहितः पक्षवृत्तिरहित इत्येव सुवचम्—तथापि असिद्धिशब्दस्य सिद्धिर्निश्चयः तदभावोऽसिद्धिरित्यर्थात् वाच्यार्थोपपादनाय निश्चयघटनम्, तथा चासिद्धिः=व्याप्तिपक्षवृत्तिविषयकप्रमित्यभावः। स च सर्वात्मना तदज्ञाने तत्संशये तद्विषयविपरीतज्ञाने च भवतीति न्यायतत्त्वे अज्ञातेत्यादिकमुक्तम्। तत्र विपर्ययस्थले हेत्वाभासत्वम्। अज्ञानसंशययोः सद्धेतावपि संभवात्। तदेतत् उपरि, धूमानुमानादिष्वेवाविदितधूमादिस्वरूपस्याज्ञानासिद्धिरिति वाक्येन वक्ष्यते। तथाच सद्धेतुरपि व्याप्तिहेत्वादिकमजानन्तं प्रति प्रयुज्यमानोऽकार्यकर इति असिद्ध एवेत्याशयः। एतदवान्तरभेदानां शताधिकत्वमाह पक्षेति कारिकाभिः। अधिकारिका न्यूना।

पक्षतद्धर्मभागानां साध्यतद्धर्मयोस्तथा । हेतुतद्व्याप्तिधर्माणां स्वरूपेणाप्रसिद्धितः ॥
हेत्वंशयोरिहासिद्धेर्वैयधिकरण्यतः । पक्षसाध्यहेतुस्थ विशेषणविशेष्ययोः ॥
वैयर्थ्यात् अत्र सर्वत्र वादिनः प्रतिवादिनः । द्वयोश्च निर्णयात् तद्वत् संशयात् सिद्धसाधनात् ।
असिद्धयोऽसिद्धेश्च विविच्यन्ते शताधिकाः ॥

यद्यपि व्यर्थविशेषणादिकं न वस्तुतोऽसिद्धरूपम्, तथापि न्यायरत्नाकरादिषु परानुसारेण तथोक्तम्। व्यर्थमभिदधानो वादी ह्यर्थान्तराभिधाननिग्रहस्थानेन निगृह्येत; न त्वसिद्ध्या, प्रकृतानुपयुक्तस्य स्वरूपासिद्धत्वादसिद्धत्वेऽपि स्वरूपासिद्धेरेव वाच्यत्वात्। व्यर्थविशेषणप्रयोगेऽपि विशिष्टस्य व्याप्तेरनपक्रमाद् विशिष्टस्यापि व्यभिचाराभावेन व्याप्तिसिद्धेः। न हि—'कार्यत्वमनित्यत्वं न व्यभिचरति, प्रयत्नकार्यत्वं तु व्यभिचरतीति संभवति। न च, धूमवत्त्वालोकवत्त्वे प्रत्येकं पावकाविनाभूते, धूमवत्त्वे सति आलोकवत्त्वादिति प्रयोगे त्वविनाभावं त्यजतः' इति युक्तिमत्। अतो व्यर्थविशेष्यत्वेऽपि न व्याप्तिभङ्गः। पक्षादिविशेषणादिवैयर्थ्येषु तु न व्याप्यत्वासिद्धिप्रसङ्गोऽपि ॥ केचित्तु असिद्धिं चतुर्धा संगृह्णन्ति; तथाहि—व्याप्तत्वे सति पक्षधर्मतया प्रमितिर्हि हेतोः सिद्धिः। तदभावश्च व्याप्तेः पक्षस्य तद्धर्मस्य तत्प्रमितेर्वा स्वरूपाभावात्(वः) स्यात्। तत्र च व्याप्यत्वासिद्धिः आश्रयासिद्धिः स्वरूपासिद्धिः तथात्रैवाज्ञा(त्रैवज्ञा)नासिद्धिरिति समाख्यानिवेशः इति ॥

नन्विदमसिद्धलक्षणमतिव्याप्तम्, विरुद्धानैकान्तिकयोरपि व्याप्त्यभावेन व्याप्यत्वासिद्धत्वप्रसङ्गात्। न चैतदिष्टम्, पृथगेव परिसंख्यानात्। अथैतत्परिहाराय निश्चितपक्षवृत्तिः असिद्ध इति

---

पक्षः आश्रयः। स्वरूप-पक्षतावच्छेदकधर्म-पक्षैकदेशानामप्रसिद्धयस्तिस्रः। साध्य-साध्यतावच्छेदकाप्रसिद्धी द्वे। हेतु-हेतुतावच्छेदकयोर्व्याप्तेश्चाप्रसिद्धयस्तिस्रः। हेतुव्यधिकरणासिद्धिः हेत्वंशव्यधिकरणसिद्धिश्च द्वे। पक्षे व्यर्थविशेषणम्, व्यर्थविशेष्यत्वञ्चेति द्वे, हेतौ तथा द्वे, साध्येपि तथा द्वे इति षडिमा असिद्धयः। इमाः वस्तुभूता असिद्धयः। न्यायतत्त्वे सिद्धिशब्दार्थनिश्चयघटनात् वादिमात्रस्योक्तांशेषु विपरीतनिश्चये पूर्वोक्ततावत्संख्याकाः, तस्य तावद्विषयकसंशये च पुनस्तावत्संख्याकाः। एवं प्रतिवादिनो विपरीतनिश्चये संशये च प्रत्येकं तावत्संख्याकाः; तयोरुभयोर्निश्चये संशये च पुनस्तावत्यः; सिद्धसाधनमित्येकः, अंशतः सिद्धसाधने चापरः इति सर्वसमाहारे शताधिकत्वमित्यर्थः। आसु कासाञ्चिदुदाहरणानि दर्शयिष्यति **वावैयधिकरण्यतः** इति। वाशब्दश्चार्थः। पादारम्भे वाकारस्थाने पदान्तरं किमपि स्यात्। हेतुव्यधिकरणासिद्धिमुदाहरिष्यति। तद्वत् हेतोः पक्षैकदेशे व्यधिकरणासिद्धिरपि भवति; यथा पर्वतोऽग्निमान् तत्पर्वतीयधूमवत्त्वादिति।

एवं पूर्वसंमतरीत्या भेदान् प्रदर्श्य तत्र व्यर्थविशेषणत्वव्यर्थविशेष्यत्वे न गणनीये इत्याह **यद्यपीति**।

न्यायकुसुमाञ्जल्युक्तानुवादितार्किकरक्षोक्तमाह **केचित्त्विति**। **तत्रैव ज्ञानासिद्धिरिति** पाठे प्रमित्यसिद्धिरित्यर्थः। **अज्ञानासिद्धिरिति** पाठे अज्ञानरूपासिद्धिरित्यर्थः। तत्रैवेति पदं न स्यात्। **तथैवेति** स्यात्। पूर्वा असिद्धयो वस्त्वभावरूपाः। इयं तु ज्ञानाभावरूपा। अप्रयोजकस्थले व्याप्यत्वाभावनिश्चयासंभवे व्याप्तिनिश्चयाभाव एव वक्तव्य इति चतुर्थस्य प्रमित्यभावस्य घटनं युक्तमिति भावः।

असिद्धलक्षणे अनैकान्तिकादि-चतुर्विधहेत्वाभासभिन्नत्वरूपदलं निवेश्यमिति वक्तुं शंकाते **नन्वित्यादि**।

लक्ष्येत, तदा त्वव्याप्तिः, व्याप्यत्वासिद्धसंग्राहकत्वाभावात्। न चान्यत्र तत्प्रवेश इष्टो दृष्टो वा। किंच साध्यधर्मविशिष्टो धर्मी पक्ष इति सिद्धसाध्यस्यापक्षत्वात् तन्निष्ठस्य सिद्धसाधनाश्रयस्य हेतोराश्रयासिद्धत्वमुच्यते; तथा सति साध्याभाववत्तया निश्चितस्यापि संदिग्धसाध्यत्वलक्षणपक्षत्वाभावेनापक्षत्वाद् बाधितस्यापि हेतोराश्रयासिद्धतैव स्यात्॥ प्रमाणबाधितस्यापि साध्यस्य सिषाधयिषितत्वमात्रेण साध्यत्वात् तद्विशिष्टस्य पक्षत्वमिति चेत्, प्रमाणसिद्धस्यापि तथा किं न स्यात्?॥ अपिच व्याप्तिपक्षवृत्तिनिश्चय एव हि हेतोरङ्गम्; तदभावलक्षणश्चासिद्धो हेत्वाभासपर्यायः स्यात्; न तु तद्विशेषः। अतः प्रागुक्तप्रस्थानेन द्वैधमेवोचितम् इति।

सत्यम्, तथापि हेत्वाभासान्तराणां पृथग्लक्षणसंभवस्य वक्ष्यमाणप्रकारसिद्धत्वात् तल्लक्षणानाक्रान्तत्वे सति हेतुरूपासिद्धेरिह लक्षणत्वेन विवक्षितत्वान्न दोष इति। तथैव सिद्धसाधनमपि बाधितसाधनवत् पृथक्कृत्य कश्चित् तद्व्यतिरेकमप्यसिद्धलक्षणे निवेशयेदिति चेत्, का नो हानिः? विवक्षावैचित्र्येण न्यूनाधिकोद्देशलक्षणादेः प्रारम्भाह्निक एव प्रदर्शितत्वात्। अत्र तु पञ्चधा परिगणयतामभिप्रायेणैव संग्रहात्। न चैकीकरणपृथक्करणाभ्यामाभासस्यानाभासता स्यात्, येनान्यतरपर्युदासे प्रयस्येम। उद्भावनेपि सामान्यरूपे विशेषरूपेपि तुल्यार्थतैव विवक्षिता। सामान्यनिर्देशेऽपि कथमिति विशेषमनुयुक्तेन स एव हि वक्तव्यः इति॥

अथात्र काश्चिदसिद्धय उदाह्रियन्ते। तत्र व्याप्यत्वासिद्धः प्रागुक्तो रूपवैकल्यकल्पितोपाधिको द्रष्टव्यः। तत्र च संदिग्धोपाधिके संदिग्धव्याप्यत्वासिद्धता। आश्रयासिद्धो यथा—शशशृङ्गं तीक्ष्णम्, शृङ्गत्वात् इति। स्वसिद्धान्तमात्रसिद्धप्रकृतिपरमाण्वादिपक्षीकारे त्वन्यतराश्रयासिद्धः। आश्रयभागासिद्धो यथा—अवयवावयविनौ नित्यौ, द्रव्यत्वात् इति; न ह्यवयवसमुदायातिरिक्तमवयविशब्दार्थं त्रय्यन्तविद इच्छन्ति। स्वरूपासिद्धो यथा—नित्यं नभः, निरंशत्वात् इति; अत्र हि "व्योम्नोऽर्धभागाश्चत्वारो वायुतेजःपयोभुवाम्।" इत्यादिपञ्चीकरणवाक्यबलादागमिकैर्नभसोऽपि सांशत्वमिष्यते।

---

सिषाधयिषितत्वमात्रेणेति। साध्यसंदेहः पक्षतेति नेष्यते, किंतु सिषाधयिषैव पक्षता। अत एव, "मन्तव्यश्चोपपत्तिभिः" इति निश्चितस्यैव पुनःपुनः साधनमनुमतम्। अतो बाधितस्थलेऽपि सा। ननु कथं बाधितस्य साधनम्, बाधज्ञानस्य प्रतिबन्धकत्वादिति चेत्—बाधकालीनेच्छाजनितमाहार्यज्ञानमस्तु। आहार्यपरोक्षज्ञानं नेष्यत इति तार्किकोक्तिर्मा नामाद्रियताम्। बाधज्ञानाभावे साधनसंभवाच्च। सिषाधयिषारूपपक्षतानिवेशे सिद्धसाधनस्यासिद्धत्वासंभवात् सिद्धसाधनपार्थक्यस्यावश्यकतया साध्यसंशयरूपपक्षतापक्षेऽपि तस्यासिद्धौ अन्तर्भावो मा भूदित्याह तथैवसिद्धेति।

प्रागुक्त इति। अनुमानप्रथमाह्निके उपाधिनिरूपकभट्टपादग्रन्थानुवादस्थले द्रष्टव्यम्। साध्याविशिष्ट.

एष एवानिश्चितपक्षीकरणवाक्यार्थस्य संदिग्धासिद्धः । साध्यस्यैव हेतुतया प्रयोगे च साध्याविशिष्टाख्यः स्वरूपासिद्धभेदः ; यथा—क्षित्यादिकं सकर्तृकम्, बुद्धिमत्पूर्वकत्वादिति। यदा तु सिद्धं साध्यं हेतुतया प्रयुज्येत, तदा त्वेवं स्वरूपासिद्धता वाच्या ; सिद्ध एव हि हेतुः प्रयोक्तव्यः ; स च साध्यात्मा चेत्, कथं नासिद्ध इति। अत्र च स्वेनैव ज्ञातेन स्वयं ज्ञाप्यत इत्यात्माश्रयद्वारेणासिद्धौ विश्रमः ।

धूमानुमानादिष्वेवाविदितधूमादिस्वरूपस्याज्ञानासिद्धिः ।

व्यधिकरणासिद्धो यथा—पर्वतो वह्निमान्, महानसस्य धूमवत्त्वादिति। यद्यपि धूमवत्त्वात् वह्निमत्त्वं सिध्यति ; तथापि नान्यनिष्ठेन तेन। यद्यप्यसौ न हेतोरपराधः, अपितु प्रयोक्तुरेव ; तथापि प्रयुज्यमानवेषेण हेतुरसिद्ध एवेति युक्तं तथोद्भावनम्। अत एव-अनुपयुक्तपदोपादानेनार्थान्तरनिग्रहतैवेत्यपि न शङ्कनीयम्। दृष्टान्तस्थितहेतुव्यक्तिविशेषः पक्षे नास्तीति तस्य तत्र प्रयुज्यमानस्यासिद्धता युक्ता। दृष्टान्तस्थितस्यापि तस्य व्याप्तिग्रहणमुखेन प्रकृतोपयोगान्न सहसार्थान्तरत्वं वक्तुं शक्यम्। यदि हि वक्ता पर्वतस्थधूमवत्त्वमेव हेतुमभिसंधाय महानसस्येत्यनुपयुक्तं ब्रूयात्, तदैव स्यादपि ; न च तथा विवक्षाऽस्माभिस्तद्वाक्यमन्तरेण निश्चेतुं शक्या। तथा चेत् ब्रूयात्, तथापि महानसस्येति पदस्यानन्वयान्निग्रहस्थानान्तरता। अन्वितानुपयुक्तवचने ह्यर्थान्तरावकाशः, उभयसंनिपातेऽप्युद्भटस्यैवोद्भाव्यत्वादिति। स्वरूपभागासिद्धो यथा—घटव्यतिरिक्तं सर्वमनित्यम्, कार्यत्वात्, घटवदिति। न हि पक्षीकृतेष्वीश्वरादिषु स्वरूपतः कार्यत्वम्। येनाऽऽकारेण कार्यत्वम्, तेनाऽऽकारेणानित्यत्वसाधने तु सर्वत्रैव सिद्धसाधनतेति विशेषः। सिद्धसाधनस्य चाऽऽश्रयासिद्धताप्रकारोऽपक्षधर्मत्वप्रतिपादनेन प्रागुक्तः। सिद्धेष्वेव पक्षेषु हेतोः काचित्कत्वे स्वरूपभागासिद्ध इति विशेषः। विशेषणासिद्धो यथा—क्षित्यादिकम् अस्मदाद्युत्तीर्णकर्तृकम्,

---

साध्यसम इति सूत्रोक्तं स्वरूपासिद्धान्तर्भूतमित्याह साध्यस्यैवेति। सिद्धस्यैव साध्यतया प्रयोगेऽपि स्वरूपासिद्धता सुवचेत्याह यदात्विति । एवं वक्ष्यमाणप्रकारेण ॥ तमेव प्रकारं दर्शयति सिद्ध एव हीति।

अज्ञानसंशयविपर्ययरूपा असिद्धयः प्रागुक्ताः। तत्राज्ञानं सद्धेतावपीत्याह धूमेति। महानसस्येति। एतत्पदप्रयोगात् धूमपदेन महानसीयधूम एव जिघृक्षित इति हेतोः प्रकृतसाध्यव्यधिकरणता। न चात्र विरुद्धता; अग्नित्वसामान्येनाग्नेः साध्यतायां हेतोः साध्यासामानाधिकरण्यासंभवात्। न सहसेति। अनपेक्षितार्थकथने ह्यर्थान्तरत्वम्। धूमस्य महानसीयत्वं व्याप्तिग्रहणाय ज्ञातव्यमेवेत्यपेक्षितमेव। परंतु हेतुवाक्ये तत्कथनमयुक्तम्। अनुपयुक्तमिति। महानसीयत्वं व्याप्तिग्रहणाय ज्ञापितमिति ब्रूयाच्चेत्, तदाऽप्युपयुक्तत्वमिति ध्येयम्। येनाकारेण कार्यत्वमिति साक्षाद्वा परंपरया वा स्थूलावस्थाविशिष्टतया

अस्मदाद्यशक्यक्रियत्वे सति कार्यत्वात्; यद् येनाशक्यक्रियं कार्यम्, तत् ततोऽन्यकर्तृकम्; यथा मनुष्याद्यशक्यक्रियं ततोऽन्यकर्तृकं वल्मीकादि इति। अत्रास्मदादिशब्देन सर्वजीवग्रहणे विशेषणासिद्धः, अस्मदादीनामेवोपचितपुण्यानां विश्वामित्रादिवत् वम्रिकादिवच्च विचित्रतर-महत्तरसूक्ष्मतरकार्यारम्भसंभवात्। न च तेषां तेषु तेष्वकर्तृत्वम्, कुलालादिष्वपि प्रसङ्गात्। न हि कुलालादयोऽपि सामग्र्यन्तर्भूतमदृष्टादिकमसमवायिकारणभूतमान्तरसूक्ष्मावयवसंयोगा-दिकं च यथावत् साक्षात्कुर्वन्ति। अपि तु, 'एवं व्यापृते सति एतत् कार्यं भवति' इति प्रमाणतोऽध्यवसाय प्रवर्तन्ते। तदेतत् तुल्यं विश्वामित्रादिष्वपि। प्रमाणं त्वन्वयव्यतिरेका-दिकं, शास्त्रं चेति क एष विशेष इति? । एष एव हेतुर्व्युत्क्रमेण पाठे विशेष्यासिद्धः। एवमुभयासिद्धिराश्रयदृष्टान्तविशेषणाद्यसिद्धिश्च ग्राह्या। यच्चात्र हेत्वाभासेऽप्यसिद्धे, हेतुरसिद्ध इत्युद्भावनम्, न तत्र व्याघातः शङ्कनीयः; हेतुतया त्वदभिमत इति वाद्यभिप्रेतत्वात्। एवमाभासान्तरेष्वपीति ॥

सव्यभिचारोऽनैकान्तिकः। 'स द्विधा—साधारणोऽसाधारणश्चेति। पूर्वः पक्षत्रयव्यापी। उत्तरः पक्षमात्रनिष्ठः। यथा हि पक्षसपक्षमात्रविषयस्यान्वयस्य विपक्षवृत्तिर्व्यभिचारः, तथा सपक्षैकदेशमात्रविषयस्य व्यतिरेकस्य स्वस्थानातिक्रमेण सपक्षव्याप्तिर्व्यभिचारः इत्येके। असाधारणस्त्वनध्यवसितसंज्ञं हेत्वाभासान्तरमिति भूषणः। द्वावप्यष्टविधौ; तथा हि—
त्रयाणामपि पक्षाणां व्यापकोऽव्यापकस्तथा। एकद्वि व्यापकाः षट् चेत्येवं साधारणोऽष्टधा।

---

कार्यत्वाभिप्रायेण। **अपक्षधर्मत्वेति**। पक्षताविशिष्टपक्षवृत्तित्वाभावेत्यर्थः। **उत्तीर्णेति**। अन्येत्यर्थः।

**व्युत्क्रमेण पाठे**=कार्यत्वे सति अशक्यक्रियत्वादिति प्रयोगे। **उभयासिद्धिः** विशेष्यविशेषणो-भयस्याप्यभावः। **व्याघातः** हेतुत्वं नाम व्याप्तिपक्षधर्मतावत्त्वम्। तथा चेत् कथमसिद्धतेति।

पञ्चसु हेत्वाभासेषु द्वितीयमाह **सव्यभिचार** इति। ऐकान्तिकत्वं साध्यवन्मात्रवृत्तित्वम्। तदभावश्च साध्याभाववद्वृत्तित्वं साध्यवदवृत्तित्वञ्च। आद्यं साधारणे, द्वितीयमसाधारणे। सव्यभिचार इत्यत्र व्यभिचारो नाम स्वस्थानातिक्रमः। स्वस्थानञ्च साध्यवदेव। तदतिक्रमः साधारणे। असाधारणे स कथम्, साध्याभाववति हेतोरभावादित्यत्र तत्रोपपादयति **तथा सपक्षेति**। पक्षसपक्षमात्रवृत्तित्वं व्याप्तिः सहचार नियमः। तदभावो व्यभिचारः। स च पक्षसपक्षेतरवृत्तित्वं सपक्षावृत्तित्वञ्च। आद्यं साधारणे; अन्त्यम-संधारणे। यदि वह्निमत्ययोगोले धूमाभाववत् क्वचित् सपक्षे परं हेत्वभावः स्यात्, तदा सपक्षावृत्तित्वरूप-व्यभिचारो न स्यात्। सपक्षे सर्वत्र हेत्वभावे स भवत्येवेति भावः। **भूषण** इति। अनैकान्तिकस्य संदिग्धपदेन कणादेन व्यवहृतत्वात् असाधारणधर्मस्थले संदेहातिरिक्तस्यानध्यवसायात्मकज्ञानस्य **प्रशस्त-पादभाष्योक्त**तया तदनुसारेण तथा पृथक्करणमिति भावः। **त्रयाणामपि पक्षाणा**मिति। पक्षसपक्ष-

निःसपक्षो निर्विपक्षो द्वयं निर्विषयं(?) तथा। पक्षव्याप्तितदव्याप्त्योरष्टासाधारणाः स्मृताः।
केचित् सपक्षे सत्येव तस्याभासत्वमब्रुवन्। तदसत् सकलं नित्यं सत्त्वादित्यादिसंभवात् ॥

तत्र पक्षत्रयव्यापक साधारणो यथा—क्षित्यादिकं सकर्तृकम्, प्रमेयत्वात्, घटवत्, इति। तत्रैव परिमितपरिमाणत्वादिनि पक्षत्रयैकदेशवृत्तिः, पक्षसपक्षभूतगुणकर्मणोरवृत्तेः, विपक्षेषु च विभुष्ववृत्तेः। पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथा—परमाणवश्चूर्णीभविष्यन्ति, प्रत्यक्षग्राह्यत्वात्, घटवत् इति। अयं हेतुः सपक्षतयाऽभिमते द्व्यणुकादौ, विपक्षे चेश्वरादौ न वर्तते।

सपक्षव्यापक इतरैकदेशवृत्तिर्यथा—कालजीवावनित्यौ, अचेतनत्वात्, पृथिव्यादिवत् इति। नित्येश्वराभ्युपगमपक्षे तस्य विपक्षत्वादत्राचेतनत्वस्य विपक्षैकदेशवृत्तिता। विपक्षव्यापकः पक्षसपक्षैकदेशवृत्तिर्यथा—कालात्मानावनित्यौ, कालघटव्यतिरिक्तत्वात्, घटवत्, इति। अत्र सपक्षे घटे पक्षे च काले कालघटव्यतिरिक्तत्वं नास्ति। एते त्रय एकैकव्यापकाः।

अथ द्विव्यापकास्त्रय उदाह्रियन्ते। तत्र पक्षेतरव्यापको यथा—अनित्यौ पृथिवीपवनौ, पृथिवीव्यतिरिक्तत्वात्, प्रदीपवत्, इति। सपक्षेतरव्यापको यथा—अनित्यः शब्दः, घटव्यतिरिक्तत्वात्, पटवत्, इति। विपक्षैकदेशवृत्तिरितरव्यापको यथा त्रसरेणुः सावयवः, द्रव्यत्वात्, घटवत् इति। अत्र पक्षैकदेशवर्तिनां चतुर्णामसिद्धलक्षणयोगेपि व्यभिचारादनैकान्त्यमप्यस्तीति दूषणसंभेदसंभवज्ञापनायोदाहृतिः। एवमन्यत्रापि ग्राह्यम् ॥

अत्र च सिद्धिवत् अन्यतरोभयभेदेनापि विभागोऽनुसंधेयः। न ह्यसिद्धवदेवायं विभाग इति नरपतिशासनम्, विपरिवर्तनैकत्वस्य दुर्वारत्वात्; उदाहरणदर्शनाविशेषाच्च। तथाहि—नित्या वर्णाः, श्रावणत्वात्, शब्दत्ववत् इति कुमारिलेनोक्ते काणादः स्वानभ्युपगतैरपि श्रावणतया तदभ्युपगतैर्ध्वनिधर्मैरनैकान्त्यमुद्भावयन् कथं प्रतिक्षेप्यः? कथं वा शब्दतया स्वाभ्युपगतैरेव

---

विपक्षाणामित्यर्थः। **अव्यापक** इति। पक्षसपक्षविपक्षैकदेशवृत्तिरित्यर्थः। **एकव्यापकः** पक्षमात्रव्यापकः, सपक्षमात्रव्यापकः विपक्षमात्रव्यापकश्च। **द्विव्यापकः**। पक्षसपक्षव्यापकः, पक्षविपक्षव्यापकः सपक्षविपक्षव्यापकश्च। एषामुदाहरणान्युपरि वक्ष्यन्ते। असाधारणेऽष्टविधत्वमाह **निस्सपक्ष** इति। **द्वयं निर्विषयं तथे**त्यत्र उदाहरणवाक्यस्थलप्रयोक्ष्यमाणपदानुसारात् **निर्द्वयः सद्वयस्तथे**ति पठनीयम्। **पक्षव्याप्ति-तदव्याप्त्यो**रिति। सर्वपक्षवृत्तित्वे पक्षैकदेशवृत्तित्वे वा सतीत्यर्थः। तथाच पक्षव्याप्तत्वे सति सपक्षरहितत्व, विपक्षरहितत्व, सपक्षविपक्षोभयरहितत्व, सपक्षविपक्षोभयसहितत्वान्यतमवान्। पक्षैकदेशवृत्तित्वे सति तदन्यतमवानिति असाधारणा अष्टेति।

विभागान्तरं दर्शयति अत्र **चासिद्धी**ति। **अन्यतरे**ति। वादिप्रतिवाद्यन्यतरानैकान्तिक, तदुभयानैकान्तिक इति भेदेनेत्यर्थः। **ध्वनिधर्मै**रिति। तीव्रत्वमन्दत्वादयो वर्णधर्मा इति काणादाः। परंतु तेषां जातित्वे नित्यता, उपाधित्वे त्वनित्यता। तस्मात् तत्रानैकान्तिकत्वं सविवादमिति तदुपेक्ष्य तीव्रादिः ध्वनिविशेषः अनित्यः, न तु वर्णधर्मः वर्णश्रवणकाले ते ध्वनयोऽपि सह गृह्यन्ते इति वदन्तं मीमांसकं प्रति तत्रानैकान्त्यापादनम्। उभयसंमतस्थलं तु वर्णातिरिक्तध्वनिरूपसमुद्रघोषादीति भावः

समुद्रघोषादिभिरनित्यैः। असिद्धिवत् परमतमूलमनैकान्त्यम् [परिहर्तुं शक्येतापि ?] स्वमतमूलं तु तद्वदेव दुरुत्तरमिति। एवमन्यत्राप्यन्यतरोभयभेदेन संभव ऊह्यः। तत्तत्पदार्थभेदाभ्युपगमानभ्युपगमवशेन तत्संभवादिति ॥

यस्त्वनध्यवसितापरपर्यायोऽसाधारणोऽष्टधा विभक्तः, तत्र सपक्षशून्यः प्राङ्निरूपितः केवलव्यतिरेक्येव पराभिमतः। विपक्षरहितो यथा—सर्वं कार्यजातं पक्षीकृत्याह—विगीतं नित्यम्, कादाचित्कत्वादिति। उक्तिविरोधोऽत्र संभिद्यते। सपक्षविपक्षरहितो यथा—सर्वमनित्यं सत्त्वादिति। इह तु व्यतिरेकिहेतौ विरोधोपि; प्रतिनियतश्च। यन्नित्यं तदसदिति व्यतिरेको हि धिय(अभिधेय)मपि नाधिरोहेत् किमुत वाचम्। नित्यत्वं हि कालानवच्छिन्नसत्तायोगः। एवमनित्यत्वादिसाध्यान्तरेष्वप्यूह्यम्। सपक्षविपक्षवान् यथा—पृथिव्यनित्या गन्धवत्त्वादिति। एते पक्षव्यापिनः। तदेकदेशवर्तिनोपि चत्वारः स्वयमूह्याः। एषामष्टानां साध्यसंबन्धाग्रहणं समानमिति तुल्ययोगक्षेमतैव ॥

ये च केवलव्यतिरेकिप्रामाण्यमिच्छन्ति, तैरपि सपक्षशून्यस्य पक्षमात्रवर्तिनः क्वचिदाभासत्वमेष्टव्यम्। तथाहि—सर्वं कार्यं नित्यसुखाद्याश्रयकारणकम्, शशविषाणपूर्वकं वा कादाचित्कत्वात् इत्युक्ते, सपक्षरहितस्यापि कादाचित्कत्वस्य न सम्यग्घेतुत्वमिष्टम् ॥ विपक्षे बाधकाभावादिना तदाभासत्वमिति चेत्, तुल्यं सर्वं चेतनकर्तृपूर्वकमित्साधनेऽपि; तमन्तरेणापि तैस्तैरेव हेतुभिरदृष्टसहकृतैस्तत्तत्कार्योदयसंभवात् ॥ अदृष्टस्याचेतनत्वाच्चेतनानधिष्ठितस्य न, कार्यारम्भप्रवृत्तिसंभव इति चेत् किमिदमधिष्ठानं नाम? किं प्रयत्नादिवत् प्रेरणापरपर्यायं क्रियाधारणापादनम्, उतावस्थान्तरापादनमात्रम्, उत प्रयत्नवतः संनिधानमात्रमेव, अन्यद्वा किंचिदिति? नाद्यः; गुणतयाभ्युपगतस्यादृष्टस्य क्रियावत्त्वासंभवात्। न द्वितीयः, अदृ... दे.। न च तृतीयः, प्रयत्नजन्यफलानाधारे प्रयत्नवदधिष्ठितत्ववाचोयुक्तेरनर्थकत्वात् ॥ प्रयत्नसहकारित्वेनावस्थानमात्रमित्यप्ययुक्तम्, क्रियाहेतुगुणेष्वन्यतमस्य तेनापि क्रियोत्पत्तौ गुणान्तरकल्पनानैरर्थक्यात्। अदृष्टस्य च क्रियाहेतुत्वम् "अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि" इति वदद्भिः स्वीकृतम्। अचेतनं चेतनाधिष्ठितमिति व्याप्तेश्च चैतन्ये प्रयत्ने वा व्यभिचारिता। अन्यथा अनवस्थादिप्रसङ्गात्। तद्व्यतिरिक्तत्वे सतीति विशेषणमपि निर्मूलम्, अनीश्वरचैतन्यप्रयत्नयोरीश्वराधिष्ठितत्वाभ्युपगमात्। ईश्वरगुणयोस्तु तयोरसिद्धौ व्यवच्छेद्यासिद्धेः। सिद्धौ तु

वर्णानां नित्यानां तीव्रत्वमन्दत्वादि विना सर्वदैकरूपत्वात् **व्यतिरेकिहेतौ**=व्यतिरेकव्याप्तौ **प्रतिनियतः** कादाचित्कः। केवलव्यतिरेकिणोऽसाधारणहेत्वाभासत्वं प्रागेव प्रपञ्चितम्। सपक्षे सति अन्वयव्याप्त्यभावे केवलव्यतिरेके स्यादसाधारण्यम्, सपक्षाभावे तु नेति विभजनमयुक्तमिति चोपपादितम्। पुनरिहाप्युदाहरणान्तरप्रदर्शनेन तद् द्रढयति **येचेति**। नित्यसुखेत्यादिकं नैयायिकैरीश्वरे सुखास्वीकारात्। न च साध्याप्रसिद्धिर्दोषः; तस्य त्वदिष्टसर्वकेवलव्यतिरेकिसाधारण्यात्। **वाचोयुक्तेरनर्थकत्वात्**=अधिष्ठितेति शब्दस्यान्वययोग्यार्थाभावात्। अर्थमेकं शंकित्वा परिहरति **प्रयत्नसहकारित्वेनावस्थानमात्रमिति**। क्रियाहेतुगुणाः अदृष्टं

चेतनाधिष्ठानादिमुखेन तदनुमाननैष्फल्यात् । अत एव न चतुर्थः, तथाविधस्य कस्यचित् कुतश्चित् प्रमाणादसिद्धेः इत्यलं प्रसक्तानुप्रसक्त्या ॥

3. साध्यविपरीतव्याप्तो विरुद्धः ; यथा—पर्वतोऽनग्निः धूमवत्त्वादिति ।

सपक्षे सत्यसति च पृथक्पक्षविपक्षयोः । व्याप्त्याऽव्याप्त्या(प्त्योः)द्वयोश्चेति विरुद्धोऽप्यष्टधा मतः

इष्टप्रतीपव्याप्त्या हि निर्विवादा विरुद्धता । विशिष्टसाध्यवैलोम्यात् स्याद् विशेषविरुद्धता ॥

धर्मधर्म्युभयेषां च तद्विशेषद्वयस्य च । विपरीतानुगमनाद्विरुद्धः षड्विधो मतः ॥

---

प्रयत्नः नोदनाख्यसंयोगश्च यथायथम् । **ईश्वरगुणयो**स्त्विति । ईश्वरचैतन्य–प्रयत्नव्यतिरिक्तत्वे सतीति विशेषणं दुर्वचम् । तयोः सिद्धेः प्राक् तद्विशेषणायोगात् । आगमात् तत्सिद्ध्यनन्तरं तु अचेतनं चेतनाधिष्ठितमित्यनुमानप्रयोगस्यैव व्यर्थतया तत्र विशेषणविचारायोगात् । **चतुर्थः**=अन्यद्वा किञ्चिदिति

"विरुद्धहेत्वाभासं निरूपयति **साध्यविपरीतव्याप्त** इति । साध्याभावव्याप्यत्वं विरुद्धसामान्यलक्षणम् । अत्रापि तार्किकप्रथमोक्तरीत्याऽष्टविधत्वं प्रथममाह **सपक्षे** इति । सत्सपक्षकः असत्सपक्षकश्चेति द्विविधो विरुद्धः । **पृथगि**ति । पक्षमात्रे विपक्षमात्रे, द्वयोश्च=पक्षविपक्षद्वये च हेतोः व्याप्तौ, अव्याप्तौ च सत्यां विरुद्धता भवति । **व्याप्तिः** सर्वत्रस्थितिः । व्याप्त्यव्याप्त्योरित्यत्र **व्याप्त्याऽव्याप्त्या** इति पाठेऽर्थः स्पष्टः । तथा च पक्षमात्रव्यापकः विपक्षमात्रव्यापकः पक्षविपक्षोभयव्यापकः पक्षविपक्षोभयाव्यापकश्चेति चातुर्विध्यं सत्सपक्षकहेतौ, तथा चतुष्टयमसत्सपक्षकहेतौ चेति अष्टविधत्वम् । व्यापकत्वं सर्वतद्वृत्तित्वम् । अव्यापकत्वं कतिपयतद्वृत्तित्वम् । एवं पक्षवृत्तिविरुद्धानां विभागः । एवं पक्षावृत्तिरपि विरुद्धः सत्सपक्षकविपक्षव्यापकः, सत्सपक्षक विपक्षाव्यापकः, असत्सपक्षक विपक्षव्यापकः असत्सपक्षकविपक्षाव्यापकश्चेति चतुर्विध इति विरुद्धनिरूपणावसाने वक्ष्यतीति तस्य चातुर्विध्यस्यापि गणने विरुद्धो द्वादशविधो भवतीति ध्येयम् । ननु क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्र पक्षधर्मताबलात् सर्वज्ञकर्तृकत्वरूपविशेषसिद्धिरिति वदद्भिस्तार्किकैः विशेषविरोध आशंक्य परिहृतः, स परिहारो दुष्कर इति 'सिद्ध्यसिद्ध्योर्विरोधो नेत्येवं प्रलपतस्तव' इत्यादिना न्यायसिद्धाञ्जने उपपादितम् । अतः कार्यत्वं यत्र घटादौ, तत्र सर्वज्ञकर्तृकत्वाभावरूपविशेषाभावसत्त्वात् विशेषविरुद्धत्वमिति वक्तव्यम् । तत्र साध्यविपरीतव्याप्यत्वमिति प्रकृतलक्षणं कथम् । प्रकृतप्रतिज्ञावाक्यघटककर्तृपदविवक्षितार्थस्यैव साध्यत्वात् सर्वज्ञत्वादेस्तदर्थत्वाभावादित्याशंकायाम्, लक्षणे साध्यपदेन प्रकृतपक्षे साधयितुमिष्टेत्यर्थविवक्षणात् सर्वज्ञकर्तृकत्वपर्यवसानस्यैव तदिष्टत्वात् लक्षणं सुस्थमित्याशयं दर्शयति **इष्टप्रतीपे**ति श्लोकेन । षाड्विध्यरूप प्रकारान्तरमाह **धर्मे**ति । धर्मः साध्यम् ; धर्मी पक्षः । हेतोर्धर्मविरोधे धर्मिविरोधे तदुभयविरोधे, धर्मविशेषविरोधे धर्मिविशेषविरोधे धर्मविशेष,धर्मिविशेषोभयविरोधे च विरुद्धतेत्यर्थः । घटो नित्यः कृतकत्वादित्यत्र धर्मविरोधः । आत्मा नित्यत्वविशिष्टद्रव्यं कृतकत्वादित्यत्र हेतौ धर्मिविरोधः । आत्मा नित्यः कृतकत्वादित्यत्रोभयविरोधः । धर्मविशेषादिविरोधश्च पृथिव्यात्मानौ नित्यौ कृतकत्वादिति वक्ष्यमाणरीत्या

तत्र सति सपक्षे चतुर्णामुदाहृतिः—पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा—अनित्यो जीवः, चेतनत्वादिति। सर्वेषामेव जीवानां सुषुप्त्याद्यवस्थास्वपि संकुचितचैतन्याश्रयत्वं त्रय्यन्तविद्भिरिष्यते। आगन्तुकचैतन्यवादेऽपि चैतन्यात्यन्तायोगव्यवच्छेदलक्षणं चेतनत्वं सर्वेषु जीवेषु विद्यत एवेति पक्षव्यापकता। विपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा—नित्यौ पृथिव्यात्मानौ, कृतकत्वादिति। उभयव्यापको यथा—नित्यः शब्दः, कृतकत्वादिति। उभयाव्यापको यथा—शब्दस्पर्शावनित्यौ, श्रावणत्वादिति। शब्दत्वसामान्यं नित्यमिच्छतः तत्रापि हेतुवृत्तेर्विपक्षैकदेशवृत्तिता।

असति सपक्षे त्वन्ये चत्वारः—तत्र पक्षव्यापकः विपक्षैकदेशवृत्तिर्यथा —चेतनाः सर्वे निरतिशयानन्दधर्मकाः, स्वयंप्रकाशत्वात् इति। स्वयंप्रकाशत्वं हि वेदान्तिनां सर्वात्मव्यापकम्, अचेतनत्वादनानन्दिनि धर्मभूतज्ञानाख्ये विपक्षे च वर्तत इति। विपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा—सर्वेऽप्यात्मानः सर्वज्ञाः, अकर्मवश्यत्वात् इति। कर्मवश्यत्वाभावो ह्यचेतनेषु सर्वेषु विपक्षेषु व्याप्तः, पक्षे चेश्वरांश इति। उभयव्यापको यथा—कादाचित्कं सर्वमनित्यम्, वस्तुत्वात् इति। अत्र वस्तुनःकादाचित्कानामनित्यत्वेऽप्यस्मिन् प्रयोगे वस्तुत्वहेतोर्विपरीतव्याप्त्या विरुद्धता। उभयैकदेशवृत्तिर्यथा—तत्रैव साध्ये द्रव्यत्वादिति।

ननु पक्षस्पर्शरहितोऽपि नवमो विरुद्धः संभवति—नित्य आत्मा कृतकत्वात् इति; अत्र हि सर्वस्मिन् आत्मजाते कृतकत्वं नास्त्येव, विपक्षे च सर्वत्र वर्तते, सपक्षे च कालादौ न वर्तत इति नानैकान्तः॥ सत्यम्; अत एव हि साध्यविपरीतव्याप्तो विरुद्ध इति लक्षणं प्रणीतमस्माभिः; न तु पक्षविपक्षयोरेव वर्तमान इति। ततश्च सत्यसति च सपक्षे सर्वपक्षावृत्तिविपक्षव्यापकाव्यापकरूपविरुद्धचतुष्टयसंभवात् द्वादशविधो विरुद्ध इति। विशेषविरुद्धत्वमपि व्याप्ति[ग्रह?]दशानुविधायिस्वरूपवैकल्यवति प्रागुदाहृते प्रतिसंधानीयमिति॥

4. कालात्ययापदिष्टस्तु बलवन्मानबाधितः। कालातीतोऽतीतकालो बाधितश्च स कथ्यते॥

---

उभयपक्षकोभयसाध्यकस्थले ग्राह्यः। ननु चेतनत्वरूपहेतोः दशाविशेषे पक्षे विरहात् पक्षव्यापकत्वं कथमित्यत्र तदाऽपि हेतुसत्तामाह **सर्वेषामेवे**ति।

ननु सर्वपक्षावृत्तिरपि हेतुरस्ति विरुद्धः। अतो नवत्वं विरुद्धानाम्, नाष्टत्वमिति **तार्किकरक्षा**ग्रन्थोक्तमादाय शंकते **नन्वि**ति। पक्षविपक्षवृत्तिर्विरुद्ध इत्यनु्क्त्वा साध्यविपर्ययव्याप्तेरेवास्माभिर्लक्षणत्वोक्तेस्तस्य ग्रहणमिष्टमेव। अथापि नवत्वं दुर्वचम्, तत्र पक्षावृत्तिविरुद्धे सत्सपक्षकत्वासत्सपक्षकत्वभेदेन विपक्षव्यापकत्वाव्यापकत्वयोः सुवचतया तच्चातुर्विध्यसंभवात् द्वादश विरुद्धा इत्येव वक्तव्यत्वादित्याह **सत्य**मित्यादिना। **विशेषविरुद्धत्वम**पीति। एतदर्थः प्रागेव दर्शितः। **स्वरूपवैकल्ये**ति। सकर्तृकं कार्यत्वादित्यादौ शरीरिकर्तृकत्वादिनिरूपितव्याप्तेर्दर्शनात् शरीरिकर्तृकत्वरूपस्य क्षित्यादौ वैकल्यात् अन्यादृशधर्मस्यैव तत्रेष्टौ विरुद्धत्वं भवतीत्यर्थः॥

बाधितं हेत्वाभासमाह **कालात्यये**ति। कालस्य=पक्षे साध्यग्रहणयोग्यकालस्य अत्यये=साध्याभाव-

एकैकद्वित्रिबाधेन सप्तधा स विभागवान् । एवं बाधितयोर्भेदः प्रत्यक्षागमयोरपि ॥
यद्यप्येकैकतो बाधेऽप्याभासत्वं प्रतिष्ठितम् । तथाप्यत्र शिक्षार्थं यावत्संभववर्णनम् ॥
यावद्दोषोक्तिनियमकथयां चोपयुज्यते । यथास्मृत्येककथनेऽप्यनेकं शिष्यमेव हि ॥

तत्र प्रत्यक्षबाधितो हेत्वाभासो यथा—अग्निरनुष्णः, पदार्थत्वात्, घटवदिति । न ह्यत्र ज्वालैक्यप्रत्यक्षवत् पावकौष्ण्यप्रत्यक्षं दुर्बलम्, अनन्यथासिद्धेः । न ह्यौष्ण्यं नाम जगति नास्ति; वह्नौ तदारोपस्याप्यसंभवात् । क्वचित् सिद्धमेवान्यत्राऽऽरोप्यम् । तदग्रहे च तदभावलक्षणसाध्यस्याप्यग्रहः । न चाप्रमितसाध्यकमान्यमनुमानं प्रवर्तयितुमलम् । न चोष्णत्वाभावातिरिक्तमनुष्णत्वं नाम किंचित्, भावान्तराभावपक्षेऽपि तस्य तदभावात्मना निरूपितस्य व्याप्त्यनुप्रवेशात् ॥ न च तद् द्रव्यम्, तल्लक्षणादृष्टेः । न चाबह्निधर्मः; तद्धर्मिणोऽन्यस्य कस्यचित् कुतश्चित् प्रमाणादसिद्धेः, सिद्धौ च तत्रापि पदार्थत्वसद्भावे हेतोरनैकान्त्यात्, तदसद्भावे तस्यैवासिद्धेः । अत एव वह्नौ तत्सादृश्यतत्संसर्गग्रहाद्यसंभवात् तद्गुणारोपो दुर्वचः । अग्न्यातपोपाधिक एव ह्यन्यत्रौष्ण्योपलम्भः, न तथा तयोस्तदुपलम्भोपाधिं कंचित् पश्यामः । न च तयोः परस्परोपाधिकत्वम्, व्याघातात्, नियामकाभावाच्च । अतोऽग्न्यातपादिरूपतेजोधर्म एवौष्ण्यमित्यनन्यशरणे प्रत्यक्षेऽनुमानसहस्रेणापि न तत्कम्पनसंभव इति ॥

नन्वेवं ज्वालैक्यप्रत्यक्षेऽप्यनुमानबाधो न स्यात् ॥ न; तत्रानुमानस्य स्वमूलभूतप्रत्यक्षविशेषप्रतिक्षेपकत्वाभावात् । न हि तत्र भेदसामान्यादिग्रहणं ज्वालैक्यग्रहणोपजीवि । भेदप्रतियोगिन ऐक्यस्याप्यन्यत्र सामान्येन ग्रहणं सिद्धम् । न च कृत्स्नप्रत्यक्षादिबाधकानुमानवत् प्रयोजकविशेषेणापि मूलघातः । न च ज्वालान्तरासंभवे दीपसामग्र्यनुवृत्त्यादेरन्यथासिद्धिः सुवचा । न च ज्वालैक्यप्रत्यक्षं तदौष्ण्यप्रत्यक्षवत् अनन्यथासिद्धम्, निर्वापितारोपितदीपेऽप्यविदितनिर्वापणस्य तत्त्वप्रत्यभिज्ञानात् । तद्वदेव सादृश्यादिबलादैक्यधीसंभवे शङ्कितान्यथासिद्धेः प्रत्यक्षस्य

---

ग्रहकाले अपदिष्टः=उक्तो हेतुरित्यर्थः । कालमतीतः **कालातीतः** । अतीतः कालो यस्य सोऽतीतकालः । **बाधितः**=सञ्जातबाधः । **एकेति** । बाधकप्रमाणानि प्रत्यक्षानुमानागमाः । तेष्वेकैकेन बाधे त्रयः, द्वाभ्यां बाधे त्रयः, त्रिभिर्बाधे चैक इति सप्तधा । हेत्वाभासवत् प्रत्यक्षाभासे आगमाभासे चैकैकद्वित्रिबाधेन भेद इत्याह **एवमिति** । एकमात्रोक्तेः पर्याप्तत्वेऽपि न्यूनतापरिहाराय ग्रन्थे सर्वं गणनीयमेवेत्याह **यथास्मृतीति** । **तत्**=अनुष्णत्वप्रतियोगि उष्णत्वं द्रव्यमद्रव्यं वेति विकल्प्य दूषयति **नचेति** । **अत एव**—अवह्नेरौष्ण्याश्रयस्य असिद्धेरेव न वह्नौ तत्सादृश्यादिमूलकस्तदारोपः । **अग्न्यातपेति** । अग्नि—आतपान्यतरेत्यर्थः । **तथा** जलादावौष्ण्यं प्रति अग्न्याद्युपाधिमिव । **तयोः** अग्नावातपे च । **व्याघातादिति** । आतपौष्ण्यस्याग्न्युपाधिकत्वे अग्न्यौष्ण्यस्यातपौपाधिकत्वं कथम् । न चैकत्र वास्तवम् अन्यस्मिन् औपाधिकमिति, **नियामकाभावात्**=विनिगमनाविरहात् । औष्ण्यप्रत्यक्षमनुष्णत्वानुमानबाधकम्, ज्वालैक्यप्रत्यक्षं तु न ज्वालाभेदानुमानबाधकम्; ज्वालाभेदानुमानं प्रति ज्वालाप्रत्यक्षस्योपजीव्यत्वेऽपि तदैक्यप्रत्यक्षस्यानुपजीव्यत्वात्, ऐक्यप्रत्यक्षस्यानन्यथासिद्धत्वाभावाच्च । **दीपसामग्र्यन्तरेति** । वर्तितैलावयवसंयोगस्य दीपकारणत्वात्

भेदानुमानप्रतिक्षेपाशक्तेः। सुसूक्ष्मावलोकने च ज्वालाधूमादिसंततिषु निस्तरङ्गप्रवाह तैलधारा दिष्विव संचरणभेदाध्यवसायात्।

एवमेव देहात्मैक्यप्रत्यक्षेऽपि भेदानुमानस्यैव विजयित्वम्, तप्तायःपिण्डे पावकत्वादिबुद्धिवत् ज्ञातृसंसर्गविशेषात् संघातेऽपि तद्ग्रहोपपत्तेः। न च पावकवत् ज्ञाता पृथङ्नोपलभ्यत इति वाच्यम्, ममेदं शरीरमिति व्यतिरेकप्रत्ययदशायां गृहतत्स्थादिवत् पृथगेवोपलब्धेः। न च शिलापुत्रकस्य शरीरम्, घटस्य स्वरूपमित्यादिष्विव भेदव्यपदेश औपचारिक इति वाच्यम्, तद्वदिह द्रव्यान्तराभावानध्यवसायात्। न च समानाधिकरणप्रत्ययेन व्यतिरेकप्रत्ययबाधः, विपर्ययेऽपि सुवचत्वात्। यथा च व्यतिरेकव्यपदेशस्यौपचारिकत्वशङ्का, तथा समानाधिकरणाध्यासेऽपि तप्तायःपिण्डादिष्विव संसर्गोपाधिकत्वशङ्काया अपि दुर्वारत्वात्। न च पावकौष्ण्य इव तथा व्यतिरेकप्रत्ययपुरस्काराभावात्। भावे वा कस्तत्राप्याश्वासः? ॥ अपि च व्यतिरेकबुद्धेः प्रथमतः स्तन्येच्छाद्यनुत्पत्तिप्रसङ्गेनानुग्रहाद् देहात्मबुद्धेश्च तेन निग्रहात् प्राबल्यदौर्बल्ये प्रतिभातः। न हि भवान्तरीयानुभवजनितसंस्कारमूलतज्जातीयत्वप्रतिसंधानजनितसुखादिसाधनत्वानुमानमन्तरेण प्रथमतः स्तन्येच्छादेरुत्पत्तिसंभवः। यथा चेदानीमभ्यासभेदात् रुचिभेदः प्रज्ञाभेदश्च हेत्वन्तरसाम्येऽपि दृश्यते, तथा प्रसूतमात्रस्यापि प्राग्भवाभ्यासभेदहेतुकप्रज्ञारुचिवैचित्र्यं न सहसा प्रतिक्षेप्तुं शक्यम्। अपि च असमाहितधियामस्मदादीनामपि निरुद्धबाह्यकरणवृत्तीनां मात्रया मनःप्रणिधानेऽपि (?) ग्रहालोकयोरिव देहदेहिनोर्भेदोऽपि स्फुरत्येव। विनिष्पन्नसमाधीनां तु विशदतमः इति विशेषः ॥

अत एव हि तस्मिन्नंशे शास्त्रव्यापारः; यथाहुः—

"अवयवितयेदंकुर्वाणैर्बहिःकरणैर्वपुर्निरवयवकोऽहंकारार्हः पुमान् करणातिगः।

---

प्रतिक्षणं तद्भेदरूपसामग्रीप्रादुर्भावात् दीपभेद आवश्यक इति। सुसूक्ष्मेति। इदं भट्टपादोक्तमिति अन्यत्राऽऽचार्यैरनूदितम्। देहात्मैक्यप्रत्यक्षेऽप्यन्यथासिद्धिमाह एवमेवेति। बुद्धिवदिति। अग्निसंसर्गविशेषादिति शेषः। अनध्यवसायादिति। शिलैव शरीरमितिवत् अहमेव शरीरमिति प्रत्ययाभावादिति भावः। समानाधिकरणप्रत्ययेनेति। अहं स्थूल इत्यादिप्रत्ययेनेत्यर्थः। अहं शरीरमिति प्रत्ययाभावात् स्थूलादिपदमेव शरीरातिरिक्तविशेष्यकोपस्थितिजनकमिति ध्येयम्। तथा उष्णभूतवस्त्वन्तरसंसर्गोपाधिकता। अग्नितप्तमयःपिण्डमितिवत् अन्याधीनौष्ण्यप्रत्ययरूपव्यतिरेकप्रत्ययाभावात्। तर्कानुगृहीतो व्यतिरेकप्रत्ययः यदि देह एवाऽऽत्मा स्यात् सस्तन्यपानेच्छा प्रथमतः, शैशवे न स्यात्, उपलभ्यते च सा नरमृगादिशिशुषु सर्वत्रेत्याह अपिचेति। नहीति। स्तनदर्शनेन पूर्वानुभूतस्तनस्मरणे तद्गतेष्टसाधनत्वस्मरणे तज्जातीयत्वज्ञानेनात्र स्तने इष्टसाधनत्वानुमानात् इच्छा। अननुभूतचरवस्तुज्ञानादिसत्त्वेऽपि तत्रेच्छानुदयः पूर्वानुभूतजातीयत्वज्ञानविरहात्। अभ्यासभेदादिति भेदशब्दः विशेषपरः। हेत्वन्तरसाम्येऽपि=अनभ्यस्तविषयेऽपि तद्दर्शनरूपकारणसत्त्वेऽपि। अभ्यस्त इव प्रज्ञाभेदः पूर्वानुभूतविषयकं स्मृतिप्रमोषात्मकं ज्ञानम्। ग्रहालोकयोरिव सूर्यादितत्प्रभयोरिव। उक्तोऽर्थः सर्वो यस्य पद्यस्यार्थानुवादः, तत्पद्यमनुवदति यथाहुरिति ॥ अवयवसमुदायरूपेणेदमिति शरीरं गृह्णद्भिर्बाह्येन्द्रियैरेव

स्फुरति हि जनाः प्रत्यासत्तेरिमौ न विविञ्चते तदधिकुरुतां शास्त्रं रङ्गेश ते परलोकिनि ॥" इति। "आनुमानिकीमप्यात्मसिद्धिमश्रद्दधानाः श्रौतीमेव तां श्रोत्रियाः संगिरन्ते" इत्यात्मसिद्धिग्रन्थोपि तावन्मात्राभिप्राय.। पाणिपादादिषु प्रत्येकसमुदायाहंत्वविकल्पानुपपत्त्यादयश्च अस्मदाचार्यैर्न्यायकुलिशे प्रपञ्चिताः प्रस्पष्टमनुसंधेयाः।

अतो ज्वालैक्य.देहात्मैक्यप्रत्यक्षयोरनुमानेन बाधः सुशकः ; दहनौष्ण्यप्रत्यक्षस्य न तथेति तत्रानुमानमेव प्रत्यक्षबाधितमिति पदार्थत्वादेर्हेत्वाभासता ॥

अनुमानबाधितो यथा—प्रथमाद्यास्तिथयः संभवच्चन्द्रसूर्योपरागाः, तिथित्वात्, पर्ववत् इति। अयं हि उपरागस्य पर्वान्तप्रतिनियतभावित्वग्राहिणा शास्त्रानुमतदृढनिरूढान्वयव्यतिरेकेण गणितानुमानेन बाधितः। आगमबाधितो यथा–परविग्रहादिरुत्पत्तिविलयवान्, सावयवत्वात्, संप्रतिपन्नवत् इति। अयं हि "नित्याऽलिङ्ग्याखभावसंसिद्धि.।" 'नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर। यस्यास्ति सत्ता(सक्तिः)हृदये तस्यासौ संनिधिं व्रजेत्', "नित्यं नित्याकृतिधरम्" इत्यादिभिरागमैरबाधितैर्बाध्यते। न चात्र शास्त्रमन्तरेण ॥", पक्षसिद्धिः। न चासिद्धाश्रयो हेतुः साधकः। न च धर्मिग्राहकेणैव बाध इति नियमः;

---

वपुः स्फुरति। इदमिति स्फुरणवैलक्षण्येन अहमिति ग्रहविषयतया अवयवराहित्येन बाह्येन्द्रियनिरपेक्षतया पुमान् आत्मा स्फुरति। एवमपि नाविवेकं लभन्ते जनाः। प्रत्यासत्त्या देहात्मनोः पृथक्सिद्धत्वाभावात्। तस्मात् रङ्गनाथप्रवर्तितं शास्त्रमेव परलोकानुभवार्हदेहातिरिक्तात्मास्तित्वज्ञापनेऽधिकारं लभत इति। प्रत्यक्षेणैव भेदो गृहीतः। योगेन च सुविशदः। शास्त्रं तु भिन्नत्वेनावागतस्यापि स्वरूपस्वभाव सर्वकालसंबन्धपरलोकप्राप्तिमोक्षार्हत्वादिविशेषज्ञापनात् फलवदिति प्राप्ताप्राप्तविवेकेऽवधार्यमिति भावः **अस्मदाचार्यै**रिति। श्रीवादिहंसाम्बुवाहविरुदैः आत्रेयरामानुजाचार्यैः। **पर्वान्ते**ति। पूर्णिमान्ते चन्द्रस्योपरागः, अमाऽन्ते च सूर्यस्य। समनन्तरप्रतिपदि च मोक्ष इति पर्वान्ते सः, तदभावे तदभाव इत्यन्वयव्यतिरेकौ लोके दृढनिरूढौ शास्त्रेणाप्यनुमतौ। अत उपरागः पर्वान्तमात्रभावी तथान्वयव्यतिरेकवत्त्वादित्यनुमानेन शास्त्रसाचिव्यादितः प्रबलेन तिथित्वहेतुर्बाधित इति। **नित्ये**त्यादि, भगवदाकृतिर्नित्या, **अलिंग्या** युक्त्या दुस्साधा, **स्वभावसंसिद्धिः**=स्वाभाविकीः. अंगप्रत्यंगव्यञ्जनवतीत्यर्थः। **तदाकारे**। तस्य भगवत आकृतौ। **तत्परत्वे**= भगवतः सर्वापेक्षया परत्वे। **पक्षसिद्धिः**=परविग्रह इत्यादेः सिद्धिः। ननु विग्रहानित्यत्वानुमानं विग्रहग्राहकप्रमाणोपजीवकमित्येव युक्तम्, तन्नित्यत्वग्राहकप्रमाणोपजीवकत्वस्यात्रानुमानेऽभावात् कथमनेन बाध इत्याशंकायामाह **न च धर्मी**ति। विग्रहमात्रपरश्रुतेरिव तन्नित्यत्वबोधकश्रुतेरपि विग्रहविषयकतयात् तदंशे एतदुपजीवित्वस्यापि संभवात् उभयं तुल्यम्। अनुपजीव्यत्वेऽपि श्रुतित्वात् बाधकत्वं तुल्यम्; नरशिरःकपालं शुचि प्राण्यंगत्वादिति कापालिकशैवकल्पितस्यानुमानस्य हि कपालाशुचित्वपर आगमः;

तद्वा तादृग्वेति विशेषायोगे तज्जातीयेनापि बाधोपपत्तेः। एवं ब्राह्मणेन सुरा पेया, द्रवद्रव्यत्वात् क्षीरवत् इत्यत्र पातुं शक्यत्वादिविधौ सिद्धसाधनात् पीतायाः पारलौकिकप्रत्यवायसाधनत्वाभाव एव हि सिषाधयिषितः ; तत्र प्रतिषेध्यस्वरूपसिद्धेः आगमोपज्ञत्वात् तदुपजीविनोऽनुमानस्य तेन बाधः। एवमग्नीषोमीयाधर्मत्वादिसाधनेष्वपि भाव्यम्।

द्वाभ्यां द्वाभ्यां त्रिभिश्च बाधितस्तु भिन्नप्रमाणविरुद्धसाध्यकानेकपक्षीकारे तत्तत्प्रमाणविरुद्धानेकसाध्यसहसाधने च तत्तदंशप्रतिनियमेन द्रष्टव्यः ; यथा—विप्रतिपन्नं सर्वं दण्डसाध्योत्पत्तिविनाशवत् वस्तुत्वात् संप्रतिपन्नघटवत् इति संप्लववादे तु अत्यन्तसमानविषयानेकप्रमाणबाध्यत्वमप्यन्वमंसतेति ॥

5. अतुल्यं तुल्यमपि वा यं तुल्यमभिमन्यते। तेन यः प्रतिरुध्येत तमाहुः प्रक्रियासमम् ॥
मानमाभाससंरुद्धं मानरुद्धस्तथेतरः आभासरुद्ध आभासः प्रतिरुद्धस्त्रिधा स्थितः ॥
आभासमानयोरत्राप्यवान्तरभिदावशात्। प्रतिरुद्धविधाभेदा निरूप्या बाधितक्रमात् ॥
त्रिविधस्यापि रोधस्य साम्यबुद्ध्याऽस्ति संभवः। न तु मानेन मानस्य रोधो भवति कर्हिचित् ॥
अन्यूनानतिरिक्तादौ विरोधो न हि विद्यते। न चात्यन्तविभिन्नार्थे विरोधेऽन्यतरत् प्रमा ॥
श्रुतिद्वयविरोधेऽपि तत्रैकस्य न मानता। तात्पर्यार्थे हि मानत्वं न च द्वे अपि तत्परे ॥

---

धर्मिग्राहकप्रमाणत्वाभावेऽपि बाधक एव ; तद्वदिति भावः। **द्वाभ्यां द्वाभ्या**मिति। प्रत्यक्षानुमानाभ्यां अनुमानागमाभ्यां प्रत्यक्षागमाभ्याञ्चेत्यर्थः। **सर्व**मिति पक्षे तत्तत्प्रमाणसिद्धानां घटकत्वादिति भावः। **संप्लववादे** एकविषय एवानेकप्रमाणप्रवृत्तिस्वीकारवादे। यथार्थग्राहित्वमेव प्रमाणत्वम् ; न त्वज्ञातार्थज्ञापकत्वम्। अतोऽग्न्यादौ प्रत्यक्षानुमानागमानां त्रयाणामपि प्रमाणतेति भावः ॥

सत्प्रतिपक्षरूपं पञ्चमं हेत्वाभासं निरूपयति **अतुल्यमि**त्यादिना। हेतुप्रतिहेत्वोर्मध्ये एकतरः सद्धेतुः स्यात्। यदि सपक्षस्थः सन् पक्षस्थसाध्यसाधकत्वेनाभिमतः स्यात्। तदा द्वयोर्न तुल्यबलत्वम् उभयोरप्यसद्धेतुत्वे तु तुल्यबलत्वमित्याशयेन **अतुल्यं तुल्यमपि** वेत्युक्तम्। पर्वतोऽग्निमान् धूमात्, अग्न्यभाववान् जलत्वादित्युक्तौ अतुल्यम्। वायुत्वादित्युक्तावुभयमसत्। **प्रक्रियासम** इत्यस्य प्रकृतायामनुमापनरूपक्रियायां समत्वेन मत इत्यर्थः। पक्षप्रतिपक्षावनवसितौ प्रकरणमिति च **न्यायभाष्यम्**। **अत्रापि** प्रक्रियासमेऽपि **आभासमानानां** हेतुतया प्रतीयमानानां **अवान्तरभिदावशात्** प्रत्यक्षविषयत्वानुमितिविषयत्वादिभेदात् **प्रतिरोधविधाः** सत्प्रतिपक्षप्रकाराः। सत्प्रतिपक्षस्थले एकतरस्याभासत्वमवश्यम्भावीत्याह **नत्वि**ति। पर्वतोऽग्निमान् धूमादित्यत्र आलोकादिति प्रयोगे प्रकृतहेत्वन्यूनत्वादनतिरिक्तत्वाच्च साध्याभावसाधकतया प्रयोगो न भवति। **अत्यन्तविभिन्नस्य**=मिथोविरुद्धस्यार्थस्य साधकतया प्रयोगे एकव्याप्यवत्ताज्ञानं प्रमा न भवतीति। **श्रुतिद्वये**ति। अणोरणीयानिति महतोमहीयानिति श्रुतिद्वयं यथाश्रुतार्थे

यो यज्ञदत्तात्मनो न भिन्नः, स तदनुभवजनितस्मृत्याधारः, यथा यज्ञदत्त एवेति व्यतिरेकेण बोदाहृते, स तस्मादभिन्नः आत्मत्वात् तद्वदेवेति वा, यस्तनो भिद्यते न स आत्मा यथा घटः इति वेति। अत्रानुमितपरसुखदुःखाद्यनाधारतया स्वस्य प्रत्यक्षसिद्धत्वात्, सुखदुः-खोपभोगसंकरप्रसङ्गात्, उपाधितो व्यवस्थानस्य इन्द्रियादिभेदेष्वपि प्रसङ्गात्, सौभर्यादिषु शरीरादिभेदस्य सुखादिव्यवस्थापकत्वादर्शनाच्च बाधितमैक्यानुमानमित्याभासता । अत्र विपर्यासेन हेत्वाभासस्य हेतुना प्रतिरोधः॥ हेत्वाभासस्य हेत्वाभासेन प्रतिरोधो यथा—यत् सत् तत् क्षणिकम्, यथा घटः, सन्तश्चामी भावाः इति सौगतेनोक्ते प्रतिवक्ति—यत् क्षणान्तरवर्ति न भवति, तदसत् यथा खरविषाणम्, न चासन्त इमे भावाः इति। अत्राबाधितप्रत्यभिज्ञानादिभिः स्थैर्ये वक्तव्ये, पिशाचानां पिशाचभाष-यैवोत्तरं देयमित्यभिमन्यमानस्यैवमुत्तरसंभवः। एवं महाविद्यादिरीतिष्वपि प्रागेवोक्तम्॥ एकस्मिन् हेतौ केन कः प्रतिरुध्येत, कथं वा तत्र प्रकरणसमसमाख्यानिवेशः स्यादिति चेन्न—एकस्यैव हेतोः तत्साध्यव्याप्यत्वाभिमानगृहीतस्य तद्विरुद्धसाध्यव्याप्यत्वाभिमतस्वा-त्मसाध्यनिर्णयपरिपन्थित्वेनावस्थानात्, प्रक्रियमाणार्थसाधनप्रवृत्तस्वात्मनस्तद्विरुद्धसाधन-प्रवृत्तस्वात्मसमानत्वाच्चेति। तथा हि—अनित्यः शब्दः प्रमेयत्वात्, घटवत् इति केनचित् प्रयुक्ते, नित्यः शब्दः तत एव हेतोः आत्मवत् इति कश्चित् प्रयुञ्जीत। समं चासाधक-त्वमुभयत्र व्यभिचारात् (रित्वात्) इति॥

तदेवमेते पञ्च हेत्वाभासा अक्षपादादिभिः संगृहीताः। तथा च सूत्रम्—"सव्यभि-चारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः" इति। अत्रासिद्ध एव साध्य-तुल्यत्वं निमित्तीकृत्य साध्यसमशब्देनोपचरितः। अत्र न्यायतत्त्वानुसारात् क्रम नयामक-संगत्यभावाच्चाऽऽक्षपादं क्रममुल्लङ्घ्यास्माभिर्हेत्वाभासा निरूपिताः।

ननु तत्त्वरत्नाकरे अन्यथैव हेत्वाभासाः प्रदर्शिताः ; यथा—

---

उपाधित इति। तथासति सौभरिणा प्रतिसंधानं क्रियमाणमनुपपन्नं स्यादित्यपाह **सौभरीति**। **विपर्यासेने**ति। आत्मत्वहेतुना यज्ञदत्ताभेदानुमाने तदनुभवजनितस्मृतिरहितत्वेन यज्ञदत्तभेदानुमानेनेत्यर्थः। महाविद्यानुमाने प्रमेयत्वरूपहेतोरेकत्वात् कथं हेत्वन्तरघटितसत्प्रतिपक्षलक्षणमिति शंकते **एकस्यैवे**ति। **स्वात्मे**ति पदं प्रकृतहेतुपरम्। हेतुभेदाभावेऽपि प्रकरणसमशब्दघटकसमशब्दः, एकसाध्यव्याप्यत्वे तत्परिपन्थित्ववैशिष्ट्यं तद्विरुद्धसाध्यव्याप्यत्ववैशिष्ट्यं एकसाध्यव्याप्यस्य स्वसाध्यविरुद्धसाधकसामा-नाधिकरण्यग्रहणञ्चोभयत्र तुल्यमित्याशयेन।

प्रपञ्चेन सर्वं व्युत्पादयतो भट्टपादग्रन्थस्याधिकहेत्वाभासप्रदर्शकत्वेऽप्यत्रैव तात्पर्यमिति वक्तुमाह **नन्वि**ति।

"ईदृक्षपक्षाद्यङ्गानामेकैकविकलत्वतः सर्वानुमानाभासानां सक्षेपाल्लक्ष्म सूचितम् ॥

तत्तत्पक्षादिस्वरूपं यथा भासते, तथाभासमानतया आभासाः (स्वरूपतत्त्वमतदपि तथा भासमानं तदाभासः)। तत्र,

पञ्च प्रतिज्ञार्थाभासाः पक्षवैकल्यदोषजाः। सिध्यप्रसिद्धिबाध्यत्वविरुद्धत्वाफलत्वतः ॥"

इत्याद्युक्त्वा, अप्रसिद्धिं च विशेषणविशेष्योभयभेदेन त्रेधोदाहृत्य, बाध्यत्वमपि प्रमाणत्रित्वात् त्रिधा निर्दिश्य, विरुद्धत्वमपि स्ववचन-स्वाभ्युपगम-सर्वलोकप्रसिद्धभेदेन विभिद्य, स्ववचनविरोधेऽप्युक्तिमात्रधर्मधर्म्युक्तिविरोधभेदेन त्रैधमभिधाय, अफलत्वपर्यन्तमुदाहृत्य, धर्मित्वानिर्देश-विशिष्टत्वानिर्देश-विशेषणानिर्देश-धर्म्यनिर्देश-साध्यानिर्देशरूपपक्षासाधारणनिर्देशदोषपञ्चकमुदाहृत्य, "अवाचकसंदिग्धाश्लीलनिर्देशादयः साधनादिष्वपि साधारणनिर्देशदोषा द्रष्टव्याः। एते च लक्षणवाक्ये पक्षधर्मपदेन व्यावर्त्यत्वात् सर्वे प्रतिज्ञाभासाः" इत्यादि चोक्त्वा, "अथ हेतवोऽसिद्धानध्यवसितविरुद्धविशेष[ण]विरुद्धानैकान्तिकाप्रयोजकबाध्यविरुद्धाव्यभिचारिप्रकरणसमसिद्धसाधनाः इति दशधा। तत्रासिद्धोऽप्रमितपक्षधर्मभावः।

---

पक्षादीति। पक्षहेतुदृष्टान्ताः साधनाङ्गत्वेन निग्रहस्थाननिरूपणप्रभृति कथ्यन्त एव। एकैकांगवैकल्येऽपि अनुमानस्याऽऽभासत्वम्। तत्र तदाभासत्वं नाम पक्षादिस्वरूपभिन्नस्यैव पक्षादिवद् भासमानत्वम्। प्रथमस्तालपाठः। कुण्डलितो मुद्रितपाठः **अतदपी**त्यस्य वस्तुतः पक्षादिभिन्नमपीत्यर्थः। पक्षाभासानाह **प**ञ्चेति। पक्षपदेन प्रतिज्ञावाक्यार्थग्रहणम्। **सिद्धी**ति। साध्यस्य विशिष्टस्य सिद्धत्वे अप्रसिद्धत्वे बाध्यत्वे विरुद्धत्वे निष्फलत्वे चाऽऽभासत्वम्। सिद्धसाधनदोषात् सिद्धत्वे आभासत्वम्; तत् एकरूपमित्युपेक्ष्य अप्रसिद्ध्यादेर्विभागः। **प्रमाणत्रित्वात्**=बाधकप्रमाणस्य प्रत्यक्षानुमानागमभेदेन त्रिरूपत्वात्। **अफलत्वे**ति। सत्यपि साध्यसंदेहे विवादे वा निष्फलस्य विचारस्य जिज्ञासाविरहेणायोगात् प्रतिज्ञाया आभासत्वम्। अत एव ह्यधिकरणस्वरूपे प्रयोजनघटनेन पञ्चाङ्गत्वं सर्वत्रेष्यते। **धर्मित्वानिर्देशे**ति। पर्वते वह्निरिति प्रयोक्तव्ये पर्वतवह्निरिति सप्तमीविभक्तिरहितप्रयोगेत्यर्थः। **विशिष्टत्वानिर्देशः** पर्वतो वह्निरिति। विशेषणानिर्देशः, पक्षविशेषण-साध्यविशेषणानिर्देशः। **लक्षणवाक्ये**= पक्षधर्मतया साध्यकथनमित्यत्र। हेत्वाभासान् प्रकृतानाह **अथे**ति **अनध्यवसितः** असाधारणः। **विशेषविरुद्धे**ति तालपाठः। क्षित्यादि सकर्तृकमित्यत्र कर्तुः सर्वज्ञत्वादि**र्विशेषः**। विरुद्ध-प्रकरणसमोभयभिन्नतया विरुद्धाव्यभिचारी अत्र निर्दिष्टः महाविद्यानुमानरूपप्रमेयत्वादिः। प्रकरणसमस्तु स्वभिन्नप्रतिहेतुकहेतुः; समशब्दस्वारस्यात् प्रकृतसाध्याभावरूपप्रतिपक्षसाधकतुल्यत्वावगमात्। तस्याप्रयोजकत्वेऽपि [illegible] ततो भेदेन निर्देशः। न चास्य व्यभिचार्यन्तर्भावः; वह्निमान् प्रमेयत्वादित्यादौ व्यभिचारित्वात् महाविद्यानुमाने च साध्यव्यभिचारित्वाभावात्। अत एव विरुद्धा-

स घतो नवधा" इति विभज्य, स्वरूपासिद्ध.संबन्धासिद्ध.भागासिद्ध.विशेषणासिद्ध.विशेष्यासिद्धोभयासिद्धाश्रयासिद्धाश्रयैकदेशासिद्धव्यधिकरणासिद्धोदाहरणान्युक्त्वा, तेषामेवाज्ञानसंदेहविपर्ययैः सप्तविंशतित्वम्, पुनरन्यतरासिद्ध्युभयासिद्धिभेदेन चतुःपञ्चाशत्त्वमभिधाय, एवं सिद्धसाधनपर्यन्तानामपि लक्षणोदाहरणान्यभिधाय, हेतूक्तिदूषणं च धूमादित्याद्युक्त्वा, उदाहरणदूषणानि साध्यविकलसाधनविकलोभयविकलाश्रयहीनानुपदर्शितव्याप्ति[क]विपरीतोपदर्शितव्याप्ति[क]साध्याव्यावृत्तसाधनाव्यावृत्तरूपाण्युदाहृत्य, सर्वेषु चैतेषु विभागेषु मिथः संभवदन्तर्भावानामपि पृथगुदाहरणप्रयोजनानि तत्रैवाभिहितानि ॥

सत्यम्; तथापि वास्तवचिन्तायामन्तर्भावप्रक्रियैवानुसंधेया। अत एव हि तत्राप्यन्ते निगमितम्—"सर्वानुमानाभासानां तल्लक्ष्मावयवक्षतिः। व्याप्यत्वपक्षधर्मत्वहानिर्वा लघु लक्षणम्॥" इति। अतो वस्तुतो द्वावेव हेत्वाभासौ तत्रापि विवक्षितौ। तदवान्तरभेदनयैवान्ये सर्वे दर्शिताः॥ उक्तिदूषणानि तु न हेत्वाभासाः; तथापि समीचीनहेतुप्रतिपादनार्थत्वादुक्तेः, तद्दूषणे सति न तथा हेतुः प्रतिपादितो भवेदित्येतावता हेतुदूषणत्ववचनम्। यद्वा निग्रहस्थानानां सर्वेषां प्रतिज्ञादिवाक्यदूषणात्मकत्वद्योतनायेति मन्तव्यम्। अश्लीलनिर्देशादीनां दोषत्वं तु नियमकथाविषयं योज्यम्। एतेन—

"हेत्वाभासास्त उच्यन्ते त्वसिद्धाद्या नवैव ते।" इति प्रज्ञापरित्राणादिग्रन्था निर्व्यूढाः॥

अथात्र पक्षदृष्टान्ताभासानां हेत्वाभासान्तर्भावप्रकारमुदाहरति — तत्र विशेषणाप्रसिद्धत्वं हेतोराश्रयासिद्धत्वम्। सामान्यतः प्रसिद्धो हि साध्यधर्मः प्रसिद्धे धर्मिणि सिषाधयिषितो भवति, निरालम्बनविवादायोगात्। तथाविधसाध्यधर्मविशिष्टश्च धर्मी पक्षः। स च तदप्रसिद्धौ न सः। पक्षश्च हेतोराश्रयः। एवं सिद्धसाधनेऽप्युक्तम्। बाधितविशेषणत्वादौ कालात्ययापदेशः।

साधर्म्यदृष्टान्ते साधनवर्जिते हेतुः साधारणोऽसाधारणो विरुद्धो वा। तत्राद्यः-अनित्यः शब्दः

---

**व्यभिचारी**त्युक्तम्। भट्टपादप्रदर्शितमिदमेवेति तु तदनुवादस्यान्यत्रादर्शनात् न विद्मः। **व्यधिकरणासिद्धः** साध्यव्यधिकरणस्सन् असिद्धो हेतुः। **अज्ञाने**ति। असिद्धिर्हि सिद्ध्यभावः प्रमित्यभावः अज्ञानसंशयविपर्ययात्मेत्यादिकं प्रागेव न्यायतत्त्वदर्शितम्। **अन्यतरे**ति। वादिप्रतिवाद्यन्यतरेत्यर्थः। **पर्यन्ताना**मिति। असिद्धस्यैवान्येषामनध्यवसितादीनां नवानामपि हेत्वाभासानामित्यर्थः। **उदाहरणे**ति। **ईदृक्षलक्षादी**ति कारिकायामादिपदगृहीतोदाहरणाभासानित्यर्थः। **तल्लक्ष्मावयवक्षतिः** अनुमानलक्षणान्तर्गतव्याप्तिपक्षधर्मत्वघटकांशक्षतिरित्यर्थः। **निर्व्यूढा** इति। द्विविधहेत्वाभासयोरेव प्रपञ्चरूपतया कृतनिर्वाहा इत्यर्थः।

ननु हेत्वाभासमात्रस्य प्रकृते वक्तव्यत्वात् पक्षाभासादिकं किमिति तत्त्वरत्नाकरोक्तमित्यत्र सर्वस्य हेत्वाभासत्वे पर्यवसानमुपपादयति **अथात्रे**ति। साध्यतावच्छेदकविशिष्टसाध्यधर्मविशिष्टधर्मिणः पक्षशब्दार्थत्वात् विशेषणाभावे साध्यत्वाभावे पक्षताविरहे च पक्षाभासत्वमिति प्रागेवोक्तम्।

प्रत्यक्षत्वात्, यथा द्व्यणुकमिति तत्रैव शब्दत्वात्, यथा घटः इति द्वितीयः; श्रावणत्वात् यथा घटः इति तृतीयः। साध्यवर्जिते तु तस्मिन् विरुद्धः, साधारणो वा अत्र अनित्यः शब्दः, श्रावणत्वात्, शब्दत्ववत् इति प्रथमः। तत्रैव वस्तुत्वादिति द्वितीयः। उभयवर्जिते निराश्रये च व्याप्यत्वासिद्धः। पूर्वे च दोषा यथासंभवं भाव्याः; यथा—अनित्यः शब्दः, कृतकत्वात्, यथा आत्मेति, यथा वा शशविषाणमिति। सत्यपि हि व्याप्तिरत्र न प्रदर्श्यते।

वैधर्म्यदृष्टान्ते तु—साधनाव्यावृत्ते हेतोः साधारणत्वम्, विरुद्धत्वं वा। यथा—शब्दः ध्वंसप्रतियोगी, प्रत्यक्षत्वात्, यन्नैवं तन्नैवम्, यथा आत्मेति साधारणत्वम्। तत्रैव साध्ये श्रावणत्वादिति हेतौ, यदुक्तसाध्यं न भवति तत् श्रावणमपि न भवति, यथा शब्दत्वमिति विरुद्धत्वम्। साध्याव्यावृत्ते तु व्याप्यत्वासिद्ध्यादयः—गर्भस्थो मैत्रीतनयः श्यामः, मैत्रीतनयत्वात्, यः श्यामो न भवति स मैत्रीतनयो न भवति, यथा सत्यवतीतनयः इति व्याप्यत्वासिद्धः। एवमन्येऽपि॥ यद्यपि सपक्षैकदेशवर्तिनि सम्यग्घेतौ हेतुरहितः सपक्ष एव विपक्षविवक्षया केनचिदुदाह्रियते, तथापि तत्र व्यतिरेकव्याप्तेरनुपदर्शितत्वान्न तत्र व्याप्यत्वं सिध्यति। एवं सर्वत्र समीचीनेऽपि हेतौ साधर्म्यदृष्टान्तेषु साधनविकलसाध्यविकलोभयविकलाश्रयहीनेषु साध्याव्यावृत्तसाधनाव्यावृत्तोभयाव्यावृत्ताश्रयहीनेषु च वैधर्म्यदृष्टान्तेषु, पुरुषापराधात् व्याप्त्यनुपदर्शने, [1]सत्यपि व्याप्तिरनुपकारिका; व्याप्तिप्रत्यायनार्थं ह्यसौ दृष्टान्तमुदाहरति, न तु व्याप्तिसद्भावार्थम्, येन तद्दोषेऽप्यन्यतोऽस्ति व्याप्तिरिति चरितार्थता। न च परेण स्वयमेव व्याप्तिः प्रत्येतव्या, तथा सत्युदाहरणाख्यावयवस्यैव परित्यागप्रसङ्गात्। यद्यपि घटकः प्रतिवादी वा सम्यग्दृष्टान्तसिद्धां व्याप्तिं स्वयं प्रतिसंधत्ते, तथाप्यप्रतिसंधानमभिनीय वादी निगृह्येत, स्वप्रतिसंधानं प्रकाश्य वा दृष्टान्ताभासवचनाङ्गीक्रियेतेति। साध्यमात्रविकले साधर्म्यदृष्टान्ते, साधनमात्राव्यावृत्ते च वैधर्म्यदृष्टान्ते हेतोर्न कथंचिदपि सम्यक्त्वसिद्धिः, हेतोर्विपक्षवृत्तित्वेन साधारणत्वविरुद्धत्वयोरन्यतरावश्यंभावात्। तत्राभयाव्यावृत्तो यथा—क्षित्यादिकं सकर्तृकम्, कार्यत्वात्; यत् सकर्तृकं न भवति तत् कार्यमपि न भवति, यथा घटः इति। साधर्म्यदृष्टान्तवच्छशविषाणाद्युदाहरणे अत्राप्याश्रयहीनत्वम्। व्यतिरेकित्वे आश्रयहानिर्न दोष इत्येके; यथाहुः—

"यस्मिन्ननित्यता नास्ति कार्यतापि न विद्यते। आसन् यथा खपुष्पादाविति शक्यं हि भाषितुम्" इति।

अभ्युपगतोऽयमर्थो मुखभेदेनास्मदीयैरपि कैश्चित्; यथोक्तं प्रज्ञापरित्राणे—

"भवेदाश्रयहीनत्वं भावसाधन एव तत्। असत्तासाधने तादृगसदर्थोपवर्णनम्।
न दोषायान्यथा सत्तासाधनस्याप्रसङ्गतः॥" इति।

---

सत्यपीति[1]। अनित्यः शब्दः कृतकत्वादित्यत्र आत्मादेरुदाहरणस्याऽऽभासत्वेऽपि व्याप्तिसत्त्वात् कथं हेत्वाभासतेति न शक्यम्, व्याप्तेरुदाहरणेनाप्रदर्शितत्वात् अज्ञातायाः व्याप्तेरकार्यकरत्वादिति भावः। यद्यपि सपक्षैकदेशेति। वह्निमान् धूमात् अयोगोलकवदिति प्रयोगे इत्यर्थः। सत्यपि=वर्तमानाऽपि। घटकः प्रतिवादी वेति तालपाठः। घटको मध्यस्थः।

भावसाधने भावस्य साध्यत्वे साधनत्वे वा शशविषाणोदाहरणे आश्रयासिद्धिः। न त्वसत्तासाधने=अभावस्य साध्यत्वे साधनत्वे च। सत्तासाधनस्येति। सत् अबाधितत्वादित्यादौ अन्वय-

भाष्ये च गगनकुसुमादुदाहरणमेतत्पक्षानुगुणम् । ये पुनरसिद्धपक्षादयोऽपि केचिद् भाष्यादिषु प्रयोगाः, ते तु तत्तत्प्रतिवादिमतानुविधायिप्रसङ्गविशेषपराः परिणमयितव्याः । न चैवं शुष्कवैतण्डिकयानप्रसङ्गः । स्वसिद्धान्तमगृहीतमनाकुलयद्भिः स्वव्याघातरहितैः परस्य स्वव्याघातादिप्रदर्शने प्रवृत्तिरिति ॥

एवमष्टौ निश्चिता उदाहरणाभासाः प्रदर्शिताः । अथान्ये संदेहद्वारेणाष्टौ प्रदर्श्यन्ते—विगीतः पुरुषः पुनर्भवानर्हः, सुसमाहितावताररहस्यत्वात्; यत् उक्तसाधनम्, तद् उक्तसाध्यमित्युक्त्वाऽऽह— यथा सद्विद्यासमाधिनिष्पत्तिमान् पुरुषः इति । अत्र विद्यान्तरसमाधिनिष्पत्त्या मोक्षनिश्चये तदङ्गभूतावताररहस्यतत्त्वचिन्तनसद्भावे साधकबाधकानवतारात् संदेह इति संदिग्धसाधनविकलता । संदिग्धसाध्यविकलो यथा— तत्रैव साध्ये विदितवेदान्तत्वादिति हेतौ, यथा बृहस्पतिरिति । अत्र साधननिश्चयेऽपि वसिष्ठापान्तरतमःप्रभृतीनामिव पुनर्भवसंभवात् साध्यसंदेहः । संदिग्धोभयो यथा; तत्रैव—यथोन्मत्तवेषः पुरुष इति । अत्र स किमुन्मत्तः, उत ब्रह्मविदेव सन्नुन्मत्तभावक इति संदेहे साध्यसाधने अपि संदिह्येते । तत्रैव—यथा भविष्यन्मैत्रीतनय इति संदिग्धाश्रयहीनः । न ह्यवन्ध्या मुक्त्यपि मैत्री पुनः प्रसूतिमतीति अर्वाग्दृशां सुग्रहम् । संदिग्धसाधनाव्यावृत्तो यथा—यः पुनर्भवार्हः सोऽविदितवेदान्तः, यथाऽसौ देशान्तरगतः पुरुष इति; अत्र कामक्रोधादिदृढलिङ्गात् सहसैव मोक्षानर्हत्वनिश्चयेऽप्यौपनिषदसंव्यवहारात् प्राक् विदितवेदान्तत्वं संदिह्यते । संदिग्धसाध्याव्यावृत्तो यथा—विगीतः पुरुषो ब्रह्मविद्याधिरोहानर्हः, अत्रैवर्णिकत्वात्; यस्तदर्हः, स त्रैवर्णिकः यथासौ काणादः इत्यत्र निदर्शितस्यारूढपतितत्वादिशङ्कायां भवति तदनर्हत्वसंदेहः । संदिग्धोभयाव्यावृत्तो यथा; तत्रैव—यथाऽसौ वैदेशिको मीमांसक इति । न ह्यत्र तदर्हतां त्रैवर्णिकत्वं च वेदपठनादिमात्रेण विनिश्चिनुमः, दशपुरुषविख्याततत्त्वादिविरहे दुष्टशूद्रादिष्वपि संभवद्भिर्लिङ्गैर्वर्णविशेषादिनिर्धारणायोगात् । व्यतिरेकेऽपि संदिग्धाश्रयहीनोदाहरणं प्राचीनमेव । अपि चात्र हेत्वसिद्ध्यादाविव कथकयोरन्यतरोभयभेदेन संदिग्धनिश्चितसाधनविकलत्वादिभेदाद् द्वात्रिंशत् भिदा भवन्ति । उदाहरणे लोकप्रसिद्धेऽप्युभाभ्यामपि संदेग्धव्यम्, निश्चेतव्यमिति वा न राजशासनम्, सामग्रीशक्तेरनियमात् इति ॥

व्याप्त्यनभिधान-विपरीतव्याप्त्यभिधानादयो दृष्टान्तवचनदोषाः । यथा घटः इति दृष्टान्तधर्मिमात्रोदाहरणे व्याप्त्यनभिधानम् । कृतकत्वादिति हेतौ यदनित्यं तत् कृतकम्, यथा घटः, इति विपरीतव्याप्त्यभिधानम् । तदनित्यम्, यथा घटः, इति व्याप्त्येकदेशाभिधानम् । घटवत् घट इवेत्यादीनामभिन्नार्थत्वात् व्याप्त्युपन्यासानन्तरमेतेष्वन्यतमाभिधाने न दोषः; न हि

---

व्याप्त्यग्रहणात् शशविषाणादेरेव व्यतिरेकदृष्टान्ततया वक्तव्यत्वादिति भावः । **असिद्धपक्षेति** । भावरूपाज्ञानखण्डनावसरे स्वपक्षासिद्धपक्षकप्रयोगकरणादिति भावः । **परिणमयितव्याः** । अनुमानरूपेण कृताः प्रयोगास्तर्करूपेणाभिनेतव्याः । व्यक्तं तत्र श्रुतप्रकाशिकायाम् । **न चैवमिति** । स्वपक्षस्थापनस्येष्टत्वे आश्रयासिद्धिदोषः । तदनिष्टौ परदूषणमात्रपरवैतण्डिकवादोऽभिमतः स्यादित्यर्थः । वैतण्डिकवैलक्षण्यं दर्शयति **स्वेति** । तस्य स्वसिद्धान्तमनाविष्कुर्वतः स्वसिद्धान्ताविरोधेन वक्तव्यमिति व्यवस्था नास्तीति भावः । **विगीत इति** विद्यान्तरानुष्ठायिपुरुषग्रहणम् । **सुसमाहितेति** । जन्म कर्म च मे दिव्यमिति गीताश्लोके अनियत-अवताररहस्यचिन्तनवतस्तस्मिन्नेव जन्मनि भक्तियोगबलान्मुक्तेरुक्तेरिति भावः ।

यथाशब्देनैव व्याप्तिरुपदर्शनं वा, नन्वयेनेति नियामकमस्ति । शब्दशक्तिश्च नातिदवीयसीति यथाविवक्षं न विरोधः ॥

ननु व्याप्त्यनभिधाने तदेकदेशाभिधाने चावयवांशन्यूनत्वापाताद् विपरीतव्याप्त्यभिधाने च अवयवैकदेशविपर्यासात् न्यूनत्वाप्राप्तकालत्वे उद्भाव्ये । किमेषां हेत्वाभासविश्रान्तदृष्टान्तदोषत्व-वचनेन? सत्यम्; व्याप्त्यनुपदर्श मुखेन हेतुदोषेऽप्येते विश्राम्यन्तीति ख्यापनार्थैतादेति मन्तव्यम् । हेतुदोषपर्यवसायिनामप्येषां वैशद्याय स्वयं कथकाशक्तिख्यापनसामर्थ्याच्च विशेषत उद्भावनं कार्यम् । सामान्यत उद्भाविते वा कथमिति पृष्टेन विशेषो वक्तव्यः । हेत्वाभासोऽयमिति सामान्यत उद्भावितेपि हि न दोषः । तत्र यदि विशेषानुयोगे प्रतिवक्तुं न शक्नुयात्, हेत्वाभासतास्थापकाव्याप्त्यपक्षधर्मत्वयोरन्यतरनिर्वाहे वा न प्रगल्भेत, निरनुयोज्यानुयोगेन निगृह्येत । एवं पक्षदृष्टान्ताभासप्रयोगेपि प्रयोगाभासोऽयमिति वा पक्षाभासोऽयमिति वा दृष्टान्ताभासोऽयमिति वोद्भाविते सभ्यप्रतिवादिबुभुत्सानुसारेण तत्तद्विशेषाः प्रदर्शनीयाः । स्पष्टेषु तावतैव चेत् चरितार्थबुद्धयस्ते स्युः, किं विशिष्याभिधानेन? । अत्रापि यदि पक्षाद्याभासतामनुयुक्तो न निर्वहति, तदा पूर्वनिग्रहः । अभावरूपदोषानुयोगे च भरः प्रतिवादिनः । भावरूपदोषानुयोगे तु तदुद्भावयितुरेवेति वृद्धाः । परस्परसंमत्या लौकिकव्यवहारेष्विवात्रापि समर्थकथकयोर्न व्यवस्थितिरिति (स्थेति) केचित् ॥

(अथ तर्कः)

एवं हेत्वाभासप्रसङ्गात् तदनुप्रविष्टपक्षाभासादीनां दिङ्मात्रं दर्शितम् । 'प्रसङ्गभूततर्काभासा अपि हेत्वाभासविशेषा एव, तर्कस्यानुमानराश्यपृथग्भावात् । 'न्यायस्तर्कश्चोभयमनुमानमिति च मीमांसकाः । व्याप्याङ्गीकारे व्यापकानिष्टप्रसञ्जनं हि तर्कः, व्याप्यात् व्यापकप्रमितिरेव चानुमानमिति ॥

'ननु(?) न तर्कोऽनुमानम्, भाष्यकारैरेव पृथक् परिगणितत्वात् । यद्यपि जन्माद्यधिकरणे "तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वान्न निर्विशेषवस्तुनि प्रमाणम्" इत्यनुमानेऽपि

---

नातिदवीयसीति । शब्दार्थेऽपि नातीव वैलक्षण्यमस्ति । यथाशब्दः सादृश्यार्थकस्थलेऽपि तथाशब्दसापेक्ष इत्यत्र विवादेऽपि विशेषो नातीवेति भावः । अभावरूपेति । असिद्ध्यादिरभावरूपो दोष उद्भाव्यते चेत्—प्रतिवादिना कथमिति प्रश्नं विना सिद्ध्यादिरुपपादनीयः । व्यभिचारादिभावरूपदोषोद्भावने, कथमिति प्रश्नावकाशोऽस्ति ; वादिना च तदा तदुपपादनं कार्यमित्यर्थः ।

अथ पक्षाभासादेरिव तर्काभासस्यापि हेत्वाभासेऽन्तर्भावमाह प्रसंगेति । अनुमानराशीति । अनुमानत्वादित्यनुक्त्वा अनुमानराश्यन्तर्भावेत्युक्तिः तर्कशब्दस्य प्रसंगरूपारोपार्थकत्वात् अनुमानशब्दस्य हेतुतज्ज्ञानादिपरत्वादैक्यायोगात् । परंतु तर्कप्रयोगस्थले सर्वत्रानुमानप्रयोगस्यापि तद्घटितस्य सुकरतया अर्थापत्तेरिवानुमानेऽन्तर्भाव इत्याशयः ।

अथानुमानातिरिक्तत्वपक्षमुपन्यस्यति । अत्र नन्विति पदं न स्यात् । यद्वा नन्विति सबोध्य केचित् नेत्यादिना पक्षमाहुः । अस्य पक्षस्योपसंहारः वदन्तीत्यत्र । यथा शब्दाध्याये अभिहितान्वयविचारस्थले नन्वित्यारभ्य इति केचिदिति समाप्यते, तद्वदिह इति वदन्तीति समाप्यत इति । वस्तुत नन्वित्यारब्धस्य वदन्तीत्यतःप्र इतीत्यन्तेन समाप्तिः । वदन्तीत्यत्र अत्रवदन्तीत्युपरितनपक्षारम्भः

तर्कशब्दः प्रयुक्तः ; तथापि "न विलक्षणत्वात्" इत्यधिकरणे, "यतः सर्वेषां प्रमाणानां क्वचिद्विषये तर्कानुगृहीतानामेवार्थनिश्चयहेतुत्वम् ; तर्को हि नाम अर्थस्वभावविषयेण सामग्रीविषयेण वा निरूपणेनार्थविशेषे प्रमाणं व्यवस्थापयत् तदितिकर्तव्यतारूपमूहापरपर्यायं ज्ञानम् । तदपेक्षा च सर्वेषां प्रमाणानां समाना । शास्त्रस्य तु विशेषेणाऽऽकाङ्क्षासंनिधियोग्यताधीनप्रमाणभावस्य सर्वत्रैव तर्कानुग्रहापेक्षा । उक्तं च मनुना—यस्तर्केण." इत्यादि अभिहितम् । तथा प्रथमसूत्रेऽपि, "अनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्ततदितिकर्तव्यतारूपसमीचीनन्यायमार्गणाम्" इत्यादि उक्तम् । एवं श्रीमति गीताभाष्येपि—"मत्तः स्मृतिर्ज्ञानमपोहनं च"—इत्यस्य व्याख्याने "अपोहनं ज्ञाननिवृत्तिः ; अपोहनमूहनं वा । ऊहनमूहः । ऊहो नाम इदं प्रमाणमित्थं प्रवर्तितुमर्हतीति प्रमाणप्रवृत्त्यर्हताविषयं सामग्र्यादिनिरूपणजन्यं प्रमाणानुग्राहकं ज्ञानम् । स चोहो मत्त एव" इत्युक्तम् ॥

किच 'तर्काप्रतिष्ठानात्' इति सूत्रम्, 'तर्कोऽप्रतिष्ठः' इति स्मृतिश्च तर्कस्यानुमानादन्यत्वं सूचयतः । न ह्यनुमानं प्रमाणभूतमप्रतिष्ठितं स्यात् । किंच एवंत्वादेवमिति ह्यनुमानस्वरूपम्, एवं चेत् एवं स्यादिति च तर्कप्रकारः ; कथमनयोरैक्यम्? । आहार्यलिङ्गजन्यत्वाच्चानुमानाभासवत् नास्यानुमानत्वम् । आरोपितविषयत्वाच्च ; न हि सधूमे निर्धूमत्वप्रसङ्ग इति धीरनारोपितविषया । विपर्यये पर्यवसानाच्च ; न ह्यनुमानं स्ववेद्यविपर्यये पर्यवस्यति, किं तु स्ववेद्य एव; अन्यथा अनुमानप्रामण्योच्छेदप्रसङ्गात् । उक्तं च प्रज्ञापरित्राणे—

"प्रमाणानिष्टपक्षोक्तौ तस्य व्याप्तिबलात् प्रति । अनिष्टापादनं तर्को नानुमानं स्मृतिर्मता ।
[इति । (?)] स्मृतिप्रमोष एवानिष्टोपस्थापनं ह्यतः । तद्व्याप्तिबलतस्ताद्दगनिष्टापादनं स्मृतिः ॥"

इत्यादिकमुक्त्वा, अनन्तरमेवोक्तम्—

"एवंव्याप्रियमाणोऽसौ तर्को मानोपकारकः । प्रामाणिकोऽर्थो लिङ्गं स्यादनुमाने तु तद्बलात्,
प्राप्तः प्रामाणिकः स्यादित्यनुमातर्कयोर्भिदा । प्रसङ्गद्वारतो या. स्युरनुमान(ने)ऽवृत्तयः ।

---

स्थितः स्यात् । अन्यथा यत्त्वित्याद्यारम्भो न हृद्यो लक्ष्यते । **न तर्कोनुमान**मिति । तर्कशब्दस्य क्वचिदनुमानार्थकत्वेऽपि अनुमानादिप्रमाणापेक्षितत्वेनोक्तस्तर्को नानुमानमित्यर्थ. । अनेकभाष्यानुरोधात् तर्काप्रतिष्ठानसूत्रात्, तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको ऋषिरिति स्मृतेः, अनुपपत्त्या, साम्प्रदायिकसूक्त्या च भेदः उपन्यस्तः । अनुपपत्तिः **आहार्यलिंगके**ति वाक्यदर्शिता ।

**स्मृतिर्मते**ति । यद्यग्न्यभावान् स्यात्, तदा धूमाभाववान् स्यादितीदं नाग्न्यभावेन धूमाभावानुमितिरूपम् । आपादनरूपत्वावगमात् ; धूमवत्ताज्ञाने सति धूमाभावानुमानायोगाच्च । आरोपश्च अन्यथाज्ञानं बाधकालीनेच्छाजनितम् । तच्चास्मत्पक्षे अख्यातिः स्मृतिरेव । शुक्ताविदं रजतमित्यत्रेव विशिष्टज्ञानत्वायोगात् स्मृतिप्रमोषः । अग्न्यभावज्ञानं धूमाभावज्ञानञ्च स्मृतिरेव । पूर्वस्मृत्यनन्तरमुत्तरस्मृतिः अभावयोर्व्याप्तिज्ञानधीनसंस्कारोन्मेषाज्जातेति तदाशयः । **इत्यादिकमुक्त्वा**—एवमारोपविषयतामुक्त्वा । स्मृतिरूपतर्कस्य प्रयोजनकथनम् **एवं व्याप्रियमाण** इति । अनुमानस्थले सा नेत्याह **प्रामाणिक** इति । अनुमाने लिंगं **प्रामाणिकः** प्रमितिविषयोऽर्थः ; **तद्बलात् प्राप्तः** साध्योऽर्थश्च

तर्कोक्तयस्तास्तदपि साक्षाल्लिङ्गाद्यो ऽपरे ॥" इत्यादि ।

तस्य दनुमानादन्यदेव किंचित् यथाभाष्यमूहापरपर्यायं ज्ञानं तर्क इति वदन्ति ( इति ॥ ? )

[अत्र वदन्ति-?] यत्तु सर्वेषां प्रमाणानां तर्कानुग्रहापेक्षावचनम्, तत् प्रमाणस्य सतस्तर्कस्यानुग्राहकत्वमात्रेणोपपन्नम् ॥ प्रमाणस्य प्रमाणेन कथमपेक्षेति चेत्, कथं वा प्रमाणेतरेण तर्केण? ॥ विपक्षजिज्ञासाविच्छेदनादिति चेत्, तुल्यम् ॥ तर्हि पूर्वेण किं प्रयोजनमिति चेत्; किं वाऽतिरिक्ततर्कवादिनः? ॥ पक्षस्थापनमिति चेत्, तुल्यम् ॥ न च तत्रापि तर्कान्तरापेक्षया अनवस्था ः अप्रमाणत्वपक्षेऽपि व्याप्तिर्व्याप्त्यन्तरापेक्षाक्रमेणानवस्थानप्रसङ्गात् । न हि तर्कान्तरेण व्याप्तिर्

---

प्रमितिविषयः । न तु अग्न्यभावादिवत् आरोपविषयः । ननु धूमादिति प्रयोक्तव्ये, 'अन्यथा धूमाभावप्रसंगात्' इत्यपि प्रयुज्यत इत्यत्राह **प्रसंगद्वारत** इति । तत्रापि तर्क एवोक्तोऽस्तु । हेतुस्त्वाक्षिप्यतामिति भावः । नन्वित्यारब्धशंकावसानम् **'ज्ञानं तर्क इति'** इत्यन्तेन ; अथ समाधानम् ।

तर्कस्यानुमानराश्यन्तर्भाववादी तर्कस्यानुमानानन्तर्भावो भाष्याद्यवगत इत्येनदर्थासाधकं तदुक्तं सर्वमित्याह **यत्तु** इति । **वचन**मिति । नविलक्षणत्वाधिकरणभाष्ये प्रथमवाक्ये इति शेषः । तत्रत्यं द्वितीयवाक्यं **तर्को** हीत्यादि पश्चादनुवदिष्यति । **सर्वेषा**मिति पदं प्रत्यक्षानुमानागमार्थकम् ; न तत् प्रकृतोपयोगि । **तर्कानुग्रहे**ति तर्कस्य प्रमाणानुग्राहकत्वोक्त्या प्रमाणत्वाभावोऽवसीयत इति तदाशयः । प्रमाणत्वेऽप्यनुग्राहकत्वसंभवादिदमसाधकमिति एतदाशयः । **प्रमाणस्य सत** इति । प्रमाणत्वे सत्येवानुग्राहकत्वं युज्यते । अतोऽनुमानमेव तर्कः । अशब्दत्वादनिन्द्रियत्वाच्च न प्रमाणान्तरत्वम् । शंकते **प्रमाणस्ये**ति । एकप्रमाणकार्ये प्रमाणान्तरं व्यर्थं किलेत्याशयः । **प्रमाणेनापेक्षे**त्यस्य प्रमाणविषयकापेक्षेत्यर्थः । अपेक्षादिशब्दप्रयोगे तृतीयाप्रयोगोऽपि निरूढः । अत **प्रमाणेतरेण तर्केणे**त्यपि साधु प्रमाणेतरत्वाभिमततर्कापेक्षा परं कथमित्यर्थः । एवञ्च **प्रमाणेतरे तर्के** इति मुद्रणमनपेक्षितम् **विपक्षे**ति । प्रमाणरूपानुमानकार्यमनुमित्युत्पादनम् ; तर्ककार्यं तु तदुपयोगितया विपक्षजिज्ञासाविच्छेदनम् । हेतुरस्तु साध्यं मास्तु इति साध्यरूपपक्षविरुद्धपक्षवत्तया पक्षजिज्ञासेच्छा कस्यचित् जाता व्याप्तिज्ञानं प्रतिरुणद्धीति तदिच्छाविच्छेदस्तर्केण क्रियते । विच्छिन्नविपक्षेच्छः **पुरुषो** लिंगानुमिनोतीत्युदयनाचार्यो केऽर्थे ऽवधानरहिताः खलु नवीनतार्किकाः, व्यभिचारसंशयो व्याप्तिनिश्चयप्रतिबन्धकः तर्कश्च संशयनिवर्तको मणिमन्त्रादिनयेनेति कल्पयन्ति । तदेतत् विवेचितमस्माभिन्यायकुसुमाञ्जलिविस्तरे तृतीयस्तबके । **तुल्यमि**ति । प्रमाणत्वपक्षेऽपि प्रयोजनं भवत्येवेत्यर्थः । **पूर्वेणे**ति । अनुमानप्रमाणसाध्यं किमित्यर्थः । **पक्षस्थापन**मिति । तर्ककार्यं विपक्षजिज्ञासाविच्छेदः, अनुमानकार्यं प्रकृतपक्षानुमितिरिति भेदोऽस्तीति भावः । **तुल्यमि**ति । "कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" इति सूत्रम् अग्निप्रसंगे, विरुद्धपक्षसाधकापेक्षया पक्षसाधके उपपत्तिपरिशीलनरूपानुमानेन विपक्षेच्छाविच्छेदः क्रियतामिति भावः । ननु तर्कस्य प्रमाणत्वांगीकारे प्रमाणस्य तर्कापेक्षाध्रौव्यात तर्कस्यापि तर्कापेक्षेत्यनवस्थेति शंकां निरस्यति **नच तत्रापी**ति । **व्याप्त्यन्तरे**ति । अग्निधूमव्याप्तिस्थापनार्थं किल तर्कः । व्याप्यारोपेण व्यापकारोपात्मक-

स्तीति युक्तं वक्तुं तार्किकगोष्ठीषु। शङ्काभावे च तदनपेक्षणात् क्वचित्। "क्वचित्" इत्येव युच्यते। (तदनपेक्षणात। क्वचित् क्वचिदेत्ये शु यते।) उक्तं चोदयनेनापि—
"व्याघाताचधिराशङ्का तर्कः शङ्कावधिर्मतः।" इति। तत्त्वरत्नाकरेऽपि—"अपरे पुनः सकलप्रमाणानां तर्कानुग्राह्यतामाग्रहादुदाहरन्ति—"इत्याद्युक्त्वा, "तदा तर्कापेक्षा-ध्यवसायविरुद्धम्—"इत्यादिना प्रत्युक्तम्। पश्चाच्चोक्तम्—
"नैनं तर्कमपेक्षन्ते सर्वाः प्रमितयो यतः। विरोधाबोधयोर्जातं संशयं स चिकित्सते॥"इति।

यच्च "तर्को हि नाम—" इत्यादि, तदप्यनुमानविशेषस्यैव तर्कस्य प्रमाणान्तर-परिकरत्वेनावस्थितस्य व्यापार.संज्ञाविशेषादिकथनमात्रम्; न हि तत्रानुमानान्यत्वमुक्तम्। एवम् 'अनधिगत—'इत्यादावपि। एतेन "यस्तर्केण—" इति मनुवचनमपि निर्व्यूढम्॥

यच्चोक्तं श्रीविष्णुचित्तैः—"भाष्यकारैस्तु प्रत्यक्षानुमानागमेभ्यस्तर्कोपबृंहितेभ्य आत्मनः स्वयंप्रकाशत्वं समर्थितम्" इति, तथा तैरेव संगतिमालायामुक्तम् 'रचनानुपपत्तेः' इति सूत्रे,—"नात्रेश्वरानुमानमुच्यत इति शङ्कनीयम्, प्रतितर्कमात्रवचनात्। व्याप्तिबलमालम्ब्या-निष्टप्रसङ्गस्तर्कः इति तर्कस्यापि व्याप्त्यवश्यम्भावात्" इति—तदपि भाष्यवदेव योज्यम्॥

यत्तु अप्रतिष्ठितत्वसूत्रस्मृतिभ्यामनुमानान्यत्वं सूचितमिति; तदपि न, अतीन्द्रियार्थगोचराणां केवलतर्काणामेवाप्रतिष्ठितत्वाभिधानस्य भाष्यकारैरेव बहुशोऽभिधानात्। उक्तं

---

पात्मकतर्कघटकव्याप्तिस्थापनाय व्याप्त्यन्तरघटिततर्कापेक्षा स्यादिति भावः। अनवस्थां परिहरति शंकाभावेचेति। क्वचिदिति। क्वचिदेव; अपेक्षेति पूरणमर्थसिद्धम्। क्वचिदित्येवहीति। पूर्वोपात्त-भाष्य सूक्तौ, "क्वचिद्विषये" इत्युच्यते हीत्यर्थः। व्याघातेति। अनुमाने तर्कोपन्यासे, पुनस्तत्र व्याप्त्य भावशंकायां तर्क एव शंकाया अवधिः निवर्तकः। तथापि नानवस्था। शंकायाः व्याघातावधिकत्वात्। यावत् स्वानुभवव्याघातः स्वक्रियाव्याघातो वा न दृश्यते, तावत्पर्यन्तमेव शंकेत; नोपरि। यदि वह्न्यभावेऽपि धूमः, धूमो वह्निजन्यो न स्यात्। यदि वह्निजन्यो न स्यात्, धूमार्थिनो वह्नौ प्रवृत्तिन-स्यादित्युक्तौ तदुपरि शंका नैवावकाशं लभत इति। तर्कस्यानियतत्वे भट्टपादमपि प्रमाणयति तत्त्वरत्ना-करेऽपीति। तदेति। सर्वस्य तर्कानुग्राह्यतापक्षे तर्कापेक्षाध्यवसायेन प्रामाण्यमेव निरुद्धं स्यादित्यर्थः। विरोधेति। कोटिद्वयविरोधज्ञाने, अबोधे=एकविशेषव्याप्यवत्ताज्ञानरूप विशेषदर्शनाभावे च सति जातं संशयं सः तर्को निवर्तयति। संशयाभावे च न तर्कस्यावसर इति। व्यापारेति। स्वभावादि-निरूपणं व्यापारः प्रमाणव्यावस्थापनं फलम् ऊह इति संज्ञा चेतिकर्तव्यतात्वावस्थायामुच्यते; नानु-मानत्वं वार्यते इत्यर्थः। भाष्यवदेव योज्यमिति। ईश्वरसाधकश्रुतिप्रमाणं प्रति इतिकर्तव्यतात्वेनो-पयोगात् नास्य तत्र स्वतन्त्रानुमानत्वमिति भावः। सूत्रस्मृतिभ्यामिति। तर्काप्रतिष्ठानादिति

तत्रैव पसंहारे—"अतोऽतीन्द्रियार्थे शास्त्रमेव प्रमाणम्। तदुपबृंहणायैव तर्क उपादेयः—" इति। प्रत्यक्षादिविरोधे चाप्रतिष्ठा साक्षादनुमानेऽपि समाना; अन्यथा तर्कमात्रस्याप्रतिष्ठितत्वे मीमांसैव हिंसिता स्यात्। न च तत् युक्तम्; "यश्च मीमांसतेऽध्वरम्" "वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते" इत्यादिविरोधात्। किंच—

श्लो—तर्काप्रतिष्ठातर्कोऽयं प्रतितिष्ठति वा न वा। तर्कप्रतिष्ठा द्वेधाऽपि तत्तदन्यव्यवस्थितेः॥
अप्रतिष्ठितस्य तर्कस्यानुग्राहकत्वमपि मृग्यमिति॥

यत्तु एवंत्वादेवम्, एवं चेदेवं स्यात् इत्यनयोः कथमैक्यमिति? तत्र ब्रूमः—

श्लो—व्यतिरेकात्मिका व्याप्तिर्विपक्षे दण्डतां गता। पक्षोपश्लेषणवशात् स्याच्चेदित्यवतिष्ठते॥
पक्षधर्मत्वगर्भोक्तिः स्यादित्येवं प्रवर्तते। न चैवमिति तेनैव हेतुमाह विपर्ययम्॥
साध्याभाववतामेष हेत्वभावो व्यवस्थितः। न च सोऽयमिहास्तीति स्यात्कारेणाभिसंहितम्॥
साध्यशून्यस्त्वया पक्षो विपक्षवदभीप्सितः। नासौ तथेति चेत्कारः साध्यधर्मान्वयाशयः॥
अनुवादात्मना पक्षे साध्याभावो विभाति यत्। प्रतिषेधोपपत्त्यर्थः परामर्शः स युज्यते॥
एवं चेदेवमेव स्यादिति धीर्यदि विभ्रमः। व्याप्तिरेवात्र भग्ना स्यात् तदा कस्तर्क इष्यताम्॥
न चैवमिति तर्कोऽयं पर्यवस्यन् विपर्यये। पर्यवस्यति तेनैव प्रसञ्जकविपर्यये॥
प्रसङ्गान्तर्निमग्नोऽर्थ उन्मज्जति विपर्यये। एवकाराद्यभिप्रेताः स्वशब्दाभिहिता यथा॥

---

सूत्रम्; तर्कोऽप्रतिष्ठ इति स्मृतिः। **यश्चेति** मीमांसकस्य पावनत्वं ह्युच्यते। **तर्काप्रतिष्ठातर्क** इति। तर्काप्रतिष्ठानादिति सूत्रोक्तं तर्को न प्रमाणमप्रतिष्ठितत्वादिति यत् अनुमानं तस्य प्रतिष्ठितत्वे तत्र तर्कस्य व्यवस्थितत्वात् न तर्कसामान्याप्रतिष्ठा। तदप्रतिष्ठायां तेनादूषितानां सर्वेषां तर्काणां सिद्धं प्रतिष्ठितत्वमिति तस्य वा तदन्येषां वा तर्काणां व्यवस्थितत्वमेवेति। हेत्वन्तरमप्याह **अप्रतिष्ठितस्येति** **दण्डतां** बाधकताम्। **पक्षोपश्लेषणवशात्** पक्षावर्तिनोरभावयोः पक्षोपश्लेषणमारोपं विनाऽनुपपन्नमिति स्यात्पाद चेत्पदयोः प्रयोगः। **एवं चेत्, एवं स्यादित्यत्र** स्यात्कारः हेत्वभावानिष्टत्वं, चेत्कारः साध्याभावस्यानिष्टत्वञ्च दर्शयति। ततो विपर्यये पर्यवसानम्॥ व्याप्यारोपमूलको व्यापकारोपस्तर्क इति तार्किकोक्त्या तर्कस्याऽऽरोपात्मकत्वात् न प्रमात्वमिति चेत्—सत्यम्। तथापि अप्रमाया विषयसाधकत्वायोगात् अत्र साध्याभावव्याप्तिबलेनात्र प्रकृतहेतुना साध्यव्यवस्थापनार्थोऽयं तर्कः व्याप्यारोपपरिशीलनात्मकज्ञानरूपः। परकीयभ्रमपरिशीलनरूपेश्वरादिज्ञानस्येवास्य तर्कस्यापि प्रमात्वम्। अन्यथा यद्युपश्लेष स्यात्कारश्च न स्यात्। यतः साध्याभाववान् ततो हेत्वभाववानिति तु स्यादित्याशय। **उन्मज्जति विपर्यये** इति। विपर्ययपर्यवसानवाक्ये स्पष्टीभवति, यथा एवकाराभिप्रेताः अयोगान्ययोगादिव्यावृत्तयः नत्वित्यादिस्वशब्दैरभिधाने स्पष्टीभवन्ति तथेत्यर्थः।

अत एवाध्यारोपितहेतुविषयत्वेऽपि तर्कस्य याथार्थ्यं नापैति, यथुपश्लेषेण साक्षात्कारेण च प्रवृत्तेः, तयोश्च तद्विपर्ययाध्यवसायगर्भत्वात्। अत एव च न स्मृत्यादावपि तर्कधियोऽन्तर्भावः॥ स्मृतिप्रमोषविशेष एवायमीदृश इति चेन्न ; तत्रापि चेत्स्यात्प्रयोगयोरयोगात्। न हि स्मृतावेव तयोः संभवः ; कुतस्तत्प्रमोषे ; प्रमुषितपूर्वानुभवविषयैकदेशा स्मृतिरेव हि स्मृतिप्रमोष इति वर्ण्यते। अपिच तर्कस्यायथार्थत्वे—यदि सविषमिदमन्नं भक्षयिष्यसि, परेष्यसि, 'अन्धोऽभविष्यो यन्मां नागमिष्यः'—इत्यादयो लौकिकवैदिकप्रसङ्गाः मृषावादाः स्युः। ततश्चैतेभ्योऽनर्थेभ्यो विच्छेदोऽपि न स्यात्। न हि, यदि धर्मं चरिष्यसि' नरके पतिष्यसीत्ययथार्थोक्तौ कश्चित् धर्मान्निवर्तते; एवं च दृष्टेऽपि—यदि भोक्ष्यसे, क्षुच्छान्तिर्न भविष्यतीति। अपिच यत्तुपश्लिष्टं प्रसञ्जकं व्याप्यं यदि कार्तान्तिकवत् अनिष्टं प्रसञ्जयेत्, तदा स्यादप्ययाथार्थ्यम्। न तथाऽत्र। यदि स्वरूपतो मिथ्याभूतप्रसञ्जनीयोल्लेखमात्रादयथार्थत्वम्, तदा भ्रान्तिविषयज्ञानान्तरेऽपि स्यात्॥

श्लो—नन्वीश्वरो दयालुश्चेत् सुखैकान्तं जगत् सृजेत्। अविद्या ब्रह्ममूला चेदनिवर्त्या प्रसज्यते॥
सर्वप्रपञ्चमिथ्यात्वं मिथ्या चेत् व्याहतं भवेत्। अनाश्रयस्यैवमादेरनुमानात्मता कथम्॥
भ्रान्ताश्रयानुमन्तॄणां शून्याद्वैतादिवादिनाम्। नैतच्चोद्यं तदन्येषामेवं दोषः समुत्थितः॥
अनुमानान्यतायामप्येष न स्यादनाश्रयः। वन्ध्यासुतो बुभुक्षुश्चेत्, भुञ्जीतेति हि नोच्यते॥
ततो यदाश्रयस्तर्कः साक्षात् व्यवहितोऽपि वा। तस्यानुमानभावेपि न ह्यसावपसर्पति॥

---

स्मृतावेवेति—अप्रमोषात्मकपूर्णस्मृतावपीत्यर्थः। अननुभूतांशे स्मृत्ययोगादिति भावः। अन्धोऽभविष्य इति वाक्यं वैश्वानरविद्यायाम्। कार्तान्तिकवत् अनिष्टफलबोधिज्यौतिषिकवत्। स हि तदुपलब्धस्य ग्रहसञ्चरणस्यानिष्टस्य च व्याप्यभावेऽपि भ्रान्त्या किञ्चिदाह। न तथा। व्याप्यो हि व्यापक प्रसञ्जयतीति भावः। भ्रान्तिविषयज्ञानान्तरेऽपीति। भ्रान्तपुरुषगतभ्रान्तिज्ञ. तन्निवर्तकोपदेशकरेश्वरादिज्ञानेऽपीत्यर्थः।

नन्वेवं तर्कसामान्यस्यानुमानान्तर्भावे, 'आश्रयासिद्धिदोषापत्त्याऽनुमानमुपेक्ष्य तर्कप्रयोगः कार्यः स चारोपात्मकत्वात् अविद्यमानविषयकोऽपि भवितुमर्हति' इति तत्रतत्रोक्तं कथं घटते इत्याशंकते नन्विति। परिहरति भ्रान्तेति। ईश्वर इति परकीयस्तर्कः। अविद्येत्यादिरस्मदीयः। अस्मत्पक्षे वक्तव्यं परिहारमाह अनुमानान्यतायामपीति। वस्तुतस्तर्कस्य स्वतन्त्रत्वाभावात् यदाश्रयकस्तर्कः तत्र प्रमाणे आश्रयासिद्धिपरिहारोऽपि चिन्त्य इत्याह तत इति। तथाच यथावदनुमानं कीदृशमिति परिशीलनक्लेशमसोढ्वा सुकरतया तर्के प्रयुक्ते, अनुमानं भवेदिति निश्चित्यैव वादिप्रतिवादिभ्यां तावत्युपरम्यते। वस्तुतःसर्वत्र सदनुमानं परीक्षकैः, धूमहेतुर्वह्निव्याप्यः व्याप्यारोपप्रयुक्तव्यापकारोपविषयत्वात्, भावरूपाज्ञानसाधनोद्देश्य-

न चैतदन शिकम्, आरम्भणाधिकरणे तर्केष्वेवानुमानशब्दस्य भाष्यकारैः प्रयोगात्, "तानि चानन्तरोक्तैरविद्याकार्यत्वादिभिरनुमानैर्निरस्तानि" इति। न च ते न तर्का इति शक्यं वक्तुम्, यथाश्रुतप्रकारेण स्वरूपासिद्ध्यादिप्रसङ्गात्। तत्त्वरत्नाकरेऽपि, "एषां प्रसङ्गद्वारेण वा प्रयोगः" इत्यादिना हेतुत्रयस्यापि प्रसङ्गरूपेण प्रयोग उदाहृतः। अर्थापत्त्यन्तर्भावदशायामप्युक्तम्—"तन्निरवकाश मानाल्लिङ्गादिह सावकाशस्याऽऽत्माविरुद्धविषयस्थापनविषयानुमानमर्थापत्तिः। इयमेवाऽऽगमविषयव्यवस्थितौ शेषभूता चेत्, सामान्यविशेषाख्यो न्यायो निर्दिश्यते—" इति। आकाङ्क्षादिनिरूपणे चाभिहितम्—'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्येतदपि रात्रिभोजनपर्यन्ततात्पर्यं चेत्, अध्याहारस्योदाहरणम्; दिवातनाशननिषेधमात्रपरं चेत्, श्रुतार्थापत्तेः। यस्य हि प्रमाणस्य यावत् प्रमेयं व्यवस्थापितम्, तत् तावत्यप्रमिते न स्वातन्त्र्येण पर्यवस्यति; तदा तत्पर्यवसानार्थतया अनुपपत्तिलिङ्गादिकं व्याप्रियमाणं [तर्कप्रमाणपदं] तर्कलक्षणापन्नं तच्छेषतयाऽवतिष्ठते, परोद्देशप्रवृत्तव्यापारव्याप्यत्वात्। प्रमित्सितपर्यवसाने तत्प्रमेयस्वभावपर्यालोचनया स्वातन्त्र्येण व्याप्रियमाणं तर्क[तत् ?] प्रमाणपदं समधिरोहति—" इति॥ मनोनिरूपणे चोक्तम्—"यद्यप्येवं न तर्कः स्वातन्त्र्येण स्वार्थसमर्थनसमर्थः, तथाप्यागमानुग्रहेण प्रभवति, सन्ति चाऽऽगमाः". इत्यादि॥

नन्वप्रमाणत्वं तर्कस्य तत्रैव प्रपञ्चितम्। तथा हि न्यायपादे—

"यदुक्तं न प्रमाणेन परीक्षा दोषवन्न तत्। अप्रमाणेन तर्केण परीक्षा वक्ष्यते यतः २॥" इति—"साक्षात् तर्कप्रमाणे च,"

"मानानुग्राहकं युक्त्या ज्ञानं तर्कोऽभिधीयते। युक्तिश्च संभवौचित्यतद्विपर्ययतो द्विधा॥

मानानुग्राहकपदेन प्रमाणेभ्यो व्यावर्त्यते" इत्याद्युपक्रम्य हेतु-फल-विषय-व्यापारावान्तरभेदादि प्रपञ्चेनोक्त्वा,

"केचिदाचक्षते तर्कः प्रमाणमिति मन्महे। संशयादिबहिर्भावात् प्रामाण्यस्य च संभवात्॥" इत्यादिना तर्कप्रामाण्यपक्षं प्रपञ्चेनानूद्य, 'प्रसङ्गरूपव्यतिरेक्यनुमानमेव तर्कः' इति स्वमतमुपसंहृत्य,

---

कानुमानमसाधकं भावरूपाज्ञानविषयकप्रकृततर्कपराहतत्वादित्येवं वा स्यादूहनीयमिति।

**तर्क. प्रमाणपद**मिति। एकमेव प्रमाणेतिकर्तव्यतात्वे तर्कशब्देन, स्वतोऽनुमापकत्वे प्रमाणपदेन चोच्यत इत्यर्थः। तर्काप्रमाणत्वमेव भट्टपादसंमतमिति शंकते **नन्वि**ति। **यदुक्तमित्या**दि। परीक्षा क्रियमाणा प्रमाणेन न भवतीति पूर्वपक्षितं यत्, **दोषवन्न तत्**—ततो नास्मदभिमतं दुष्टम्; अप्रमाणभूतं तर्कमादायैव परीक्षणस्यास्मदुक्तत्वादित्यर्थः। **इती**त्यस्य इत्येतदित्यर्थः। अस्य दूरस्थे **इत्यादिने**त्यत्र विवृतमित्यध्याहृत्यान्वयः कार्यः। "**साक्षात् तर्कप्रमाणे च** इत्यपि भट्टपादवाक्यानुवादः श्लोकैकदेशः स्यात्। ते प्रमाणात् तर्कस्य भेदो द्वन्द्वबलात् सिद्धः। **संभवौचित्यतद्विपर्ययतः**। प्रकृतकोटि संभावनारूपत्व— इतरकोटिनिरासकप्रसंगरूपत्वत इत्यर्थः। केचिदाचक्षते; किम्? तदाह **तर्कः प्रमाण**मित्यादि।

"उच्यते न प्रमा तर्को वैषहेत्वोर्विशेषतः। हेत्वाभासोद्भवत्वाच्च सोऽयं निर्णायको न च॥" इत्यादिना।

सत्यम्; तथापि भाष्यकारैः—"चार्वाकशाक्यौलूक्याक्षपादक्षपणककपिलपतञ्जलिमतानुसारिणो वेदबाह्याः—" इत्यादिषु बहुषु प्रदेशेषु बाह्यपक्षनिक्षिप्ताक्षपादोक्तषोडशपदार्थसूत्रानुवादपूर्वकं तत्क्रमेण प्रमाणादिपरीक्षायां न्यायपादमारचयतः परमतमनुरुध्यापि क्वचिद्व्यवहाराः संभवन्ति, अन्यथा स्वेनैवार्थापत्त्यन्तर्भावादिप्रकरणोक्तग्रन्थविरोधात्। यच्च तत्र युक्तिरूपमिव किंचिदुक्तम्, तदपि न तदुचितमिति ततोपि न स सिद्धान्तः; तथा हि—एवं भवितव्यमिति हि प्रमाणात् तर्कस्य वैषविशेष उक्तः। स त्वनिश्चयात्मकश्चेत्, संशय एवान्तर्भावः। तत्रैव हि प्रत्यक्षसंशयादिलक्षणानन्तरं चैवमुक्तम्—"संभवासंभवपरामर्शस्तर्कः; यथा—बाह्वादिप्रदेशवत्त्वात् पुरुषेणानेन भवितव्यम्, न स्थाणुना" इति। एषां संशयादीनां विमर्शानवधारणाद्येकप्रयोजनान्तर्भावसंभवेपि पृथगुपादानम्, अवान्तरकारणवैषम्यात्, उपयोगभेदस्य च न्यायपादे दर्शयिष्यमाणत्वाच्चेति। न चानग्निश्चेत् निर्धूमः स्यादिति बुद्धेः संशयता। अथायमसंभावनानिरासः, तथापि तेनाकारेण वैषम्यान्निर्णयरूपत्वादबाधाच्च प्रमाणमेव।

यच्च "न केवलं प्रसङ्गसाधनं साध्यधर्मिण्यसिद्धम्, अपि त्वन्यगतमेव प्रसङ्गहेतुः। न त्वनुमानमन्यगताद्धर्मात् प्रवर्तते। ततस्तस्मात् स्फुटोऽस्य भेदः" इत्युक्तम्, तत्रासिद्धहेतुजन्यत्वे परिहारः पूर्वमेवोक्तः। एवं चेदेवं स्यादित्यस्य च—न चैवं तस्मान्न तथेत्यत्रैव तात्पर्यात् व्यतिरेकव्याप्तिक्रोडीकार एवातिरिक्तः। अन्यगतहेतुसमुत्थत्वं तु न कथंचिदपि स्यात्; न हि(न खलु) अन्योऽनग्निश्चेत्, अयं निर्धूमः स्यादिति युज्यते, नापि-न चान्यो निर्धूमः, तस्मादयमनग्निर्न भवति इति। यच्चाप्रयोजकानैकान्तिकहेतुभिरपि तर्कस्य संभवरूपेण समुत्थानादनुमानान्यत्वमुक्तम्, तदपि हेत्वाभासजन्यज्ञान एवान्तर्भावाय, न तु पृथक् तर्काख्यज्ञानसिद्धये। न च तेऽपि हेतव आभासा अपि संशयद्वारा विपर्ययद्वारा वोपकुर्वते; तत्त्वनिश्चयस्य तदपेक्षानियमाभावात्, भावेऽपि सिषाधयिषितस्याविरोधप्रदर्शननिर्णयरूपेणैवोपकारात्। एवमन्यदपि चिन्त्यम्। निर्णयात्मकत्वं च तर्कस्य श्रीविष्णुचित्तैरुक्तम्—'तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयः" इति॥

भवत्वेवं प्रमाणभूतोऽप्रमाणभूतो वा प्रमाणानुग्राहकस्तर्कः। स किमङ्गकः? कतिविधः? कियदवयवप्रयोगश्च? । व्याप्त्यादिपञ्चाङ्गः; संग्रहाद्द्विविधः; पञ्चविधो वा; प्रयोगोऽप्यनुवाद-

---

वैषहेत्वोरित्यादेर्विवरणमुपरि तथाहीत्यादिवाक्यकदम्बतो भवितुमर्हति।

नन्वित्यादिपक्षे प्राप्ते समाधत्ते सत्यमिति। तार्किकपक्षानुवादरूपवाक्यानां तत्त्वरत्नाकरेऽत्र बहुलमुपलम्भात् अस्यापि भागस्य परपक्षानुवादतेति भावः। नस्थाणुनेत्यत्रैव भट्टपादवाक्यानुवादसमाप्तिः। एषामिति स्ववाक्यम्। नचानग्निश्चेदिति। अग्न्यभावारोपप्रयुक्तधूमाभावारोपविषयः पर्वत इतीदं सत्प्रमेयमेव हीत्यर्थः।

तर्कं विभजते भवत्विति। प्रमाणभूतोऽप्रमाणभूतो वेति। अनुमानान्तर्भावे प्रमाणता; पार्थक्ये आरोपरूपत्वादप्रमाणता। वह्न्यभावारोपप्रयुक्तो धूमाभावारोपांश एव तर्कश्चेत् अप्रमाणता। एकारोपप्रयुक्तान्यारोपविषय इति ज्ञानं तर्कश्चेत्, प्रमैव। व्याप्त्याद्यंगकथनात् विशिष्टज्ञानस्य तर्कत्वं युक्तम्; न तु व्यापकारोपांशमात्रस्येति भावः। द्विविध इति। प्रामाणिकपरित्याग—अप्रामाणिकस्वीकारभेदेनेति

प्रसङ्गाभ्यां द्व्यवयवः। विपर्ययपर्यवसानवाक्यं तु तृतीयोऽवयवः। स नावश्यं वक्तव्यः, मन्दस्य त्वनिष्टतात्पर्यकत्वमर्थमुच्येत। प्रसञ्जकस्य प्रसञ्जनीयेन व्याप्तिः, प्रतितर्केणाप्रतिघातः, प्रसञ्जनीयविपर्यये पर्यवसानं, प्रसञ्जनस्यानिष्टत्वं, परपक्षासाधकत्वं चेति तदङ्गानि। यथा—अनग्निश्चेत् निर्धूमः प्रसजेत्, न चासौ निर्धूमः इति। अग्न्यभावो हि धूमाभावेन व्याप्तः। यथाहुः—

"धूमाभावे ह्यग्न्यभावे(वो) व्याप्ते(प्तो) नाग्निस्ततश्च्युतः। अधूम एव वर्ततेत्येवं व्याप्यत्वमश्नुते॥"

इति। न च साग्निकत्वेऽप्यत्र कश्चिदनिष्टप्रसङ्गः, येन तर्कः प्रतिहन्येत। न चायं निर्धूम इति विपर्यये पर्यवसानं धूमप्रत्यक्षबलसिद्धम्। अत एव धूमाभावप्रसञ्जनमनिष्टमेव। न चासावनग्नित्वपक्षसाधकः इति। प्रामाणिकपरित्यागः, अप्रामाणिकस्वीकारः इति प्रसञ्जनीयद्वैविध्याद् द्विविधस्तर्कः। तत्र पूर्वो दर्शितः। अपरो यथा—यदीश्वरः आतृणादाकरीषात् स्वरूपेणाभिन्नः, तस्य विकारापुरुषार्थभोगित्वप्रसङ्गः इति। आत्माश्रयान्योन्याश्रयचक्रकानवस्थाकेवलानिष्टप्रसङ्गभेदेन तु पञ्चविधः। तत्रात्माश्रयादयश्चत्वारः स्वविषये स्वरूपासिद्धिमावहन्ति, पञ्चमस्तु व्याप्यत्वासिद्ध्यादिकम्। अन्याधीनतयैव नियतस्य स्वाधीनत्वाभ्युपगमे विरोधप्रसङ्ग आत्माश्रयप्रसङ्गः। यथा—स्वेनैव स्वयमुत्पाद्यत इत्यादौ। 'नियतपूर्वसिद्धि कारणं, नियतोत्तरं च कार्यम्'; न चैकमेकापेक्षया पूर्वमपरं च स्यात्, अन्यथा भावाभावसौहार्देन सर्वव्यवस्थोन्मूलनप्रसङ्गादिति।

अन्याधीनत्वनियमरहितस्य स्वाधीनतया विरोधापादनमात्माश्रयाभासः। यथा—स्वेनैव स्वयं पोष्यते ज्ञायते च इत्यादौ; न ह्यत्र कर्मकर्तृविरोधः, स्वरूपतः सिद्धेनातथाभूतेन स्वेनैव स्वस्यैव तथाभावापादनस्य सर्वप्रत्यक्षसिद्धत्वात्, ज्ञानादिषु चैकस्यैवाश्रयत्वविषयत्वयोः सहोपलम्भात्। स्वातिशयापादनानभ्युपगमे स्वज्ञानाभावाभ्युपगमे च दृष्टादृष्टार्थसर्वचेतनप्रवृत्त्यपह्नवप्रसङ्गेन स्ववचनादिविरोधात् इति।

स्वकार्येण स्वोत्पत्त्यभ्युपगमे विरोधप्रसङ्गः अन्योन्याश्रयप्रसङ्गः। यथा—देवदत्तः पिता यज्ञदत्तस्य, तस्मिन्नेव च जन्मनि स एव तस्येति। न हि स्वकारणात् पूर्वं स्वस्य सत्ता समस्ति,

---

वक्ष्यति। **अनुवादप्रसंगाभ्या**मिति। यद्येवंस्यादित्यंशोऽनुवादः; तदेवं स्यादिति **प्रसंगः**। तृतीयोऽवयवः **नचैव**दिति। अंगपञ्चकमाह **प्रसञ्जकस्ये**ति। **यथे**त्यादिना **'साधक इति'** इत्यन्तेन क्रमेणांगपञ्चकसमन्वयः क्रियते। **धूमाभावेने**ति धूमाभावव्याप्यत्वमग्न्यभावस्य; धूमवत्स्थलादग्निश्च्युतो न भवति; धूमवान् कश्चिदप्यनग्निर्न भवेदित्यर्थः। अतोऽनग्निरधूम एव स्यात्। **नचसाग्नित्वे**पीति। अग्न्यभाववत्त्वे धूमाभाववत्त्वरूपानिष्टप्रसञ्जनवत् अग्निमत्त्वेऽपि किञ्चिदनिष्टप्रसंगे प्रतितर्कपराहतिः स्यात्; स नेत्यर्थः। **आत्माश्रये**ति। द्वन्द्वान्ते श्रूयमाणः प्रसंगशब्दः आत्माश्रयादिषु पञ्चस्वप्यन्वेतीति प्रत्येकनिरूपणवाक्यतो ज्ञायते। **आश्रयः** आश्रयणम्। आत्माश्रयादिदोषाणां हेत्वाभासवत्त्वमाह **तत्रे**ति। **स्वरूपासिद्धि**मिति। स्वस्य वा स्वोपजीवकस्य वा स्वोत्पादकत्वे ह्युच्यमाने स्वरूपानिष्पत्तिरेवेति भावः। **व्याप्यत्वासिद्धी**ति। साध्यसाधकहेतोरनुकूलतर्कः साध्याभावापादकपुरुषाभिमतहेतोः पक्षनिष्ठस्य साध्याभावव्याप्यत्वाभावमित्यर्थः। पूर्वं तर्काभासानामपि हेत्वाभासत्वमेवेति स्थापनप्रस्तावेनैव, अपसिद्धान्तनिरूपणावसरे सिद्धान्तस्येव, तर्कस्य निरूप्यमाणत्वात् तर्काभासा इह प्रकृता इत्याशयेन आत्माश्रयादीनामाभासानपि तत्रतत्राह **अन्याधीनत्वे**त्यादिना।

पूर्ववत् स्वप्रागभावसमानकालत्वप्रसङ्गात्। न ह्यसति प्रागभावे कारणेन किंचित् कार्यम्; न चासता कार्येण कारणस्योत्पादनं युक्तम्; तथासति किं कस्य कारणं कार्यं वा न स्यात्। एवं कारणेऽपि कार्यमनन्तरभाविनि भवतस्य प्रागभावाव्यवधानात् स्वकार्यस्य स्वप्रागभावपरिष्वङ्गप्रसङ्गः। यदि च कारणप्रागभावदशायां कार्यं स्यात्, किं कारणेन साध्यं स्यात्?।

यच्च–'धूमेन वह्निर्ज्ञायते, तेनैव च वह्निना स एव' इत्यादिषु ज्ञाप्यज्ञापकान्योन्याश्रयणम्, तत्रापि कृतावेव तद्विभ्रमः–धूमज्ञानेन वह्निज्ञानं जन्यते, तेनैव च तत् इति। एवमन्यत्रापि द्रष्टव्यम्।

अन्योन्योपकारादिमात्रे तदाभासः। यथा–सैन्येन राजा रक्ष्यते, तेन च सेनेति। न ह्यनयोः शक्तिव्यापारादिकं वा परस्परोत्पाद्यम्। अन्यतस्सिद्धशक्तिकयोस्तु मुखभेदेनान्योन्योपकारः। एवं परस्परोपष्टम्भेन काष्ठाद्यवस्थानेऽपि द्रष्टव्यम्।

त्रिप्रभृतीनामवधिमतामन्योन्यं चक्रवद्दुःपरस्परापेक्षावृत्तौ चक्रकप्रसङ्गः। यथा–कश्चित् कौपीनसारः संकल्पयति–"न श्रीरकृषमाणस्य" इति परमाप्तवचनात् कृष्या विभवमुपलप्स्ये, तेन चोपदामुखेन राजानं प्रसादयिष्यामि, राजप्रसादेन लब्धोपकरणस्य मे कृषिरद्य न दुष्करेति। मुखभेदे तु तदाभासः। यथा–अन्योन्य(अन्यान्य?) व्यक्त्यनुसारिणि बीजाङ्कुरस्तम्बादिप्रवाहे, दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानुवृत्तौ, 'अन्नाद्भवन्ति भूतानि' इत्यादिचक्रेषु। स्वस्मिन्नेव विश्रमे ह्यत्रापि विरोधः; न तु स्वसजातीयविश्रान्तौ, तज्जातीयप्रागभावस्य तस्य च विरोधाभावात्, अन्यथा सजातीयानां सर्वेषां समानायुष्कत्वादिप्रसङ्गात्।

अ[पर्य]वसिताप्रामाणिकप्रवाहप्रसक्तिरनवस्था[प्रसंगः?]। यथा–ज्ञातेनैव सर्वं ज्ञायत इति यदि कश्चिन्नियमं ब्रूयात्, तदा पूर्वपूर्वज्ञापकज्ञानपरम्परापेक्षायां न क्वचिदपि विश्रमः। न च कस्यचिदप्यज्ञाने तज्ज्ञाप्यज्ञानासंभवात् सर्वाज्ञानप्रसङ्गः। जिज्ञासितार्थविज्ञाने च ज्ञापकपरम्पर ज्ञानस्य दुःसंपादत्वाच्च सर्वाज्ञानमेवाऽऽपतेत्। न चाविच्छिन्ना ज्ञानसंततिः, येन तत्तद्विषयज्ञप्तिरेवोत्तरोत्तरज्ञप्तिसिद्धिः स्यात्। तस्मादज्ञातैश्चक्षुरादिभिः संस्कारैश्च अज्ञातेन लिङ्गेन शब्देन चार्थप्रतीतिरित्यनियम एवाङ्गीकार्यः इति। एवं संबन्धस्य संबन्धान्तरे विशेषस्य विशेषान्तरे सामान्यस्य सामान्यान्तरे अवयवस्यावयवान्तरे धारकस्य धारकान्तरे शेषिणः शेष्यन्तरे अङ्गस्याङ्गान्तरे नियन्त्रादेर्नियन्त्रन्तरादौ च नियमेनाभ्युपगम्यमाने तस्यापि तथेत्यनवस्था ग्राह्या। अतः प्रमाणसिद्धेषु स्वपरनिर्वाहकेषु निरपेक्षेषु वा विश्रमः स्वीकार्यः इति॥

---

**असति प्रागभावे** इति। कार्यस्य प्रागभावेऽसति। कार्य एव प्राक् सतीति यावत्। प्राक् अभावे स्वीकृते कार्यं कथं कारणमित्याह **न चासते**ति। ज्ञप्तिघटितान्योन्याश्रयेऽव्याप्तिं परिहरति **यच्चे**ति। **कृतावेव** उत्पादन एव। **तदाभासः**–अन्योन्याश्रयाभासः। **उपदामुखेन** उपहारसमर्पणद्वारा। **अन्योन्यव्यक्ती**त्यत्र **अन्यान्यव्यक्ती**ति शोधनीयम्। बीजांकुर,दुःखजन्म, अन्नभूतादिस्थलेषु विभिन्नव्यक्तौ कार्यत्वकारणत्वसमन्वय इति न चक्रकमित्यर्थः चक्रकेत्यत्र चक्रकाश्रयेति व्यवहारोऽपि इष्टस्तार्किकरक्षायाम्। अनवस्थारूपं तर्कं लक्षयति **अपर्यवसिते**ति। कारणप्रवाहात् कार्यप्रवाहः सर्वत्र प्रामाणिकः; तत्र नानवस्था दोषरूपेति **अप्रामाणिक**पदम्। **स्वपरनिर्वाहकेषु निरपेक्षेषु** वेति। गुणादीनां स्वरूपस्यैव संबन्धत्वात् स्वप्रतीतिसंबन्धप्रतीत्युभयनिर्वाहिकत्वम्; अन्तिमांगस्य अंगान्तरनिरपेक्षमेवां-

प्रमाणसिद्धप्रवाहप्रसक्तिस्त्वनवस्थाभासः । यथा—यदि सामग्र्या अपि सामग्री स्यात्, तस्या अपि सामग्र्यन्तरेण भवितव्यम्, एवमुत्तरोत्तरमिति । न ह्यनादिसामग्रीप्रवाहाभ्युपगमे कश्चित् प्रमाणविरोधः, उत्तरोत्तरासिद्धिर्वा, येन तद्वानवस्थापि दूषणमिष्येत । एवं विभुद्रव्येषु उपाधिभिरवच्छिद्यमानेषु आयामविस्तरघनभागानन्तपरम्पराभ्युपगमेपि न तद्द्रव्यस्वरूपस्य सिद्धानां वा भागानां काचित् क्षतिः, येन सर्वं परिमितस्वभावमपरिमितमङ्गीक्रियेत ; अन्यथा परिमितभागप्रदेशान्तरपरम्परानुसारेणाप्यनवस्था दुस्त्यजा ; कस्यचिदपि स्वाभावविशिष्टप्रदेशान्तराभावे विभुत्वप्रसङ्गात् । एवं दृष्टान्तहेतुपक्षादिषु तज्जातीयान्तरापेक्षानियममिच्छतोऽनवस्था । अनिच्छतस्तत्प्रसङ्गे तदाभासो ग्राह्यः ।

आत्माश्रयादीनामेषां चतुर्णां साध्यस्य सिद्धवत्कारप्रतिपादनमुखेन दूषणत्वम् । केवलानिष्टप्रसङ्गे तु पूर्वप्रदर्शिते व्यापकानुपलब्धिविरोधेनेति । एतेषामेव प्रकारभेदात् प्रतिबन्दिसमवर्चो(वचनो)भयतस्पाशादयः प्रसङ्गभेदा द्रष्टव्याः ॥

---

त्युपकारकत्वात् निरपेक्षत्वम् । प्रामाणिकमनवस्थान्तरमाह **एवं विभुद्रव्येष्विति** । विभुद्रव्ये क्वचित्स्थले दैर्घ्यतारतम्यवदनेकवस्तु—वैपुल्यतारतम्यवदनेकवस्तु—घनभावतारतम्यवदनेकवस्तुभिरुत्तरोत्तरं परिच्छिद्यमाने तत्तद्वस्त्ववच्छिन्नप्रदेशानां सद्भावस्याऽऽवश्यकतया क्वचित्स्थलेऽप्यनेकप्रदेशवत्त्वमपरिहार्यम् । अतो निरंशे औपाधिकानन्तांशसत्त्वमिष्टम् । यदि तत्र कस्यचिद्वस्तुनः परिच्छेदकत्वं नेष्यते, तर्हि तस्य विभुत्वमापद्यते । विभोरेव स्वाभाववद्देशाभावेनापरिच्छेदकत्वस्वीकारात् । अतो विभुद्रव्यस्थितिः औपाधिकानन्तदशभागस्थितिश्चेष्टा । किं बहुना ; **अन्यथाऽपि**=एकपरिमितवस्तुग्रहणेनापि नानाप्रदेशोपपादनं सुकरम्—एकेन दण्डेनापि विभुद्रव्ये मीयमाने तत्र दण्डेऽन्तर्गताणुद्व्यणुत्र्यणुकचतुरणुकादिक्रमेणावयवैर्मीयमाने विभुप्रदेशे क्वचित् तावदवयवावच्छिन्नानन्तप्रदेशसद्भावस्यावश्यकत्वात् कस्यचिदवयवस्यापरिच्छेदकत्वे तस्य विभुत्वापत्तेः । विभुन एव हि अभाववद्देशराहित्यादपरिच्छेदकत्वमिति एतद्ग्रन्थार्थः । यद्यपि विभुद्रव्ये परमाणुरूपस्वल्पद्रव्यपरिच्छिन्नप्रदेशाः ये, त एव स्थूलद्रव्यरूपपरिच्छेदकपरिच्छिन्नप्रदेश एक इति क्वचिदनेकप्रदेशसद्भावोऽनपेक्षित इति सुवचम्—तथापि प्रकृतिनिरवयवत्वपक्षे प्रकृतिपरिणामभूते कस्मिंश्चिद्वस्तुनि चलिते परिणतान्तर्गतप्रकृतिप्रदेशस्यापि चलितत्वं तच्चलनेऽपि तत्रैव प्रकृत्यंशसत्त्वञ्च स्वीकर्तव्यमिति रीत्या एकत्रैवानेकप्रदेशसद्भावो दुर्वार इति सर्वत्रौपाधिकानन्तप्रदेशेष्टिर्न दोषायेति भावः ।

केवलानिष्टप्रसंगो नाम आत्माश्रयादिचतुष्कभिन्नोऽनिष्टप्रसंगः । स पूर्वं प्रदर्शित एव, यदि निरग्निः स्यात् निर्धूमः स्यादित्येवम् । एषां दूषकत्वप्रकारमाह **आत्मेति** । साध्यस्य स्वस्य स्वकारणत्वोक्त्या सिद्धवत्कीर्तनं विरोधः । पञ्चमे आपाद्यस्य धूमाभावस्य व्यापकस्य पक्षेऽनुपलब्धिरेव विरोधः । प्रतिबन्द्यादिरन्योऽपि तर्कविभागोऽस्तीति शंकां परिहरति **एतेषामेवेति** । पञ्चमे सर्वान्तर्भावः स्पष्टः ; आत्माश्रयादिविषये प्रतिबन्द्यां तत्राप्यन्तर्भाव इत्याशयेन **एतेषामित्युक्तम्** । वादिना क्वचित् कस्यचिदुक्तौ तत्सजातीयेऽन्यत्रापि तदापादनं प्रतिबन्दी । एकस्थलदृष्टयुक्त्या अन्यत्रापि स्वसंमतस्य सेमन्तव्यत्वकथनं समवचनम् । उभयथा विकल्प्योभयत्र दोषापादनमुभयतस्पाशा । स्पश बन्धन इति

प्रज्ञापरित्राणे तु केवलानिष्टप्रसङ्गमेव द्विधाकृत्य षोढा तर्क उक्तः—

"आत्माश्रयणमन्योन्याश्रयणं चक्रकं तथा। अनवस्था विरोधश्चासंभवश्चेत्यमी बुधैः॥"

इति। तत्रान्त्ययोश्चैवं लक्षणमुक्तम्—

"स्ववाग्विरोधो यत्र स्यात् विरोधः स प्रकीर्तितः। सर्वप्रमाणासिद्धत्वमसंभव उदाहृतः॥" इति॥

एवं च तावुदाहृतौ—

"वन्ध्या मे जननीत्येष विरोधः स्वोक्तिबाधतः। शशे शृङ्गमुदस्थादित्येवमादिरसंभवः॥" इति।

अत्र व्याप्त्याद्येकैकवैकल्येन केवलानिष्टप्रसङ्गाभासपञ्चकमुदाह्रियते। तत्र व्याप्तिशून्यो यथा—आत्मा अणुश्चेत्, तत्कर्मणा देशान्तरे फलं न स्यात्—इति। न हि कर्मणः फलकरणत्वमाश्रयसंयोगादिमुखेनेति नियमः; तत्तत्कर्माराध्यदेवतानुग्रहनिग्रहमुखेन तत्सिद्धेरागमिकत्वात्। परस्या देवतायाश्च वैभवात् संकल्पमहिम्ना च सार्वत्रिकफलजननोपपत्तेरिति। प्रतितर्कप्रतिहतो यथा—प्रागसच्चेत् कार्यं, पश्चादपि शशविषाणवदनुत्पत्तिप्रसङ्गः—इति। तत्र प्रतिप्रसङ्गः—प्रागपि सच्चेत् प्रकृत्यादिवदेवानुत्पाद्यत्वप्रसङ्गः—इति। न हि सर्वत्र व्यक्त्यर्थो व्यापारः, व्यक्तौ तदसंभवात्; अन्यथा अनवस्थादिप्रसङ्गात्। विपर्ययपर्यवसानरहितो यथा—न सत्यं(?) स्थूलं, विरुद्धधर्मसंसर्गप्रसङ्गात् इति। न ह्यत्र विरुद्धधर्मसंसर्गो दृश्यते; देशकालदशावयवप्रतिसंबन्ध्यादिभेदेन तत्तद्विरोधप्रशमनात्। इष्टप्रसङ्गो यथा—ईश्वरपरतन्त्रे नित्यस्यापि वेदस्य तदधीनत्वप्रसङ्गः—इति। न ह्यौपनिषदैर्नित्योऽपि वेदः स्वतन्त्र इष्यते तदाज्ञारूपत्वात्, क्रमभङ्गाभावेऽपि प्रवर्तनादिषु सर्वथा तदधीनत्वाच्च। अनुकूलप्रसङ्गो यथा—अस्ति चेदीश्वरः, उपनिषदपि प्रमाणं स्यादिति; न ह्यत्रेष्टतामात्रम्, अपित्वीश्वरसिद्धिहेतुत्वमपीति परपक्षसाधकत्वात् पृथक्करणम्॥ "न हीष्टं सर्वं विवक्षि-

---

धातोः स्पाशो बन्धः। अग्रद्वयेऽपि बन्धकाकारयुक्ता रज्जुरुभयतस्स्पाशा। आदिना गौरवरूपदोषग्रहणम्। षोढा विभागः **प्रज्ञापरित्राणोक्तः** कथमित्यत्र पञ्चमे द्वैविध्यादिति प्रत्याह **प्रज्ञे**ति। **विरोधः** स्ववचनविरोधः भावाभावरूपविरोधादनन्वितवचनम्। **वन्ध्या मे जननी**ति। यदि वन्ध्यात्वं स्यात्, तस्य जननीत्वाभावरूपत्वात् जननीत्वं न स्यादिति तर्कः। **उदस्थात्** उदपद्यत। यदि शशत्वम्, न तर्हि शृंगोत्पत्त्यधिकरणमिति तर्कः असंभवरूपः। निर्धूमत्वादितर्कस्य द्वितीयेऽन्तर्भावः। आभासकथनस्यैव प्रकृतत्वात् अनाभासं निरूप्य आभासं पञ्चमस्याऽऽह **अत्रे**ति। **देशे**ति। सूक्ष्मस्य स्थूलत्वं न भवति विरुद्धसंसर्गापत्तेः। यदि विरुद्धसंसर्गो न, ततो न स्थूलतेति विपर्ययपर्यवसानं न भवति। स्थूलत्वस्य देशादिभेदेनाविरुद्धत्वात् विरुद्धधर्मासंसर्गस्य स्थूलत्वस्य चैकत्र संभवात्। अविरोधश्च देशभेदात् कालभेदात् दशाभेदात् अवयवभेदाच्चेत् प्रतिसंबन्धिभेदादपि। बिल्वात् सूक्ष्मस्याऽऽमलकस्य बदरात् स्थूलत्वोपपत्तेः। अनिष्टत्वमेवालम्; किमननुकूलत्वेनेत्यत्राह **नह्यत्रे**ति। परपक्षसाधकत्वरूपाधिकाकारप्रदर्शनाय तदुक्तिरिति भावः। तर्हि 'अनिष्टत्वं त्यज्यतामिति चेत्—सत्यम्; आपादनस्य प्रयोजकमनिष्टत्वम्, न त्वननुकूलत्वपर्यन्तमिति ज्ञापनाय तदुक्तिरिति। इष्टत्वानुकूलत्वयोः परस्परविरहेणापि स्थितेरुभयोक्तिरिति एकेषां पक्षमाह **नहीष्ट**मित्यादिना। अग्निमत्त्वे सालोकत्वप्रसंग

तत्साधकम्, अनग्नित्वे वृक्षत्वप्रसङ्ग इत्यत्र वृक्षसंबन्धस्येष्टत्वेऽपि वह्न्यभाववत्साधकत्वाभावात्। न च विवक्षितसाधकं धर्मिमिष्टम्; अग्निमत्त्वे सालोकत्वप्रसङ्ग इत्यत्र प्रत्यक्षविरुद्धस्याऽऽलोकस्य साधकत्वेऽप्यनिष्टत्वात्" इत्येके। परविपक्षे दण्डभूतस्तु तर्कः परपक्षानुकूल इति पण्डिताः—यथा, स्थूलापलापिनो बौद्धस्य, नास्थूलमिदं, तथोपलम्भप्रसङ्गात् इति। स्थूलसाधकस्य ह्यस्थूलपक्षबाधकोऽनुकूलः। एते च तर्काभासाः अनुमानाभासान्तर्भावपक्षेऽपि प्रावादुकैः (प्रवादुकैः) पृथगुद्भावयितुमुचिताः। तर्कस्य पृथक्प्रसिद्धव्यवहारत्वेन तदाभासानामपि तथैव व्यवहारोपपत्तेरिति। स्थितं तावत् सावान्तरमेदैर्हेत्वाभासैः॥ [आगमाभासाः]

सापराधैः पुरुषैः प्रणीतानि वाक्यान्यागमाभासाः। भ्रमविप्रलम्भप्रमादाशक्तयश्च प्रणेतॄणामपराधाः। तत्र भ्रममूलः आगमाभासो यथा—"पतति गुरुत्वान्नित्यं पृथ्वी—" इत्यादिः आर्हतादीनामुपदेशः। विप्रलम्भमूलो यथा–अयसः काञ्चनत्वादिवत् आचण्डालं संस्कारविशेषवशात् ब्राह्मणत्वादिसिद्धिरिति कापालिकादीनाम्। प्रमादमूलो यथा—व्यासङ्गादिदशाविक्षिप्तचेतसां प्रामाणिकानां स्वपक्षपरपक्षसंकराद्युपदेशः। अशक्तिमूलो यथा— तत्त्वविदामृजूनामवहितानामप्यपटुकरणत्वादिवशादक्षरादिविपर्यासवान् व्यवहारः। सोऽपि हि श्रोतुरर्थान्तरभ्रमादिहेतुत्वात् आगमाभासः। एवमधिकृतशास्त्रविरोधे अनधिकृतशास्त्रमतत्परमपि तत्परं योजयतां वाक्यमपि। क्वचिद्धि किंचिच्छास्त्रमधिकरोति। यथा—शुभाशुभकलेषु ज्योतिषम्, श्रौतानुष्ठानक्रमे कल्पसूत्राणि, आचारेषु धर्मशास्त्राणि, सर्गप्रतिसर्गादिषु पुराणानि, चिदचिद्विवेकमात्रे सांख्यम्, साङ्गसमाधिस्वरूपे योगः, अधिकारिविशेषनियतानन्यभजनप्रस्थाने पञ्चरात्रम्; वास्तुविभागादिषु शिल्पविद्यादयः, पथ्यापथ्यद्रव्यविभागादिष्वायुर्धनुर्गान्धर्ववेदादयः इति। तेष्वधिकृतशास्त्रविरोधे अनधिकृतं शास्त्रमन्यपरं नेतव्यम्। तदेव तत्परं ब्रुवाणः आगमाभासेन निगृह्येत। अत एव हि सांख्यादेः क्वचिदंशे परिग्रहोऽपरिग्रहश्च॥ न च

"सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा। आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः॥" इत्यादिभिः सांख्ययोगपाशुपतानामपि यथोक्ततात्पर्येण कृत्स्नप्रामाण्यं शङ्क्यम्; अत्यन्तातीन्द्रियार्थविषयतया हेतुहन्तव्यत्वमात्रनिषेधात्। न हि तादृशे विषये हेतुभिर्विधातुं निषेद्धुं वा शक्यम्। न च हेतुहन्तव्यत्वनिषेधमात्रात् श्रुतिहन्तव्यत्वमपि निषिद्धं स्यात्; अतुल्यबलयोर्विरोधे हीनस्य निग्रहावश्यम्भावात्। पौरुषेयापौरुषेयविरोधे पौरुषेयं हीयते, पौरुषेयेष्वपि परिग्रहादितारतम्यात् परस्परबलाबलव्यवस्था; परिग्रहादिसाम्येऽप्यैदम्पर्यान्यपर्याभ्यामर्थान्तरव्यवस्था—इति। लौकिकेष्वपि पित्रादिवाक्यं प्रमाणम् कुहकादिवाक्यमप्रमाणमिति स्थिते क्वचित्

---

इति। अत्र आलोकस्याग्निव्याप्यत्वेऽपि व्यापकत्वाभावादिदं न युक्तमित्यप्यभिसंधिः स्यात्। **परविपक्षेदण्डभूत** इति। परपक्षविरुद्धपक्षबाधक इत्यर्थः। प्रमाणाभासेषु प्रत्यक्षाभासानामिव अनुमानाभासानामपि निरूपणं समाप्तमिति दर्शयति **स्थितं तावदि**ति। **तावच्छब्दः** कार्त्स्न्ये। अथागमाभासाः।

**अधिकृतशास्त्रे**ति। यमर्थं प्रधानप्रतिपाद्यतयाऽधिकृत्य यच्छास्त्रं प्रवृत्तम्, तत् तत्राधिकृतम्। अन्यस्याप्रधानभूतयत्किञ्चिदन्यबोधकत्वेऽपि तत्र तात्पर्याभावात् तदर्थतत्परशास्त्रान्तरविरोधे उपेक्ष्यत्वमेवेति भावः। **आयुरि**ति। आयुर्वेद–धनुर्वेद–गान्धर्ववेदेत्यर्थः। **हेतुहन्तव्यत्वमात्रे**ति। बाधकशास्त्राप्रदर्शनेन युक्तिमात्रेण

कचिदंशे गुणदोषसंभावनया दृष्टमन्यथात्वम्। संदिग्धप्रामाण्येष्वपि वाक्येष्वागमाभासत्वमेव; याथार्थ्येऽपि प्रत्ययजनकत्वाभावात्। तदर्थं हि पुरुषः प्रमाणमुपादत्ते। अन्यथा भ्रान्तविप्रलम्भकादिवाक्यानामपि यादृच्छिकार्थसंभावनया प्रामाण्यप्रसङ्गः। न च तथा लौकिकाः परीक्षका वा प्रतियन्ति।

अतो ये नाम बाह्यानां व्याहाराः कुदृशामपि। न ते दृष्टेष्वदृष्टेष्वप्यर्थेष्वादरगोचराः ॥
दृष्टे किमुपदेशेन? किमदृष्टे तदुक्तिभिः? न खल्वतीन्द्रिये वस्तुन्यस्ति पुंसां स्वतन्त्रता ॥
प्रत्यक्षादेरसाध्येषु वेदवेद्येषु वस्तुषु। किमन्यैः सति सूर्ये कः खद्योतमनुधावति ॥
"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः॥"
इति मन्वादयश्चाहुरध्यक्षितपरावराः। येषां यदृच्छावादोऽपि श्रूयते विश्वभेषजम् ॥
"मन्वर्थविपरीता च या स्मृतिः सा न शस्यते।" इति सद्भिरेवोक्तमन्येष्वयं बलाबलम्॥
"सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च। प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥"
इति स्वयं भगवता गुणकार्यमगीयत। अतः सत्त्वोत्तरादेशसंनिधावन्यथाप(धाव)नम् ॥
इति शास्त्रपुराणेष्वप्यन्योन्यपरिपन्थिषु। स्वमूलगुणभेदेन बलाबलविनिश्चयः ॥
मात्स्यादिषु पुराणेषु परस्परविरोधिनाम्। पुराणानां विभागो हि तत्परोक्त्यैव साधितः ॥
"यस्मिन् कल्पे तु यत् प्रोक्तं पुराणं ब्रह्मणा पुरा। तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ॥
अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते। राजसेषु तु माहात्म्यमधिकं ब्रह्मणो विदुः ॥
सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः। तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम् ॥
संकीर्णेषु सरस्वत्याः पितृणां च निगद्यते" इत्याद्यनुक्रमात्। द्रष्टव्यमेतदखिलं स्पष्टं पुरुषनिर्णये ॥
वेदार्थसंग्रहे चैव भाष्यकारैः प्रदर्शितम्। न च प्रजापशुपतिप्रभृतेर्नास्ति विभ्रमः ॥
मेधाविभ्रंशतत्सिद्ध्योरेषां व्यासेन साधनात्। "त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय ॥
अल्पायासं दर्शयित्वा फलं शीघ्रं प्रदर्शय। अहं मोहं करिष्यामि यो जनं मोहयिष्यति ॥"
इत्थं भगवदादेशात् युक्ता चैषां प्रतारणा। "अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः ॥"
इत्यादिभिः स्यादेतेषां प्रमादाशक्तिसंभवः। अतः प्रत्यक्षवेदादेः सत्परिग्रहशालिनः।
विरुद्धमाश्वरवचोऽप्यागमाभास एव नः ॥

---

निषेध्यत्वेत्यर्थः। **प्रत्ययजनकत्वेति**। विश्वासजनकत्वेत्यर्थः। प्रमात्वनिश्चयविषयप्रमाजनकत्वेति वा।

**असाध्येषु**=अगोचरेषु। **अन्यैः** बाह्यकुदृष्टिग्रन्थैः। **विश्वभेषजम्** "यद्वै किञ्च मनुरवदत् तत् भेषजम्"। **तमोनिष्ठा** इति मनुवाक्येन अन्यस्मृतीनां भ्रममूलकत्वं विवक्षितमित्युपपादयति **सत्त्वादिति**। **संनिधावित्ये**तदुपरि **अन्यथापन**मिति पठित्वा अन्येषां बाह्याद्यादेशानामन्यथाकरणम्=अप्रमाणतयोपेक्षणमिति अन्येषामिति पदाध्याहारेण व्याख्यान्ति। **अन्यधावन**मिति **तालपाठः**। सत्त्वोत्तरवेदरूपाऽऽदेशसंनिधौ ततो भीत्या तदन्येषामादेशानां **धावनं** पलायनमेवेत्यर्थः। **मेधाविभ्रंशेति**। वेदापहार. गुरुपातकादावयं द्रष्टव्यः। पश्चात् मेधासिद्धिश्च तत एव। भ्रमो ब्रह्मादेरुक्तः; विप्रलम्भमाह **त्वं हीति**। प्रमादमशक्तिञ्च दर्शयति **अबुद्धीति**। ब्रह्मणा कृता तमोमयसृष्टिरबुद्धिकृतेत्यनेन प्रमादाशक्ती सुग्रहे इति भावः।

प्रत्यक्षाद्याभासनिरूपणेनैव स्मृत्याभासाश्च निरूपिताः ; तत्सम्यक्त्व-तदभावानुविधानात् स्मृतिसम्यक्त्वतदभावयोः ; अथापि स्मृतिप्रामाण्यमिच्छन् कश्चित् प्रतिज्ञातेऽर्थे यदि भ्रान्तिमूलां स्मृतिं प्रमाणतया पुरस्कुर्यात ; तदा तदाभासत्वमुद्भाव्यम । न हि, स्मृतिरत्र प्रमाणमित्युक्ते न तन्मूलं प्रमाणमिति साक्षादुत्तरं स्यात् । न च, स्मृतिरित्येवाप्रामाण्यं वक्तुं शक्यम् ; तद्याथा-र्थ्यस्य (याथार्थ्यस्य ?) वक्ष्यमाणत्वात् । अतः पुरस्कृतस्य स्मृतिविशेषस्याप्रामाण्ये प्रथममुद्भाविते तत्समर्थनकक्ष्यायां मूलानुभवसम्यक्त्वादिविचारावतारः इति युक्तः पन्थाः ॥

तत्र प्रत्यक्षाभासमूलस्मृत्याभासो यथा—आसीत् तदा गगने गन्धर्वनगरमिति । अनुमानाभासमूलो यथा—कलधौतमिति परिगृहीतरक्षितकम्बुशकलस्य,-'अस्ति मे तदङ्गुलीयकार्हद्रव्यम्' इति । आगमाभासमूलो यथा—उपच्छन्दितस्य डिम्भस्य,- पयःपानेन शिखा मे वर्धिष्यते' इति । एवमेव बाह्यानां कुदृष्टीनां च तत्तत्प्रबन्धकरणहेतवः स्मृत्याभासा द्रष्टव्याः । एवं तत्तत्संशयमूला स्मृतिरपि तथा तथा संशयात्मिका, तत्तज्जनकसंस्काराणां स्वमूलानुरूपस्मृति-जननशक्ततयैव हि स्वसामग्र्योत्पत्तिः । यथा-जङ्गमस्थावरबीजानां स्वतस्तत्तदनुरूपवरावरारम्भकत्वम, विनाशे प्रतिबन्धे वाऽनारम्भः, वैगुण्ये कार्यवैगुण्यम्, सहकार्यन्तरवशाच्च जातिगुणान्तर-विशिष्टकार्यारम्भः—एवं संस्कारबीजेष्वपि प्रबलसुखदुःख-पाप-कालविप्रकर्षादिभिर्विनष्टेषु प्रतिबद्धेषु वा न तत्साध्या स्मृतिः । वैगुण्ये त्वनुभूतैकदेशविषयः स्मृतिप्रमोषः । प्रत्युत्पन्नकरणादि-सहकारिसंनिधौ प्रत्यभिज्ञातदाभासाद्यारम्भकत्वमिति सांदृष्टिकमेतत् ।

ततश्च संस्काराणां स्वतः पूर्वानुभवसमानाकारस्मृतिजननस्वाभाव्यात् स्मृतिरपि संशय-विपर्ययवेषैवेत स्वमूलप्रत्ययवत् नार्थव्यवस्थापिका । सापि च विचित्रार्थगोचरा काव्यादि निर्मिमाणानामुपकुरुते ; न तु वस्तुस्थितिं प्रमित्सतामिति तत्पुरस्कारे परस्य निग्राह्यतैव । अतः स्मृतिप्रामाण्यवादानुसारे भ्रान्तिमूलस्मृतीनां प्रमाणाभासाख्यनिग्रहस्थाने निवेशः । स्मृतिमात्राप्रामाण्यपक्षनिष्ठस्तु यथार्थामपि स्मृतिं पुरस्कुर्वंस्तदप्रामाण्याभ्युपगमोद्भावनेन निगृह्येतेति विशेषः । तत्प्रामाण्यवादी च यथार्थां चेत् स्मृतिं प्रस्तुते प्रमाणयेत् ; तदनभ्युपगन्ता तु परस्तदाभासतां ब्रूयात् ; तत्प्रामाण्याप्रामाण्यविमर्शो विषयवादान्तरावतारः । एवं प्रकृतोपयुक्तेषु प्रकृतमध्ये वादान्तरावतारो गर्भाङ्कान्तर(रादि)(रा?)चिन्तावदविरुद्धः । तदवसाने च प्रकृतमेव

---

चतुर्विधे प्रमाणाभासे अन्तिममाह **प्रत्यक्षाद्याभासे**ति । स्मृतेरनुभवयाथार्थ्यायाथार्थ्याधीनतत्कत्वात् अनुभवाभासजन्याया आभासत्वमेवेति भावः । **गन्धर्वनगरम्**=मेघपटले वातकृतावयवसंश्लेष-विश्लेषवशात् प्रतीयमानो नगरगोपुरसिंहमनुष्याद्याकारः । **कलधौतम्**—रजतम् । **संस्कारबीजेषु**= संस्काररूपेषु कारणेषु । **प्रबले**ति । प्रबलसुखेन प्रबलदुःखेन पापेन कालविप्रकर्षेण वा तदन्येनवा । 'प्रायणान्तरकक्लेशात् प्रसूतिव्यसनादपि' इत्यादि च श्रीयामुनमुनिदर्शितम् । **प्रत्युत्पन्नकरणं** तदातनचक्षुस्संयोगादि । **सांदृष्टिकम्** आनुभविकम् । **काव्यादी**ति । असंबद्धानेकार्थसंबन्धकल्पनस्य तत्र स्थितत्वात् **पुरस्कुर्वन्नि**ति । यदि यथार्थां मत्वा काञ्चित् स्मृतिं प्रमाणयेदित्यर्थः । अप्रामाण्यवादिकृते तत्पुरस्करणे तथा । प्रामाण्यवादिना तथापुरस्कारे तु तत्प्रामाण्याप्रामाण्यविवादात् विचारः कार्य इति । **गर्भाङ्कान्तरचिन्ते**ति । **गर्भाङ्कान्तरादिचिन्ते**ति तालपाठः । **गर्भाङ्कान्तराचिन्तादिव**दिति स्यात् । **अन्तराचिन्ता** अधिकरणमध्ये अधिकरणान्तरप्रवेशे ।

पुनरनुसरणीयम् । जल्पवितण्डयोस्तु प्रकृतविच्छेदेऽपि तदर्थचिन्तान्तरबलेन प्रकृतोद्भावितनिग्रहस्थानसदसद्भावसिद्धेरत्रावतैव च जयपराजयव्यवस्थानान्न प्रकृतविशेषचिन्तावकाशः । अभ्युपगमनीयमेदं तु तदनुसारेण स्यादपीति । एवमनुमानतर्कप्रयोगप्रसङ्गादसत्प्रयोगादिपरिहाराय निग्रहस्थानान्तं निरूपितम् । एतदध्यायचिन्तितमेव चासाधारणं सारं न्यायविस्तरस्येत्यत्रैव वादिभिः सातिशयश्रमैमर्न्यमिति ॥

यस्मिन् नानुमितिः क्रमेत विविधा बोधाय बाधाय वा
यस्याशेषदृशः क्षितावनुमितिस्तन्मानताख्यातये ।
यस्मिन् पश्यति तत्त्वनिर्णयजयावत्याहितं यत्क्रुधा
नित्यैश्वर्यमहोदधिः स भगवान् निश्रेयसायास्तु नः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ अनुमानाध्याये
चतुर्थं प्रमाणाभासाह्निकम् ॥
अनुमानाध्यायश्च समाप्तः ॥

—o—o—

---

सारं न्यायविस्तरस्येति । अस्य हि विद्यास्थानस्य प्रमाणविवेकः प्रधानभूतः ; तत्राप्यनुमानविवेकः । अत एव नाम्नि न्यायपदघटनम् । न्यायश्चानुमानप्रयोगः । तत्प्रयोगतदाभासविवेचनमतो मुख्यमिति तदाभासप्रपञ्चनमपि कृतम् ॥

अनुमानाध्याये, अनुमितेः वादजल्पवितण्डानां निग्रहस्थानस्य च निरूपणात् तत्सबन्धघटनेन भगवन्तं स्तौति यस्मिन्निति । अनुमितिर्बाधाय न भवतीति रचनानुपपत्त्यधिकरणादवसीयते । बोधाय न भवतीति शास्त्रयोनित्वाधिकरणात् । क्षितावनुमितिः । सृष्टभूमिविषयकानुमितिः, "तोयान्तां स महीं ज्ञात्वा जगत्येकार्णवे प्रभुः । अनुमानात् तदुद्धारं कर्तुकामः प्रजापतिः" इति सर्वदर्शिनोऽपीश्वरस्य अनुमानस्यार्थनिश्चायकत्ववर्णनं तस्यापि लोके प्रमाणत्वख्यापनायेति व्याख्यातम् । स्वरसमेतत् । यद्वा क्षिताविति अवतारकालेष्वित्येतदभिप्रायम् ; तथाऽभिनयात् । अत्याहितम् अतिशयितभीतिः । निग्रहस्थानानि मनसिकृत्येदम् ।

न्यायप्राचीननानोद्धृतवचनविवेकार्थमेषा कृतिर्मे
प्राप्तेषद्विस्तरं प्राक्, तदनु विशदतां वीक्ष्य वाचां क्रमेण ।
तत्तद्वाक्यावताराद्यधिकविवरणे ग्रन्थबाहुल्यभीत्याऽ-
प्येषा संक्षिप्तरूपा, भवति लघुतरा शब्दतः शब्दतश्च ॥

इति अभिनवदेशिकवात्स्यवीरराघवाचार्यकृतिषु न्यायतत्त्वप्रकाशिकायां
न्यायपरिशुद्धिव्याख्यायामनुमानाध्यायः ।

श्रीरस्तु

॥ अथ शब्दाध्यायः ॥ तत्र प्रथमाह्निकम् ॥

अथानुमोद्भवं (दयं) स्मृत्या हेतुत्वेनापि संस्थितम् ।
मध्ये तयोरिहेदानीं मानं शाब्दं प्रचक्ष्महे ॥

अनाप्तानुक्तवाक्यजनितं तदर्थविज्ञानं तत् प्रमाणम्; कारणदोषबाधकादर्शनात्; न चानाप्तोक्तवाक्यं प्रमाणम्, कारणदोषबाधकदर्शनात्। न च वाक्यत्वादिभिर्बाधः; स्ववचनविरोधात्। यदि बाधकोपन्यासवाक्यमयथार्थम्, तदा कथं बाधः। अथ यथार्थम्, तस्यापि पक्षीकारे तद्बाधः;- बहिष्कारे तेनैवानैकान्त्यम्। न चातिप्रसङ्गः; भ्रान्तादिवाक्यानां दोषमूलत्वस्य दुरपह्नवत्वात्। अत्र तु तदभावात्। उत्स्वप्नायित.घुणक्षताक्षरादीनां तु

॥ श्रीमते निगमान्तगुरवे नमः ॥ शब्दाध्यायः ॥

अनुमानाध्यायारम्भे अनुमानस्य, 'व्यापकप्रमितिरनुमानम्' इति अनुमितिरूपस्य प्रत्यक्षेण सहैवेह शब्दाध्याये शाब्दबोधस्यानुमया सह संगतिमाह अथेति। अनुमितिप्रयोज्यत्वं शाब्दबोधस्य वृद्धव्यवहारजन्यानुमितिविषयशक्तिग्रहाधीनत्वात्। स्मृतेरप्यनुमितिजन्यत्वेऽपि शाब्दबोधस्याप्यनुमितेरिव स्मृतिं प्रति हेतुत्वात् उभयानन्तरमेव तन्निरूपणम्। स्मृत्याः=स्मृतिं प्रति हेतुत्वेनापि सिद्धं मानं शाब्दम् शाब्दबोधरूपप्रमितिं तयोर्मध्ये प्रचक्ष्महे। तल्लक्षयति अनाप्तेति। वेदतद्भिन्नोभयविधवाक्यजन्यःभोत्रसंग्रहायैवं लक्षणम्। वाक्यपदमुत्तरत्रान्वितार्थकानन्वितार्थकद्विविधवाक्यसाधारण्येन पदसंदोहविशेषरूपं वक्ष्यति। अतोऽनाप्तवाक्यमादाय तज्जनितेऽर्थज्ञानेऽतिव्याप्तिरिति अनाप्तानुक्तेति विशेषणम्। आप्तोक्तेति विशेषणे तु वेदवाक्यमगृहीतं स्यात्; अपौरुषेयत्वात्। वाक्यजनितो भवति वाक्यध्वंसोऽपि; तद्वारणाय विज्ञानमिति। वाक्यप्रत्यक्षमपि श्रौतं वाक्यजनितम्; तद्व्यावृत्तये अर्थविज्ञानमिति। वाक्यस्यापि यत्किञ्चित्पदं प्रति अर्थत्वात् पुनरतिव्याप्तिशंकेति तदर्थेति। प्रकृतवाक्यविवक्षितार्थेत्यर्थः। तत् प्रमाणमिति। शाब्दरूपप्रमितिरित्यर्थः। कथं तत्र प्रमितित्वनिश्चय इत्यत्राह कारणेति। उत्सर्गसिद्धस्य स्वतःप्रामाण्यस्य वारकं कारणदोषदर्शनं बाधकदर्शनञ्च। तदेकमपि नास्ति वेदप्रयोज्यज्ञानेऽपि। अनाप्तवाक्ये तद्दर्शनाच्च न तज्जन्यज्ञानं प्रमितिः। ननु प्रकृतशाब्दज्ञानहेतुः शब्दोऽपि न प्रमाणं वाक्यत्वात् अनाप्तवाक्यवत्; एवं पदत्वशब्दत्वादिरपि हेतुरित्यत्राह न च वाक्यत्वेति। आक्षेपकवाक्यस्यापि वाक्यतया हेतुमति तत्र साध्यसत्त्वे अप्रमाणत्वात् बाधकत्वमेव न भवति। तस्य प्रमाणत्वे तस्य पक्षकोटिप्रवेश इष्टो न वा। आद्ये अप्रमाणत्वरूपसाध्याभावः, अन्त्ये च अपक्षभूते तत्र हेतुमति साध्याभावात् व्यभिचार इत्युभयथाऽपि हेतुर्दुष्ट एवेत्यर्थः। ननु बाधकादर्शने अनाप्तवाक्येऽपि प्रामाण्यापत्तिरित्यत्राह न चातीति। तत्र भ्रान्ति.प्रमाद. विप्रलम्भ.करणापाटवान्यतमरूपदोषमूलकत्वस्यावर्जनीयत्वात् तत्संभावनया न प्रामाण्यमित्यर्थः। अत्र [1]तद्भिन्ने वेदे आप्तवाक्ये च। ननु कश्चिदाप्त एव कदाचित् स्वप्नमध्ये यथा किञ्चित्

विशिष्टतात्पर्यविरहेण बोधकत्वेऽप्यनाश्वसनीयत्वात्; व्यभिचारदर्शनाच्च। नित्येऽपि वेदे नित्येश्वरशासनात्मनि तत्तदर्थतात्पर्यानपायात्। तस्य चात्राभावात्। क्वाचित्कदोषदर्शनस्य च प्रत्यक्षादावपि समत्वात्, स्वतः परतो वा प्रामाण्ये च ततो विशेषाभावात्॥

तच्च वेद्यांशे प्रत्यक्षातिरिक्तम्, असाक्षात्कारित्वात्, अनुमानवत्। अनुमानातिरिक्तम्; पक्षलिङ्गपरामर्शाद्यदृष्टेः। पदवाक्यतत्संबन्धादीनां च विशिष्टवाक्यार्थे प्रत्यसिद्धव्याप्तिकत्वेन अलिङ्गत्वात्, दृष्टान्ताभ्युपगमे सर्वत्राविशेषात्। व्युत्पत्तौ च स्वतन्त्रतयैव बोधकत्वसिद्धेः।

---

प्रलपति, तथा किमप्यबुद्धिपूर्वमाह, घुणक्षतरेखा अपि जातु अक्षरसंघातरूपा अर्थबोधिका भवन्ति। तत्रतत्र प्रामण्यापत्तिः। तदर्थं वक्तृगुणापेक्षायां वेदस्यापीश्वरकर्तृकत्वमेष्टव्यम्, अन्यथा स्यादेवाप्रामाण्यमित्यत्राह **उत्स्वप्ने**ति तत्र विशिष्टार्थो यद्यबाधितः, तत्र प्रामाण्यमेवास्तु; तथापि तदधीनस्वरसप्रवृत्त्यभावः तत्पदकदम्बे तद्बोधितार्थविषयतात्पर्याभावात् अविस्रम्भात्। विशिष्टार्थबोधकत्वमपि तत्र क्वचिदेव। क्वचित् बाधात्। तर्हि वक्तृतात्पर्यस्याभावात् वेदोऽपि न प्रमाणं स्यादित्यत्राह **नित्येऽपी**ति। 'श्रुतिस्मृती ममैवाज्ञे' इत्यादिना भगवदाज्ञारूपत्वस्य वेदे ग्रहणात् इदं वाक्यमेतदर्थकमितीश्वरतात्पर्यं सर्वत्र वेदवाक्ये इष्यते। तस्य शाब्दबोधकारणत्वेऽपि शब्दप्राथमिकव्यवहारकारणत्वाभावात् न वेदनित्यत्वहानिरिति भावः। ननु घुणक्षतादौ क्वचिदन्यथात्वेनानाश्वासवत् वेदजन्यज्ञानेऽपि आदित्यो यूप इत्यादिजन्ये तद्दर्शनात् सर्वत्रानाश्वास इत्यत्राह **क्वाचित्के**ति। एवं तर्हि प्रत्यक्षानुमाने अपि त्याज्ये स्याताम्; लौकिकवाक्यमपीति भावः। तदर्थमेवास्माभिः परतः प्रामाण्यं स्वीकृतमिति तार्किकशंकायामाह **स्वत** इति। परतः प्रामाण्येऽपि वेदे सर्वत्र प्रामाण्यं युष्मदिष्टमपि। तत्रोभाभ्यामेकरूप एव निर्वाहः कार्य इति भावः। आदित्यो यूप इत्यादावीश्वरस्य यथाश्रुतार्थे यूपसूर्याभेदे तात्पर्याभावात् सूर्यवत्तेजस्वित्वस्य यूपे गौण्या विवक्षितत्वान्न दोषगन्ध इति हृदयम्।

ननु शाब्दज्ञानं प्रत्यक्षमेव भवतु। दशमस्त्वमसीत्यादौ कैश्चित् तत् स्वीकृतमपीत्यत्राह **तच्चे**ति। सर्वस्यापि ज्ञानस्य स्वयंप्रकाशत्वसिद्धान्तात् स्वरूपादौ प्रत्यक्षातिरिक्तत्वं बाधितमिति **वेद्यांश** इति विशेषणम्। शाब्दज्ञानं अर्थनिष्ठलौकिकविषयत्वानिरूपकं अहमिममर्थं पश्यामीत्यनुव्यवसायाविषयत्वादित्यनुमानम् अन्यथा पर्वतोऽग्निमानित्यनुमितिरपि प्रत्यक्षं स्यादिति। अनुमानेऽप्यनन्तर्भावमाह **अनुमानातिरिक्त**मिति। अयं पक्षः इदं लिंगम् इत्थं परामर्श इति कस्याप्यदर्शनादिति। ननु विशिष्ट वाक्यार्थः साध्यमिति सिद्धम्, हेतुस्तु पदं वा पदसमुदायरूपवाक्यं वा मिथः पदसबन्धो वाऽस्त्वित्यत्राह **पदे**ति। पदादीनां वाक्यार्थस्य चैकाधिकरणवर्तित्वाभावात् सामानाधिकरण्यमेव दुर्वचम्, सुतरां सामानाधिकरण्यनियमः। न च व्याप्तिर्गृह्यत इति भावः। कश्चित् दृष्टान्ते उभयोर्दर्शनात् व्याप्तिग्रहोऽस्तु, ततोऽनुमानप्रवृत्तिरित्यत्राह **दृष्टान्ते**ति। तत्र वाक्यार्थग्रहो यथा नानुमितिरूपः, तथा प्रकृतेऽप्यस्तु। तत्र प्रत्यक्ष-

अत एव वक्तृज्ञानानुमानाभ्युपगमेऽपि शब्दप्रामाण्यं सिद्धम्। आगमिकबुद्धिरनुमा, प्रत्यक्षेतरप्रमितित्वात्, संप्रतिपन्नवदिति चेन्न; उक्तोत्तरत्वात्। अन्यथा शब्दरसगन्धादिबुद्धिरनुमा, अचाक्षुषप्रमितित्वात्, संप्रतिपन्नवत् इत्यपि प्रसङ्गात्। "प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्", "दृष्टानुमानागमजम्" इति मन्वादिमहर्षिसंमतेश्च शब्दानुमानयोर्भेदो दृश्यते। न चात्र गोबलीवर्दनयः; अन्तर्भावादर्शनात्॥ आगमोऽनुमानं, संबन्धग्रहणे सत्येव बोधकत्वादिति चेन्न; बोध्यबोधकभावातिरिक्तसंबन्धग्रहणापेक्षिण्यनुमानत्वनियमात्। न चात्र तदतिरिक्तः संबन्धः, यद्ग्रहणं नियमेनापेक्ष्येत। अन्यथा संबन्धसापेक्षतया तयोः प्रत्यक्षत्वस्यापि सुसाधत्वादिति॥ न च स्मृतिः; अपूर्वविषयत्वात्।

---

त्वस्याप्यसंभवात् तृतीयविधैव प्रमितिरेष्टव्या; सैव सर्वत्रेति। ननु वृद्धव्यवहारात् वाक्यस्यार्थनिश्चयेऽनुमानमेव प्रमाणमादृतम्। अतः सर्वत्रार्थानुमानमेवेत्यत्राह **व्युत्पत्तौ चेति**। वृद्धव्यवहारस्थले बालस्याव्युत्पन्नत्वादर्थशक्तिग्रहणार्थमेवानुमानम्। व्युत्पत्तौ जातायां तु अर्थशब्दयोर्व्याप्तिग्रहपरामर्शविलम्बं विना योग्यतादिनैवार्थग्रहणमिति नात्रानुमानमिति भावः।

शब्दस्यानुमानान्तर्भावो वैशेषिकसंमतः। प्राभाकरास्तु लौकिकवाक्यस्य न शब्दविधया प्रामाण्यम्, आप्तवाक्यस्थले सर्वत्रानुमानप्रवृत्त्या शब्दतः प्रागनुमानत एव शब्दवेद्यार्थग्रहणस्य जनितत्वात् शब्दोऽनुवादमात्रम्। वेदे तु वक्तुरभावात् शब्दः स्वातन्त्र्येण प्रमाणम्। लौकिकस्थले अनुमानप्रकारस्तु इदं वाक्यमीदृशवाक्यार्थविषयकवक्तृज्ञानपूर्वकम् आकांक्षादिमत्पदसमूहत्वादिति। अयं भावः— आप्तवाक्यश्रवणेऽप्यर्थे विस्रम्भाभावात् अयं विशिष्टोऽर्थ इति निश्चयो न जायते, किंतु अयं पुरुष ईदृशविशिष्टार्थबुद्ध्या शब्दराशिमिमं प्रयुङ्क्ते इत्येव। एवं वक्तृज्ञानेऽनुमीयमाने ज्ञानविषयतयाऽर्थोऽप्यनुमित एवेति पश्चात् वेदवाक्येन तदर्थज्ञापनं हि इष्यमाणमपि ज्ञातज्ञापनरूपमेव स्यादिति। तत्र वक्तव्यमाह **अत एवेति** अयं वक्तृज्ञानानुमानपक्षो निरसिष्यते। तत्स्वीकारेऽपि वक्तृज्ञानविशेषणतयाऽर्थस्यापि ज्ञातत्वेऽपि तस्यैवार्थस्य व्याप्तिग्रहादिनिरपेक्षं वाक्यादपि गृह्यमाणतया तज्ज्ञानस्य ज्ञातार्थविषयकत्वेऽपि याथार्थ्यरूपप्रामाण्यस्य न क्षतिः। याथार्थ्यस्यैवेदं स्मृतिसाधारण्येन चिरन्तनत्वादिति भावः। **आगमिकेति**। शाब्देत्यर्थः। **उक्तोत्तरत्वादिति**। पक्षहेतुपरामर्शाद्यभावस्योक्तत्वादित्यर्थः।

**संबन्धग्रहणे** इति। बोधकत्वमात्रं संबन्धे सति विषयबोधकत्वस्य प्रत्यक्षे इन्द्रियेऽपि। अतो ग्रहणपदम्। **अतिरिक्तेति**। परामर्शजन्यं ज्ञानं ह्यनुमितिः। परामर्शश्च व्याप्तिविशिष्टपक्षधर्मताज्ञानम्। अतो व्याप्तिरूपसंबन्धस्तत्र ग्राह्यः। न तु बोध्यबोधकभाव इति। **अपूर्वविषयत्वादिति**। अज्ञातार्थोपदेशार्थमेव प्रायः शब्दप्रवृत्त्या अज्ञातपूर्वार्थविषयकत्वमेव शाब्दस्य। सुतरां वेदे। तत्र कथं स्मृतिः। शाब्दबोधात् पूर्वक्षणे च प्रत्येकपदार्थस्मृतिमात्रमस्ति; न तु विशिष्टार्थानुभव इति। **कथमुत्तरज्ञानस्य**

पदसंदोहविशेषो वाक्यम्। प्रामाणिकसद्व्यवहारविषयः पदम्। तस्य सुप्तिङन्तत्वादिकल्पनयाऽपि व्यक्तिः क्रियते। अत एव ह्यन्यथान्यथा प्रकृतिप्रत्ययादिकं व्याकरणान्तरेषु कल्प्यते। तच्च न सांकेतिकम्; संकेतयितृपुरुषासंभवात्। अत एव न भाषान्तरवत् तत्क्लृप्तिः; नित्यवेदगतत्वाच्च। यानि वैदिकानि पदानि तान्येव लौकिकानीति "वेदशब्देभ्य एवादौ" इत्यादिवचनादपि सिद्धम्। भाषाच्छन्दसोस्तु कतिपयशब्दानां लक्षणभेदस्तत्तदानुपूर्वीप्रतिनियमापेक्षः।

भाषाप्रयुक्तः सर्वोऽपि वेदे क्वापि प्रयोगवान्। वेदैकनियतः शब्दो नान्यत्रेति व्यवस्थितिः॥

उक्तं चैतत् वेदार्थसंग्रहेऽपि—"वैदिका एव सर्वे वाचकाः शब्दाश्च—" इत्यादिना॥

वाक्यं द्विधा—पौरुषेयापौरुषेयभेदात्। पुरुषस्वातन्त्र्याधीनरचनाविशेषविशिष्टं पौरुषेयम्। तद् द्विधा अन्वितार्थमनन्वितार्थं च, आद्यं यथा—अग्निरुष्णः, आपो द्रवाः,

---

स्मृतित्वमिति॥ अनाप्तानुक्तवाक्येत्यत्र वाक्यपदमुख्यार्थग्रहणे दलवैयर्थ्यात्माश्रयादिदोषप्रसंगात् तत्रत्यवाक्यपदस्यार्थमाह पदेति। क्रियाकारकवाचिपदसमुदायः पदसंदोहः। घटः कर्मत्वमानयनं कृतिरिति निराकांक्षपदसमुदायस्य व्यावृत्तये विशेषपदम्। तद्घटकपदलक्षणमाह प्रामाणिकेति। मन्त्रेति प्रामाणिकव्यवहारविषयत्वं मन्त्रत्वमितिवत् इत्थं लक्षणमिति भावः। सुप्तिङन्तं पदमिति व्याकरणोक्तं किं नेष्यत इत्यत्राह तस्येति। रामः रामौ इत्यादीनां जयति जयतः इत्यादीनाञ्च पदत्वं संप्रतिपन्नम्। सु औ जस तिप् तस् झि इत्येवं प्रत्ययाः, तेषां सुप्तिङिति व्यवहार्यता च शास्त्ररचनासौकर्याय कैश्चित् कल्पिताः। रमुधातोर्घञ् राम इतीति विभजनमपि कल्पितमेव। अत एव व्याकरणान्तरेष्वन्यथाऽन्यथा पदनिष्पादनम्। अत एवाऽऽहुः, "असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते" इति। किञ्च पाणिनीयपरिचयविकलेन व्युत्पित्सुना केनापि ईदृशलक्षणसमन्वयो दुर्ग्रहः इति नेदं लोकप्रज्ञापनोपयोगीति। विभक्त्यन्तं पदमिति न्यायदर्शने; विभक्तिलक्षणं तत्र विमृश्यं भवति। तच्चेति। पदञ्चेत्यर्थः। शक्तं पदमिति, शक्तिः प्रायः ईश्वरसंकेत इति च तार्किकाः। पूर्वपूर्वकल्पस्थितसदजातीयत्वादुत्तरोत्तरकल्पस्थानां पदानामीश्वरेण संकेतं कृत्वा कदाचित्प्रवर्तितत्वमपि दुर्वचमिति संकेतयितुरभाव इति। भाषान्तरपदानि तु कालक्रमेण नवनवानि प्राकृतनतद्भाषापददुर्भिक्षेण कल्पितानि, यदृच्छाशब्दविशेषवत्; नवनवयन्त्रादिनामवत्। यानीति। इदं मीमांसायां लोकवेदाधिकरणसिद्धम्। भाषाच्छन्दसोरिति। लौकिकव्यवहारे वेदे चेत्यर्थः। यथा 'छन्दसि यत्' इति वचनात् भाषायां प्रत्ययान्तरमेवेत्येवम्। ननु वेदमात्रे प्रयोक्तव्यानि, कानिचित् पदानीति युज्यते; लोकमात्रे केषाञ्चिद्दृष्टौ वैदिकत्वं कथमिति चेत्—भाषायामिति व्याकरणे निर्दिष्टानि पदानि अधीयमानासु शाखासु न सन्तीति भावः। अत एव भाषाप्रयुक्त इत्यादि। यद्वा यदृच्छाशब्दतुल्यत्वं भाषामात्रगतानाम्। रचनाविशेषः एतत्पदानन्तरमेतत् पदमिति तत्तदिच्छाकृतः क्रमः पद्ये गद्ये च।

इति। द्वितीयं यथा—अग्निरनुष्णः, आपः कठिनाः इति॥

अत्रैकदेशिनो वदन्ति—"अनन्वयाग्रहादन्वितव्यवहारः क्वचिज्जायत इति। अत एव लौकिकवाक्ये दृष्टव्यभिचारस्य न झटिति वाक्याद् वाक्यार्थाध्यवसायः; योग्यताविमर्शसाकाङ्क्षत्वात् सामान्ययोग्यताग्रहणेऽपि व्यक्तियोग्यतायाः वक्तृज्ञानानुमानमन्तरेणासिद्धेः—"इति प्रमेयसंग्रहादिषु समर्थितम्। तथा—सन्मात्रग्राहिप्रत्यक्षनिराकरणाय शास्त्रस्यानुवादकत्वप्रसङ्गे विवरणकारैरुक्तम्—"अबुद्धबोधनस्वरसस्य शब्दस्यातथात्वं दोष इत्यभिसन्धिः। अथवा अनुवादकत्वमेव स्यात्। न हि मानान्तरप्रतीतेऽर्थे शब्दः प्रमाणम्। तथैव हि तस्य व्युत्पत्तिः" इत्युक्त्वा, "नन्वनुवादकतयैव व्युत्पत्तिः पुंवाक्येषु" इत्यादिना वक्तृज्ञानानुमानमुपपाद्य, "सत्यम्, दैवात् तदनुवादकत्वमिति नाबुद्धबोधनस्वारस्य-

---

अत्र लौकिकवाक्ये अन्वितार्थमनन्वितार्थमिति द्वैविध्यमुक्तम्। आद्ये अन्विताभिधानसंभवेऽपि अन्त्ये कथमन्वयधीः, बाधादिति शंकायां बाधज्ञानाभावे भ्रमात्मकधीरिति वक्तव्यम्। अन्यथाख्यातिस्वीकारे तथा स्यात्। अख्यातियथार्थख्यातिभ्यामेव निर्वाह इति सिद्धान्ते कथमिति पुनश्शंकायां केचित् प्राभाकरपक्ष इव भ्रान्तिर्भेदाग्रहः, असंबन्धापह्नवो वा; तदत्रानन्वयाग्रह इति वदन्तः तावत्यनुपरम्य प्राभाकरसंमतं लौकिकवाक्ये वक्तृज्ञानानुमानपक्षमप्याद्रियन्ते। तदंशेऽभिप्रायमेषां दर्शयितुमारभते अत्रैकदेशिन इति। वक्तृज्ञानानुमानपक्षः प्रमेयसंग्रह. विवरण. प्रज्ञापरित्राणग्रन्थेषु। भगवद्यामुनमुनि. वरदविष्णुमिश्र.भट्टपादानां मतेषु तदभावः। तदनुमानवादिनामाशयस्तु—वैदिकवाक्येऽन्वयधीभवतु। लोके तु, नद्यास्तीरे फलानि सन्तीत्यादौ पदार्थपरस्परान्वयबोधो न झटिति; योग्यताऽस्ति न वेति विमर्शभावात्। यद्यपि तीरे फलसद्भावे, अग्नेरनौष्ण्य इव बाधो न भवेत्—अथापि सामान्यतः संबन्धार्हत्वेऽपि, संप्रति तत्र तीरे फलसंबन्धोऽस्तीति कथं निश्चय इति तत्तत्कालघटनेन तत्तत्फलव्यक्तिविषयकसंदेहस्यावसरोऽस्ति। तस्मात् सामान्यतो योग्यताज्ञानानन्तरम्, इदं वाक्यं वक्त्रा नदीतीरफलसंबन्धज्ञानपूर्वं प्रयुक्तमिति वक्तृज्ञानानुमानमेव सर्वत्र लौकिकवाक्येषु। इमानि पदानि योग्यार्थवाचकानि, अयञ्च वक्ता विश्वसनीयः। अत एतस्य ज्ञानं प्रमैवेति प्रकृतविशिष्टार्थविषयकवक्तृज्ञानपूर्वकत्वानुमाने सति तत्रानुमाने वक्तृज्ञानविशेषणतया विशिष्टार्थो भात एव। एवं गृहीतार्थपरोऽयं पदसमुदाय इति वाक्यादर्थग्रहणं तदनन्तरम्। तस्माद्वाक्यस्यानुमानज्ञातार्थग्राहकत्वमेव। वेदे तु अनाप्तत्वसंदेहस्यानवसरात् आसत्तियोग्यतादिपरामर्शसमनन्तरं साक्षादेव विशिष्टार्थो बुध्यते, न तु मध्ये वक्तृज्ञानानुमानमिति वेदस्याज्ञातार्थज्ञापकत्वं सिध्यतीति। इदं प्राभाकरमतमनुसृतं प्रमेयसंग्रहादिष्विति प्रकृते उच्यते। विवरणं भाष्यव्याख्यानम्। विवरणकाराः श्रीराममिश्रा इति अन्विताभिधानसमर्थनस्थले वक्ष्यति। अबुद्धबोधनम् अज्ञातज्ञापनम्। प्रत्यक्षादिगृहीतस्य सन्मात्रस्यैव शब्दो ग्राहकश्चेत्, तत्स्वभावभंग इति। अनुवादकतैव

भङ्गप्रसङ्गः, यथा स्मृत्यनुमितवेदस्यानुवादकत्वेऽप्यर्थादिति न मानताभङ्गः" इत्यादि।
उक्तं च प्रज्ञापरित्राणे—

"पौरुषेयगिरः शङ्काग्रस्ता नसस(न स)इस मितिम् जनयन्ति न, यावत् तन्मूलमानवग्रहः॥
अनुमाय च वक्तुस्तन्मूलयोग्यप्रमान्तरम्(मां तदा)। तदुक्तवाक्यलिङ्गेन वाक्यार्थमनुजानते॥
अन्विततार्थाभिधानाय योग्यं वाक्यमिद सदा। असौ च नानृतं वक्ति स(सं)ज्ञात्वाऽर्थं तदब्रवत्।
वक्तृज्ञानानुमानेन ज्ञाता(ता)ज्ञातवाक्यतः। अन्विताथाभिधाच्चित्रयोग्यतामात्रधीर्गिराम्॥
परामर्श इति प्रोक्ते(प्राप्ते) नार्थसंसर्गगोचरः। मानान्तराविरोधित्वं योग्यतेत्यभिधीयते॥
नन्वेवं लौकिकं वाक्यं लिङ्गं चेल्लिङ्गवत् ततः। शब्दो गृहीतसंबन्धात् तद्वे(द्व)दस्यापि लिङ्गता॥
व्युत्पत्तिकाले व्युत्पित्सोर्लिङ्गधीर्नास्त्यसंशयात्। यथाव्युत्पत्ति शब्दास्तु बोधका इति वेदतः
(चेदतः)॥ स्वत एवार्थबाधः स्यादिति नैवास्य लिङ्गता॥"इत्यादि।

---

पुंवाक्यानामितीदं प्रकृतम्। दैवादिति। वक्तृज्ञानानुमानस्यावश्यापतितत्वादित्यर्थः। तथापि वेदे अबुद्ध-बोधनस्वभावस्य स्थित्या न स्वभावभंगः। सन्मात्रग्राहित्वादे तु वेदेऽपि तन्नास्तीति तद्भंग इति भावः। प्रज्ञापरित्राणश्लोके नसहसेति तालपाठः। नञ् तु जनयन्तिनेत्यत्रास्त्येव। तन्मूलमानं पौरुषेय-वाक्यप्रयोक्तृपुरुषज्ञानरूपम्। तदुक्तवाक्यलिंगेनेति। वक्तृज्ञानपूर्वकत्वानुमाने सति इदं वाक्यमीदृश-वाक्यार्थवत् आप्तनदुक्तवाक्यत्वादित वाक्यार्थमनुमन्यन्त इत्यथः। अन्वितेत्यादिश्लोकस्यो वक्तृज्ञाना कारपरः। स ज्ञात्वेत पाठः। सः वक्ता अर्थ प्रत्यक्षादिना ज्ञात्वैव तत् वाक्यमब्रवीदित्याकारकं वक्तृज्ञानमनुमाय शब्दस्वरूपेण ज्ञातात् अर्थस्वरूपेणाज्ञाताच्च तद्वाक्यात् वाक्यार्थमनुजानत इति अग्रस्ता-त्संबन्धः। ज्ञाताज्ञातस्त्वेयस्य अर्थस्वरूपमन्वितं ज्ञातम् अन्वितरूपेण चाज्ञातं यत, तस्माद्वाक्यादि-त्यर्थो वा। ज्ञातज्ञाते तै तालपाठ इव। वक्तृज्ञानानुमानात् प्राक् योग्यतापरामर्शमात्रं भवतीत्याह अन्वितेति। इति योग्यताविषयकत्वेन प्रोक्त परामर्शः न साक्षादन्विताथविषयक इत्यर्थ.। प्राभाकरमते लौकिकवाक्यश्रवणे वक्तृज्ञानानुमाने तज्ज्ञानविशेषणतयाऽर्थस्यानुमानमिति, शब्दोऽनुमान-विधया प्रमाणं वैशेषिकमत इवेते सिद्धमेतावता। तर्हि वेदोऽपि लिंगविधयैव प्रमाणं स्यादिति शब्दप्रमाणोच्छेदप्रसंग इति शंकते नन्विति। लौकिकवाक्यं लिंगं=हेतुर्भवेत; ततः तर्हि, शब्दगृहीतात् स्मारितात् पदार्थसंबन्धात् पदार्थसंसर्गे सति लिंगात्—धूमादिवत् अनुमानविधयैव प्रमाणं भवति। तत् तस्मात् वेदस्यापि लिंगता अनुमानतेति पूर्वपक्षः। वेदस्येति तालपाठः। उत्तरकारिकायामपि तथा। तदीत्यैव सिद्धान्तमाह व्युत्पत्तिकाल इति। वृद्धव्यवहारकाले व्युत्पित्सोः शक्तिग्रहस्याजतत्वात् न वाक्यं लिंगविधयाऽर्थग्राहकम्। ततोऽन्विताथेञ्ने सति शक्तिग्रहे जाते पश्चात् वाक्यान्तरश्रवणे शब्दस्य बोधकत्वस्वभावसद्भावात् पदार्थस्मृतिसमनन्तरं अनुमानव्याप्त्यादिनिरपेक्षतयैव बोधोत्पत्त्या वेदस्य नानुमान-

भगवद्यामुनमुनिभिस्तु आगमप्रामाण्ये वक्तृज्ञानानुमानं दूषितम् ; निगमितं च—"तस्मादस्ति नदीतीरे फलमित्येवमादिषु। या सिद्धविषया बुद्धिः सा शाब्दी नानुमानिकी" इति। अयमेव पक्षोऽनुसृतो वरदविष्णुमिश्रैः। तत्त्वरत्नाकरेऽप्यागमप्रामाण्यग्रन्थोपादानपूर्वकं प्रपञ्चितमेतत् ॥

अपौरुषेयं तु सर्वमन्वितार्थमेव ; किं तु आदित्यो यूपः—इत्यादिषूपचारतो निर्वाहः। आकाङ्क्षासत्तियोग्यतावन्ति हि पदान्यन्वितमभिदधति, अन्वये वा विश्राम्यन्ति। आदित्ययूपपदयोः प्रत्यक्षसिद्धस्वार्थभेदयोरयोग्यतया मुख्यवृत्तिपरित्यागः ॥

वृत्तिर्द्विधा—अभिधोपचारभेदात्। व्युत्पत्तिसिद्धार्थ एव वृत्तिरभिधा। यथा सिंहशब्दस्य मृगेन्द्रे। सा जातिगुणादिविषयभेदाद् योगरूढितत्समुच्चयभेदाच्च बहुविधा। मुख्यार्थबाधे सति तदारूढे वृत्तिरुपचारः। आरोपश्च द्विविधा—मुख्यार्थसंबन्धस्तद्गुणसंबन्धश्चेति। तत्र पूर्वेण प्रवृत्तिर्लक्षणा, यथा—गङ्गायां घोषः प्रतिवसतीत्यत्र गङ्गाशब्दस्य प्रवाहविशेषरूपवाच्यसंबन्धिनि तीरे। एवं लक्षितलक्षणा ग्राह्या। द्वितीयेन प्रवृत्तिर्गौणी। यथा सिंहो देवदत्त इत्यत्र सिंहशब्दस्य शौर्यादिगुणयोगिनि देवदत्ते। तत्त्वरत्नाकरे त्वेवमुक्तम्—

"अभिधानाभिधेयत्वमतः शब्दार्थयोः स्थितम्। संबन्धोऽभिधा द्वेधा बोध्या मुख्यजघन्यतः ॥
अभिधाऽर्थावगत्यात्मा शब्द(दं) व्यापार इष्यते(यिष्यतः)।
शब्दशक्तिनिमित्ता सा स्वार्थे मुख्याऽभिधीयते ॥ स्वार्थाभिधानद्वारा स्याज्जघन्याऽर्थान्तरे मता।"

इति ॥ तद्विस्तरस्तत्रैव द्रष्टव्यः ॥ न च गौणलाक्षणिकप्रयोगयोरवाच्यविषयत्वादवाच्यत्वम्। संबन्धस्यावश्यमावप्रवृत्तेरप्यनादित्वात्। तत एव विवक्षा(क्षित)स्थले यथौचित्यं प्रयोगोपपत्तेः।

---

त्वम्। लोके तु अनाप्तवाक्येऽन्वयाभावात् वक्तृज्ञानानुमानस्यैव पूर्वभावात् अनुमानत्वमिति वैषम्यमिति भावः।

परमाचार्यानभिमतमिदमित्याह भगवदिति। तस्मादित्यस्य शाब्दीत्यत्रान्वयः। वेद इव लोकेऽपि योग्यतापरामर्शसमनन्तरमन्वितार्थबोध एव जायते। बाधकाभावात्, निष्कारणशंकायाः अयुक्तत्वादिति। एवञ्च पौरुषेयवाक्यमपि शब्दविधया प्रमाणमाप्तोक्तत्वे, अन्यत्रान्यथाख्यात्यभावपक्षे अनन्वयाग्रह एवेति ध्येयम् ॥

लक्षितलक्षणा=द्विरेफशब्दलक्षितः रेफद्वयविशिष्टः भ्रमरशब्दः ; तेन ज्ञापितो मधुकरः ; द्विरेफशब्दः स्वसंबन्धिभ्रमरशब्दसंबन्धिनि मधुकरे परम्परासंबन्धेन वर्तत इति भावः। बहुव्रीहेर्भ्रमरपदलक्षकत्वेऽपि भ्रमरपदस्य न मधुकरलक्षकत्वम्, किंतु शक्तत्वमेव। अतो लक्षणा इति पदं लक्षितार्थमुखेन ज्ञापनेत्यर्थे प्रयुक्तम्।

तत्त्वरत्नाकरेत्विति तुशब्देन वैलक्षण्यं ज्ञाप्यते। मुख्यामुख्यवृत्तिद्वयस्याप्यभिधेयाभिधायकभाव इति तत्र व्यवहारः। अभिधा नाम अर्थावगतिः अर्थबोधः। एष बोध्यबोधकभावः शब्दतदर्थसंबन्धरूपत्वात् व्यापार इत्युच्यते। एतद्ग्रहणं व्यवहार शब्दगतपदार्थस्मारकशक्तिमूलकार्थस्मृत्यादिमूलकम्। अवाच्यत्वम्

एताः सर्वा अपि वृत्तयः अन्विताभिधानवृत्त्यन्तर्भूताः। पृथक्पदानां स्मारकत्वमेव ।

अभिहितान्वये हि पदानां पदार्थे, पदार्थानां वाक्यार्थे, पदानां च तत्रेति शक्तित्रयकल्पनागौरवं स्यात्, वाक्यार्थस्याशाब्दत्वप्रसङ्गो वा। पदार्थे लक्षणसमाप्तेः प्रमाणप्रसङ्गश्च ।

नचान्विताभिधानेऽन्योन्याश्रयणम्; मिथः स्मरणमात्रोपजीवनात्। यथाऽऽहुः—"पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् । न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥" इति। नापि पौनरुक्त्यादिदोषः; तत्तदंशप्रतिनियतशक्तित्वात्। नापि वाक्यभेदः, एकप्रधानतया स्वार्थाभिधानात्। 'पदार्थ एव वाक्यार्थः संसृष्टो ह्यभिधीयते" इत्युक्तम् ।

तथा "नाना शब्दादिभेदात्" इत्यधिकरणे "यद्यपि 'वेद' 'उपासीत' इत्यादयः शब्दाः प्रत्ययावृत्त्यभिधायिनः, प्रत्ययाश्च ब्रह्मैकविषयाः; तथापि तत्तत्प्रकरणोदितजगदेककारणत्वापहत-

---

अशब्दार्थत्वम्। तथाच तद्बोधः शाब्दबोधो मा भूदिति शंका। विवक्षास्थले। शब्देन लक्ष्यार्थज्ञापनेच्छास्थले

अथेदमभिधानमन्वितविषयमिति प्राभाकरपक्षम् अभिहितान्वय इति भाट्टपक्षञ्च गृहीत्वा वेदान्त्याशयं वक्तुमारभते एता इति। तत्रान्विताभिधानमाद्रियते। प्रथमतः स्मारकशक्तिबलात् प्रत्येकं पदात् अनन्वितार्थविषयकस्मृतिमात्रम्। ततस्तेषामर्थानामाकांक्षासत्तियोग्यतापरिशीलनम्। तद्व्यापारसहकारेण पदैरन्विताथबोधरूपानुभवजननम्। इदमन्विताभिधानं शब्दनिष्ठमिति शब्दः प्रमाणम्। भाट्टास्तु पदानां पदार्थमात्रे शक्तिरिति पदार्थाभिधानमेव पदकार्यम्। अभिहिताः पदार्थाः स्वगतसामर्थ्यवशात् अन्वयबोधं जनयन्ति; अतोऽन्वयविषयकबोधजनकत्वमर्थानामेवेत्याहुः। तत्रानुपपत्तिमाह अभिहिते त। एतन्मते शक्तित्रयकल्पना, पदानां पदार्थबोधकत्वं पदार्थानामन्वयार्थरूपवाक्यार्थबोधकत्वम्। पदमूलकपदार्थज्ञानं विना प्रत्यक्षादिना नानापदार्थज्ञाने सति तत्र मिथस्संबन्धग्रहणनिबन्धादर्शनात् पदसमुदायप्रयोगे तदवश्यम्भावात् पदार्थगतान्वयबोधनशक्तेराधायकतारूपा पदेषु काचित् शक्तिरेष्टव्येति तृतीया च। एवं वाक्यार्थस्य पदार्थाधीनत्वे अर्थश्शाब्द इति न वक्तुमुचितम्। शब्दः प्रमाणमितीदं विहायार्थः प्रमाणमिति वक्तव्यम्। अतो वेदप्रामाण्यस्यैव त्यागः स्यादिति। अत्र भाट्टशंकाः परिहरति नचेत्यादिवाक्यैः। 'संबन्धज्ञानं प्रति संबन्धिज्ञानं कारणम्। संबन्धिनि गृह्यमाणे संबन्धस्य विशेषणत्वे विशेषणभूतान्वयग्रहणानन्तरं संबन्धिज्ञानं स्यात्। अतोऽन्योन्याश्रयः'—इति न। स्मारकशक्त्या पदार्थमात्रस्मरणे जाते तदेव पदजातमर्थस्मृतिविशिष्टं आसत्तियोग्यतापरिशीलनरूपतर्कबलेन लब्धबोधनसामर्थ्यमन्वितार्थाभिधायकं भवतीति। ननु गामानयेत्यत्र गोपदमानयनान्वितगोव्यक्तिपरम्, आनयेति पदञ्च गवान्वितानयनपरमिति एकैकेनापि पदेनोभयबोधनात् पौनरुक्त्यं स्यादिति चेन्न—प्रत्येकस्मरणे सति सामान्यतः किञ्चिदन्वितबोधकत्वमेवैकैकस्यापीत्यवगमात्। अथापि विशेषरूपेण ज्ञाने पदकार्ये एकैकपदस्यापि वाक्यकार्यविशिष्टबोधहेतुत्वात् अनेकवाक्यत्वमेकैकवाक्यस्य स्यादिति चेन्न—खलेकपोतन्यायेन युगपदेव सर्वैर्मिलित्वा आख्यातादिप्राधान्येनैकमुख्यविशेष्यकबोधस्यैव जननात् अनेकबोधाभावात्। सर्वमिदं न्यायकुसुमाञ्जल्यादौ यथायथं द्रष्टव्यम्। पदार्थ इति। संसृष्टः=अन्वित एव पदार्थः वाक्यार्थ

पाद्मतत्त्वादिविशेषणविशिष्टब्रह्मविषयप्रत्यावृत्त्यवबोधिनः प्रत्यग्वृत्तरूपा विद्या भिन्दन्ति" इति। वेदार्थसंग्रहेऽपि—"शोधकेष्वपि 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आनन्दो ब्रह्म', इत्यादिषु सामानाधिकरण्यव्युत्पत्तिसिद्धनेकगुणविशिष्टैकार्थाभिधानमविरुद्धमिति सर्वविशिष्टं ब्रह्माभिधीयते" इति। अत्रैवापूर्वभङ्गे "समभिव्याहृतपदान्तरवाच्यान्वययोग्यमेवेतरपदप्रतिपाद्यमित्यन्विताभिधायिपदसंघातरूपस्य वाक्यस्यानन्यमनन्तरमेव प्रतीयते। तच्च व्यतिरेकाद्यनुरूपम्। अतः क्रियावत् अनन्यार्थताऽपि विरोधादेव परित्यक्ता" इति। एषां स्वारस्यमन्विताभिधाने। न चात्र पदाभ्युपगमेनोक्तमिति ज्ञापकमस्ति।

वरदविष्णुमिश्रैरपि "सत्यज्ञानादिपदानामखण्डैकरसार्थत्वे अन्विताभिधानानुपपत्तेः" इत्यादिषु बहुषु प्रदेशेषु अन्विताभिधानमेव मतमाश्रितं प्रतीते उक्तम्। उक्तं चागमप्रामाण्ये—

"अन्यान्विताभिधानेऽपि व्यवहारोपपत्तितः। अवश्याश्रयणीये वान्विताभिधायिता॥" इत्यादि, 'तस्मादाकाङ्क्षिताबन्धयोग्यार्थान्तरसंगते। स्वार्थे पदानां व्युत्पत्तिरास्थेया सर्ववादिभिः॥" इति। तत्त्वरत्नाकरेऽपि—

"अवश्याश्रयणीयेयमन्वितार्थाभिधायिता। इत्याहुर्मुनयावार्याः पदैरेवान्विताभिधाम्॥" इत्यारभ्य प्रश्नोत्तरयोः संग्रहम्—

"षड्भिः प्रतीतिप्रमुखाभिरुक्तिभिर्निर्धूतचोद्यं भिरिह न्विताभिधा।

सिद्धा पदैर्नाभिहितान्वयास्य तर्किरर्थ्यादित्याखिलं समञ्जसम्॥" इति॥

प्रज्ञापरित्राणन्यायसुदर्शनयोश्च बहुधा उक्तम्—"अन्विताभिधायित्वं शाब्दशक्तिनिबन्धनम्। व्युत्पत्त्यवगतं पुंधाराधतोऽस्य विपर्ययः" इत्यादिना॥

"नन्वभिहितान्वयद्योतकान्यपि वाक्यानि विद्यन्ते। वेदार्थसंग्रहे तावत्, "स्वं बोधकानां पदसंघातानां संसर्गविशेषबोधनेन वाक्यशब्दाभिधेयानामुत्पादकक्रमो यत्र पुरुषबुद्धिपूर्वकः" इत्याद्युक्तम्। तथा तत्रैव, "प्रकृतिप्रत्ययरूपेण पदस्यैवानेकावशेषगर्भत्वात्, अनेकपदार्थसंसर्गबोधकत्वाच्च वाक्यस्य" इति। भाष्येऽपि "शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यं, पदवाक्यरूपेण प्रवृत्तेः। प्रकृतिप्रत्ययोगेन हि पदत्वम्; प्रकृतिप्रत्ययार्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम्। पदभेदश्च अर्थभेदनिबन्धनः। पदसंघातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन" इत्याद्युक्तम्, एवं व्युत्पत्तिनिरूपणे वेदार्थसंग्रहे. "सिद्धवस्तुषु शब्दस्य बोधकत्वशक्तिग्रहणमत्यन्तसुकरम्" इत्युक्त्वा, "अपवरके दण्डः स्थितः" इति वाक्ये यादृच्छि-

---

इत्युच्यते इत्यर्थः। अन्विताभिधानपक्षे संप्रदायमपि प्रमाणयति तथेति। प्रत्ययावृत्त्यभिधायिनः अविच्छिन्नस्मृतिसंतानरूपज्ञानाभिधायकाः। क्रियावत् अनन्यार्थतेति। प्राभाकरा अपूर्वस्य परमोद्देश्यत्वमनन्यार्थत्वमाशेरते; तदयुक्तम्। यथा यागादिक्रियायाः स्वयफलरूपत्वाभावात् स्वर्गादिरूपफलार्थत्वादनन्यार्थत्वं त्यज्यते, तद्वत् अपूर्वस्यापि; स्वर्गकाम इत्यादिसमभिव्याहारात्च स्वर्गान्वितत्वेनैव तद्ग्रह इति। षड्भिरिति। तत्त्वरत्नाकरे दृष्टे सत्येव एता उपपत्तयो विशिष्य वक्तुं शक्याः। प्रज्ञापरित्राणन्यायसुदर्शनयोर्वरदनारायणभट्टारका एव कर्तार इत्येककर्तृकत्वात् एकमेव वाक्यं अन्वितार्थेत्यादिकं तत्रत्यत्वेनोक्तम्।

अथाभिहितान्वयवादिपक्षानुकूलवाक्यानि भाष्यादौ कैश्चिद्दर्शितान्याह नन्वित्यादिना

व्युत्पत्तिप्रकारमुपपाद्य, "तथा बालः 'तातोऽयम्, अम्बेयम्'" इत्यादिना वृद्धिपूर्वव्युत्पादनेन तत्तच्छब्दानां तत्तदर्थेष्वेव बोधकत्वशक्तिग्रहणमुपपाद्य, पुनरपि "अस्य शब्दस्यायमर्थ इति पूर्ववृद्धैः शिक्षितः" इत्यादि चोक्त्वा, "एवमेव सर्वपदानां स्वार्थाभिधायित्वं संघातविशेषाणां च यथावस्थितसंसर्गविशेषाभिधायित्वं च जानाति" इत्यप्युक्तम् ॥ भाष्येऽपि प्रथमसूत्रपूर्वपक्षनिराकरणे— 'एवं किल लौकिकाः शब्दार्थसंबन्धमवधारयन्ति— मातापितृभिः अम्बातातमातुलादीन्' इत्यादिना पदव्युत्पत्तिः पूर्वमुपपादिता । तत्र च "तेषु तेष्वर्थेषु तेषां शब्दानां प्रयोगो बोधकत्वनिबन्धनः इति निश्चिन्वन्ति" इत्याद्युक्तम् । पुनश्च "व्युत्पन्नेतरशब्देषु अस्य शब्दस्यायमर्थः इति पूर्ववृद्धैः शिक्षिताः" इत्यादि । यदि नामान्विताभिधानमभिमतम् ; तदा कथमत्र पदमात्रे व्युत्पत्तिः स्यात् । यदि च सा स्यात्, कथमन्वितमभिधेयम्, व्युत्पत्तिवैपरीत्यप्रसङ्गात् । तस्मान्नान्विताभिधानमेव सिद्धान्त इति निर्णेतुं शक्यम्" इति केचित् ॥

अन्ये तु "बोधकानाम्" इत्यादिवाक्यमन्विते संसर्गविशेषसिद्धेरुपपद्यते । पश्चात् पदवाक्यभेदाभिधानमपि तत्तद्विशेषवैशिष्ट्यप्रदर्शनमात्रार्थं परोपगमद्योतनार्थं वा । प्रत्येकपदव्युत्पत्त्यभिधानमप्यन्वितार्थबोधनोपयुक्तासाधारणाकारप्रकाशनमात्रम् । पदार्थसंसर्गाभिधायित्वेन हि पदानि वाक्यार्थं बोधयन्तीत्युक्तम् । स्मृतेश्च स्वानुभूतमूलत्वात् न शक्त्यन्तरकल्पः । व्याख्यातं च भाष्यादिकमन्वितपरतया विवरणे श्रीरामिश्रैः । तथा षडर्थसंक्षेपेऽपि— "शब्दश्च स्वतः शक्यमन्वितया बोधयति, असंभवेऽर्थान्तरम् इति हि व्युत्पत्तिः—" इत्याद्युक्तम् । अतोऽन्विताभिधानं सिद्धान्तः इति ।

एवमन्विताभिधानसामर्थ्यात् विशिष्टप्रतिपत्त्यन्यथानुपपत्तेश्च पदानामपि विशिष्टाभिधायित्वं सिद्धम् ॥ अत एव विशिष्टार्थाभिधायित्वेऽपि विशेषणमात्रे शक्तिः इत्यपि निरस्तम् ; अभिधायित्वातिरिक्तशक्त्यन्तराभावात् । अपर्यवसानवचनमपि विशिष्टबोधनशक्तस्य विशेषणमात्रे स्थातुमशक्तत्वात् । विशिष्टानुप्रविष्टं हि विशेषणं परोपश्लेषवेषमेवेति तादृगाकारो विशेष्य-

---

केचिदित्यन्तेन । उपात्तानां वचनानामन्विताभिधानपक्षेऽपि निर्वाहमाह अन्येत्विति अन्विताभिधानं सिद्धान्त इति । तार्किकास्तु पदानां पदार्थमात्रे शक्तिः । पदार्थस्य पदार्थान्तरेणान्वयस्तु पदस्य पदान्तरसमभिव्याहाराविशेषगम्य इत्याहुः । ईश्वरेच्छात्मकसंकेतरूपाभिधाया अनभ्युपगमात् बोधकत्वमेवाभिधानम् । एकपदमात्रस्यार्थस्मारकत्वमेव । बोधश्च वाक्यार्थविषयक एवेति अन्विताभिधानमेव युक्तमिति तस्यापेक्षा । इदमत्र एवमन्वितेत्यादिवाक्येन ज्ञाप्यते ।

मीमांसकैर्जातौ विशेषणमात्रे शक्तिरिष्टा ; तार्किकैर्व्यक्तिपर्यन्ते । प्रथमपक्षं निरस्यति अत एवेति । स्मारकशक्त्या जातिमात्रस्मरणमिति चेत् — विशिष्टविषयकबोधे व्यवहाराज्जाते सति विशेषणमात्रस्मारकत्वं कथं सुवचमिति भावः । अन्वितस्यैव बोधः । गामानयेत्यादौ गोत्वे आनयनस्य गोर्वा आनयनत्वे गोत्वानयनत्वयोर्मिथो वा नान्वयः संभवति । अतो विशिष्टमेव प्रथमप्रतीतम् । तद्भागश्च युक्तः, जातिमात्रे उक्ते तत्र बोधापर्यवसानात् व्यक्तिराक्षिप्यत इत्येतदपि निरस्यति अपर्यवसानेति । विशेषणग्रहणात् पश्चात् विशिष्टग्रहणमिति कल्पना व्यर्था, विशेषणमात्रे पर्यवसानं न युक्तम् ; पृथक् तन्मात्रानुभवाभावात् । अतो विशिष्टमेवाभिधेयमिति अपर्यवसानवादिनामाशयः । अत एवास्मन्मते

ग्रहणमन्तरेण दुर्ग्रहः। तावता च तदर्थे विशेष्यग्रहणमेवेत्यर्थं वचः। यथाप्रतीति व्यवस्थापनस्यैव युक्तत्वात् ॥ किं च—

गवादिशब्दाभिहितगोत्वाद्यर्थस्वभावतः। व्यक्तिधीर्यदि तद्वत् स्यान्निष्कर्षकादेरपि।
गवादिशब्दा जात्यादीन् परतन्त्रान् प्रचक्षते। तेनाश्रयप्रतीतिश्चेत् ततः सिद्धं समीहितम्।
परं कथमविज्ञाय पारतन्त्र्यस्य बोधनम्। विज्ञाते यदि शब्दस्य तत्र शक्तिर्न किं भवेत्।
परस्य परतन्त्रेण तथा बुद्धेन बोधनम्। तद्बुद्ध्या परतन्त्रस्य बोधनेऽन्योन्यसंश्रयः।
परधीनिरपेक्षं चेत् पारतन्त्र्यं प्रतीयते। न तत्र परबुद्धिः स्यान्निष्कृष्टत्वेनेति निश्चितम्।
पारतन्त्र्यं स्वरूपं चेत् तुल्यं निष्कर्षकेऽपि तत्। अधिकं धर्मिनैष्ठ्यादन्यन्नोपलभामहे।
पदान्तरपरामर्शनिरपेक्षप्रतीतिके। निरूढलक्षणावादः पर्यायाद् वृत्तिगोचरः।
व्यक्तेर्गौरित्यनिष्कर्षान्निष्कर्षे त्वाद्यपेक्षणात्। निष्कर्षकेऽप्यदृष्टेश्च न जात्या व्यक्तिलक्षणा।
आकृतावेव यः शक्तिं शब्दानामभिमन्यते। सत्तायामेव किं तेन सर्वेषां नाभ्युपेयते।
अतो गवादिशब्देभ्यो विशिष्टविषया मतिः। शब्दशक्तिप्रसूतेति बलादभ्युपगम्यताम् ॥

यत्तु "न लोकव्युत्पत्तिहानिः, तत्रैव शक्तेः" इति षडर्थसंक्षेपे श्रीरामामिश्रैरुक्तम्, तदपि तत्र शक्त्यभावप्रतिक्षेपपरम्। अनमात्रशक्तिस्तु वेदान्तश्रुतेर्भावः। आगामिता व्युत्पत्त्या श्रुतेस्तत्पूर्तिरित्यनन्तरमेवाभिधानात्। यच्चात्मसिद्धौ, "यथा गवादिपदशक्तिरेकबुद्धिसिद्धाऽपि सामान्यविशेषात्मके वस्तुनि सामान्यांशेन संबध्यते' इति। तदपि पराभ्युपगतोदाहरणमात्रार्थम्। यथेति परसंप्रतिपन्ननिदर्शनात्।

---

गवादिशब्दानां वेदान्तव्युत्पत्तिमद्बुद्ध्या गोत्वविशिष्टव्यक्तिविशिष्टजीवविशिष्टपरमात्मपर्यन्तार्थकत्वमेव। लोके तथाप्रयोगाभावस्तु तावदर्थस्य लौकिककार्येऽनुपयोगादेकदेशमात्रे आदरादिति। निष्कर्षकानिष्कर्षकविभागबलादप्येवमित्याह किञ्चेति। जातिगुणरूपरसशरीरादिशब्दाः तदाश्रयव्यक्तिपर्यन्तबोधे इष्टे न प्रयुज्यन्ते; किंतु गोशुक्लमधुरचैत्रादिशब्दा एव। यदि विशेषणस्य विशेष्यं विना पर्यवसानाभावात् तदाक्षेपः, स सर्वत्र स्यात्। अतः केचिद् विशिष्टवाचिनः, केचिद्विशेषणमात्रवाचिन इति व्यवस्था स्वीकार्येति भावः। परमिति। परतन्त्रशब्दार्थघटकस्य परस्य ज्ञानं हि आश्रयस्याप्यर्थत्वे सत्येवेति। परस्येति। धर्मज्ञाने सति परतन्त्रत्वज्ञाने परज्ञानमिति चेत्—परज्ञाने सत्येव परतन्त्रत्वज्ञानमित्यन्योन्याश्रयः स्यात्। अतो विशिष्टज्ञानमेव युगपदिति। अधिकमिति। किं नाम परतन्त्रत्वम्? धर्मिनिष्ठत्वमेव; न तु धर्मिनियमनाधीनव्यापारवत्त्वम्। जात्याद्याश्रयस्य चेतनस्य नियन्तृत्वाभावात्। जातौ शक्तिः, व्यक्तौ निरूढलक्षणेति चेत्—एष विभागः कुतः। वृत्तेरिति वक्ष्ये तथोच्यते। अन्यथा लक्षणेत्युच्येत व्यक्तेरिति। गौरिति प्रयोगे व्यक्तितो जातिमात्रस्य निष्कर्षो न भवति, किंतु गोत्वमित्युक्तावेव। यदि च गोशब्दस्य गोत्वजातिरर्थः, तदा गोत्वपदेन जातिगतधर्मान्तरमेव वाच्यं स्यात्। आकृतावेव=जातावेव। सत्तायामेवेति। तेन सत्तायामेव सर्वस्यापि पदस्य शक्तिरेष्टव्या। सत्ता हि महासामान्यम्, सर्वमपि वस्तु प्रतीतिकाले सदित्याकारेणैव प्रतीयते। नियतप्रतीतं विशेषणं हि शब्दार्थ इति। यस्त्विति। तत्रैवेति पदेन एवकारेण विशेष्यभूते परमात्मनि शक्त्य-

गुणवाचिन्यपि पदे जातिशब्दोक्तनीतितः। अपृथक्सिद्धवाचित्वान्न युक्ता गुणिलक्षणा।
स्वरलिङ्गविशेषार्था मतुब्लो(मन्त्रलो)पेन संस्क्रिया। विशिष्टवाचकत्वं तु तदायत्तं न मन्महे॥

अतो निष्कर्षकशब्दातिरिक्तानामपृथक्सिद्धविशेषणवाचिनां विशेष्यपर्यवसानव्युत्पत्तेः शरीरवाचिनां देवादिशब्दानामपि यथाप्रयोगं शरीरिपर्यवसानं सिद्धम्।

अत एव चाऽऽत्मपृथिव्यादिशब्दानामीश्वरपर्यन्तता। तेन "सर्वं खल्विदं ब्रह्म", "ज्योतींषि विष्णुः", "अयमात्मा ब्रह्म", "तत् त्वमसि" इत्यादिसामानाधिकरण्यं तत्तत्प्रकारकब्रह्मपरम्। नामरूपव्याकरणं च तदनुप्रवेशात्। अत एव च तस्य सर्वशब्दवाच्यत्वमपि श्रूयते; तदेव च व्यज्यते, "तदनुप्रविश्य सच्च त्यच्चाभवत्" इति। स्मर्यते च—"सर्वं समाप्नोषि ततोऽसि सर्वः" इति। सूत्रितं च—"चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" इति। उक्तं च वरदविष्णुमिश्रैः—"स्वर्गकामशब्देन काम्यमानस्वर्गः पुरुषोऽभिधीयते। न हीश्वरोऽवाप्तसमस्तकामः स्वर्गं कामयते, तस्यात्यल्पसुखत्वात्। अतो वाच्यैकदेशे जीवे लक्षणा, गङ्गाशब्दस्य तीर इव" इति। यद्वा स्वर्गकामादिशब्दानामपि जीवादिमात्रेऽपि मुख्यत्वमेव, प्रवृत्तिनिमित्तापरित्यागात्। अत एव हि भाक्तपदस्य भक्त्या(भंक्त्वा) व्यपदेशार्थत्वमपि भाष्यकारैरुक्तम्॥ विशिष्टविषयस्य शक्तिविषयत्वात् तत्त्यागे कथं न लक्षणेति चेत्, अपरित्यक्तप्रवृत्तिनिमित्तस्य व्युत्पत्त्यनुप्रविष्टमात्रबोधनं मुख्यता, तदभावकृत उपचार इति व्यवस्थानात्॥

ननु "तत्त्वमसि" इत्यत्र त्वमिति श्वेतकेतुमात्रनिर्देशे तदसीति सामानाधिकरण्यायोगः। श्वेतकेतुशरीरकेश्वरनिर्देशे तदाभिमुख्येनोपदेशायोगः। तदुद्देशेन त्वमर्थविधानं च

---

भावप्रतीतिरिति शंका। विशेषणस्यापि शक्तिविषयत्वं तत्र विवक्षितम्। **असमाप्तधीः**। विशेषणमात्रविषयको बोधः। **सामान्यांशेनेति**। **सामान्यं** जातिः, **विशेषो** व्यक्तिः। तत्र सामान्यांशे शक्तिसंबन्धकथनात् शक्तेरवाच्यत्वमात्मसिद्धीष्टमिति शंका। परमतोक्तिरिति समाधिः। **गुणेति**। शुक्लादिशब्देऽपि गवादिशब्दन्यायेन विशिष्टवाचित्वमेव। **मतुब्लोपेनेति** तालपाठः। 'गुणवचनान् मतुपो लुगिष्टः' इति मतुब्लोपं कृत्वा यत् संस्करणं तत् स्वरविशेषार्थं त्रिलिंगत्वार्थञ्च। अन्यथा गुणे शुक्लादयः पुंसीति पुल्लिंगमात्रं स्यात्। तर्हि शुक्लपदेनैव विशिष्टोक्तौ मतुपः कोऽर्थ इति चेत्—मतुबन्तकार्यकारित्वमस्तीति ज्ञापनमेव तद्विधानप्रयोजनम्। प्रत्ययादीनां वैयाकरणकल्पनामात्रत्वात्। न हि गुणवानित्यादादिव तच्छ्रवणमस्ति। अतः शुक्लवानिति प्रयोगवारणं वा। **सच्च त्यच्चाभवत्**= चेतनाचेतननिष्ठसत्त्वासत्त्वधर्मौ प्रति परम्परयाऽऽश्रयोऽभवत्। **अपरित्यक्तेति** साक्षात् परम्परया वा तदाश्रयरूपोऽर्थः मुख्यार्थः। अतश्चेतनाचेतनयोरपि मुख्यार्थत्वम्।

असिशब्दानन्वयादिना दूरनिरस्तम्। प्राप्तार्थतया निगमनरूपत्वेपि विशेषणविशेष्यभेदो निष्कर्षणीयः। एवम्, "अहं ब्रह्मास्मि" इत्यादिव्यपदेशोऽपि दुर्निर्वहः। "जीवेनात्मना" इत्यत्राप्यात्मशब्देन जीवात्माभिधानं भाष्यकारवचनविरुद्धम्, जीवेन मयेत्यादिव्यपदेशात्। परमात्माभिधाने तु तृतीयानुपपत्तिः, "व्याकरवाणि" इत्यभिहितत्वात्। क्रियाभेदेऽपि क्त्वादेरुत्तरक्रियैककर्तृत्वात् कर्त्रन्तरायुक्तिः, समानकर्तृकत्वविरोधात्। करणत्वविवक्षया कर्तरि तृतीयायां मुख्यत्वहानिः। अतः, चारेणानुप्रविश्य परबलं संकलयानीतिवत् जीवस्यैव प्रविशतिकर्तृत्वम्; परस्तु व्याकरणमात्रकर्ता। तावता तु शब्दानां न तत्पर्यन्तत्वसिद्धिः इति॥

अत्रोच्यते—संबुद्धिस्तावदत्र आत्मविद्योपदेशेन श्वेतकेतुमात्रपर्यवसितेति नासंबोध्यसंबोधनम्। वचनव्यक्तिश्च त्वं तदसीत्येव। तत्र कार्यकारणभावेन, शरीरात्मभावेन वा सामानाधिकरण्यनिर्वाहः। उभयत्र त्वंशब्दस्यापि तच्छब्दाभिहितद्रव्यपर्यवसानं सिद्धम्॥

धर्मान्तरविशेष्यस्य धर्मान्तरविशेष्यतः। रूसादभेदस्तादात्म्यं स्यादुपादानदेहिनोः॥

अतस्त्वच्छरीरकं ब्रह्मेति विवक्षायां सत्यां त्वं तदिति निर्देशमात्रमुपपन्नम्। मध्यमपुरुषश्च त्वंशब्दप्रयोगनिबन्धनः, "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः" इति विधानात्। अतः सोऽपि त्वंशब्दपर्यवसानविषयपर्यवसितः॥ यद्वा तत् त्वमसीत्येवा-

---

प्राप्तार्थतयेति 'नात्र किञ्चिदुद्दिश्य किञ्चिद्विधीयते; उपसंहारमात्रत्वात्' इति भाष्यं न विशेष्यविशेषणभाववारकम्, किं त्वज्ञातज्ञापननिषेधकमिति भावः। अभिहितत्वादिति। अनभिहिते हि कर्तरि तृतीया स्यादिति। कर्तरीति। कर्तरि करणत्वविवक्षेत्यन्वयः। जीवमादायानुप्रवेशकर्तृत्वम् व्याकरणकर्तुः ल्यपा अनभिधानात् कर्तरितृतीयेत्युक्तौ समानकर्तृकत्वाभावात् कथं ल्यबित्यत्र चारेणेति वाक्योपादानम्। तत्र राज्ञोऽनुप्रवेशकर्तृत्वाभावः सर्वसंमतः। तत्र कथं ल्यप्? राज्ञः प्रयोजककर्तृत्वात् प्रयोज्यकर्तृत्वानभिधानाच्च तृतीयेति चेत्—इहापि तथैवेति पूर्वपक्षी।

नन्वित्यादिशङ्कायां प्रथमतः त्वं तदसीति योजनामेवाऽऽदत्याऽऽह। अथ तत् त्वमसीति योजनामपि वक्ष्यति। कार्येति। तज्जलानिति तज्जत्वतल्लत्वयोरपि सामानाधिकरण्यप्रयोजकत्वकथनात् तदन्तरात्मत्वादिव तदुपादानकारणत्वादपि अभेदनिर्वाहः। धर्मान्तरेति। त्वमित्यस्य त्वदुपादानकारणमिति वा त्वद्देहीति वाऽर्थः। अनयोरेकतरस्य तच्छब्दार्थाभेदात् त्वं तदित्यर्थसिद्धिः। स्वापृथक्सिद्धकार्यं प्रति स्वस्याप्युपादानत्वस्येष्टत्वात् जीवं प्रति परस्योपादानत्वोपपत्तिः। यद्वा त्वमित्यस्य त्वदुपादानेत्यर्थकत्वे लक्षणाप्रसंगात् तज्जलानित्यनेन लोके विशिष्टं प्रति विशिष्टस्योपादानत्वादेवस्य सद्भावात् चेतनाचेतनयोर्विशिष्टकार्यान्तर्गतत्वतदन्तर्यामिकत्वयोः सद्भावात् सर्वविशिष्टस्य ब्रह्मणश्चैक्यमिति ज्ञाप्यते। अतः तदन्तरात्मा

न्वयोऽस्तु। न चोद्देश्यानुगुणा तिङ्विभक्तिरिति नियमः, उपादेयानुगुणलिङ्गवचनादिनिर्देशवत् अत्रापि विरोधाभावात्। प्रयुञ्जते च पतञ्जलिप्रभृतय उपादेयानुगुणामपि तिङ्विभक्तिम्— "स पुनरावृत्तः सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवतः" इत्यादिषु। एतेन 'अहं ब्रह्मास्मि' इत्यादिकमपि निर्व्यूढम्। "जीवेनात्मना" इत्यत्राप्यनेन न्यायेन स्वशब्दपर्यायेणाऽऽत्मशब्देन जीवशब्दस्य सामानाधिकरण्यं तावत् सिद्धम्। तृतीयानुपपत्तिस्तु स्वरूपतादात्म्यपक्षे पृथक्त्वपक्षे च समाना। अर्थांशभेदादिना विभज्य करणत्वादिविवक्षया कथंचिन्निर्वाहः, तथा (तदा?) विशिष्टाकारादिभेदविवक्षया विभज्यात्रापि निर्वाहमनुमन्येथाः।

श्लो—अतः श्रुत्यादिवाक्येषु विरुद्धार्थानुबन्धिनः। सामानाधिकरण्यस्य न स्वरूपैक्यनिष्ठता॥
कार्यत्वादपृथक्सिद्धेरात्रेशादनुकारतः। अस्ति दृष्ट्युपरागा(कारा)देः सामानाधिकरण्यधीः॥

न च त्वदृष्टः पुरुषः स्थाणुरितिवत्, "पुरुष एवेदं सर्वम्" "तत्त्वमसि" इत्यादौ बाधार्थं सामानाधिकरण्यमिति वाच्यम्, मुख्यवृत्तिसम्भवे तदयोगात्, प्रपञ्चसत्यत्वादेश्च अबाधितप्रत्यक्षादिबलसिद्धत्वात्। चिदंशसामानाधिकरण्यं तु न बाधसहम्, त्वयाऽपि तत्स-

---

स इत्येवार्थः। तत्र त्वंशब्दोक्ते अभिमुखचेतनान्तर्यामीत्यर्थे विशेषणांशे संबोध्यत्वान्वयः। अन्तरात्मनः अभिमुखचेतनत्वाभावेऽपि असीति शब्दप्रयोगः त्वंशब्दबलात्। त्वंशब्देनाभिमुखचेतनातिरिक्तस्यार्थत्वविवक्षायां मध्यमपुरुषो न भवतीति न हि व्याकरणे उक्तम्। अर्थो यो वा को वा भवतु, युष्मच्छब्दे उपपदे मध्यमपुरुष इत्येव। अतो न दोष इति प्रथमपक्षरीतिः।

**उपादेये**ति, विधेयेति समानार्थम्। जीवेनात्मनेत्यत्र जीवमात्रस्य विवक्षा भाष्यविरुद्धेति भाष्यानुरोधेन तृतीयां निर्वहति **जीवेने**ति। आत्मनेत्यस्य **मये**त्यर्थो भाषितः। अतो न स इह नियन्तृत्वार्थकः; किंतु स्ववाची। जीवपदं जीवविशिष्टवाचीति सामानाधिकरण्योपपत्तिः एवञ्च स्वस्य कर्तुरभिहितत्वात् कथं तृतीयेति चेत्—अद्वैतमते जीवब्रह्मणोरैक्यत्वात् कर्तुरभिहितत्वात् कथं तृतीया। ब्रह्मत्वाकारेण कर्तृत्वेऽपि जीवत्वाकारेण तस्यैव करणत्वविवक्षाया वा जीवत्वेनानुप्रवेशकर्तुरनभिधानात् कर्तृत्वएव वा तृतीयेति चेत्—अस्मन्मते जीवविशिष्टत्वाकारेण तस्य करणत्वं वा अनभिहितकर्तृत्वं वेति तुल्यमित्यर्थः। **कार्यत्वादि**ति त्रयम्—अन्नं वै प्राणाः, नीलो घटः, राजादिपरकायप्रवेशे राजा योगीत्येवम्। **अनुकारात्** साम्यात् राजा पुरोहित इति; **दृष्ट्या** मनो ब्रह्मेति; **उपरागात्** रक्तः पट इति। **परम्परासंबन्धात्** गन्धवज्जलमिति।

अद्वैतिपक्षं निरस्यति **नचे**त्यादिना। सर्वं खल्विदं ब्रह्मेत्यत्र सर्वपदेन जडजीवोभयग्रहणात् प्रतिबिम्बजीववादे बाधार्थसामानाधिकरण्यनिर्वाहेऽपि अवच्छिन्नचैतन्यं जीव इति मुख्यपक्षे चैतन्यांशस्याबाध्यत्वात् जडांशे जीवांशे चैकरूपनिर्वाहायोगाद्वैरूप्यमित्याह **चिदंशे**ति। किञ्च विशिष्टस्वरूपैक्यं वा

त्यत्वाभ्युपगमात्। स्वरूपैक्यविधाने च विरुद्धधर्मप्रतिरोधात्, तत्परित्यागे च पदयोरनतिरिक्तार्थतया पर्यायव(ष)दसामानाधिकरण्यप्रसङ्गात्। द्वाराभावेन मुख्यवृत्तिबाधापत्तेः। गत्यन्तरे च संभवति तदयोगात्। स्वरूपमात्रनिर्देशे च पदान्तरवैयर्थ्यात्, स्वरूपभेदस्य च बहुप्रमाणसिद्धत्वात् ॥

"सत्यं ज्ञानम्—" इत्यादिलक्षणवाक्यमपि सत्यत्वादिविशिष्टैकविषयम्, तथैव सामानाधिकरण्यव्युत्पत्तेः। न चात्र विशेषणभेदाद्विशेष्यभेदप्रसङ्गः, विरुद्धविशेषणाभावात्; न हि घटपटादिष्विव विरोधः। यथा च प्रत्यक्षे नीलत्वोत्पलत्वादेरविरोधो दर्शनबलात्, तथाऽत्रापि। न च सत्यत्वज्ञानत्वादेर्वैयधिकरण्यनियमो दृष्टः, येन विरोधः स्यात्। विशेष्यैक्यपरे तु सामानाधिकरण्ये विशेषणानां विशेषणविशेष्ययोश्च मिथो भेदो गुण एव। न च विशेष्यैक्यवत् विशेषणविशेष्यैक्यप्रसक्तिः, विशेषणानामैक्यप्रसक्तिर्वा; लक्षणविरोधादिदोषात्, अतथाव्युत्पत्तेश्च। नापि विशिष्टे विशिष्टान्तरविधानाद्विशेषणानां मिथः समवायादिदोषः, युगपदनेकविशिष्टैकाभिधानात्। अनूद्य विधानेऽपि यथाव्युत्पत्ति धर्मिप्रधानत्वाच्च ॥

न च विशेषणं सर्वं विशेषणान्तरासहम्, विरोधिमात्रविरोधित्वात्। अन्यथा प्रत्यक्षविरोधात्। साध्यसाधकधर्मादिविशिष्टविषयानुमानाद्यनुदयप्रसङ्गात्, एवंत्वादिदं विशिष्टबोधक न

---

शुद्धस्वरूपैक्यं वा विवक्षितम्। आद्ये हेयगुणार्हत्वतदनर्हत्वरूपविरुद्धधर्मविशिष्टस्वरूपैक्यं दुर्वचम्। अन्त्ये अर्थस्याविशिष्टत्वात् घटो घट इतिवत् सामानाधिकरण्यासंभवः। प्रवृत्तिनिमित्तभेदस्यैव शक्तिभेदप्रयोजकत्वम्। अत एव घटशब्द—द्रव्यशब्दयोः शक्तिभेदः। स्वरूपमात्रार्थकत्वे शक्तिप्रयोजकाकारत्यागात् मुख्यवृत्तित्याग एवेत्याह द्वारेति। अस्मत्पक्षे जीवमात्रार्थकत्वं विना ब्रह्मपर्यन्तग्रहणे न प्रवृत्तिनिमित्तत्यागः; न च शक्यार्थत्यागः; नापि शक्यार्थातिरिक्तस्वीकार इति वैषम्यम्। नन्वेकपदस्यार्थे अपरपदस्यार्थभूतविशिष्टवस्त्वैक्योक्तौ विशेषणैक्यमपि तत्रैकपदार्थे आवश्यकम्। तथा स एकपदार्थोऽपि यदि विशिष्टः, तत्र विशिष्टैक्ये विशेषणयोरैक्याभावे कथं विशिष्टयोरैक्यं तत्र स्यादितीदं निरस्यति नचेति। लक्षणविरोधः भिन्नप्रवृत्तिनिमित्तानामिति सामानाधिकरण्यलक्षणवचनविरोधः। एवं नैल्यविशिष्टैक्यं घटत्वविशिष्टे उच्यते चेत्—घटत्वे नैल्यविशिष्टसमवाय उक्तो भवति। तदा च विशिष्टसमवाये नैल्यसमवायोऽपि घटत्वे प्राप्नोति। एवं नैल्ये घटत्वविशिष्टसमवायसत्त्वात् घटत्वसमवायोऽपि स्यादिति; इदमपि निरस्यति नापीति। युगपदिति। नैल्यघटत्वोभयविशिष्टधर्मिग्रहणमेव वाक्यजन्यम्; न त्वेकविशिष्टान्तरे ज्ञाते पश्चादन्यविशिष्टैक्यग्रह इति भावः। ननु उद्देश्यविधेयभावस्थले पर्वतो वह्निमानित्यादौ पर्वतत्वविशिष्टं पूर्वं गृहीत्वा ततः परमेव वह्निमदैक्यं विधेयम्। तत्र कथं युगपद्ग्रहणमित्यत्राह अनूद्येति। पर्वतो वह्निमानित्यनुमितिरूपैकज्ञाने ग्रहणपौर्वापर्यमयुक्तम्। तत्र वह्नेरेव विधेयत्वम्। पर्वत इव पर्वतत्वेऽपि तस्य विधेयत्वं न हि कस्यापि संमतम्। अतस्तत्रैव धर्मिण एव वह्निं प्रति प्राधान्यमिति। ननु युगपदुभयस्य धर्मिणि भानमपि न भवति, धर्मद्वयस्यैकनिष्ठत्वाभावादितीदं निरस्यति न च विशेषणमिति। विरोधिधर्ममात्र-

भवतीत्यादि व्यवहारस्यापि विलोपः स्यात्। न च शब्देन प्रतिपादने तथा; अविशेषात्, प्रत्यक्षादिवत् शब्देनापि यथावस्तु बोधनीयत्वात्। विशेषणमात्रपरत्वं तु नाभ्युपगतमेव, येन विशिष्टैकार्थासिद्धिः स्यात्। यस्य तु विशेष्यमात्रपरत्वं, तस्य पर्यायतुल्यत्वात् पदान्तरवैयर्थ्य लक्षणभङ्गलक्षणादिदोषः, प्रवृत्तिनिमित्तानां विशेषणानां त्यागात्, विशेष्यमात्रस्य च द्वाररहितस्यालक्ष्यत्वात्॥

इतरव्यावृत्तीनां तूपलक्षणत्वे स्वरूपत्वे च पदान्तरवैयर्थ्यादिदोषः स एव॥ एवं तासां विशेषणत्वे पक्षान्तरवत् विशिष्टमेदादिदोषस्त्वदुक्त आपतेत्, न चेत्, नान्यत्रापि। त्यक्तप्रवृत्तिनिमित्तस्य तद्विराधिव्यावृत्त्याभिलापस्तु आलोकमपहाय तिमिरनिराकरणवाञ्छा॥ विप्रतिपन्नं वाक्यमखण्डार्थम्, समानाधिकरणवाक्यत्वात्, सोऽयं देवदत्तः इति वाक्यवत्, यद्वा लक्षणवाक्यत्वात् प्रकृष्टप्रकाशश्चन्द्रः इत्यादिवत् इति चेन्न; दृष्टान्तासिद्धेः, तत्तेदन्ताविशिष्टस्यैव देवदत्तस्य सोऽयमिति प्रतीतेः॥ युगपत् तयाऽभिधात इति चेन्न; यौगपद्यस्यानभिधानात्, अनाक्षेपाच्च। युगपत् प्रतिपत्तिस्तु न दोषः, अन्यथा प्रत्यभिज्ञाभङ्गे क्षणभङ्गनैरात्म्यगुणोपलापादिवादा विजयेरन्॥

तथाऽप्यतीतत्ववर्तमानत्वे कथमेकस्येति चेत्, स्वप्रध्वंसकाले हि स्वयमतीतः स्यात्, न चासौ प्रध्वस्तः, वर्तमानत्वोपलम्भात्; अतीतावधिविशेषसंबन्धितया हि तत्त्वम्, न त्वतीततया॥ कथमेकं पूर्वमपरं चेति चेन्न, प्रतिसंबन्धिभेदेनोभयोपपत्तेः, अन्यथा क्षणस्यापि पूर्वापर-

---

एव विरोधो दृष्टः ननु सर्वथाऽपीति। यथावस्तु वस्तुतत्त्वानतिक्रमेण। सत्यं ज्ञानम्, तत् त्वमित्यादिप्रत्यक्षस्य, तद्विषयकशाब्दबोधस्य च किञ्चिद्वैलक्षण्यमस्तीत्याह विशेषणमात्रेति। प्रत्यक्षे धर्मिविशेष्यकधर्मप्रकारकत्वमेव लाघवात्। बोधे तु नामपदजन्ये अभेदेनान्वयस्य व्युत्पन्नत्वात् पदद्वयमपि विशिष्टवाचि। एकस्य विशेषणमात्रपरत्वे भेदसंबन्धेनान्वयो वक्तव्यः। स न व्युत्पन्नः। अद्वैत्युक्तं विशेष्यस्वरूपमात्रार्थकत्वं तु न भवतीत्याह यस्यत्विति। यस्येति यस्य मते इत्यर्थः। अलक्ष्यत्वात्। लक्ष्यतावच्छेदकधर्मं विना धर्मिमात्रज्ञानस्य साधकबाधकमानयोरेव नास्तीति भावः।

केचित् अद्वैतिनः सत्यं ज्ञानमित्यादीनां अनृतव्यावृत्तिजडव्यावृत्तिरूपधर्मवदर्थकत्वं वदन्ति! तत्राह इतरेति। व्यावृत्तीनां विशेषणत्वं वा उपलक्षणत्वं वा धर्मिस्वरूपत्वं वा। विशेषणत्वे तत्तद्धर्मविशिष्टयोर्मिथोऽन्वये सत्यत्वादिविशिष्टार्थकत्वे तदुल्लिखितोदोषस्तन्मते तदवस्थः। तदुपलक्षितव्यक्तिमात्रार्थकत्वे व्यक्तेरेकेनैवाभिधानादन्यपदवैयर्थ्यम्। व्यावृत्तेर्ब्रह्मणश्चैकत्वे ब्रह्माभिधानमेवालमिति व्यर्थमेव व्यावृत्तिरूपार्थाश्रयणम्। विशेषणत्वमेव स्वीकृत्यास्मदुक्तरीत्या अन्योन्यसमवायादिवारणेऽस्मद्रीत्या सत्यत्वादिकमेव वाच्यतावच्छेदकमस्तु; किं लक्षणयेत्याह नचेदिति। सत्यत्वादिर्धर्मो नेष्यत इत्यत्राह त्यक्तेति। प्रथमदृष्टान्तं निरस्यति तत्तेदन्तेति। द्वितीयं निरसिष्यति द्वितीयोऽपीत्यादिना। अन्यथेति। सोऽयं देवदत्त इत्यस्य विरोधाद्विशेषणहानेन व्यक्तिमात्रार्थकत्वे सोऽयं घट इत्यादिप्रत्यभिज्ञासामान्यं तन्मात्रविषयकं वक्तव्यम्। एकस्मिन्ननेकदेशकालसंबन्धभानं तदा नेति वस्तुस्थिरत्वासिद्ध्या कथं ब्रह्मनित्यत्वं सिद्ध्येत्। बौद्धनिरासः कथम्। बुद्धिसंतानातिरिक्तात्मासिद्धिः स्यात्। अस्थिरत्वात् चक्षुषा गृहीतं त्वचा स्पृशत इत्यस्य दुर्वचतया रूपस्पर्शसमुदायातिरिक्तद्रव्यसिद्धिरपि न स्यादित्यर्थः। क्षणिकवादिनः

मध्यवर्तिनः क्षोदप्रसङ्गात् ; न हि, तस्य पूर्वस्मादपि पूर्वत्वमेव, उत्तरस्मादप्युत्तरत्वमेव वा । शून्यता क्षणोऽपीति चेन्न, सर्वापह्नवप्रसङ्गात्, इति तिष्ठत्वेतत् ।

द्वितीयोपि दृष्टान्तो विशिष्टपर एव, अन्यथा व्यावृत्तरतीत्यनुदयप्रसङ्गात्, प्रकृष्टत्वादिविशेषणवैयर्थ्याच्च । एवं श्रुति(प्रतीतिश्रुत्यन्तरादि)बाधोऽप्यनुमानयोर्वैकल्प्यः । पर्यायतुल्यत्वादिप्रसङ्गलक्षणप्रतिकूलतर्कश्च । तथा विप्रतिपन्नं वाक्यं विशिष्टपरम्, आकाङ्क्षायुक्तवाक्यत्वात्, व्यधिकरणवाक्यवदिति बाधकमनुमानमपि । प्रतिपत्त्यनुरोधात् दृष्टान्तसिद्धेश्चास्य बलीयस्त्वम् । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति शाब्दैरेवोक्तम् । तत्र भिन्नप्रवृत्तिनिमित्तानामिति पर्यायव्यावृत्तिः । एकस्मिन्निति व्यधिकरणानां घटः पट इत्यादीनामन्वितानां च व्यवच्छेदार्थम् । शब्दानाम् अर्थे इति च व्यक्त्यर्थमेव, अर्थे इति विशेष्यस्य प्रधानतया वाच्यत्वसूचनार्थं वा । तेन व्यधिकरणवाक्येष्वेकप्रधानार्थे वृत्तिसंभवेऽपि तस्य विशेष्यत्वाभावात् व्यवच्छेद्यता । विशेष्यबोधनव्यापारो वृत्तेः प्रवृत्तिरिति च सामान्यतो विशेषतश्चोच्यते । प्रकृष्टा ह वृत्तेः प्रवृत्तिः । प्रकर्षश्चात्र विशेषणविषयतया । तत्र यदुपाधिका विशेष्ये शब्दवृत्तिः, तत् प्रवृत्तिनिमित्तम् । भिन्नविशेषणद्वारेणैकविशेष्याभिधानं सामानाधिकरण्यमित्युक्तं भवति ॥

ननु अपौरुषेयं सर्वमन्वितार्थमिति प्रतिपादितम् ; तन्नोपपद्यते, गुणवद्वक्तृप्रणीतस्यैव वाक्यस्य तथात्वदर्शनादिति चेन्न - स्वतः प्रामाण्यात्, स्वतस्तो हि सर्वं ज्ञानमबाधितव्यवहारजनकं दृश्यते । मेधाग्रहादिविशेषोपाधिकं हि क्वचिद् बाध्यव्यवहारहेतुत्वम् । ततः स्वाभाविकमपि प्रामाण्यं प्रतिबन्धकेन दोषेण क्वचिद्व्यवहारापि(......)तम् ; यथाग्नेरौष्ण्यम् । तत्रापि तदंशापेक्षया प्रामाण्यमेव । गुणास्तु संभावितदोषस्थले दोषनिराकरणोपयिकाः, प्रामाण्यस्य तैर्व्याप्त्यभावात्, नित्यसर्वज्ञज्ञानादीनां प्रमाणभूते तज्ज्ञाने व्यभिचारात् । अप्रामाण्यस्य तु दोषाधीनत्वमव्यभिचरितान्वयव्यतिरेकसिद्धम् ॥ अवस्तुनोऽप्रामाण्यस्य कथं हेतुसाध्यत्वमिति चेन्न, संशयत्वविपर्ययत्वादिरूपस्य तस्यावस्तुत्वाभावात् । भावान्तरातिरिक्तस्य चाभावस्यास्माभिरनभ्युपगमात् । अभ्यु-

---

शंकाः परिहरति **तथापीत्यादिना** । **क्षोदप्रसंगा**दिति । एक एव क्षणः पूर्वापेक्षयोत्तरः, उत्तरापेक्षया पूर्वः, उभयापेक्षया मध्यमश्चोच्यते । कथमेकत्व पूर्वत्वोत्तरत्वादीति स एक एवानेकत्वेन वक्तव्यः स्यादित्यर्थः । सर्वापह्नवेति । तथासत्यनवस्थादोषात् शून्यवाद एवेति । न च सोऽपि ; अभावस्य भावरूपतया शून्यत्वायोगात् । न चैतदद्वैतिसंमतमिति । **अस्य** बाधकानुमानस्य । **व्यधिकरणाना**मिति । असमानविभक्तिकपदानामित्यर्थः । **व्यक्त्यर्थमेव**=स्पष्टीकरणार्थमेव । **सामान्यतः** बोधनव्यापारत्वेन, **विशेषतः** विशेष्यबोधनव्यापारत्वेन च क्रमेण ।

ज्ञानप्रामाण्यं कारणगुणाधीनम् । शाब्दबोधप्रामाण्ये एव वक्तृगुणाधीनतेति वदतः वेदस्येश्वरप्रणीतत्ववादिनस्तार्किकस्य दूषणमारभते **नन्विति** । **स्वतः प्रामाण्यात्** प्रामाण्यस्य स्वाभाविकत्वात् । **व्यवहारः** हानोपादानशब्दप्रयोगरूपः । अन्यथाख्यात्यस्वीकारात् व्यवहारबाध एवाप्रमाव्यवहारनिमित्तम् । **स्वस्मिन् तदंशापेक्षये**ति । सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति प्रसिद्धम् । स्वयंप्रकाशत्वात् अभ्रान्तम् । **गुणाः** प्रत्यक्षे संनिकर्षसत्ता, अनुमाने हेतोर्व्याप्तिपक्षधर्मते, शाब्दे आप्तगतयथार्थज्ञानादिः । व्याप्त्यभावमेवाह नित्येति । ईश्वरज्ञाने प्रामाण्यं निर्विवादम् । तच्च नित्यम् । तत् कथं

पगमेपि प्रध्वंसस्य मुद्गरादिसाध्यत्वदृष्टेः । तद्वत्(?) ॥

प्रमापि अस्मदीश्वरबोधसाधारणा(णकारणा ?)तिरिक्तसहितात् जायते, कार्यत्वे सति तद्विशेषत्वात्, अप्रमावत्; प्रामाण्य परतो ज्ञायते, अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत्, इति चेत्, तत्र—

प्रथमे कृत्स्नप्रमापक्षीकारे हेतोः स्वपते भागासिद्धिः, ईश्वरप्रमाया नित्यत्वाभ्युपगमात् । अनीश्वरप्रमापक्षीकारे यावदीश्वरसिद्धि व्यर्थं विशेषणम् ॥ ईश्वरानुमानसमनन्तरं प्रयोगः इति चेन्न, तस्य शास्त्रयोन्यधिकरणन्यायेनानुमातुमशक्यत्वात् ॥ तर्हि निर्विशेषणं प्रयोक्ष्यामहे इति चेन्न, स्वाभिमतेश्वरप्रमयाऽनैकान्त्यात् ॥ अनभ्युपगतेश्वरैः सौगतादिभिरेवं प्रयोगे कः परिहारः इति चेन्न; श्रुतिसिद्धनित्यप्रमासमर्थनेन बाधस्यानैकान्तिकत्वस्य वा वक्तुं शक्यत्वात् ॥

---

गुणायत्तं भवेत् । **अवस्तुनः** अभावस्य । स हेतुनिरपेक्ष इति शून्यवादी । तद्वदिति अधिकः पाठः । ध्वंसवत् अयमपि कश्चित् साध्यरूप एवाभावो भवत्वित्यर्थो वा । **तद्वदि**त्यस्य उपर्यन्वयो न भवति ; तत्र अप्रमावदिति पदान्तरसत्त्वात् । नित्यस्याप्यभावस्य जन्यत्वाभावेऽपि प्रयोज्यत्वं तार्किकेष्टम् कारणाभावात् कार्याभाव इत्यत्र । तथा दोषः अप्रामाण्यप्रयोजकः स्यादिति भावः । न्यायकुसुमाञ्जलौ (स्त.२.) प्रमात्वस्य परत उत्पत्तौ ज्ञप्तौ च क्रमेणानुमाने उक्ते ; ते उद्धृत्य निरस्यति **प्रमापी**त्यादिना । प्रमा ज्ञानसामान्यकारणातिरिक्तकारणविशेषाधीनेति साध्यते । स कारणविशेषः अप्रमायां दोषः, प्रमायां गुण इति भावः । **कार्यत्वे सती**ति विशेषणमीश्वरज्ञाने व्यभिचारवारणार्थम् । **प्रामाण्यम्** प्रमात्वम् । **परतः** अनुमानेन । **अनभ्यासदशा** तज्जातीयज्ञानोत्पत्त्यधीनप्रवृत्तिसाफल्यानुभवदशा । तदैव प्रमात्वसंशयः ; यत्र दूरात् तोयदर्शनम्, तत्र तोयज्ञाने प्रमात्वसंशयः तत्र प्राक् तोयज्ञानाधीनस्नानादिकार्यसिद्ध्यनुभववतो हि न भवति । सांशयिकत्वरूपहेत्वसिद्धिशङ्कापरिहारायैतदुक्तिः । **सांशयिकत्वं** नाम, प्रामाण्यमस्यास्ति न वेति संशयविषयत्वम् । न तु परतो ज्ञायते स्वतो ज्ञायते वेति संदेहविषयत्वम् । प्रामाण्यं यदि स्वतो ज्ञायेत ; अस्तित्वावगत्या न संशयावसर इति ।

**प्रथमे** इत्यादिना प्रमात्वोत्पत्तिसाधकस्य कार्यत्वघटितहेतोर्निरासप्रपञ्चः, **यच्च प्रामाण्यं परतो ज्ञायते** इत्येतद्वाक्यारम्भं यावत् । तद्वाक्यप्रभृति द्वितीयस्य ज्ञप्त्यनुमानस्य निरासः । **भागासिद्धिः** पक्षैकदेशे ईश्वरप्रमायां कार्यत्वघटितहेत्वभावः । **यावदीश्वरे**ति । इदमनुमानमीश्वरसिद्धौ विवदमानं प्रति दुर्वचम् । तेन कार्यत्वदलवैयर्थ्योद्भावनात् । ईश्वराभ्युपगन्तृप्रतिवाद्युद्देशेन प्रयोग इति चेत्— किमनुमानत ईश्वरमुपगच्छन्तं प्रति, आगमतो वा । नाद्यः, अस्मान् प्रत्यनुपयोगात् । अस्माभिस्तदनुमाननिरासात् । कार्यत्वे सतीति विशेषणत्यागे युष्मन्मतेऽनैकान्तिकता । हेतोरुभयपक्षनिर्दोषताया अपेक्षितत्वात् ।। एवं नैयायिकनिरासेऽपि बौद्धोऽन्यो वा निरीश्वरः वेदान्तिनं प्रति कार्यत्वाघटितहेतुना अतिरिक्तहेत्वधीनत्वं साधयेच्चेत्, कथं परिहार इति शंकते **अनभ्युपगते**ति । श्रुतिप्रामाण्यं समर्थ्य ईश्वरमपि नित्यज्ञानं प्रसाध्य प्रमासामान्यपक्षीकारे तत्र बाधम्, ईश्वरप्रमातिरिक्तमात्रपक्षीकारे अपक्षे ईश्वरज्ञाने व्यभि-

श्रुतिसिद्धनित्यप्रमात्वव्यवच्छेदेन कार्यत्वविशेषणं सफलं स्यादिति चेत्, तर्हि कुत्र तत्सिद्धिः श्रुतिप्रामाण्यनिर्णयमन्तरेण कथं स्यात्?।

तत्प्रामाण्यं च नित्यनिर्दोषतयाऽस्त्विति चेत्, कथं तर्हि परतः प्रामाण्योत्पत्तिः? वक्तृगुणाधीनं वाक्यानां प्रामाण्यमिति हि वः सिद्धान्तः॥ निर्दोषतैव गुणः, इति तदधीनतया तत्र परतः प्रामाण्यमिति चेन्न, प्रतिबन्धकाभावस्य परैः कारणत्वानभ्युपगमात्। अभ्युपगमे च तावन्मात्राधीनत्वेऽपि वेदापौरुषेयत्वनित्यत्वादेरविरोधात्; वेदापौरुषेयत्वादिसिद्ध्यर्थं हि वः परतः प्रामाण्यसमर्थनारम्भः। तदपौरुषेयत्वादिसिद्ध्यर्थमेव चास्माभिः स्वतः प्रामाण्यं प्रतिपाद्यते।

अथोक्ततया वेदप्रामाण्यादीश्वरसिद्धौ तत्प्रमाव्यवच्छेदाय विशेषणमितीष्यते—तदपि न; परतः प्रामाण्ये निर्णीते वेदस्याप्तमूलप्रामाण्यसिद्धिः, तत्सिद्धौ चेश्वरसिद्धिः तत्प्रमाव्यवच्छेदाय विशेषणम्, सविशेषणश्चासौ हेतुः परतः प्रामाण्यं साधयेत इति चक्रकाश्रयप्रसङ्गात्। ईश्वरानुमानान्यथासिद्धिपरिहाराय परतः प्रामाण्यं न्यायकुसुमाञ्जलौ समर्थ्यते। तत्रैव च कार्यत्वविशेषणं प्रयुज्यते। न चासिद्धव्यवच्छेदाय विशेषणं युक्तम्; सिद्धत्वे तु परतः प्रामाण्यसमर्थनस्य न तदर्थतेति दुरुत्तरता।

तथापि शब्दे प्रामाण्यं वक्तृगुणाधीनमिति चेन्न, विशेषकाभावात्, दोषसंभावनास्थले च

---

चारस्य वेदान्ती ब्रूयादित्यर्थः। नित्यनिर्दोषतयेति। आप्तोक्ततया प्रामाण्यमिति हेत्वन्तरमप्युपरि वक्ष्यति निर्दोषत्वं नित्यत्वाभावे दुर्वचमिति नित्यत्वमपि वक्तव्यम्, तदा कथं परतस्त्वमिति भावः। ननु वेदस्य नित्यत्वेऽपि वेदविषयकस्य ज्ञानस्य वेदजन्यार्थबोधरूपज्ञानस्य च हेतुमत्त्वेन साध्यसाधने को दोष इति शंकायां विवक्षितमाह कथमिति। ज्ञानप्रमात्ववत् वेदस्य शाब्दबोधरूपप्रमाकरणत्वरूपप्रामाण्यं भवदिष्टम्। तस्य प्रामाण्यस्य च कारणं वक्तृगुण इति भवन्मतम्। तत् वेदनित्यत्वपक्षे न सध्यति अतो नित्यत्वोक्तिरपसिद्धान्त इति भावः। निर्दोषत्वेति। दुष्टकारणजन्यत्वं प्रमात्वोत्पादकम्। प्रमाकरणत्वञ्च दोषाभावात्। वक्त्रभावात् वक्तृदोषाभावो वेदान्तीष्टः। नैयायिकस्य तु वक्तुः सतो दोषाभाव इति सर्वथा वक्तृदोषाभावः सिद्ध इति भावः। कारणत्वानभ्युपगमादिति। अभावस्य तुच्छत्वादकारणत्वमित्येकदेशिमतम्। वेदान्तिमते च शक्तितदभावाभ्यामेव 'कार्यभावभावाविति प्रतिबन्धकाभावस्याकारणत्वम्। उदयनाचार्यमते तस्य कारणत्वमिष्टमेव। अविरोधादिति। दोषाभावातिरिक्तगुणानंगीकारोऽपसिद्धान्तः। तन्मुखेन पौरुषेयत्वस्य भवदुक्तत्वादिति भावः, सिद्ध्यर्थमेवेति। यद्यपि वस्तुतत्त्वज्ञापनार्थमेव स्वतः प्रामाण्यस्थापनमस्माभिः क्रियते। न त्वपौरुषेयत्वसाधनार्थम्। यदि श्रुतिरेव वेदस्य नित्यत्वमनुक्त्वा प्रतिकल्पमुत्पत्तिमवक्ष्यत्, तदाऽपि ज्ञानस्य स्वतःप्रमात्वं नात्यक्ष्यत—तथापि वेदपौरुषेयत्वतदभावविचारावसरे स्वतःप्रामाण्यप्रपञ्चनं तत्सिद्ध्यर्थमिति भावः।

तत्प्रमेति। ईश्वरप्रमायां प्रमात्वरूपहेतुसत्त्वेन व्यभिचारः स्यात्। तद्व्यावृत्तये कार्यत्वे सतीति हेतुविशेषणमित्यर्थ.। चक्रकाश्रयणमेवोपपादयति ईश्वरेति। असिद्धव्यवच्छेदायेति। असिद्धत्वादीश्वरप्रमायाः कथं तद्व्यवच्छेदोक्तिसंभवः इति। तथापीति। प्रमासामान्ये गुणाधीनत्वानुमानासंभवेऽपि

तदपेक्षणात्, वेदस्य च निर्दोषत्वात् ॥ दोषाभावाधीनत्वेऽपि परतः प्रामाण्यं सिद्धमिति चेन्न, तदधीनत्वाभावात्, तस्य विरोधिनिवृत्तिमात्रकत्वात्। अस्तु वा तदधीनत्वम्; तथापि वेदे तु न दोषः ॥ गुणमन्तरेण दोषाभावो न घटत इति चेत्, अनुष्णाशीतस्पर्शवदुभयनिवृत्तेरपि दर्शनात्, उपपत्तेश्च ॥ भावान्तराभाववादिनो दोषाभावोऽपि गुण एवेति चेन्न, स्वाभावान्तरेणापि सन्निर्वाहात्। न हि तस्यापि शीताभाव उष्ण एव; अनुष्णाशीते तदसिद्धेः। उभयसंग्रहणेन हि शीताभावत्वम्। तद्वदत्रापि अगुणेष्वाप्तवाक्येषु वक्तृगुणरहितेषु वेदवाक्येषु च दोषाभावः समानः ॥

ननु शब्दानां स्वतः प्रामाण्ये बुद्धादिवाक्यमपि स्वतः प्रमाणं स्यात्। न स्यात्, स्वतस्त्वस्योत्सर्गरूपत्वात् [आपादिता(अत्र.दा?)दितर व्यवस्थानात्। ]विरोधिविशेषे च तस्याननुप्रवेशात्। उक्तं चागमप्रामाण्ये—

"नैव शब्दे स्वतो दोषाः प्रामाण्यपरिपन्थिनः। सन्ति; किन्तु स्वतस्तस्य प्रमाणत्वमिति स्थितिः॥ वक्त्राशयदोषेण केषुचित् तदपोद्यते। अङ्गुल्यग्रेऽस्ति गजयूथमित्येवमादिषु ॥" इति किञ्च, नित्ये हेतुगुणापेक्षा वेदे नास्तीशबुद्धिवत्। हेत्वभावान्न दोषश्चेत्, वक्त्रभावादिहापि नः ॥

---

वेदजन्यार्थप्रमा वक्तृगुणाधीना शब्दजन्यार्थप्रमात्वादित्यनुमानात् ईश्वरसाधनमित्यर्थः। **तदपेक्षणात्** दोषाभावसाधनाय वक्तृगुणापेक्षणात्। **दोषाभ वेति**। स्वतः प्रमात्वं वेदान्तीष्टम्। दोषाभावाधीनत्वस्य सम्प्रत्युच्यमानत्वात् दोषाभावस्यापि परत्वात् परतः प्रामाण्यरूपानिष्टसिद्धिरिति शङ्का। **विरोधिनिवृत्तिमात्रे**ति। यत्र यदस्ति, तत्र तद्विरोधिनिवृत्तिरपेक्षिता दोषस्य प्रामाण्यविरोधित्वात् प्रामाण्येन सह दोषनिवृत्तेः सद्भावेऽपि न तस्याः प्रयोजकत्वमिति भावः। ननु दोषस्याप्रामाण्यप्रयोजकत्वे तदभावस्य तदभावरूपप्रामाण्यप्रयोजकत्वं युक्तमेवेत्यत्राह **अस्तु वे**ति। **न दोष** इति। यत्र दोषसंभवना तत्र तदभावाधीनत्वोक्तिसंभवेऽपि दोषसंभावनारहितस्थले तदुक्तिर्युक्तेति भावः। यद्वा **वेदे तु न दोषः**= वेदे दोषाभाव इष्ट एव। वेदप्रामाण्यं दोषाभावाधीनं प्रामाण्यत्वात् अन्यप्रामाण्यवदित्यनुमानेऽपि न दोषः। तावता परतःप्रामाण्यरूपो दोषो न भवति। स्वतःप्रामाण्यवादिभिरस्माभिः, यादृशे परतः-प्रामाण्ये स्वीकृते वेदस्य सकर्तृकत्वापत्तिः, तादृशस्यैव निरासात्। गुणाधीनत्वरूपे परतस्त्वे सत्येव तत्प्रसंगात् तस्य च गुणरूपस्यास्वीकारादिति भावः। ननु दोषाभावो यत्र तत्र गुण इति नैयत्यात् नहिसिद्धिरिति शङ्कते **गुण**मिति। **अनुष्णे**ति। यथा शीतनिवृत्तिरुष्णमन्तरेण न भवतीति दुर्वचम्, तथैव यथः। **उपपत्तेश्चे**ति। घुणक्षताक्षरादौ गुणदोषोभयनिवृत्तिदर्शनादिति भावः। **स्वाभावान्तरेणो**पपत्तेरित्यर्थः (?)। रागद्वेषयोरभावौ न द्वेषरागरूपौ रागद्वेषरहितस्थले भावान्तरमेव हि रागाद्यभावः; तथेति। **तस्यापि**—भावान्तराभाववादिनोऽपि। शीताभावत्वं उष्णस्पर्श—अनुष्णाशीतस्पर्शोभयसाधारणम्। तद्वत् दोषाभावः गुणभिन्ने गुणरहितवस्तुनिष्ठे धर्मान्तरेऽपीति। **विरोधिविशेषे चे**ति। सतीति शेषः। उत्सर्गापवादसद्भावे परमाचार्यसूक्तिं प्रमाणयति **उक्तञ्चे**ति। **हेत्वभावादि**ति। ईश्वरबुद्धिं प्रति हेतोरभावादित्यर्थः।

अकारणं यथा ज्ञानं प्रमात्वमधिगच्छति। अकारणं तथा वाक्यं स्वतः प्रमितिकारणम् ॥
यदि हेतुगुणाभावादप्रामाण्यं प्रसज्यते। तदेश्वरप्रमायामप्यनिवार्यमिदं तव ॥

अथैवं ब्रूषे—कारणगुणदोषयोरभावे तत्प्रयोज्ययोः प्रामाण्याप्रामाण्ययोर्द्वयोरप्यसंभवात् कोट्यन्तरा(राश्यन्तरायोगाच्च)निःस्वभावत्वं वेदशब्दजन्यज्ञानानां स्यादिति ; इदमपि तुल्यमीश्वरज्ञाने ॥ हेतुनिवृत्तिस्तत्कार्यं प्रामाण्यं निवर्तयेत्, न तु नित्यमिति चेत्, अप्रामाण्यहेतुनिवृत्तेरपि तथैव। अतो विरुद्धस्वभावयोगः उभयपरित्यागान्निःस्वभावत्वं वा स्यात्।

एवमनीश्वरवादिनां सौगतादीनां शुद्धसंवित्सन्तानादिष्वधिपतिसहकार्यादिकारणाद्गुणादेरसंभवात् स्वारसिकस्वात्मगोचरप्रामाण्यस्य चाभ्युपगमात् समाश्वर्याः। यद्यपि पूर्वप्रत्ययस्य कारणत्वमिष्टम्, तथापि तस्यापवर्गदशास्थस्य गुणदोषादिरूपसमस्तसंस्कारप्रत्यस्तमयात् (प्रत्यर्थितया) न तज्जन्यस्य गुणहेतुतेति ॥

2. यच्च, प्रामाण्यं परतो ज्ञायते इति प्रयुक्तम्, तत्र ज्ञानान्तरेण ज्ञानान्तरस्वभाभाववेदनाभ्युपगमात् सिद्धसाधनता। परत एवेति विवक्षायामीदृशं ज्ञानं प्रमेति लक्षणतः सर्वप्रमाणसङ्ग्राहिणि ज्ञाने, पारमेश्वरे च विज्ञाने तदसंभवः ; न हि ताभ्यां स्वप्रमात्वं न गृहीतम्, लक्षणाव्याप्तिकिञ्चिज्ज्ञत्वादिप्रसङ्गात् ॥ त(अ)तोऽन्यत्र परत एवेति नियम इति

---

अकारणं कारणरहितम्—अनादि। तुल्यमीश्वरज्ञाने इत्युक्तं स्थापयति **हेतुनिवृत्ति**रित्यादिना, **वा स्या**दित्यन्तेन। कारणाभावात् कार्यभूतस्य निवृत्तावपि नित्यस्य निवृत्त्यसंभवात् प्रामाण्याप्रामाण्योभयं वा ईश्वरज्ञाने स्यात्। उभयविधस्वभावहानिर्वा सुरभ्यसुरभ्यवयवारब्धे कार्ये निर्गन्धत्ववादवत्। तथाचेश्वरज्ञाने प्रामाण्यमिष्टं स्वतस्त्वेनैवोपपाद्यम्, तथा वेदेऽपीति भावः। बौद्धपक्षेऽपि निस्स्वभावत्वमापादयति **एवमि**त्यादिना **गुणहेतुते**त्यन्तेन। निर्विकल्पकक्षणिकज्ञानसंततिस्तदिष्टा। यद्यपि अधिपति – सहकारि—आलम्बन-समनन्तरप्रत्ययरूपकारणचतुष्टयं ज्ञानं प्रति तदिष्टम्। तच्च इन्द्रिय-आलोक, विषय-पूर्वक्षणात्मकज्ञानचतुष्टयरूपम्। गुणस्तु कश्चिदधिको नोक्तः। ज्ञानापलापो न भवति, ज्ञानस्वस्वरूपस्याबाधात्। "न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपातत." इत्युक्तं हि तैः। **पूर्वप्रत्ययस्य** पूर्वक्षणरूपज्ञानस्य। **अपवर्गदशास्थस्य**=विनश्यदवस्थस्य ॥

अनभ्यासदशायामिति ज्ञप्तौ परतस्त्वसाधकं द्वितीयमनुमानं निरस्यति **यच्चे**ति। **ज्ञानान्तरेणे**ति। स्वप्रकाशत्वात् ज्ञानान्तरावेद्यमिति हि मृषावादिवादः। वयं तु स्वप्रकाशत्वं ज्ञानान्तरवेद्यत्वञ्च स्वीकुर्म इति भावः। **ईदृशमि**ति। प्रमासामान्यलक्षणप्रतिपादकवाक्यजन्यज्ञाने स्वस्यापि विषयत्वमावश्यकम्। तत्र लक्षणस्याकथने लक्षणस्याव्याप्तिदोषः स्यात्। ईश्वरज्ञानस्य स्वविषयकत्वाभावे ईश्वरस्यासर्वज्ञत्वं स्यादिति। **ततोन्यत्रे**ति। ईश्वरज्ञान, ज्ञानलक्षणविषयकज्ञानोभयभिन्नज्ञाननिष्ठप्रामाण्यं परतो ज्ञायत इति प्रतिज्ञावाक्यमिति भावः।

चेत्. तदपि न, तद्दृष्टान्तेनैव प्रतिप्रयोक्तुं शक्यत्वात्—विगीतं प्रामाण्यं स्वाधारेण ज्ञायते, प्रामाण्यरूपत्वात्, ईश्वरज्ञानादिप्रामाण्यवत् इति ॥ कथं तर्हि इदं प्रमाणमप्रमाणं वेति संशयावकाशः इति चेन्न, विशेषतो गृह्यमाणेऽपि संशयोत्पत्तिदर्शनात् । भवति मुहुः शुक्तिकारजतमोहा[द]न्धीकृतधियः कलधौतेऽपि तथोपलभ्यमाने यथोपलम्भमिदं रजतमेव वा पूर्ववच्छुक्तिरजतं वेति द्वापरः (पुरतः) तथाऽत्रापि गृह्यमाणेऽपि प्रामाण्ये किमिदं प्रमाणमेव सत् प्रमाणतयोपलभ्यते उत बाधात् पूर्ववदप्रमाणं सदिति संशयो युक्तः ॥

तथापि सन्देहसहेन किं स्वतोग्रहणेन? निश्चयस्तु परायीन एवेति चेत्, किमस्मदपेक्षया ग्रहणमग्रहणं वा नियन्तुं शक्यम्? सिद्धो हि ग्रहणप्रकारः परीक्षकैरनुसरणीयः ॥ सिद्धिरेव स्वतः कथमिति चेत्, इत्थम्—ज्ञानं स्वालम्बनं प्रकाशयत् स्वयमपि ज्ञानान्तरनिरपेक्षं प्रकाशते इति तावत् सर्ववेदान्तिसम्मतम् । अस्वयंप्रकाशवादेऽपि स्वग्राहिणाऽनुव्यवसायेन प्रकाशमानो व्यवसायस्तावदसंशयात्मैव दृश्यते। स्मृत्यप्रामाण्यवादेऽप्यपूर्वार्थगोचरतया स्मृतिविलक्षणश्च;

---

तर्हि तत्रोभयत्र प्रामाण्यं कथं ग्राह्यम् ॥ स्वत इत्येवास्त्विति चेत्—तर्हि तद्दृष्टान्तेन सर्वत्र स्वतस्त्वानुमानमित्याह तदपीति । ननु सांशयिकत्वादित्यनुमानमनुकूलतर्कसहितम्, यदि स्वतस्त्वं स्यात्, प्रमाणमप्रमाणं वेति संशय एव न स्यादित्यापादनसंभवात् । संप्रत्युक्तं प्रामाण्यरूपत्वादित्यनुमानमप्रयोजकत्वादुपेक्ष्यमित्यभिप्रायेण शंकते कथंतर्हीति। अनुकूलतर्कं व्याप्तिभंग इत्याशयेनाह विशेषत इति। द्वापर इति तालपाठः। संशय इत्यर्थः। सोऽर्थसिद्ध इति चेत्, संशयः पुरतो जायत इत्यस्तु। अस्मदपेक्षयेति। अस्माकं प्रयोजनसदसद्भावमपेक्ष्येत्यर्थ यद्ग्रहणेऽस्माकं प्रयोजनं नास्ति, न तत् अस्मद्ज्ञाने विषय इति नियन्तुं न शक्यते । तथासति पथि दूर्वादिज्ञानानां काञ्चनादिज्ञानत्वापत्तेरिति भावः । ननु प्रामाण्यस्य स्वतोग्रहणेऽपि संशयविषयत्वस्यापीष्टम्; प्रयोजनाभावमात्रेण ग्रहणापलापो न युक्त इति भवतोच्यते ; स्वतोग्रहण एव किं प्रमाणम् । न च ज्ञानस्य स्वयंप्रकाशतया तन्निष्ठं प्रामाण्यमपि सह प्रकाशत इति युक्तम् । ज्ञानस्यापि घटपटादिवत् जडत्वेन स्वयंप्रकाशत्वस्यैव अभावादिति शंकते सिद्धिरेवेति। स्वालम्बनं स्वविषयभूतवस्तु । वेदान्तिसंमतं स्यान्नाम ; अस्मान् प्रत्युपपादनामित्यत्राह अस्वयमिति। तार्किकैः । घटादिज्ञानं व्यवसायात्मकं घटमहं जानामीत्यनुव्यवसायेन गृह्यते, न तु स्वयमितीष्यते । तस्यानुव्यवसायस्य विषयभूतो व्यवसायः संशयरूपो भासते, उत निश्चयरूपः? न संशयरूपः । ननु निश्चयात्मकत्वेऽपि स्मृतेरिवाप्रामाण्यमस्त्वित्यत्राह स्मृत्यप्रामाण्येति । स्मृतेरपि याथार्थ्यलक्षणं प्रामाण्यमेवास्मदिष्टम्-तदास्तां नाम ; तदप्रामाण्येऽपि स्मृतिविषयकानुव्यवसायेन स्मृतित्वग्रहणवत् अत्र न तद्ग्रहणम्, प्रत्युत ज्ञातपूर्वार्थग्रहणमेव । एवमनुव्यवसायविषयभूतो व्यवसायः विपर्ययरूपज्ञानतयाऽपि न विषयः । यत्तु बाधज्ञाने सत्येव दोषजन्यं द्विचन्द्रप्रत्यक्षादि, तत्र च तथानुव्यवसायः कदाचित् स्यान्नाम; न त्वत्र । तथाचानुव्यव-

अविपर्ययात्मा चाबाधात्मा च, बाधादेः पूर्वं तत्प्रसङ्गाभावात्। ततश्च यद्विषयतया अयं व्यवसायः प्रथमं प्रतिभातः, तद्विषयतयैव परस्परं सह परिक्षेदात् पश्चादपि। अतो यत् तद्विषयत्वलक्षणं प्रामाण्यं पश्चात् तेनैव व्यवस्थाप्यते, तत् आदावेव गृहीतमिति स्वतः प्रामाण्यग्रहः ॥

नन्वेवं संशयत्वादिलक्षणमप्रामाण्यमपि स्वयं प्रकाशेन, अनुव्यवसायेन वा प्रथममेव ग्रहीतुं शक्यम्—; तथापि विपर्ययत्वलक्षणं न तथा, गृह्यमाणवैपरीत्यस्य स्वेन स्वग्राहिणा वा प्रथममग्रहणात्। तस्मिंशे च वैदिकानामविवादात्, तत्रेममंशमादायैव चान्ततः स्वतः प्रामाण्यसमर्थनप्रवृत्तेः, तत्र दोषाभावादेवाऽऽदावप्रामाण्यानुत्पत्तेः, तत एव चाप्रामाण्य-

---

सायो व्यवसायं गृह्णन् तस्य यद्विषयकत्वेनाऽऽदौ उदय तद्विषयकत्वेनैव तं गृह्णाति, न तु तद्भिन्नांशविषयकत्वेनापि। एवमनुव्यवसायेन ज्ञानगतं वस्तुविषयकत्वं गृह्यत इति तस्य प्रामाण्यग्राहित्वे, ; ज्ञाना स्वयं प्रकाशत्ववादिना प्रथमतः घटमहं जानामीत्याकारकज्ञानोत्पत्तिवचनात् ज्ञानवत् तद्गतं वस्तुविषयकत्वमपि तेनैव गृह्यत इत्युच्यत इति सिद्धं प्रामाण्यस्य स्वतस्त्वम्। ननु ज्ञानप्रामाण्यं कदा स्यात्। तत्र धर्मिणि यस्य ग्रहणं ज्ञानेन तत्र तस्य वस्तुतः सद्भाव एव; न तु शुक्तौ रजतज्ञाने इति चेत्—अस्तु। तथापि रजते रजतमिति जायमाने ज्ञाने प्रामाण्यस्य कथं भंगः। यत् रजतत्ववत् तस्यैव विशेष्यत्वात्। यत्र ज्ञाने इदं रजतत्ववद्विशेष्यकरजतत्वप्रकारकमिति ग्रहणं तत्रैव प्रामाण्यज्ञानमिति चेत् न; कदाचिदरजते रजतज्ञानेऽपि कस्यचित् इदं रजतत्ववति रजतत्वप्रकारकमिति ज्ञानोत्पत्त्या तत्र प्रामाण्यस्य वस्तुगत्या दुर्वचत्वात्। अतः, "परस्परपरिक्षोदात् परस्तादपि वादिभिः उपलम्भबले स्येयम्, तदादौ किं न गृह्यते ॥" अतो गृहीतांशबाधाभावे तत्रैव तद्ग्रहणमित्येव मन्तव्यम्। तदभाववत्त्वेन ग्रहणविरहात् धर्मिविषये धर्मग्रहणात् सिध्यति प्रामाण्यम्। भ्रमज्ञानेऽपि प्रथमतः प्रामाण्यग्रहेऽपि तद् बाध्यते अत्र तु न बाध इति तस्य वास्तवता। अप्रमाज्ञानं संशयात्मकमाहार्यारोपात्मकं विपर्ययात्मकञ्चेति त्रिविधम्। तत्र संशयज्ञाने संशयत्वं ज्ञानेन सह गृह्यते। अहार्यत्वमपि गृह्येत। तद्वति तत्प्रकारकत्वाभावरूप विपर्ययत्वं तु न गृह्यते। अतः अप्रामाण्यं स्वतोग्राह्यं न भवति। यस्य विशेष्यस्य यत्प्रकारवत्त्वं वस्तुतः, तद्विशेष्यकत्व विशिष्टतत्प्रकारकत्वमेव प्रामाण्यम्, तच्च गृह्यत एवेति प्रमाज्ञाने स्थितप्रामाण्यग्रहणं निर्विवादम्; तस्य विशेषस्य तत्प्रकारवत्त्वं वस्तुतोऽस्ति न वेति विवादप्रसक्तौ प्रामाण्यस्य स्थापनीयतेत्यलम्। बाधकं सेश्वरमीमांसादावनुसंधेयम् ॥ **न तथेत्यस्य** इत्युच्यत इत्यत्र इतीत्यनेनान्वयः। **वैदिकानामिति।** अप्रामाण्यमेव स्वतो गृह्यत इति बाह्यवादस्तु दुर्वाद इति भावः। **इममंशमादायैवेति।** विशेष्यप्रकाररूपांशग्रहणाभिप्रायेणैव। तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वरूपप्रामाण्याकारः प्रथममेव गृह्यत इति न ब्रूमः। न हि घटे घटत्वं जानामीति अनुव्यवसायः; किं तु इमं घटं जानामीत्येव।

प्रमित्यसंभवात्, स्वत एव च प्रामाण्यप्रमितेः बाधाच्च इत्युच्यते, इति ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीवेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ शब्दाध्याये प्रथममाह्निकम् ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥

## द्वितीयमाह्निकम् (3.2.)

अथ पौरुषेयापौरुषेयविभाग एवानुपपन्नः, सर्वस्यापि वाक्यस्य पौरुषेयत्वे वाक्यत्वादिलिङ्गसद्भावात्—सर्वज्ञप्रणीता वेदाः, वेदत्वात् इति व्यतिरेकिसम्भवात्; "मन्त्रकृद्भ्यः" "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद् यदृग्वेदः" "ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्मात्। यजुस्तस्मादजायत" इत्यादिश्रवणात्, "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते" इत्यादिस्मृतेश्च। 'अधिकृत्य कृते ग्रन्थे' इति पाणिनिस्मृतिसिद्धार्थकाठककालापकादिसमाख्याविशेषयो-

---

अनुव्यवसायविषयस्यैवास्माकं व्यवसायेन सिद्धिरिति भावः ।

प्रामाण्यस्य स्वतस्त्वात् तदपवदनादर्शनान्मानभावः
शब्दे वेदेऽपि सिद्धः कणभुगकथयत् तत्र शब्देऽनुमात्वम् ।
व्याप्त्यादिज्ञानहानावपि मितिजननात् तन्न सत्; तत्प्रयोगे-
ष्वौचित्यादेर्विमर्शो न मत इह वृथाविस्तरं तत्र दृष्ट्वा ॥

श्रीरस्तु

श्रीमते निगमान्तगुरवे नमः

वेदस्यानादिता तस्य विधाः ईशनिदेशता ।
विध्यर्थश्च स्मृतिः पञ्चरत्नं शब्दान्त्यगोचराः ॥

वेदपौरुषेयत्वं तार्किकोक्तं प्रतिक्षेप्तुमुपक्षिपति अथेति ।

अनुमानात् श्रुतेः स्मृत्या शब्दशास्त्राच्च सादिता ।
अनित्यार्थान्वयात् शब्दानित्यत्वात् शंक्यते श्रुतौ ॥

वाक्यत्वादीति ॥ वेदः पौरुषेयः वाक्यत्वादित्यन्वय्यनुमानम्। आदिना वेदः पौरुषेयः गुणाधीनप्रामाण्यकत्वादित्यादिग्रहणम्। वेदत्वहेतोरपि। वेदत्वस्य हेतुत्वे कुत्र व्याप्तिग्रहणमित्याशंकायाम्, तत्र व्यतिरेक्यनुमानमिति दर्शयति सर्वज्ञेति। यो न सर्वज्ञप्रणीतः, स रघुवंशादिर्हि न वेद इति। मन्त्रकृद्भ्य इति कृञ्धातुप्रयोगात् वेदे मन्त्राणां कृतत्वं स्फुटम्। महतोभूतस्य=सृष्टये तत्कालिकदेहधारिण ईश्वरस्य। प्रतिमन्वन्तरमिति। एकैकमन्वन्तरेऽपि नवनवश्रुतिनिर्माणस्येतोऽवगमात् अनादित्वं बाधितम् सर्वकल्पानुवृत्तसमानानुपूर्वीकत्वमप्यसिद्धम्; अन्येत्युक्तेः। काठकादिसमाख्याऽपि कठादिकृतत्वमावेदयतीत्याह अधिकृत्येति। न च तेन प्रोक्तमिति प्रोक्तार्थेऽयं प्रत्ययः। प्रवचनस्यानेककर्तृकतया कठेति विशेष

गात्; कदाचित्कत्वविशेषसंदृष्टेः अनित्ययोगात् तत्पूर्वोत्तरकालयोस्तदनन्वयापत्तेः शब्दस्य भूतगुणस्य नश्वरत्वात्, इति चेत्, न; वाक्यत्वानुमानस्य विपक्षे बाधकाभावात्। अकारणकार्योत्पत्तिप्रसङ्ग इति चेन्न, कार्यत्वस्यैवासाध्यमानत्वात्, अकारणत्वमात्रस्यापाद्यमानस्येष्टत्वात्। क्रमविशेषेणानुच्चार्यमाणानां वर्णानां कथं वेदत्वं वाक्यत्वं वेति चेन्न, परकृतप्रबन्धपाठवत् अकर्तृभिरुच्चारणेऽपि तदुपपत्तेः। आदिममुच्चारणं कर्त्रा न चेत् कथं स्यादिति चेन्न, आदिमत्त्वस्यैवासिद्धेः, दर्शनानुगुण्येन अद्यत्ववदेव सर्वदा परतन्त्रोच्चारणस्यैवानुमानसमुचितत्वात्, ततश्च वेदोच्चारयितृपुरुषापेक्षत्वेऽपि पूर्वपूर्वाध्यापनप्रकारस्यानुसरणादनादित्वसिद्धेः। अपौरुषेयत्वे घुणाक्षरवद्बोधकवेदानामभिप्रायविरहादर्थपरत्वं न स्यादिति चेन्न [अ]प्रतिपन्ने निरवधि प्रधाने चार्थे बोधकत्वस्यैव तात्पर्यरूपत्वात्, प्राधान्यादेर्लौकिकवाक्यवद् स्वाभाव्यादेव सिद्धेः। अस्मदिष्टे च सेश्वरमीमांसापक्षे नित्येश्वराभिप्रायसंभवात्। स्वयमेव ह्याह — 'श्रुतिः स्मृतिर्ममैवाज्ञा" इति। तथा भाष्यम्—"स्वशासनावबोधि शास्त्रम्" इति। नित्यं श्रुत्यैव नियुङ्क्ते (नियमयति) परः इति नित्याऽपि सा तदाज्ञा। गीतादिरपि श्रुत्यर्थोपदेशकतया प्रवर्तते। साक्षात्तु श्रुतिस्तदादेशः। तदनुविधानाच्च स्मृतिरपि॥ अज्ञातकर्तृकत्वे गन्धर्वभाषितादिवत् आप्तकर्तृकत्वा-

---

निर्देशायोगात्। नन्वधिकृत्येत्यत्र तदिति कर्मानुषंगात् रघूणां वंशमधिकृत्य कृतो ग्रन्थः रघुवंश इतिवत् विषय(कर्म)वाचिपदादेव प्रत्ययः। तस्य, लुबाख्यायिकाभ्यो बहुलमिति क्वचित् लुप्, क्वचिन्नेत्यन्यदेतत्। अतः कर्तृवाचकपदात्, तेन कृत इत्यर्थे प्रत्ययविधानमत्र सूत्रे कथम्। कथं च मीमांसकग्रन्थेष्वप्येतत्सूत्रग्रहणमिति चेत्—सूत्रे अधिकृतग्रन्थ इत्येवंरीतिं विहाय **कृते** इत्यपि प्रयोगात्। साकांक्षतया अधिकृत्येत्यत्र कर्मग्रहणवत् कृते इत्यत्र तृतीयान्तकर्तृपदग्रहणमपीष्टम्। अतस्तदधिकृत्य तेन कृते ग्रन्थे कर्मवाचकात् कर्तृवाचकाच्च यथायथं प्रत्यय इति सूत्रार्थः। अतः काठकादेरपि कठादिकृतेत्यर्थकमिति। **कादाचित्केति**। आपत्तेरित्यन्तमेकहेतुपरम्। अनित्यार्थसंयोगादिति विवक्षितम्। हेत्वन्तरं **शब्दस्येति**। न हि शब्दः प्रकृतेर्गुणः किंतु भूतस्य। भूतस्य च सावन्तत्वात् तद्गुणः सुतरां तथेति कथं वेदे शब्दो नित्यः स्यादिति। **विपक्षे** इति। वाक्यत्वमस्तु पौरुषेयत्वं मास्तु इति शंक्यत इत्यर्थः। **कार्यत्वस्यैवेति**। पौरुषेयत्वं हि पुरुषकार्यत्वमेव। अतः कार्यत्वस्येतः प्रागसिद्धत्वात् न स प्रसंग इत्यर्थः। ननु वेदेऽपि वर्णानां कार्यत्वस्येष्टतया कथं साध्यत्वमिति चेत्—तर्हि सकारणकत्वमपि सिद्धमिति कथमकारणकार्योत्पत्तिप्रसंगः? स्वतन्त्रकर्तृरूपकारणं विना कार्योत्पत्तिः प्रसज्यत इति चेत्—तदिष्टमस्माकम्, तदाह **अकारणत्वमात्रस्येति**। कार्यत्वघटनेन स्वतन्त्रकर्तृरहितस्येत्यर्थः। लोके स्वतन्त्रकर्तुः सर्वत्र दर्शनादत्र तदनुमानमित्यत्राह **दर्शनेति**। लोके सर्वदा वेदस्य परतन्त्रोच्चारणस्यैव दर्शनात्, तदेव सर्वदाऽनुमेयमिति स्वतन्त्रकर्त्रसिद्धिरिति भावः। **प्रतिपन्ने** इत्यत्र **अप्रतिपन्न** इति पाठः। सर्वत्र वाक्यस्य कुत्र तात्पर्यमिति विमर्शे यत् पूर्वमज्ञातमबाधितञ्च, तदर्थप्रधानकत्वात् वाक्यस्य तत्प्रधानकत्वमेव तत्परत्वम्—तात्पर्यम्। तत् अपौरुषेयेऽपि संभवतीत्यर्थः। इच्छारूपतात्पर्यग्रहणेऽपि न नः क्षतिरित्याह **अस्मदिति**। नित्यत्वे कथं तदाज्ञात्वम्; गीतापञ्चरात्रयोरेव तदाज्ञात्वं स्यादिति शंकायामाह **नित्यमिति**। **नित्याऽपि सा तदाज्ञेति**। परोक्तिसापेक्षवाक्यप्रयोक्तृपुरुषाज्ञारूपत्वं 'लडादौ बाधितम्'

निश्चयाभावादप्रामाण्यशङ्का स्यादिति चेन्न, दोषाभावनिश्चयादेव तन्निवृत्तेः ॥ अत्र सकर्तृकत्वशङ्कायां कथं दोषाभावनिश्चयः इति चेन्न, महाजनपरिग्रहादेव नास्तिकर्तृकत्वशङ्कोन्मूलनात् ॥

बाह्यागमपरिग्रहवत् किं न स्यादिति चेन्न, बहुजनपरिग्रहविमात्रस्य महाजनपरिग्रहत्वेन अविवक्षितत्वात् तत्परिग्रहविशेषस्यैव विवक्षितत्वाच्च ॥ तयोः को वा विशेष इति चेन्न; हेतुदर्शनादर्शनाभ्यां विशेषात् । अनन्यगतिकैः स्वैरसिकैः सुखजीविकार्थिभिः कुहकवञ्चितैर्वा तत्परिग्रहः । इह तु न तथा, तद्वैपरीत्यस्य सुप्रसिद्धत्वादिति ॥

अपि च बाह्यागमप्रतिबन्दिः किं वेदप्रामाण्यम् आप्तप्रामाण्यनिबन्धनमितीच्छद्भिर्वैशेषिकादिभिरुच्यते, उत सौगताद्यागमप्रामाण्यमिच्छद्भिः; अथवा परित्यक्ताशेषपारलौकिकागमैर्लौकायतिकैरिति । नाद्यः, ईश्वरकृतत्वेऽपि वेदस्यैवंविधपरिग्रहविशेषमन्तरेणाद्यन्तैर्बाह्यागमेभ्यो विवेक्तुमशक्यत्वात् । सर्वज्ञप्रणीतत्वाद्यभिमानस्य तदनुमानप्रक्रियायाश्च सर्वत्र तुल्यत्वात् । न द्वितीयः; अभ्युपगतप्रामाण्ये स्वागमेऽपि प्रसङ्गात् । दृष्टफलसंवादस्य विसंवादान्यथासिद्धेश्च सर्वत्र समचर्चत्वात् । अस्मदुक्तस्य निरुपाधिकपरिग्रहस्य स्वमते दुर्वचत्वात् । अत एव न तृतीयः, प्रामाण्यस्य, परोक्षप्रामाण्यस्य, वाक्यप्रामाण्यस्य च स्थापितत्वेन वैदिकवाक्ये स्वाभाविके प्रामाण्ये प्राप्ते, निरुपाधिकप्रेक्षावदनन्तपुरुषपरिग्रहादेवानाप्तकर्तृकत्वशङ्कोन्मूलने च वक्तृदोषशङ्कानुत्थानात्, वचसि च स्वतः काचादिवत् दोषादर्शनात् । आप्तकर्तृकत्वाभावेऽप्यौत्सर्गिकं प्रामाण्यमनपोदितमिति ।

अत एव हि प्रेक्षावन्तश्चोदितेषु बहुवित्तव्ययायाससाध्येषु निःशङ्कं प्रवर्तन्ते, प्रतिषिद्धेषु च सुखतरेष्वपि विषसंसृष्टान्नभोजनादिवन्निवर्तन्ते । प्रयोगश्च—पारलौकिकी महाजनप्रवृत्तिः सफला,

---

ईश्वरस्य तादृशप्रयोक्तृत्वाभावात् तदाज्ञात्वं संभवतीति भावः । गन्धर्वभाषितम्=इह वटे यक्षस्तिष्ठतीत्याद्यैतिह्याभासः । बहुजनेति महाजनेत्यत्र महत्त्वं न बहुत्वप्रचयरूपसंख्यात्मकमिति भावः । हेतुदर्शनेति । वैदिकाः धर्मं ब्रुवाणाः अनेन लौकिकहेतुनाऽयं धर्म इति न साधयन्ति । प्रत्युत हेतुदर्शनाच्चेत् तदा धर्मत्वासिद्धिमेव ब्रूयुः । अवैदिका एव लौकिकहेतुं पुरस्कुर्वन्ति ; एवं सप्तघटिकाभोजनादिहेतुपुरस्कारात् नादृष्टविषया अवैदिकधर्मोपयोगः । तत तत्रौपाधिक एव परिग्रह इति न्यायकुसुमाञ्जलेर्द्वितीयस्तबके विस्तरः ।

स्वयं बाह्यागमप्रतिबन्दौ वक्तव्यमन्यत् त्रिधा विकल्पनेनाह अपिचेति । आप्तप्रामाण्यनिबन्धनमिति । तार्किकैरेव महाजनपरिग्रहादेव प्रामाण्ये किमाप्तप्रामाण्येनेत्याशंक्य, महाजनपरिग्रहेण वेदप्रामाण्यस्यानुमानमात्रम् । प्रामाण्योत्पत्तिस्तु आप्तप्रामाण्यात् । कारकाभावेऽनुत्पन्नं प्रामाण्यं महाजनपरिग्रहः कथङ्कारं साधयेदित्युक्तम् । अस्मत्पक्षे तु दोषाभावमात्रेण स्वत एव प्रामाण्यसत्त्वात् न तत् आप्तप्रामाण्योत्पाद्यम् । अतो महाजनपरिग्रहस्यानुमापकत्वमक्षतमिति । प्रामाण्यस्येत्यादि । सर्वमप्रमाणमिति, प्रत्यक्षमेव प्रमाणमिति, प्रत्यक्षानुमानद्वयमेव प्रमाणमिति च चार्वाकमतं निरस्तमिति भावः । काचादिवदिति । चक्षुरादौ काचपटलादिदोषवत् वाक्ये दोषो न साक्षादित्यर्थः । "विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि वा । दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः" इति कारिकया उदयनाचार्यकृतं स्वप्रयुक्तविश्ववृत्तिपदव्याख्यानं प्रस्तौति अत एवहीत्यादिना ।

प्रेक्षावत्प्रवृत्तित्वात्, कृष्यादिप्रवृत्तिवत्। न ह्यनन्तैः प्रेक्षावद्भिर्विसंवादेनाफलमनुष्ठीयते इति शङ्कितुं शक्यम्॥ दुःखरूपफलदर्शनेन सिद्धसाधनतेति चेन्न, अनभिप्रेतोपालम्भात्, प्रवृत्तिदुःखादधिकपुरुषार्थपर्यवसानस्य सिषाधयिषितत्वात्॥ तथापि लाभपूजाख्यातिरूपदृष्टप्रयोजनेनैव सार्थतेति चेत्—तदप्यसत्, अतदुद्देशेन तेषां प्रवृत्तिदर्शनात्, तदुद्देशेन प्रवृत्तेश्च डाम्भिकत्वेन शास्त्रैस्तन्निष्ठैश्च विगर्हणात्। ये च तदुद्देशेन प्रवर्तन्ते, तेऽप्यतदुद्देशेन प्रवृत्तानामनुकुर्वाणा एव ख्यात्यादि प्राप्नुवन्ति। अन्यथा ख्यातिलाभपूजादेर्निर्निमित्तत्वप्रसङ्गात्। न हि यत्किञ्चिदनेन कृतमिति मत्वा कश्चित् कृच्छ्रसंपादितान् धनादीन् ददाति, पूजयति गुणान् वा आरोप्य स्तौति; अपितु कुतश्चित् प्रमाणात् सिद्धं प्रशस्ताचरणमभिसन्धायैव। समरसामर्थ्यादिमूललाभपूजादिकमप्यन्ततोऽर्थशास्त्रादिमूलप्रशस्तप्रवृत्तिप्रसूनम्। अतः सन्मर्यादाप्रवृत्तान् दानमानादिभिरभ्यर्चयन्तोऽप्यदृष्टबुद्ध्यैव प्रवर्तन्ते॥ जनरञ्जनार्थमेव दानादिः; जनो दातारं मानयितारं च रज्यते; "जनानुरागप्रभवा हि संपदः" इति प्रसिद्धेरिति चेन्न—प्रत्युपकाराद्यनर्हप्रव्रजिततपस्व्यन्धबधिरदीनानाथादिषु दानमानादिभिरनुरञ्जनेऽपि तन्मूलदृष्टसंपत्प्रसङ्गाभावात्; अत एव हि नीतिनर्मसचिवैरेव तदर्थदानादिव्यवस्थापनम्॥ प्रतारणपटुभिर्वञ्चकैः प्रतारितास्तान् पूजयन्तीति चेन्न; किं ते स्वात्मानमपि प्रतारयन्ति? ये नाम समस्तभोगविमुखा यावज्जीवमात्मानं परिक्लेशयन्ति; यैश्च पटुतमैः सर्वे लोकाः प्रतारिताः, ते कथं लोकात्तत्प्रज्ञेन त्वया प्रतारका इत्युन्नीताः॥ अन्धपरम्पराकल्पस्तर्ह्ययमनुष्ठानप्रवाह इति चेन्न, प्रमाणस्वरूपफलयोरबाधस्य च प्रत्यक्षत्वात्। धर्मबुद्ध्यैव निरवधिकपरिग्रहस्य तद्बुद्ध्यैव सिद्धेः। अनादिनिधनेऽस्मिन् आम्नायमूलेऽनुष्ठाने प्र इति प्रक्रियान्तरमाश्रित्य प्रतारकैरीश्वरैर्बाह्यैश्च प्रतिच्छन्दप्रवर्तना श्रुतिस्मृतिसिद्धा युक्तिमती चेत्येषा दिक्॥

वेदानित्यत्वानुमानानां प्रतिप्रयोगाश्च—पूर्वापरकल्पाः एतद्वेदसन्दर्भपाठवन्तः, कल्पत्वात्, अद्यतनकल्पवत्। ऐश्वरं वेदप्रवर्तनमप्रच्युतप्राचीनसन्दर्भम्, आप्तकर्तृकवेदप्रवर्तनरूपत्वात् अद्यतननिपुणोपाध्यायवेदप्रवर्तनवत्। न चाश्रयासिद्धिः, पौरुषेयत्वेऽपि प्रामाण्यमिच्छतस्तत एव तत्सिद्धेः। अप्रामाण्यमिच्छतापि महाजनपरिग्रहान्यथानुपपत्त्यैव प्रामाण्यं प्रसाध्य तत एव तत्साधनात्। न चास्ति वेदप्रवर्तनस्य सारस्वतपाठे नैकान्त्यम्, तथैव तत्प्रवाहस्य तत्तच्छाखाप्रणयनवत् अनादित्वात्, मन्त्रब्राह्मणादिवाक्यस्वरूपवैयाकुल्यविरहाच्चेति॥

---

ईश्वरैः=ब्रह्मविष्णुरुद्रादिभिः। श्रुतिस्मृतिसिद्धेति। बाह्याः वैदिकप्रवर्तनगतिं विलोक्य, तत्त्याजनेनात्मन्याऽऽकर्षणाय तत्तुल्यधर्मादिनिरूपकान् उपदेशान् प्रकल्पयामासुरिति श्रुत्यादिसिद्धमेतदित्यर्थः।

तार्किकानुमानानां सत्प्रतिपक्षितत्वमाह वेदानित्यत्वेति। स्वकीयमनुमानं प्रबलत्वात् परानुमानबाधकमिति भावः। सारस्वतपाठेनेति। तैत्तिरीये सारस्वतपाठः सारस्वतेनैव नूनं प्रवर्तितः मन्त्रब्राह्मणमिश्रणादर्वाचीन इत्याक्षेपश्चानुमतेनैव एकरूपेण सारस्वतेन प्रवर्तनस्य प्रवाहनित्यत्वात् वेदनित्यत्वाविरोध इति वदता वारितः। परमतभङ्गे अस्मदीयव्याख्यासहिते समुदायदोषाधिकारे एतद्विस्तरो द्रष्टव्यः। वैयाकुल्यविरहादिति। मन्त्रः सर्वोऽपि तथैव मन्त्ररूपः, ब्राह्मणं च तत् पृथगिति नैकस्यान्यांशस्य प्रवेश इति।

एवं विपक्षे बाधकाभावादेव केवलव्यतिरेक्यपि निरस्तः, अनुमानाध्याये तस्य सामान्यतो दूषितत्वाच्च। त्वन्मतेऽप्यायुर्वेदादिसपक्षसद्भावेन तस्यासाधारण्यम्। [तत्र सपक्षत्वं नेष्टमिति चेत्—स्यात् साधारण्यम्?] न हि तेभ्यो व्यावृत्तमपौरुषेयत्वादिलक्षणं वेदत्वं त्वयाऽभ्युपगम्यते। वेदशब्दप्रयोगविषयतामात्रेण तेषामपि पक्षीकारे स्वेच्छागृहीतरूपस्येश्वरस्य तत्तदवतारसंव्यवहारा वेदव्यतिरिक्ताः सन्त सपक्षाः न च ते त्वयापि नेष्यन्ते, वेदतया वा स्वीक्रियन्ते; गीतादिषु भगवदुक्त्यंशानां श्रीविष्णुस्मृतिप्रभृतीनां च वेदत्वानभ्युपगमात्। धर्मशास्त्रत्वेन हि वैष्णवस्मृत्यादिप्रसिद्धिः। अवकृकसन्दर्भा

---

एवम्=अन्वय्यनुमानवत्। सामान्यत इति। सर्वमपि केवलव्यतिरेकि नानुमानमिति केवलान्वयि—अन्वयव्यतिरेकिरूपभेदद्वयस्यैव तत्रोपपादितत्वादिति भावः ननु सति सपक्षे यो हेतुर्विपक्षव्यावृत्तस्सन् तद्व्यावृत्तोऽपि, तदेव लिंगं केवल व्यतिरेकितया नास्माभिरिष्टम्। सपक्षाभावे तु केवलव्यतिरेकिताऽस्तीति तदाशंकायां तन्मते स्थित्यैवाऽऽह त्वन्मतेऽपीति। आयुर्वेदेऽपि सर्वज्ञप्रणीतत्वं त्वदिष्टम्। अत एव मन्त्रायुर्वेदप्रामाण्यवत् वेदप्रामाण्यमाप्तप्रामाण्यादित्युक्तम्। तत्र सपक्षे वेदत्वहेत्वभावात् स्यादसाधारणहेत्वाभासता; न तु केवलव्यतिरेकिसद्धेतुतेति। एतदुपरितनेन नहीत्यादिवाक्येन वेदत्वस्याऽऽयुर्वेदसाधारण्यमेवोपपाद्यते; अतस्तदसाधारण्योपपादकं न भवति। हेतोः पक्षमात्रवर्तित्वस्य तदानीमभावात्। अतो मध्ये, "सपक्षत्वं नेष्टमिति चेत्—स्यात् साधारण्यम्" इति ग्रन्थः स्थितो भ्रष्टः स्यात् तदेव साधारणानैकान्तिकत्वमुपपादयति नहीति। अपौरुषेयत्वं चेत् वेदत्वम्, आयुर्वेदे न स्यात्। वेदशब्दव्यवहार्यत्वरूपं वेदत्वं तु तत्राप्यस्त्येवेति सर्वज्ञप्रणीतत्वाभाववति तत्र हेतुसत्त्वाद् व्यभिचारः। अथ तस्य विपक्षत्वमपि न सिद्धम्; वेद इव तत्रापि सर्वज्ञप्रणीतत्वमेव संप्रति साध्यते, वेदव्यवहारविषयत्वमेव हेतुरित्यत्राह वेदशब्देति। तर्हि पुनरसाधारण्यमेव; आयुर्वेदातिरिक्तसर्वज्ञप्रणीतगीतापाञ्चरात्रादिसद्भावादित्यर्थः।

अथ वेदत्वं शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम्। गौर्गच्छतीत्यादिलौकिकवाक्यवारणाय सत्यन्तम्। तत्र वेदरूपशब्द—तदुपजीविस्मृतिव्यतिरिक्त चक्षुरादिप्रमाणजन्यप्रमितिविषयभूतगोगमनाद्यर्थकत्वसत्त्वेन सत्यन्ताभावात्। विशेष्यदलेन स्मृतिव्यावृत्तिः। तस्याः श्रुतिरूपशब्दार्थज्ञानजन्यत्वात्। इदं च वेदत्वं तार्किकमीमांसकोभयसाधारणम्, तार्किकमतसाधारण्यायैव शब्दतदुपजीविप्रमाणाजन्यप्रमित्यविषयार्थकत्वे सतीति नोक्तम्। तन्मते ईश्वरीयप्रमितौ अजन्यायां वेदार्थस्य विषयत्वात्। प्रकृतरीतौ तस्याः प्रमाणजन्यत्वाभावाद् न क्षतिः। गीताविष्णुस्मृत्यादीनामीश्वरोक्तत्वेऽपि वेदोपबृंहणतया शब्दजन्यवाक्यार्थज्ञानाजन्यत्वं नेष्यते इति चेत्—सर्वज्ञप्रणीतत्वरूप साध्यवत्तया सपक्षे गीतादौ वेदत्वाभावात् त्वन्मते अस्यासाधारण्यमेवोपपादितं स्यादिति ॥ केवलव्यतिरेकिप्रामाण्ये च अस्माकमपि तदस्तीत्याह अवकृकेति। संदर्भः वाक्यानुपूर्वी।

वेदाः, वेदत्वात्; यः सकर्तृकसन्दर्भः, नासौ वेदः इति प्रतिहेतुश्च सिद्धः। अप्रसिद्ध विशेषणत्वादिचोद्यं त्विह न त्वया स्मर्तव्यम्॥ सन्दर्भः कथमवक्तृकः स्यादिति चेन्न, वर्णक्रमनियममात्रविशेषस्य सन्दर्भशब्देन ग्रहणात्, तस्य च प्रागुक्तनयेन यथापूर्वप्रवर्तन-मात्रेणापि व्यवस्थानात्॥

मा भूदवीतहेतुः; वीतस्तु स्यात्। विगीतं वाक्यं सर्वज्ञप्रणीतं प्रमाणत्वे सति अलौकिकार्थविषयवाक्यत्वात्, "न त्वेवाहं जातु नासम्" इत्यादिवाक्यवत् इति चेन्न, वेदार्थविषयैः कल्पसूत्रकारादिवाक्यैरस्मदादिवाक्यैरेव वाऽनैकान्त्यात्॥ अजीवकर्तृकत्वे सतीति विशेषयिष्याम इति चेन्न, तथापि यथापूर्वप्रणयनमात्रेणापि तत्प्रणीतत्वसिद्धौ सिद्धसाधनात्। यथापूर्वमेव हि विश्वमीश्वरः सृजति; यथा अधीमहे—"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति॥ एवं तर्हि तुल्ययोगक्षेमतया वेदवत् जगतोऽप्यकर्तृकत्वं प्रसक्तमिति चेन्न, यथापूर्वं घटादिनिर्माणे कुलालकुविन्दादेः कर्तृत्वसिद्धेः; हन्त! वेदस्य एवं स्यादिति चेत्, हन्त! स्यादेव। न ह्यत्र कल्पान्तरवर्णव्यक्तिसमुदायमेवेदानीन्तनवेदराशिं ब्रूमः, अपि तु तादृक्क्रमयोगितामात्रम्। वाक्येषु(सर्वत्र) हि यथेष्टक्रमकल्पने पुरुषस्य स्वातन्त्र्योक्तिः, न पुनर्यथापुरोच्चारणे इति काव्यादिष्वपि प्रसिद्धम्। यदि त्वया अयथापुरप्रणीतत्वं साध्येत, तत्र यथापुरप्रणयने कमिव दोषमालक्ष्यैवं विशेषयसि? मन्त्रादिषु क्रमभङ्गानुपपत्तिश्च कल्पान्तरेऽपि तच्छक्त्यनपायादेव। तथात्वेऽपि वा यथापूर्वोच्चारणेऽपि तदनपायात्, अन्यथा कल्पनागौरवात् इति॥

तथापि सर्गप्रलयसंभवात् संप्रदायविच्छेदे सर्ववेदोच्छेदात् पश्चादीश्वरस्तत्स्रष्टा स्यात्॥ न स्यात्, तथापि प्राचीनवेदसाक्षात्कारिणस्तस्य तत्प्रवर्तनमात्रौचित्यात्। शक्तस्यापि तज्जातीयवेदान्तरकल्पने गौरवात्। शक्तावपि सिद्धोपजीवनस्यास्मदादिषु दृष्टेः। एषामेव

---

न त्वयेति। त्वदनुमानेऽपि सर्वज्ञरूपविशेषणाप्रसिद्धेरिति भावः।

वीतः विशेषेणेतः अन्वयी। अवीतो व्यतिरेकी विगीतं विवादास्पदम, पक्षीभूतमित्यर्थः। मात्रेणापीति। तत्प्रणीतत्वं नाम समानानुपूर्वीक पूर्ववाक्यस्मरणरहिततत्पुरुषगतार्थज्ञानाधीनोच्चारणविषयत्वरूपमिति किमर्थं वक्तव्यम्। तदीयोच्चारणविषयत्वस्यैव वेदप्रचारं प्रति पर्याप्तत्वादिति भावः। विशिष्टमेव सिषाधयिषितं चेत्—हेतुरप्रयोजकः। इदं यदि त्वयेत्यादिना पश्चात् वक्ष्यति।

"प्रमायाः परतन्त्रत्वात् सर्गप्रलयसंभवात्" इति उदयनोक्ते प्रथमं परतः प्रामाण्यं प्रागेव निरस्तम्। "बुद्धिपूर्वा वाक्यकृतिर्वेदे" इति काणादसूत्रानुसारेण पञ्चमस्तबके तदुक्तवाक्यत्वादिहेतुनिरासः एतावता कृतः। अथ सर्गप्रलयसंभवात् वेदस्य प्रलये प्रनष्टत्वात् पुनः प्रणयनमावश्यकमिति शंका निरस्यति तथापीति।

च मन्त्राणां कल्पान्तरेऽपि मन्त्रत्वाविरोधात् । एवं मन्त्रनित्यत्वे च तुल्यन्यायतया ब्राह्मणनित्यत्वस्यापि दुस्त्यजत्वात्, तद्दृष्टान्तेन वा तन्नित्यत्वसाधनात् । सारस्वतपाठादावपि मन्त्रादिस्वरूपभेदाभवस्योक्तत्वात् । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।", "वाचा विरूप नित्यया", "पूर्वे पूर्वेभ्यो वच एतदूचुः" "अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयंभ्वभ्यानर्षत् । त ऋषयोऽभवन् । तदृषीणामृषित्वम्", "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा", "व्यस्य वेदं सनातनम्" इत्यादिभिरीश्वरस्याप्यनीश्वरवत् वेदप्रवर्तनमात्रसिद्धेः ।

कुतश्च सर्गप्रलयसिद्धिः ? विश्वसन्ततिरत्यन्तमुच्छिद्यते, सन्ततित्वात्, प्रदीपसन्ततिवत् । विश्वसन्तानोऽयं द्रव्यसन्तानहीनैः समवायिभिरारब्धः, सन्तानत्वात्, आरणेयाग्निसन्तानवत् । वर्तमानब्रह्माण्डपरमाणवः पूर्वमुत्पादितसजातीयसन्तानान्तराः, नित्यत्वे सति तदारम्भकत्वात्, प्रदीपपरमाणुवत् । पर्वता अपि चूर्णीभविष्यन्ति, अवयवित्वात्, घटवत् । समुद्रा अपि शोषमुपयास्यन्ति, जलाशयत्वात्, पल्वलवत् इत्याद्यनुमानतः इति चेन्न— केषांचिन्नित्यसंसारपक्षे प्रथमस्य हेतोस्तथा तत्प्रतिपादकैरागमैरंशतो बाधः, तद्बहिष्कारे च

---

मन्त्रत्वाविरोधादिति । यथाऽग्निहोत्रादिहोमत्वेन स्वर्गविशेषत्वेन च कार्यकारणभावात् कल्पान्तरेऽपि एकजातीयहोमस्य तादृशफलहेतुना—तथा अग्निर्ज्योतिरित्याद्यानुपूर्वीकमन्त्रत्वेन तस्य तद्धोमकरणत्वमिति प्रतीतकार्यकारणभावाविरोधेन पूर्वपूर्वकल्पेऽपि एतदानुपूर्वीकमन्त्रसद्भाव एव समुचितः ; अन्यथाऽपि अदृष्टोत्पत्तौ मानाभावात् आनुपूर्व्यन्तरकल्पनेन कार्यकारणभावभङ्गादिकं न युक्तमिति भावः । स्वयम्भु= अनन्याधीनं ब्रह्म=वेदः । अभ्यानर्षत्=उपस्थितमासीत् अनादिनिधना=आद्यन्तरहिता ॥

सृष्टिप्रलयौ श्रुतिपुराणादिसुप्रसिद्धतया वेदान्तिभिरिष्येते एव । उदयनाचार्यस्तु सर्गप्रलयौ अनुमानतः प्रसाध्य प्रलये नष्टतया वेदस्य सर्गारम्भे कर्त्रा केनचिद् भाव्यमितीश्वरं साधयति । एवमनुमानेन सर्गप्रलयसिद्धिर्न भवतीति तदुक्तानुमानदूषणायाऽऽरभते कुतश्चेति । साध्ये अत्यन्तपदानिवेशे सर्वदा किञ्चिदुच्छेदसद्भावात् सिद्धसाधनं स्यात् । अत्यन्तोच्छेदो नाम—सन्तत्यन्तर्गतकिञ्चिद्वस्त्वसमानकालिकोच्छेदः । द्रव्येति विशेषणं परमाणुरूपादव्यसंतानशून्यत्वायोगात् बाध इति दोषवारणाय । समवायिभिः समवायिकारणैः ; अवयवैरिति यावत् आरणेयः अरणिरूपकाष्ठजन्य. । पर्वताः ध्वंसिन इत्युक्तौ सिद्धसाधनम् । अनवरतं पर्वते अग्रमूलादौ क्वचित् सञ्चरिसिंहादिकृतशैथिल्यवशेन पूर्वपूर्वावयविनाशसद्भावात् । अतश्चूर्णीभावः साध्यते । प्रथमानुमानं दूषयति केषाञ्चिदिति । सर्वजीवमोक्षः कदाऽपि न भवति । 'क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु' इति सर्वदा केषाञ्चित् संसारवचनात् । तथाच संसारिसंततिः पक्षान्तर्गता चेत्, बाधः । पक्षानन्तर्गता चेत्—तत्र व्यभिचार इत्यर्थः । ननु जीवसंततेरत्यन्तो-

अनेकान्तः; सर्वेषां च श्रुतिशतसिद्धैर्नित्यविभूतिनिष्ठैरीश्वरनित्यविग्रहादिभिस्तैस्तैरनेकान्तः। न च तत्पक्षीकारः शक्यः; बाधासिद्ध्योरन्यतरापातात्। प्रतिप्रयोगाश्च गणितविशेषादिसिद्धद्विपरार्धसंख्यापूर्वोत्तरकालो न लोकशून्यः, कालत्वात्, अद्यतनकालवत् इत्यादयः स्वयमूह्याः॥ विपक्षे बाधकं न सम्यग् दृश्यते। यच्चागमानुग्रह एषां बलमित्यभिमतम्, तदागमप्रमाणत्वोपजीवनम्। तथाच आगमत एव प्रलयादिसिद्धिः। ततश्चागमादेवागमनित्यत्वं सिद्धम्।

उक्तं च प्रज्ञापरित्राणे—

"वेदतः पौरुषेयत्वशङ्का वेदेन शाम्यति। हेत्वन्तरसमुद्भूता हेत्वन्तरनिवारिता॥" इति।

सर्गादौ वेदपरिग्रहप्रकारश्चैवमुपपादितः—

"व्यवहारिजनाभावात् गिरां व्युत्पत्त्यसंभवात्। वेदार्थो नैव शक्येत बोद्धुं तस्येति चेत्; न तत्॥
बहवः संभवन्त्येव शब्दार्थव्यवहारिणः। मुक्ताद्या ईशितुर्यद्वा बहुरूपपरिग्रहात्॥
प्राच्यविज्ञानसंस्कारानुवृत्त्या वाऽस्य वेधसः। सर्वशब्दार्थविज्ञानं सुप्तोत्थितवदुद्भवेत्॥
न गर्भवासस्तेषां न वयोवस्थादयोपि च। सर्वविज्ञानसंपन्नाः सृष्टास्त इति वेदगीः॥
'यो ब्रह्माणम्' इति श्रुत्या सृष्ट्वा ब्रह्माणमीश्वरः। अस्मै वेदान् अदत्तेति प्रतीतिर्न उदेति हि॥
शब्दार्थवेदिने वेदप्रदानं सार्थकं भवेत्। अन्यथा व्यर्थमित्यर्थापत्त्या शब्दार्थवेदिता॥" इति॥

सूक्त(त्र).काण्ड.मन्त्रकृत्त्व.जन्मादिवाक्यानामपि प्रथमद्रष्टृत्व.स्मर्तृत्व.संप्रदायप्रवर्तनादिभिरेव निर्वाहः। इदमप्यागमानुरोधादेव सिद्धम्। "स्वयंभ्वभ्यानर्षत्" इत्यादि हि श्रूयते। प्रजापतिनियोगाच्च तदाहितमहिमानो महर्षयोऽनधीतानेव वेदभागान् पश्यन्ति। तन्नियोगश्च तत्तदृषिकत्वेनानुसन्धानादेः कर्मौपयिकत्वात्। तेषामपि प्रवाहानादित्वान्नानित्यसंयोगादिदोषः। "यद्वै किंच मनुरवदत्" इत्यादौ प्रवाहानादित्वं परैरुक्तम्; तत् उपाख्यानान्तरादिष्वपि तुल्यम्। उक्तं च भगवता व्यासेन—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा॥" इति॥

इतिहासोऽत्र तत्तद्वृत्तान्तः। उक्तं च तेनैव धर्मशास्त्रेऽपि—

"धर्ममूलं वेदमाहुर्ग्रन्थराशिमकृत्रिमम्। तद्विदां स्मृतिशीले च साध्वाचारं मनःप्रियम्॥" इति।

शाखाप्रणयनं च द्वापरान्ते भाविपुरुषशक्तिपरिक्षयात् (भाविपुरुषाशक्तिपरीक्षया) वेदवृक्षैकदेशोद्धरणम्।

एतेन समाख्या निर्व्यूढा, प्रवचनविषयत्वात्॥

---

च्छेदो नाम देहेन्द्रियसंघातराहित्यम्—तत् प्रलये इष्यत एवेत्यत्र दोषान्तरमाह **सर्वेषां चेति**।

शास्त्रयोन्यधिकरणश्रीभाष्योक्तमाह **प्रतिप्रयोगाश्चेति**। **श्रुत्येत्यस्य** प्रतीतिरस्माकमुदेतीत्यन्वयः।

**अदत्त**=दत्तवान्। **सूक्तेति** पठनीयम्; न तु **सूत्रेति**। नन्वितिहासस्य स्मृतित्वेन पौरुषेयत्वात् कथमन्तर्हितत्वोक्तिः; तत्राह **तत्तद्वृत्तान्त** इति। वैदिक वाक्यनिवहनिविष्ट इत्यर्थः। **समाख्या निर्व्यूढा**।

इदं च सर्वं प्रसाधितं प्रज्ञापरित्राणे—

"यादृक्प्रभावाः श्रूयन्ते ऋष्याद्या वेदराशिषु। तादृशा एव सृज्यन्ते वेदान् दृष्ट्वा स्वयंभुवा ॥
अतस्तेभ्यः पुरा वेदसत्त्वाद् वेदस्य नित्यता। अनधीत्यैव वेदानामाविर्भाव यतृत्वतः ॥
तपसा प्राप्य संस्कारात् तत्सूक्तत्वादिसंभवः। तपःप्रभावान्मन्त्राणामृषिदर्शनसंस्कृतेः ॥
शक्तिराधीयते काचित् यथाऽस्माकमधीतितः। अर्थावबोधकत्वं तु शब्दशक्त्याऽन्यशब्दवत् ॥
ऋषिदर्शनतोऽधीतेरपि शक्त्यन्तरोद्भवः। अपूर्वकार्यनिष्पत्तावुपकुर्यादिदं ततः ॥
काठकादिसमाख्याया निमित्तं चेदमेव वा। प्रकृष्टं वा प्र(वाऽस्तु?)वचनं तत्सिद्धा वेदनित्यता" इति ॥

वर्णानित्यत्वं क्रमानित्यतावत् नाभिमतवेदनित्यत्वविरोधि। न च वर्णनित्यत्वं वेदनित्यत्वहेतुः, काव्यादिष्वपि तुल्यत्वात्। शब्दाधिकरणं चानुपयुक्तवर्णानित्यत्वपरं नानुमन्यामहे। शारीरकदेवताधिकरणे च—"शब्द इति चेन्न, अतः प्रभवात् प्रत्यक्षानुमानाभ्याम्। अत एव च नित्यत्वम्। समाननामरूपत्वाच्च, आवृत्तावप्यविरोधो दर्शनात् स्मृतेश्च" इति सूत्रैरिदं सर्वं समर्थितम् ॥

**वेदार्थसङ्ग्रहे** तु—"वेदाः प्रमाणं चेत्, विध्यर्थवादमन्त्रगतं सर्वमपूर्वमर्थजातं यथावस्थितमेव बोधयन्ति। प्रामाण्यं च वेदानाम्, 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इत्युक्तम्" इति मन्त्रार्थवादयोरपि याथार्थ्यं प्रक्रम्य, शब्दशक्तेरसाङ्केतिकत्वम्, तत एव शब्दानुमानविवेकः पौरुषेयापौरुषेयादिविभागादिकं च व्यक्तं प्रदर्शितम्। तथा हि—यथा अग्निजलादीनामौष्ण्यादिशक्तियोगः स्वाभाविकः; यथा चक्षुरादीनामिन्द्रियाणां बुद्धिजनकत्वशक्तिः स्वाभाविकी, तथा शब्दस्यापि बोधकत्वशक्तिः स्वाभाविकी। न च हस्तचेष्टादिवत् सङ्केतमूलं शब्दस्य बोधकत्वमिति वक्तुं युक्तम्, अनाद्यनुसन्धानाविच्छेदेऽपि सङ्केतयितृपुरुषाज्ञानात्। यानि सङ्केतमूलानि, तानि सर्वाणि साक्षाद्वा परम्परया वा विज्ञायन्ते। न च देवदत्तादिशब्दवत् कल्पयितुं युक्तम्; तेषु साक्षाद्वा परम्परया वा संकेतो ज्ञायते; गवादिशब्दानां तु अनाद्यनुसन्धानाविच्छेदेऽपि संकेताज्ञानादेव बोधकत्वशक्तिः स्वाभाविकी। अग्न्यादीनामौष्ण्यादिशक्तिवत् इन्द्रियाणां बोधकत्वशक्तिवच्च शब्दस्यापि बोधकत्वशक्तिरवश्याश्रयणीया ॥

ननु च इन्द्रियवच्छब्दस्यापि बोधकत्वं स्वाभाविकं चेत्, संबन्धग्रहं बोधकत्वाय किमित्यपेक्षते ॥

---

काठकादिसमाख्यानिर्वाहोऽपि सिद्ध इत्यर्थः। तत्र 'अधिकृत्य कृते ग्रन्थे' इति सूत्रात् कठेन कृतमित्यर्थवर्णनमयुक्तम्। वैयाकरणव्याख्याविरोधात्। अधिकृत्येतदुपेक्ष्यम्। 'कृते ग्रन्थे' इति सूत्रान्तरमादायैव पूर्वपक्षः कार्यः। वेदनित्यत्वश्रुत्यविरोधाय तेन प्रोक्तमिति सूत्रमेव ग्राह्यम्। तदापि कठेत्यादिविशेषनिर्देशे हेत्वनपायादिति भावः। **यथास्माकमधीतित** इति। अध्ययनं विना स्वयंपठनादिगृहीतो हि वेदः अध्ययनजन्यसंस्काररूपसहकार्यभावात् न फलप्रदानुष्ठानहेतुरिति। **इदमेव वा**=कठादिदृष्टत्वं वा। **अभिमतवेदनित्यत्वं**=प्रवहतोनित्यत्वम्।

लिङ्गवदित्युच्यते ; यथा ज्ञातसंबन्धनियमं धूमादि अग्न्यादिबुद्धिजनकम्, तथा ज्ञात संबन्धनियमः शब्दोऽप्यर्थविशेषबुद्धिजनकः ॥ एवं तर्हि शब्दोऽप्यर्थविशेषस्य लिङ्गमित्यनुमानमेव स्यात् ॥ मैवम् ; शब्दार्थयोः संबन्धो बोध्यबोधकभाव एव । धूमादीनां तु संबन्धान्तरमिति, तस्य (तस्तस्य?) संबन्धस्य ज्ञानद्वारेण बुद्धिजनकत्वमिति विशेषः । एवं गृहीतसंबन्धस्य बोधकत्वदर्शनादनाद्यनुसंधानविच्छेदेऽपि सङ्केताज्ञानात् बोधकत्वं शक्तिरेवेति निश्चीयते ॥

एवं बोधकानां पदसंघातानां संसर्गविशेषबोधकत्वेन वाक्यशब्दाभिधेयानामुच्चारणक्रमो यत्र पुरुषबुद्धिपूर्वकः, ते पौरुषेयाः शब्दाः इत्युच्यन्ते । यत्र तूच्चारणक्रमः पूर्वपूर्वोच्चारणक्रमजनितसंस्कारपूर्वकः सर्वदा, अपौरुषेयास्ते वेदाः इत्युच्यन्ते । एतदेव वेदानामपौरुषेयत्वं नित्यत्वं च, यत् पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्य[माण]त्वम् । तेनानुपूर्वीविशेषेण संस्थिता अक्षरराशयो वेदा ऋग्यजुःसामाथर्वभेदेन भिन्नाः अनन्तशाखा वर्तन्ते" इति ॥ अत्राङ्गिरसानुक्तिरथर्वानुप्रवेशविवक्षया । एवं त्रिवेदीव्यपदेशेऽपि विवक्षाभेदो ग्राह्यः ॥

सर्वोऽप्यसौ पुनर्मन्त्रार्थवादादिरूपेण त्रिविधः । तत्र प्रामाणिकमन्त्रव्यवहारविषयो मन्त्रः । स चानुष्ठेयार्थप्रकाशनादिनोपकारोति । न चेदमेव तल्लक्षणम्, "वसन्ताय" इत्येवमाद्यव्याप्तेः । "वसन्ताय कपिञ्जलानालभेत" इत्यादयस्तु मन्त्रा अपि विधिपरा एव मीमांसिताः । स च मन्त्रः क्रियमाणानुवादि. स्तोत्र. शस्त्र. जप्यादिभेदभिन्नः । पैशाचमागधादितत्तद्भाषामन्त्राणां फलप्रदत्वे तत्तद्बीजजात्यादिकं निदानम् ।

---

शब्दानुमानविवेकमुपपादयितुमाह **एवं तर्हीति** । **विवक्षाभेदः** ऋग्यजुस्सामशब्दाः मन्त्रविशेषेषु रूढाः । चतुर्ष्वपि वेदेषु त्रिविधमन्त्राणामेव सत्त्वात् वेदसामान्यं त्रयीत्युच्यत इति भावः ।

एकैकमपि वेदं त्रेधा विभजते **सर्वोऽपीति** । **आदिना** विधिवाक्यग्रहणम् । कर्मभाग इवोपनिषद्भागेऽपि यथायथं मन्त्रार्थवादविधयः सन्ति । विधिवाक्यैकवाक्यतानापन्नानां तत्त्वपराणामप्यर्थवादत्वेन गणनान्नासंग्रहः । अनुष्ठेयार्थ प्रकाशनं बर्हिर्देवसदनं दामि इत्यादौ ; बर्हिर्लवनरूपार्थप्रकाशनात् । प्रकाशन प्रायः शक्त्या; क्वचित् वृत्त्यन्तरेणापि । **आदिना** अर्थाप्रकाशनेऽपि ऋगक्षराभिव्यञ्जनात् साम्न उपकारकत्वं गृह्यते । तस्याप्यभावे त्वदृष्टविधया । अत एवानुगतधर्मत्वाभावान्नेदं लक्षणम् । मन्त्राभावे ब्राह्मणवाक्यस्यापि स्मारकत्वस्येष्टत्वे तत्रातिव्याप्तिश्च । विधिभिन्नत्वे सतीति निवेशे तु वसन्तायेति मन्त्रेऽव्याप्तिः ; विधित्वस्यापि तत्रेष्टत्वात् । अतो मन्त्रशब्दकर्मकाभियुक्तव्यवहारविषयत्वं मन्त्रत्वम् । आद्यं मन्त्रमनेकविधं दर्शयति **स इति** । क्रियमाणार्थस्य विधिज्ञातस्यानुवादभूतः करणमन्त्रः । कृतानुस्मरणमन्त्रोऽप्यस्ति । **स्तोत्रं** प्रगीतस्सन् गुणिनिष्ठगुणाभिधायको मन्त्रः । शस्त्रमप्रगीतत्वे सति गुणाभिधायकमन्त्रः । **आदिना** विधायकस्य ग्रहणम् । असंस्कृतमन्त्राणां फलप्रदत्वमुपपादयति **पैशाचेति** । **तत्तदिति** । अपभ्रंशानां फलप्रदत्वाभावेऽपि संस्कृत बीजाक्षरघटनात् फलमित्यर्थः । **जातीति** । तत्तद्वर्णविशेषेत्यर्थः ।

[अ?]श्रद्धेयदेवतानामाङ्कमात्रं तु न तदक्षरशक्तिप्रतिबन्धकम् ; क्षिप्रक्षुद्रफलप्रकाशनेन विप्रलम्भार्थं तथैवेश्वरादिभिः सृष्टम् । गरुडादिनामाङ्कभाषामन्त्रेषु तु तत्तद्देवतास्मृत्युपकारकत्वमप्यस्ति । एतेन मन्त्रव्याकरणं निर्व्यूढम् । ये तु सप्तकोटयो महामन्त्राः इत्याप्तशास्त्रप्रतिष्ठिताः, ते तु प्रणवयोगायोगादिभिर्वैदिकाः तान्त्रिकाः इति विभज्यन्ते । तत्र शूद्राधिकारत्वसिद्ध्यर्थं तान्त्रिकपरिभाषा; न पुनरवैदिकतया, श्रौतस्मार्तादिभेदव्यपदेशवत् प्रमाणसिद्धत्वाविशेषात् । सर्वेषां च मन्त्राणां सद्वारकमद्वारकं च परमात्मैव प्रतिपाद्यः फलप्रदश्च सद्वारकेषु तावत् विनियोगभेदाद् बहुधा ब्रह्मणि पर्यवसानम् ।

श्लो. तत्तद्देवशरीरत्वात् तत्तदंशतया स्थितेः । ऐन्द्र्यादिन्यायतश्चैषां सर्वेषामीश्वरे स्थितिः ॥

विध्यधीनप्रवृत्त्युत्तम्भकवाक्यविशेषो (?)ह्यर्थवादः । सोऽपि प्रत्यक्षाद्यविरुद्धे स्वार्थे प्रमाणम् , स्वतः—प्रामाण्यस्यानपायात् । यत्र विरोधधीः, तत्राप्यविरुद्धार्थोपचारेण तत्प्रामाण्यम् । स च क्वचिद् विध्येकवाक्यतया प्रमाणीभवतीत्यर्थवादाधिकरणादिषु स्थापितम् । स्वतःप्रयोजनभूतार्थविशेषविषयस्तु स्वतन्त्रतयापि

---

**श्रद्धेयेत्यत्र अश्रद्धेयेति** स्यात् । वेदासंमतबाह्यागममात्रकल्पितदेवानां गीतासप्तदशाध्यायोक्तरीत्या राजसतामसश्रद्धाविषयत्वस्याप्यसंभवात् । प्रापकवाक्यप्रामाण्यज्ञानाधीनकार्यविषयत्वरा हि श्रद्धा । **देवतास्मृतीति** । तत्तद्देवतायाः वास्तवत्वात् तद्द्वारा फलसिद्धिः । **निर्व्यूढम्** । नवीनतया मन्त्रा निर्मातुमपि शक्यन्त इति भावः । **अप्तशास्त्रेति** । शैवग्रन्थे केषाञ्चिन्महामन्त्रत्वेन ग्रहणमविश्वसनीयमिति भावः । **तान्त्रिकेति** । सर्वस्यापि वेदमूलकत्वात् वैदिकत्वे सत्येव, तन्त्रदर्शितत्वस्यापि सत्त्वात् तान्त्रिकेति व्यवहारः ; स्मार्तवत् मीमांसकादिभिस्तत्तद्देवतामात्रबोधनेऽपि तद्विशिष्टपरमात्मपर्यन्तमुपनिषद्वेदिनाऽवगन्तव्यमित्यर्थः । **अद्वारकम्** साक्षाद्व्युत्पत्त्या । **विनियोगभेदादिति** । एक एव मन्त्रः नानाकर्मसु विनियुज्यते ; तत्र यथायथमर्थभेदः । तत्र तदर्थविशिष्टब्रह्मपर्यन्तता त्वविशिष्टा । एवमिदं ब्रह्मणि पर्यवसानं क्वचित् तत्तद्देवताशरीरक इत्यर्थविवक्षया ; क्वचिदंशावतारे तत्तत्पुरुषस्थितांशरूप इत्यर्थे ; कदाचनस्तरीरसीति मन्त्रस्येन्द्रप्रतिपादकस्य गार्हपत्येऽग्नौ, 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति विनियोगात् योगेन गौण्यादिना वा गार्हपत्यपरत्वं वक्तव्यमिति अमुख्यतदर्थान्तर्गमित्वविवक्षया वेति भाव्यम् । यथ श्रुतानन्वये सिंहो देवदत्त इत्यादिलौकिकवाक्य इवामुख्यार्थग्रहणं मन्त्रेऽपि । द्वितीयमर्थवादं लक्षयति **विध्यधीनेति** । **प्रवृत्त्युत्तम्भकेति** । विधिबलादेवेष्टसाधनत्वोन्नयनाज्जाता प्रवृत्तिः आयासवित्तव्ययादिचिन्तामूलद्वेषवशात् प्रतिबद्धा सती विशिष्य प्राशस्त्यबोधनेनोत्तेजनात् पुनराविर्भाव्यत इति भावः । अर्थवादस्य लक्ष्ये प्राशस्त्ये तात्पर्यात् वाच्यार्थे प्रामाण्यं नेति मीमांसकाः वाच्यस्य लक्ष्यस्य वा कस्यचिदर्थस्यावगतस्य अबाधितस्यासत्त्वे प्राशस्त्यकल्पनद्वाराभावात् तदेव न सिध्येत् ; स्वतःप्रामाण्याच्च तदुपेक्षणमयुक्तमित्याशयेनाह **सोऽपीति** सोऽरोदीत्, यदश्रु अशीर्यत तद् रजतमभवदिति वाक्येऽपि न यथाश्रुतार्थत्यागः शुक्तौ तोयस्य मुक्तात्ववत् अग्न्यश्रुणो रजतविवर्तसंभवात् । **क्वचित्** विधिवाक्यसंनिहितार्थवादस्थले । अधि-

प्रामाण्यं प्राप्नोतीति समन्वयसूत्रसिद्धम्। तत्प्राप्त्यभिलाषे तु तदुपायवाक्यप्रवृत्तिः। स चतुर्धा—निन्दाप्रशंसापरकृतिपुराकल्पभेदात्। निषेधादिशेषभूतो निषेध्यादिदोषवादोऽत्र निन्दा। विध्यादिशेषभूतो विधेयादिगुणवादः प्रशंसा। एकानुबन्धी कथाविशेषः परकृतिः। अनेकानुबन्धी तु पुराकल्पः॥

हितानुशासनरूपं वाक्यमिह विधिः। स च बहुविधः—नित्यनैमित्तिककाम्यसंवलितविधिनिषेधादिभेदात्। नियमपरिसंख्ये अपि विधिभेदावेव। तत्रैव विवेकः—

श्लो. अप्राप्तस्य विधौ प्राप्तिर्नियमे प्राप्तपूरणम्। बाधस्तु परिसंख्यायां प्राप्तस्यैवैकदेशतः॥

अथात्र को नाम लिङादिप्रत्ययार्थः? न तावदपूर्वम्, तस्मिन् प्रमाणान्तरागोचरे व्युत्पत्त्ययोगात्, तद्गोचरत्वे तु अपूर्वत्वव्याघातात्, लिङादिबोधिते व्युत्पत्ताववितरेतराश्रयप्रसङ्गात्॥ विमर्शतः सिद्धि

---

करणादिषु इति आदिपदेन हेतुवन्निगदाधिकरणरात्रिसत्राधिकरणादिपरिग्रहः। औपनिषदानां परब्रह्मप्रतिपादकानां वाक्यानां प्रामाण्यमाह स्वत प्रयोजनेति। अत्यन्तवत्सलनिरुपधिकस्वामिभूतपरमभोग्यपुरुषसद्भावज्ञानमेव परमं प्रयोजनम्। भक्तिप्रभृतिविधिसार्थक्यं समन्वयाधिकरणे भाष्यकृद्दर्शितमाह तत्प्राप्तीति।

हितेति। कर्तव्येत्यर्थः। संवलितेति। 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जात' इत्यत्र पुत्रजननं पुत्रगतपूतत्वादिफलापेक्षासंवलितमधिकारापादकम्। निषेधेति। न कलञ्जं भक्षयेदित्यादिनिषेधस्यापि निवृत्तिविधायकत्वात् विधित्वम्। उत्पत्तिविधि अधिकारविधि विनियोगविधि प्रयोगविधिरूपविधिभेदोऽप्युपलक्ष्यः। विधिस्त्रिविधः अपूर्वविधिनियमविधिपरिसंख्याविधिभेदात्। 'विधिरत्यन्तमप्राप्ते, नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते' इति मीमांसकोक्तमाह नियमेति। व्रीहीनवहन्तीत्यत्र तुषविमोकार्थं अवहननवत् अश्मकुट्टनादेरपि कदाचित् प्राप्तौ तत्राप्यवहननस्यैव प्रापणरूपनियमार्थो विधिः। पञ्चपञ्चनखा भक्ष्याः इति श्रीमद्रामायणवाक्यम्, शशकः श्वाविधो गोधा खड्गः कूर्मश्च पञ्चमः इति तत्रोक्तपञ्चनखाश्चकेन पञ्चातिरिक्तरवानरादिपञ्चनखस्यापि भक्षणे समुच्चयप्राप्तौ तन्निवारणरूपपरिसंख्यानार्थमेति परिसंख्याविधिः। नियमस्थले इतरपरिसंख्या आर्थिकी; इह परिसंख्यैव वाक्यार्थ इति भेदः।

विधिवाक्ये विधीति व्यवहारस्य तद्घटकलिङ्लोडादिप्रत्ययार्थस्य विधित्वमेव निबन्धनम्। तं तं प्रत्ययार्थमेव विवेक्तुमारभते अथेति। प्राभाकरपक्षं निरस्यति न तावदिति। तावदिति प्राथम्ये। पक्षान्तरं पश्चान्निरसिष्यते। अपूर्वं नाम यागादिजन्यस्वर्गादिहेतुरदृष्टम्। तत्र किमादावेव लिङादेर्व्युत्पत्तिः, उतान्यत्र व्युत्पत्तौ तस्य प्रकृते बाधादेतत्कल्पना। नाद्य इत्याह तस्मिन्निति। अन्त्यं निरसिष्यति क्रियाकार्ये इति। यजेतेत्यादिलिङ्घटितवाक्यार्थे ज्ञाते यागस्य स्वर्गसाधनत्वमितोऽवगतं मध्ये यागजन्यं किञ्चिदन्तरा न भवतीति कल्पनीयमदृष्टम्। तदेव तत=प्रागज्ञातत्वादपूर्वमित्युच्यते। एवञ्च पूर्वमप्रतिपन्ने तत्र कथं प्रथमतो व्युत्पत्तिरित्यर्थः। तद्गोचरत्वे प्रमाणान्तरविषयत्वे।

स्यादिति चेन्न ; विमर्शस्य स्मृत्यनुभवातिरिक्तस्यानभ्युपगमात्, क्रियाकार्ये व्युत्पन्नस्य चान्वयायोग्यतायामपि लक्षणादिभिरेव निर्वाह्यत्वात् अभिधानान्यथाकरणायोगात् ।

प्रथमव्युत्पत्तेरपि सर्वत्र कार्य एवेति नियमाभावात् ।

यथा—गामानयेत्यादिप्रयोजकवृद्धवाक्यश्रवणसमनन्तरं गवानयने प्रवृत्तं पुरुषमालोक्य पार्श्वस्थो व्युत्पित्सुः, चेतनप्रवृत्तेः कार्यताबुद्धिपूर्वकत्वात्, प्रयोज्यवृद्धकार्यताबुद्धेश्च कारणान्तरादर्शनात्, यदनन्तरं यत् दृश्यते तत् तस्य कारणमिति, प्रयोजकवृद्धवाक्यमेव प्रयोज्यवृद्धकार्यताबुद्धेः कारणमित्यध्यवस्यति—

तथा कस्यचित् 'पुत्रस्ते जातः' इति केनचिदुक्ते, प्रतिपन्नपुत्रोत्पत्तिस्तस्य प्रियत्वं च जानन् व्युत्पित्सुः पुत्रजन्मवाक्यश्राविणः पुरुषस्य मुखविकासमालोक्य तस्य प्रियार्थप्रतिपत्तिनिमित्तत्वानुमानात् तत्प्रीतेश्च कारणान्तरादर्शनात् पुत्रजन्मवाक्यमेव कारणं कल्पयति । न च पुत्रजन्मनः प्रियत्वं बालेनाज्ञातमिति वाच्यम्, प्रज्ञातपुत्रजन्मनस्तस्य प्रौढस्य भाषान्तर[वत्]प्रथमव्युत्पत्तावेवं संभवात् । नोदाहरणमादरणीयमिति च न्यायविदः ; ततश्च ये बालानां प्रियत्वेन संप्रतिपन्ना भक्ष्यभोज्यादयः, तद्दर्शी व्युत्पित्सुस्तत्संगतिश्राविणः पुरुषस्य मुखविकासदर्शनादिप्रक्रियया व्युत्पद्यत इति किं नोपपद्यते ॥

---

इतरेतरेति । लिङ्गापूर्वं बोध्यते । एवं ज्ञातापूर्वविषये लिङो व्युत्पत्तिरित्युक्तौ बोधस्य व्युत्पत्त्यधीनत्वादन्योन्याश्रय । स्मृतीति । विमर्शः संशयो वाऽनुमानं वा । संशयस्य कोटिद्वयस्मरणात्मकत्वात् स्मृतित्वमेव । न प्रमाणता । अनुमानं चेत्, अपूर्वानुमानं यजेतेति वाक्यार्थज्ञानाधीनम्, वाक्यार्थज्ञानं च लिङर्थज्ञानादिति । ननु लौकिकवाक्यादेव व्युत्पत्तिः, लोके च नापूर्वम् । अतो गामानयेति लोके गवानयनादिक्रिया कार्यत्वेन बुद्धा । अतः क्रियाकार्ये व्युत्पत्तिः । यजेतेत्यादौ तत्प्रतीतौ क्रियायां कार्यत्वं बाधितम्, तस्याः क्षणध्वंसितया स्वर्गाद्यहेतुतया कार्यत्वासंभवात् । अतोऽपूर्वं कार्यत्वेन ग्राह्यमिति चेत्—तर्हि अपूर्वे लक्षणेत्युक्तं भवेत् । नापूर्वस्य वाच्यता । अपूर्वद्वारा कार्यत्वस्य यागेऽपि संभवात् न लक्षणाऽपि ॥ साक्षात् स्वर्गहेतुरेव कार्यमिति चेत्—तदपूर्वं फलापूर्वं वा उत्पत्त्यपूर्वं वा । नाद्यः, तस्य साक्षात् यागाजन्यतया द्वारत्वायोगात् । नान्त्यः, तस्य साक्षात् फलाहेतुत्वात् ॥ गवानयनादिकं दोहनद्वारैव क्षीरप्राप्तिहेतुरिति परम्परया हेतोरपि कार्यत्वं भवेदिति चेत्—तर्हि यागक्रियायां कार्यत्वमबाधितं परम्परया स्वर्गसाधनत्वञ्च । अतः कार्यरूपार्थवाचित्वत्यागो न युक्तः । अत एवेदमपि निरस्तम्—यत् प्रथमतः क्रियारूप कार्ये व्युत्पत्तौ, वेदे क्रियारूपकार्यायोगेनापूर्वेऽर्थे स्वीकृते वेदस्य प्रधानशब्दप्रमाणतया अपूर्व एव शक्तिर्लिङादेः, पदान्तराणाञ्चापूर्वान्विते । लोके तदभावात् सर्वत्र क्रियाकार्ये तदन्विते च लक्षणेति । व्युत्पत्तिभंगे मानाभावात् ।

अथ प्रथमतः कार्यविषय एव व्युत्पत्तिरिह इत्यप्ययुक्तमित्याह प्रथमव्युत्पत्तेरपीति ।

भाट्टोक्तपुत्रजन्मवाक्यस्योदाहरणत्वाभावेऽप्यन्यदनेकमस्तीत्याह नोदाहरणमिति ।

प्रियान्तरस्मृत्यादिभिरपि मुखे विकासः संभवतीति चेत्, तथैव स्वयं तदधीनप्रयोजनान्तरस्मरणादिनापि गवानयनकर्तव्यताबोधः संभवेत् ॥ आसत्तिविशेषवशादनेकप्रयोगानुगतेश्च व्यवस्थेति चेत्, तुल्यम् ॥ तथापि तत्तत्प्रियानुबन्धिसुलग्नजन्म—सुखप्रसव—स्वादुवाक्त्वादिहर्षहेत्वर्थान्तरसंभावनया विशेषो दुर्निश्चयः इति चेन्न; गवानयनेऽपि वत्ससंयोजन-क्षीरसंपादनादिकर्तव्यताबोधकेऽपि वाक्ये तदर्थगवानयनसंभवाद् गामानयेत्यादिवाक्यं गवानयनकर्तव्यतैकबोधकमिति कथं निश्चिनुयात् ॥ अन्वयव्यतिरेकमहिमवशाद् दृष्टानुग्रहाच्चेति चेत्, तुल्यम् ।

तदेवं पुत्रजन्मवाक्योदाहरणसमीकारस्य मन्दमतीनां दुरारोहत्वात् तदुपेक्षणेन स्पष्टतरव्युत्पत्तिप्रकारो यादृच्छिको बुद्धिपूर्वश्च भाष्यकारैर्दर्शितः; तदत्र लिख्यते—"एवं किल बालाः शब्दार्थसंबन्धमवधारयन्ति; मातापितृप्रभृतिभिरम्बातातमातुलादीन् शशि-पशुनरमृगपक्षिसरीसृपादींश्च, एनमवेहि, इमं चावधारय इत्यभिप्रायेणाङ्गुल्या निर्दिश्य-निर्दिश्य तैस्तैः शब्दैस्तेषुतेषु बहुशः शिक्षिताः, शनैःशनैस्तैरेव शब्दैस्तेषुतेष्वर्थेषु स्वात्मनां बुद्ध्युत्पत्तिं दृष्ट्वा, शब्दार्थयोः संबन्धान्तरादर्शनात् सङ्केतयितृपुरुषाज्ञानाच्च ते-ष्वर्थेषु तेषां शब्दानां प्रयोगो बोधकत्वनिबन्धन इति निश्चिन्वन्ति । पुनश्च व्युत्पन्नेतर-शब्देषु अस्य शब्दस्यायमर्थ इति पूर्ववृद्धैः शिक्षिताः सर्वशब्दानामर्थमवगम्य परप्रत्यायनाय तत्तदर्थावबोधि वाक्यजातं प्रयुञ्जते ॥ प्रकारान्तरेणापि शब्दार्थसंबन्धावधारणं सुशकम्—केनचित् पुरुषेण हस्तचेष्टादिना 'पिता ते सुखमास्ते इति देवदत्ताय ज्ञापय' इति प्रेषितः कश्चित् तज्ज्ञापने प्रवृत्तः, 'पिता ते सुखमास्ते' इति शब्दं प्रयुङ्क्ते; पार्श्वस्थोऽन्यो व्युत्पित्सुर्मूकवच्चेष्टाविशेषज्ञः तज्ज्ञापने प्रवृत्तमिमं ज्ञात्वाऽनुगतः तज्ज्ञापनाय प्रयुक्तमिमं शब्दं श्रुत्वा, अयं शब्दस्तदर्थबुद्धिहेतुरिति निश्चिनोति—इति कार्यार्थ एव व्युत्पत्तिरिति निर्बन्धो निर्निबन्धनः" इति ॥ अत्र पिता ते सुखमास्त इति वाक्यस्य स्थाने, "अपवरके दण्डः स्थितः" इत्युदाहरणान्तरमात्रमन्यत्रोक्तम् । अतः सिद्धा सिद्धेऽप्याद्यव्युत्पत्तिः ।

भवतु वा प्रथमव्युत्पत्तिः कार्य एव; तथापि प्रयोगान्वयव्यतिरेकवशादेव शब्द-शक्तिर्विवेचनीया । प्रयुज्यन्ते च सिद्धपरा एवाविवक्षितकर्तव्यैः शब्दाः; यथा—कोऽसौ

---

यादृच्छिक इति । अम्बातातेति शिशुव्युत्पादनप्रकारः शिक्षकैर्बुद्धिपूर्वं क्रियमाणतया बुद्धिपूर्वकः । पिता ते सुखमास्ते इति प्रयोक्तुः तत्रत्यपुरुषभाषाशिक्षणाभिसंध्यभावात् स यादृच्छिक इत्येव प्रायो व्यवह्रियते । तदाऽत्र क्रमाविवक्षा । अथवाऽत्रायमाशयोऽस्तु—व्युत्पद्यमानस्य तद्विषयकेच्छाविरहेऽपि जायमानो यादृच्छिकः, यथा शिशूनाम् । बुद्धिपूर्वकः=एतद्व्युत्पत्तिर्मे इष्टसाधनमिति ज्ञानाधीनेच्छासाधित इति । शब्दार्थसंबन्धग्रहणमेव व्युत्पत्तिः ।

राजा ? कौरवः । कौतुकमात्रादेव ह्यत्र प्रश्नः ; प्रतिवचनं च तदनुविधाय्येव । अतो यथा पदानां प्रातिस्विकी शक्तिः सिद्धे कार्येऽपीति यथासंभवं निष्कृष्यते, तथा तात्पर्यमपि यथा-योगमेव । व्युत्पत्त्युपायत्वेपि च कार्यस्य सर्वशब्दतात्पर्यविषयत्वायुक्तेः ।

कार्यवाक्येऽपि प्रवर्तकत्वादिलक्षणं च प्राधान्यमपूर्वस्य मृग्यम्, सुखदुःखाभावाभ्या-मतिरिक्तस्य स्वतः स्वस्मिन् प्रवर्तकत्वायोगात्, व्युत्पत्तिदशायामप्यसुखरूपस्याऽऽनयनादेरन्य-शेषतयैव प्रवृत्तिविषयशेषत्वावगमात् । अतः सुखे दुःखनिवृत्तौ वा साक्षात् कार्यत्वबोधः ; तदर्थतया तत्साधने । अपेक्षितत्वेन च साधनवत् साधनसाधनेऽपि कार्यताबोधोपपत्तिः । न च सुखादित्वमपूर्वस्य ; न च तत्साधनतया तत्प्रवर्तकत्वमभ्युपगतम् । अभ्युपगमेपि लौकिकसेव्यप्रीत्येव देवताप्रीत्यैव श्रुत्यादिसिद्धया कालान्तरभाविफलसिद्धौ लिङ्वाच्यतया स्वरूपेण वा तत्कल्पनायोगात् । रात्रिसत्रादिनयाच्च । प्रतिष्ठा-देशविशेषशतयातनासाधनत्व-घृताञ्जनच्छागादिपरिग्रहवत् विध्यपेक्षितं प्रतीतं च देवताप्रीत्यात्मकमेवापूर्वं लिङ्वाच्यतया स्वरूपेण वा द्वारमुपकल्प्यताम् ; किमन्येन ? ॥

---

कार्ये प्रथमं व्युत्पत्तावपि सर्वस्य वाक्यस्य कार्यतात्पर्यकत्वं नेत्युक्तम् । कार्यतात्पर्यकवाक्येऽपि अपूर्वस्य तदिष्टं कार्यत्वमसिद्धमित्याह **कार्यवाक्येऽपीति** । **प्रवर्तकत्वादिलक्षण**मिति । अत्र जिज्ञासाधिकरणश्रीभाष्यान्तर्गतः अपूर्वकार्यत्वविचारोऽनुसंधेयः । कृतिभावभावित्वे सति कृतिप्रधानत्वं= कृत्युद्देश्यत्वं कार्यत्वमिति प्राभाकरोक्तम् । तत्रोद्देश्यत्वं कृतिजन्यत्वातिरिक्तमपूर्वे दुर्वचमिति भाष्ये न्यरूपि । कृतिप्रेरकत्वमिति तत्रोक्तं प्रवर्तकत्वं नाम किम् । यदि कृतिप्रयोजकेच्छाविषयत्वम्, तत् मुख्यं सुखे दुःखनिवृत्तौ वा । अमुख्यं तु यागोऽप्यस्ति । **न च...अभ्युपगत**मिति । 'अपूर्वमेव परमोद्देश्यम् ; स्वर्गस्तु स्वयमपूर्वेण कारुण्येनोपाद्यते' इति तन्मतम् । तत् विहाय भाट्टवत् द्वारभूतस्य सुखसाधनत्वाभ्युपगमेऽपि तस्यैवाभावान्न तद्विचार इत्याह **अभ्युपगमेऽपीति** । **रात्रिसत्रादी**त्युक्तं विशदयति **प्रतिष्ठेति** : रात्रिसत्रस्य, 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति अर्थवादतः प्रतिष्ठाख्यं फलं मीमांसकेष्टम् । 'ब्राह्मणाय नापगुरेत' इति ब्राह्मणवधसंकल्पनिषेधः कृतः ; तत्रार्थवादः— 'यो ब्राह्मणायापगुरते तं शतेन यातयात्' इति । शतवर्षबाधानुभवरूपनरकदुःखानुभवरूपं फलं निषेध्यस्य स्वीकृतमत्र । अक्ताः शर्करा उपदधाति, तेजो वै घृतम् इति वाक्यशेषरूपार्थवादबलात् अञ्जनसाधन-द्रवद्रव्यतया घृतं स्वीकृतम् पशुमालभेतेत्यत्र मन्त्रवर्णात् छागरूपविशेषः स्वीकृतः । अतोऽन्यपरस्यापि प्रकृतापोक्षितार्थान्तरप्रदर्शित्वमपीष्टम् ततः प्राशस्त्यपरेऽर्थवादे देवताप्रीतेः कथ्यमानाया उपेक्षणेनानपे-क्षितकल्पनमयुक्तमित्यर्थः । **लिङ्वाच्यतये**ति । अपूर्वस्य लिङादिवाच्यत्वे आग्रहः प्राभाकरस्य । तदा देवताप्रीतेरेव तत् कल्प्यतामिति अन्वारुह्योक्तिः । नैतदिष्टम् ।

यच्च जल्पन्त्यर्धलौकायतिकाः "विग्रहो हविरादानं युगपत् कर्मसंनिधिः। प्रीतिः फलप्रदानं च देवतानां न विद्यते ॥" इति, तदपि जैमिनिहृदयानभिज्ञतानिबन्धनम् ; न हि स्वतःप्रमाणाम्नाय-स्मृति-पुराणादसिद्धाः साधकबाधकप्रमाणागोचराः देवताविग्रहादयो ह्रातुं युक्ताः। न चायोग्येष्वनुपलम्भमात्रेण बाधः शङ्क्यः, अतिप्रसञ्जित्वात् , साक्षाल्लौकायतिकवादप्रसङ्गात्। स्तुत्या विधिशेषभूतेष्वप्यर्थवादेषु तदर्थतयैव स्वार्थमभिदधानेषु न वाक्यभेदादिदोषः। स्तुत्यादिपरत्वेऽपि न मुख्यार्थबाधः, स्वार्थबाधकाभावे स्वार्थप्रहाणायोगात् ; न च सर्वा स्तुतिरयथार्था ; न चासता गुणेन कथितेन स्तुतिसिद्धिः। यत्र तु मुख्यार्थबाधः, तत्राप्यौपचारिकं किञ्चिदालम्बनमभिप्रेतम् ; अन्यथा विडम्बनमात्रमेव स्यात्। न चोपच्छन्दनमात्रता, तज्ज्ञाने पुंसः प्रवृत्त्यनुपकारात् , निरूपकस्य च तदज्ञानायोगात् , अन्यथा भ्रान्तिमूलप्रवृत्तित्वप्रसङ्गात् ; समन्वयाधिकरणनयाच्च सिद्धैकपराः सन्ति भागाः। तदनुधाविनश्चेतिहासपुराणादयः॥ नन्वर्थवादाधिकरणे, "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इति सर्वेषामर्थवादानां विध्येकवाक्यत्वमुक्तम् ; समन्वयसूत्रे तु कथं तद्विरुद्धोक्तिः? मैवम् ; अर्थवादाप्रामाण्यपूर्वपक्षप्रतिक्षेपाय विध्येकवाक्यतया प्रामाण्यं संभवतीत्येतावन्मात्रमर्थवादाधिकरणे स्थापितम्। विध्येकवाक्यत्वे ब्रह्मस्वरूपतात्पर्याभावपूर्वपक्षस्तु अपवरकनिधिसद्भावादिवाक्यवत् स्वतःप्रयोजनभूतार्थविषयवाक्यानां भिन्नवाक्यतयाऽपि प्रामाण्यमुपपाद्य समन्वयसूत्रे प्रतिक्षिप्यत इति विरोधाभावात्। अपिचौत्सर्गिकमापवादिकं च तं तमर्थं प्रतिपादयत्सु वाक्येषु विषयव्यवस्थया विरोधशमनं व्याकरणादिष्वपि दृष्टमिति। अत एव ब्राह्मणशेषा अर्थवादा इत्यार्षमपि वाक्यमौत्सर्गिकविषयमवगन्तव्यम्।

---

सति कुड्ये चित्रकर्म ; देवतैव नेत्यत्राह यच्च जल्पन्तीति। साधकबाधकेति। साधकप्रमाणान्तरसिद्धत्वे श्रुतेर्नाज्ञातज्ञापकत्वम्। बाधकप्रमाणसत्त्वे ज्ञापकत्वमेव न। तथाच ह्रातुमित्यस्य ज्ञापनीयत्वे संभवत्युपेक्षतुमित्यर्थः। नन्वेकस्य स्तुति–वाच्यार्थोभयपरत्वे वाक्यभेद इत्यत्राह स्तुत्येति। उभयोर्द्वारिद्वारिभावात् एक एवार्थ इति भावः। ननु स्तुतेरविद्यमानगुणकथनरूपत्वात् वाच्यार्थस्यासत्त्वमनुमेयमित्यत्राह न च सर्वेति। स्तुतिलक्षणे गुणेष्वसत्त्वघटनमयुक्तमित्याह नचासतेति। उपच्छन्दनमात्रता भ्रान्त्युत्पादनेच्छाप्रयुक्तवाक्यरूपता। तज्ज्ञाने=उपच्छन्दनमिति ज्ञाने। तथासति वेदवाक्यजन्यज्ञानस्य भ्रान्तित्वे तस्याप्रमाणतैव स्यादिति भावः। भिन्नवाक्यतयाऽपीति। विध्येकवाक्यतयैव प्रामाण्ये सुनिर्वहेऽपि, अन्वारुह्योक्तिः न हि सहव ऋजुः सूत्रकृद् वावदूकः इति वास्तवं परसमाधानम्, तदाह स्पष्टमित्यर्थः। आर्षमपीति। अधिकरणसारावलौ (1-1-4) इदं व्यक्तम्।

एवमपूर्वे विध्यर्थ इति वदतः प्रभाकरस्य कार्यपरत्वं वाक्यानामिति सिद्धान्तो निराकारि। अथ

या तु शब्दभावनेन लिङाद्यर्थ इति कौमारिलकुसृतिः, सा तु प्रतीतिविसंवादादिप्रतिहता; न हि विधिवाक्यश्रावी पुरुषः, लिङादि स्वव्यापारमभिधत्ते, अतो मया प्रवर्तितव्यमिति मन्यते। न च यागादिस्वरूपे लिङादिव्यापारे च केनचिद् वाक्येन समुच्चित्य प्रतिपादितेऽपि कश्चित् प्रवर्तमानो दृश्यते। लिङादेश्च ज्ञायमानत्वलक्षणव्यापारमात्राच्छक्तिलक्षणव्यापाराद्वा प्रवर्तकत्वे व्युत्पत्तेः प्रागपि ततः प्रवृत्तिप्रसङ्गः; व्युत्पत्तेरपि सहकारित्वे, तत्सापेक्षाया निर्विषयायास्तस्या असंभवात् तद्विषयो वाच्यः। न च स्वव्यापारे लिङादिः क्वचिद् व्युत्पन्नः सर्वेषामपि शब्दानां स्वव्यापारातिरिक्त एव ह्यर्थे व्युत्पत्तिः। ये चाभिधादयः शब्दाः, तेऽपि न शृङ्गग्राहिकया स्वव्यापारमभिदधति; अपितु शब्दमात्रव्यापारे तत्प्रवृत्तेः, सामान्योपाधिक्रोडीकारेण स्वव्यापारस्यापि निवेशः। अत एवाभिधादिशब्दाभिधेयस्य निमित्तस्य च सामान्यतः प्रतिपन्नत्वाद् व्युत्पत्त्युपपत्तिः। लिङादेस्तु स्वव्यापारे प्रतीते तत्र व्युत्पत्तिः स्यात्; तत्प्रतीतिर्व्युत्पन्नेन चेत्, अन्योन्याश्रयः; अव्युत्पन्नेन चेत्, अतिप्रसङ्ग इति॥

---

शब्दभावना लिङर्थ इति कुमारिलभट्टपक्षं प्रतिक्षिपति यात्विति। विसंवादमेवोपपादयति नहीति। लोके प्रवर्तकत्वेन यत् यत् क्लृप्तम्, तत्र कस्यचिदेव लिङर्थत्वेन स्वीकरणं युक्तम्। लिङादिशब्दगतश्च व्यापारः कोऽपि न प्रवर्तकत्वेनानुभूयत इति। स व्यापारश्च कः? लिङ् ज्ञायमानस्सन्नेव प्रवर्तयतीति ज्ञायमानत्वरूपो वा, लिङादिनिष्ठशक्तिविशेषो वा। तावतैव प्रवृत्तिकथने अव्युत्पन्नस्यापि लिङ्श्रवणे प्रवृत्तिः स्यादित्याह लिङादेश्चेति। तदर्थं वाच्यार्थज्ञानद्वारेत्युक्तौ, स लिङादिनिष्ठधर्म एवेति न युक्तम्, लोके तथाग्रहणाभावात्। न केवलं लिङादेः, शब्दसामान्यस्य स्वव्यापारार्थकत्वं न भवतीत्याह सर्वेषामपीति। शृंगग्राहिकया, तद्व्यक्तित्वेनेत्यर्थः। यथा शृंगग्रहणेन गोव्यक्तिप्रदर्शनं तद्वत्। अतिप्रसंग इति ननु लोकवत् वेदेऽपि प्रवर्तना लिङर्थ इति ज्ञाते लोके गुर्वादिवत् वेदे वक्तुः कस्यचिदभावात् सा प्रवर्तना किंनिष्ठेति विचारे अपौरुषेयत्वादगत्या वेदनिष्ठेति कल्प्यते। तत्रान्वयव्यतिरेकाभ्यां लिङादिप्रत्ययनिष्ठतासिद्धिः। अथ व्यापारान्तरत्वे धर्मिकल्पनागौरवात् लिङ्निष्ठतया क्लृप्तस्य कस्यचिदेव प्रवर्तनात्वधर्ममात्रकल्पनेति चेत्—तन्न; लिङ्त्वादिधर्मस्याननुगतत्वात् आख्यातार्थकृति. वचनार्थैकत्वादिविषयकशक्तीनाञ्च विध्यभावेऽपि भावादतिप्रसक्तत्वात्। विधिप्रत्ययमात्रतशक्तिरेव, "अभिधाभावनामाहुरन्यामेव लिङादयः" इत्यस्माभिरुक्तेति स्वीकारे च तद्विषयस्यैव प्रवर्तनात्वसंभवात् वैदिकविधिप्रत्ययः स्वभिन्ननिष्ठप्रवर्तनावाची विधिप्रत्ययत्वात् लौकिकवदित्यनुमानाच्चेति॥

लिङादिबोध्यकिञ्चिदर्थज्ञानानन्तरमिच्छायां सत्यां प्रवृत्तेर्लोके दर्शनात् अर्थ एव प्रवर्तकः। स क इत्यत्र इष्टसाधनत्वमेवेति मण्डनमिश्रः; इष्टसाधनताज्ञानं विना प्रवृत्त्यभावादिति। इष्टसाधनताज्ञाने जाते पश्चात् इदं मया कर्तव्यमिति स्वकृतिसाध्यताज्ञाने जात एव प्रवृत्तिरिति कार्यताज्ञानं हेतुरिति कार्यत्वमेव लिङर्थ इति प्राभाकरः। अत्र कार्यत्वपक्षो भाष्यादावादृत इति तत्स्वीकारेण इष्टसाधनत्वपक्षं

न चेष्टसाधनत्वमात्रं लिङादिबोध्यम्, 'तवेष्टसाधनमिदम्, अतः कुरु' इति सहप्रयोगदर्शनात्। न चाऽऽदरादिनिबन्धना पुनरुक्तिरियम्; प्रतीतेरतथात्वात्; हेतुसाध्यनिर्देशायोगाच्च ॥ 'कर्तव्यमिदम्, अतः कुरु' इत्यपि दृश्यते, इति चेन्न; ब्राह्मणस्य कर्तव्यमिदम्, अतस्त्वयापि कर्तव्यमितिवत् सामान्यविशेषादिविवक्षाया अविरोधात्। अत्यन्तैकार्थविवक्षायां तु तत्रापि प्रयोगायोगात् ॥ अत एव, "आप्तस्य वक्तुरिच्छामात्रं लिङाद्यर्थः" इति प्रत्युक्तम्; 'आप्तस्येष्टमिदम्, अतो ममेदं कार्यम्' इति प्रवर्तमानपुरुषाभिलापविशेषदर्शनात्। न च लिङर्थत्वादेव निमन्त्रणादिवद् विधिरपि वक्त्रभिप्रायमात्रमिति वाच्यम्, संभावनादिभिः, विशेषविहितैश्चानैकान्त्यात्। एकशब्दवाच्यतामात्रेणैकत्वे चानेकार्थशब्दभङ्गप्रसङ्गे दृष्टान्तोऽपि न सिध्येत्। यद्यपि परमते ह्यु(ऽस्त्यु?)दयनोक्ता निषेधानुपपत्तिः, तथापि न साऽस्मत्पक्षमवगाहते। कर्तव्यताया विध्यर्थत्वे, न कर्तव्य इति नञन्वयाविरोधात्। कर्तृव्यापारसाध्यत्वमेव च कर्तव्यत्वम्। तथा हि वेदार्थसङ्ग्रहे, "लिङादेः कोऽयमर्थः परिगृहीतः" इति प्रश्नपूर्वकं प्रत्युक्तम्—"यज देवपूजायाम् इति देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां लिङादयोऽभिदधतीति न किञ्चिदनुपपन्नम्।

---

क्षिपति **न चेष्टसाधनत्वेति**। स्वपक्षे दोषमाशंक्य परिहरति **कर्तव्यमिति**। **अविरोधादिति**। तवेष्टसाधनं त्वं कुरु इतिवत्, तव कर्तव्यम्; त्वं कुरु इति नोच्यत इति भावः। कदाचित्तथा प्रयोगेऽपि, तत्राधिकारोऽस्ति, त्वं कुरु इत्यर्थकत्वं ग्राह्यमिति ध्येयम्।

अन्ये तु गामानयेत्यादौ गुर्वाद्यभिप्रायस्यैव विधित्वदर्शनात् आप्तेच्छैव लिङाद्यर्थ इत्याहुः। एतदादरणेनैवोदयनाचार्यैः वेदेऽपि लिङादेर्वक्त्रभिप्रायार्थकत्वावश्यम्भावात् वक्ता सर्वेश्वरः सिद्ध्यतीत्युक्तम्। आप्ताभिप्रायरूपार्थे ततो ज्ञाते, तेनेष्टसाधनत्वं कृतिसाध्यत्वं बलवदनिष्टाननुबन्धित्वमिति त्रयमनुमीयते। तत इच्छया प्रवृत्तिरिति। तस्मिन्नपि पक्षे पौनरुक्त्यदोषमाह **अत एवाप्तस्येति**। **कार्यमिति**। कार्यमिति कृत्यप्रत्ययस्य लिङादेश्चैक एवार्थो वक्तव्यः। स चेदाप्ताशयः, तर्हि पुनरुक्तिः। इदं कार्यत्वमन्यदिति चेत्—तर्हि तदेव लिङर्थोऽस्तु इति भावः। **निमन्त्रणादिवदिति**। "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्" इति पाणिनिसूत्रे **निमन्त्रणं** श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्, **आमन्त्रणं** कामचारानुज्ञा, **अधीष्टं** सत्कारपूर्वकव्यापारः, **संप्रश्नः** विचार्यनिर्धार्यविषयकाशयः, **प्रार्थना** याच्ञा। सर्वस्यास्य वक्तृगतेच्छाविशेषरूपत्वात् विधिरपि तथैवेति युक्तम्; विधिर्वक्तृसमवेतेच्छा लिङर्थत्वात् निमन्त्रणादिवदिति शंका। संभावनारोपादेरप्यर्थत्वात्, गर्हाश्चर्यकामप्रवेदनहेतुहेतुमद्भावाद्यर्थेष्वपि लिङनुशासनात् व्यभिचारः इति समाधिः। नन्वथापि आप्तेच्छारूपार्थग्रहणमेव युक्तम्, अर्थान्तरपक्षे निषेधवाक्ये नञर्थान्वयवर्णनायोगात्। इष्टसाधनत्वार्थकत्वे कलञ्जभक्षणे इष्टसाधनत्वाभावो नञा वक्तव्यः। स बाधितः। लौकिकेष्टसाधनत्वात्। प्रवर्तनाविषयत्वाभावोऽपि न; अनाप्तेन तत्र प्रवर्तनात्। आप्तेच्छविषयत्वाभावस्तु घटते इत्युदयनशंकायामाह **यद्यपीति**। कृतिसाध्यत्वरूप लिङर्थपक्षे

कर्तृवाचिनां प्रत्ययानां प्रकृत्यर्थस्य कर्तृव्यापारसंबन्धप्रकारो हि वाच्यः ; भूतवर्तमानतादिकमन्ये वदन्ति, लिङादयस्तु कर्तृव्यापारसाध्यतां वदन्ति" इति । भाष्ये चाऽऽद्यसूत्रे—"अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यमित्यध्यवसीयते, धात्वर्थस्य च यागादेरिन्द्रादिदेवतान्तर्यामिपरमपुरुषसमाराधनरूपता, समाराधितात् परमपुरुषात् फलसिद्धिश्चेति 'फलमत उपपत्तेः' इति प्रतिपादयिष्यते" इति ।

अत्र कर्तृव्यापारसाध्यतामात्रमिति निष्कृष्टार्थप्रदर्शनायोक्तम् ; प्रतिपत्तिप्रकारस्तु यजेतेत्यादौ स्वव्यापारसाध्ययागादिविशिष्टः इति कर्तृप्राधान्येनैव । यथोक्तं दीपे कर्त्रधिकरणे—"यजेत, उपासीत,

---

न स दोषः, कलञ्जभक्षणं न कर्तव्यमिति वाक्यार्थस्य समञ्जसत्वादिति । भूतवर्तमानतादिकमिति । कर्तृव्यापारः कृतिराख्यातार्थः । तत्संबन्धः तद्विषयत्वं यागादेः, तस्य भूतत्वभविष्यत्त्वादिः प्रकारो लकारैरुच्यते । लिङाऽपि किञ्चित्तत्प्रकारकथनमेव युक्तम् । अतः कृतिसाध्यत्वरूपः कृतिसंबन्ध एव विधिरिति । यद्वा कर्तृव्यापारसंबन्धप्रकार इत्यस्य कर्तृव्यापाररूपकृतिसंबन्धवति धात्वर्थे भूतत्वादिरिव कृतिसाध्यत्वरूपः प्रकारो लिङादिनोच्यत इत्यर्थः । एवमिष्टसाधनत्वादि विहाय कृतिसाध्यत्वं लिङर्थतया साधितम् ॥

विधेरेव विधिवाक्ये मुख्यविशेष्यत्वं कतिपयमीमांसकेष्टम् । लकारान्तरसाधारण्याय कृतिरूपाख्यातसामान्यार्थस्यार्थभावनारूपस्य मुख्यविशेष्यत्वमित्यन्ये सर्वे मीमांसकाः । धात्वर्थ एव मुख्यविशेष्यः, तत्र लकारार्थान्वय इति शाब्दिकाः । प्रथमान्तार्थमुख्यविशेष्यकत्वं तार्किकोपपादितम् । अत्र कतमो भाष्यकृदभिमतः पक्ष इति विमर्शे, चैत्रः पचतीत्यादौ चैत्रपदार्थस्य मुख्यविशेष्यत्वं तार्किकेष्टमुपेक्ष्य तस्यैव चैत्रस्य कर्तृतयाऽऽख्यातेन कथनात् आख्यातार्थस्य कर्त्रादेरेव मुख्यविशेष्यत्वमिति दर्शयति प्रतिपत्तिप्रकारस्त्विति । अयं भावः—प्रकृतिप्रत्यययोर्मध्ये प्रत्ययार्थप्राधान्यात् यथा प्रातिपदिकार्थापेक्षया कारकादिविभक्त्यर्थः प्रधानम्, तथा तिङन्तेऽपि प्रत्ययार्थप्राधान्यमेव युक्तम् ; बाधादर्शनात् । सुब्विभक्त्यर्थकारकादेः क्रियया वशीकारात् कारकाद्यर्थं प्रति धात्वर्थक्रिया विशेष्यभूता । एवं क्रियान्वये स्वरसे शाब्दिकोक्ते, मीमांसकाः आख्यातार्थभावनाख्यक्रियायां कारकाद्यन्वयमवोचन्—आख्यातार्थो भावना ; न तु कर्त्रादिः । भावनायाः कर्तृकर्मसर्वाख्यातानुवृत्तत्वात् ; धर्ममात्रे शक्तौ लाघवाच्चेति तन्मतम् । लः कर्तरि कर्मणि च भावे च यथायथम्, तथैवानुशासनात्, अनुभवात्, आकृत्यधिकरणस्य विशिष्टेशक्तिस्थापकताया एवास्मदिष्टत्वाच्च । एवञ्च चैत्रः पायसं पचतीत्यादौ चैत्रकर्तृकपायसकर्मकपाकक्रियेति बोधः शाब्दिकानाम्, चैत्रकर्तृका पायसकर्मिका पाकक्रियाभावनेति मीमांसकानाम्, पायसकर्मकपाकक्रियानुकूलकृत्याश्रयश्चैत्र इति प्रथमान्तार्थमुख्यविशेष्यकस्तार्किकाणाम् । अस्माकं तु पायसकर्मकः चैत्रकर्तृकपाकक्रियाकर्तेति, यद्वा पायसपाकक्रियाकर्ता चैत्राभिन्न इत्येवम् । कर्मणि प्रयोगे तु पायसाभिन्नं चैत्रकर्तृकपाकक्रियाकर्मेति । द्वितीयादेरिव प्रथमाया अपि कारकविभक्तित्वं मन्वानस्य

इति हि कर्तरि लकारः। अतः कर्तारमेव बोधयति शास्त्रम्" इति। उक्तं च वेदार्थसंग्रहेऽपि—"स्वर्गकामो यजेत" इत्येवमादिषु लकारवाच्यकर्तृविशेषसमर्पकाणां स्वर्गकामादिपदानां नियोज्यविशेषसमर्पकत्वं शब्दानुशासनाविरुद्धम्" इति। यद्यपि दीपग्रन्थः पुंसः कर्तृत्वं श्रुतिसिद्धमित्यत्रैव तत्परः, तथापि धात्वर्थसाध्यतापरलिङादिष्वपि कर्तृप्रधानतया वृत्तिं प्रदर्श्य सांख्यान् प्रतिक्षिपतीति तादर्थ्यात् तत्रापि तत्परत्वमेव ग्राह्यम्। पचतीत्यादौ पाकं करोतीत्यादिनिपुणव्याक्रियाश्च कृतिकर्मतयैव धात्वर्थस्यान्वयं व्यञ्जयन्ति॥ श्रीगीताभाष्ये चैतद् व्यञ्जनम्—युध्यस्व इत्यत्र 'युद्धाख्यं कर्मारभस्व' इति व्याख्यानात्॥

करणतया च धात्वर्थस्यान्वये कथं क्रियाविशेषणस्य कर्मविभक्त्यन्तता? न हि विशेष्येण विशेषणं भावयेदित्यन्वेति; फलस्यापूर्वस्य वा भवद्भिर्भाव्यत्वाभ्युपगमात्। वर्तमानव्यपदेशादिषु च साध्यान्तराभावेऽपि

---

वार्तिककारस्य मते चैत्रकर्तृकपाकक्रियेत्यन्वयात् तदाश्रयक्रियाकर्तेति बोधः। प्रातिपदिकार्थ एव प्रथमेति पाणिनिमते तु चैत्रस्य क्रियान्वयं विना आख्यातार्थे कर्तरि कर्मणि वा यथायथमभेदेनान्वयः। धात्वर्थं प्रति आख्यातार्थस्य कारकस्य विशेष्यत्वमेव पाणिनीष्टम्। अन्यथा धात्वर्थस्य भावनाया वा मुख्यविशेष्यत्वे, तदधीते तद्वेदेत्यादौ तत्कर्मकाध्ययनमिति वा तत्कर्मकाध्ययनभावनेति वा सूत्रे बोधे वैयाकरणादिशब्दस्य ततो निष्पन्नस्य व्याकरणाध्ययनं व्याकरणाध्ययनभावनेत्येवाऽर्थः स्यादिति न पुरुषो वैयाकरणादिशब्दार्थः स्यात्। वैयाकरणादिशब्दे चैत्रत्वादिविशेष्याकारस्याप्रतीत्या व्याकरणाध्ययनादिकर्तृत्वेनैव पुरुषबोधात् कर्तृत्वादिना कर्त्रादेरेव मुख्यविशेष्यत्वम्। युष्मद्युपपदे समानाधिकरणे इति प्रथमान्ततिङन्तयोः सामानाधिकरण्यमिष्टम्। तेन चैत्र इति तिङर्थे कारकेऽन्वय एव पाणिनीष्टः; न तु धात्वर्थे आख्यातार्थे व्यापारे वा इत्यादि विमृश्यम्। कृतिकर्मतयैव धात्वर्थस्येति न तु शाब्दिकोक्त धात्वर्थप्राधान्यं पाकं करोतीति विवरणानुकूलमित्यर्थः। तथापि मीमांसकोक्तं कृत्यर्थकत्वमेवाख्यातस्य स्यादिति चेन्न; पाकं करोतीति वाक्येऽपि कृतेरेव कर्तुरपि बोधात्। कृतिस्तु कर्तृरूपाश्रये पाकान्वये संबन्धघटिका। आख्यातार्थे पाकस्य स्वकर्मककृतिमत्त्वेनान्वयः। कर्मणिप्रयोगे कर्मत्वसंबन्धेन आश्रये पाकान्वयः। यद्वा कृतिराश्रयश्चाख्यातार्थः। कृतेर्धात्वर्थे, तस्याऽऽश्रये चान्वयः। लिङादौ कृतिसाध्यत्वरूपतदर्थस्य धात्वर्थेऽन्वये इष्टसाधनताविशिष्ट इति हि बोधाकारो मूल एव प्रादर्शि।

भाट्टमीमांसकनिरासमारभते करणतया चेति। न हि विशेष्येणेति। ज्योतिष्टोमेन यजेतेति वाक्यं तत्पक्षे घटते; ज्योतिष्टोमेन यागेन फलं भावयेदिति यागस्य करणत्वात् तदभिन्नतया तद्विशेषणज्योतिष्टोमपदेऽपि तृतीयोपपत्तेः। अग्निहोत्रं जुहोतीति कथम्? विशेषणमग्निहोत्रपदं द्वितीयान्तम्, विशेष्यो होमस्तृतीयान्तश्च हि भवति। अग्निहोत्रं होमेन भावयेदिति धात्वर्थस्य करणतयाऽन्वयवर्णने न हीदमन्वेतीत्यर्थः। ननु लिङादिप्रत्ययस्थले फलस्य भाव्यत्वेऽपि लडादौ तथानियमाभावात् अग्निहोत्रस्य कर्मत्वेनान्वयोऽस्तु इत्यत्राह वर्तमानेति। विशेष्यस्य होमस्यापि कर्मत्वे इष्टे तत् युक्तम्। होमः करणम् अग्निहोत्रो विशेषणं

न [illegible]शेषणमात्रं साध्यम्। न च प्रथमान्तं क्रियाविशेषणम्; करणपक्षेऽपि धात्वर्थेनानन्वयप्रसङ्गात्। अनन्वितस्य विशेषणत्वाद्यनुपपत्तेः। न चाकर्मविभक्त्यन्तेन धातुना कर्मविभक्त्यन्तस्य कथं सामानाधिकरण्यमिति वाच्यम्, करणविभक्त्यन्तेनाप्यसामानाधिकरण्यप्रसङ्गात्। न च प्रतीयमाने कर्मत्वेनान्वये कश्चित् दोषो दृश्यते; व्रीहि(प्रियङ्गु)कामः कृषिं कुर्यादितिवत् स्वर्गकामो यागं कुर्यादिति वाक्यार्थेऽपि विरोधाभावात्। तद्देवतार्थतस्तस्य तदुपायत्वासिद्धेः केनेति करणाकाङ्क्षाया अपि शमनात्। नामधेयगततृतीयान्वयोऽपि नावश्यं सामानाधिकरण्येन, तत्तन्नामकैः कर्मविशेषैः देवतापूजां कुर्यादित्येवंपरत्वेऽपि स्वरसान्वयात्। सामान्यविशेषरूपेण व्यधिकरणनिर्देशोपपत्तेः। चाटुवादेन राजानं प्रीणयेदितिवत्। यागं कुरुष्वेत्यादौ न कृञर्थस्यापि साध्यत्वप्रसङ्गः, तस्यैव कर्तृव्यापाररूपत्वे तत्साध्यत्वायोगात्। प्रकृतिप्रत्यययोरन्यतरस्य कृतावुदासीनत्वात्, एकः, द्वौ, बहवः इत्यादिवत्। तत्रापि यदा कर्मतां विवक्षति, तदापि कर्तृव्यापा-

---

कर्मेति कथं घटत इत्यर्थः। नन्वग्निहोत्रमिति प्रथमान्तमेवास्तु; क्रियाविशेषणतया प्रयुज्यमानं सुबन्तम्, 'न केवला प्रकृतिः प्रयोक्तव्या' इति सुप्प्रयोगे आवश्यके प्रथमातिक्रमे मानाभावात् प्रथमान्तं प्रयुक्तमित्यत्राह **न च प्रथमान्त**मिति। एवमपि अग्निहोत्रं होमेन भावयेदिति प्रयोगस्यासाधुत्वादनुपपत्तिरेवेत्यर्थः। वस्तुतः पचति पाकं करोतीति विवरणानुसारात् क्रियाविशेषणानां द्वितीयान्तत्वमेवेष्टम्। अत एव **भाट्टरहस्ये** द्वितीयान्तत्वमेव क्रियाविशेषणानामुक्तम्। **व्युत्पत्तिवादे** क्लीबताऽपीष्टा। तन्न नेष्यते सर्वत्र; आर्द्रं पचतीति क्रियाविशेषणतया पुंल्लिङ्गप्रयोगस्य नियतलिंगत्वे दर्शितत्वादिति हृदयम्। ननु अग्निहोत्रं होमेनेति प्रयोगायोगवत् अग्निहोत्रं जुहोतीति प्रयोगस्याप्ययोग एव। होमरूपविशेष्यवाचिनो धातोरद्वितीयान्तत्वादित्याशंकां क्षिपति **नचेति**। उभयोः सुबन्तत्व एव समनविन क्तिकत्वनियम इति चेत्—तुल्यम्। विधिस्थले धात्वर्थस्य करणत्वमेवेति मीमांसकैरुक्ता, द्वितीयायामनन्वयाभावस्य सुवचत्वादित्याह **नचेति**। कामपदघटितपदेन भाव्यस्य लब्धतया करणमेवापेक्ष्यते; कथं धात्वर्थस्य कर्मतेति चेत्—कृषिमित्यत्र कथं निर्वाहः। करणाकांक्षायामपि 'नासाधितं करणम्' इति न्यायेनासाधितस्य करणत्वायोगात् उपादेयतया साध्यमप्याकांक्षितमेवेति तथाऽन्वय इति चेत्—तुल्यम्; तथैव प्राभाकरोक्तेरिति भावः। एवं तर्हि ज्योतिष्टोमेनेति तृतीया कथमित्यत्राह **नामधेये**ति। **प्रीणयेदे**ति। चाटुवादेन राजप्रीणनं कुर्यादित्यत्र प्रीणनं चाटुवादैकमेव। अथापि तृतीया विशेषणभावात्। प्रकृत्या चारुरितिवत्। तर्हि चाटुवादेन राजानं प्रीणनं कुर्यादिति प्रयोगापत्तिरिति चेन्न; राजपदार्थस्य प्रीणनेऽन्वयात् कर्तृकर्मणोः कृतीति षष्ठ्यवश्यम्भावात्। ननु यागं कुरुष्वेत्यत्र कृञ्धात्वर्थस्य क्रियां भावयेति विवरणानुसारात् साध्यत्वेनान्वयात् यागस्यापि साध्यत्वे साध्यद्वयप्रसंग इत्यत्राह **याग**मिति। कुरुष्वेति लकारेणोक्तः कर्तृव्यापारः धात्वर्थ एव वाऽन्यो वा। आद्ये कथं तस्यैव तत्र साध्यत्वेनान्वयः। तर्हि कथमन्वय इति चेत्, साधुत्वार्थं प्रयोगः। **एक इत्यादौ** प्रकृतिप्रत्यययोरैकार्थ्यात् एकस्यान्वयाविवक्षणात्। **तत्रापि यदे**ति। तर्हि उदकमाहरतीत्यस्योदकाहरणक्रियां

रान्तरमभिप्रेत्य वा, भेदोपचारेण वा निर्वाहः ; यथा—उदकाहरणक्रियां करोतीत्यादौ । न च तावता अनवस्था, प्रतीत्यनारोहेण व्यवहारस्य पर्यवसितत्वात् । अग्निहोत्रं जुहोतीत्यादिप्रयोगश्चास्मत्पक्षानुकूलः ॥

**अतः—किं, केन, कथमिति भवत्प्रोक्तवत्, किमर्थं, किं, केन कथमित्याकाङ्क्षाचतुष्टये स्वर्गादिना किमर्थमित्याकाङ्क्षापूरणम्, देवतां प्रीणयेदिति किमित्याकाङ्क्षाशान्तिः, ज्योतिष्टोमेनेत्यादिनामधेयादिभिः केनेत्याकाङ्क्षा पूर्यते, कथमित्याकाङ्क्षापूरणं तु भवतामस्माकं च तुल्यमेवेति शाब्दोऽयं पन्थाः ।**

**अतस्तत्तदधिकारिणः स्वसाध्यधात्वर्थविशिष्टताबोधिनि यजेतेत्यादौ तत्तद्धात्वर्थानुष्ठाने**

---

करोतीति विवरणे द्वितीया कथमित्यत्रोत्तरमिदम् ।

एवं धात्वर्थस्य कर्तृव्यापारसाध्यत्वरूपविध्यर्थान्वयं प्रक्रम्य भावनारूपाख्यातार्थवादेऽपि पचति पाकं करोतीत्यादिविवरणात् धात्वर्थस्य साध्यत्वेनान्वयः स्वीकार्य इत्यतः, मीमांसकसंमतः करणत्वेनान्वयो न युक्त इत्युक्तम् । एवं तर्हि यागादेरेव साध्यत्वे फलस्य कथमन्वयः । केनेत्याकांक्षापूर्तिश्च केन । एवंतर्हि भावनाया अंशत्रयापेक्षेत्यस्य कथमुपपत्तिरित्यत्र स्वाभिमतमाकांक्षाचतुष्टयं दर्शयति । **भवत्प्रोक्तवदिति** । मीमांसकत्वाभिमतभवदुक्तवत् इदमस्माभिर्मीमांसकैरुच्यते इति भावः । नन्वेवंकल्पने किं मूलमिति चेत्—पाकं करोतीति विवरणादिकमेव ; मीमांसाग्रन्थोऽपि मूलम् । तथा हि **शाबरभाष्ये-1-1-32** "कृते वा विनियोगः स्यात् कर्मणः संबन्धात्" इति सूत्रे, "ज्योतिष्टोम इत्यभिधाय कर्तव्य इत्युच्यते । केनेत्याकांक्षिते सोमेनेति । किमर्थमिति स्वर्गायेति । कथमिति इत्थम्=अनयेतिकर्तव्यतयेति । एवमवगच्छन्तः पदार्थैः पिण्डितं वाक्यार्थं कथमुन्मत्तबालवाक्यसदृशमिति वक्ष्यामः" इति । अत्र हि कर्तव्य इति प्रयोगात् यागस्य साध्याकांक्षाशामकत्वमुक्तम् । स्वर्गादेः फलस्य च किमर्थमित्याकांक्षयाऽन्वय उक्तः । उद्देश्यतया साध्यत्वमुपादेयतया साध्यत्वञ्चेति भेदस्ततो ज्ञायते । केनेत्याकांक्षायां सोमेनेत्यन्वयोक्तिः द्रव्याकांक्षाशान्तिरिति ; कथमित्याकांक्षायाः व्यापाररूपेतिकर्तव्यताविषयकतया द्रव्यविषयकत्वाभावात् । यदा तु केनेत्यस्य किंरूपेणेत्यर्थः, तदा किंनामकेन किंद्रव्यकेण किंदेवताकेनेत्यादिकमभिमतमिति । अत्र ज्योतिष्टोमेनेत्याचार्योक्तिः तत्र सोमेनेत्युक्तिश्चैकार्था । सोमवता यागेनेति मत्वर्थलक्षणाऽपि मीमांसकैरुक्ता । साऽपेक्षिता न वेत्यन्यदेतत् । तथाचाकांक्षाचतुष्टयं प्रामाणिकमिति । एवं तत्तदभिमतमार्गविलक्षणं स्वाभिमतशाब्दबोधप्रकारमुपसंहरति इति **शाब्दोऽयं पन्था** इति । एवं प्रतिपाद्यवाक्यार्थमुख्यविशेष्यभूतस्य कर्त्रादेरन्तर्यामितया ब्रह्मणोऽपि बोधो यदेष्यते, तदा सर्वं वाक्यं ब्रह्ममुख्यविशेष्यकं तत्र पर्यवसितमिति सर्वे वेदास्तदर्था इतीदमुपपद्यत इत्यन्यदेतत् । तत् तत्तदभिमततत्तन्मुख्यविशेष्यपक्षेऽपि सुवचम् ।

एवमपूर्वपरित्यागे फलसिद्धिः कथमित्यत्र वाक्यावगतात् परमात्मप्रसादादित्याह **अत** इति ।

फलम्, अननुष्ठाने प्रत्यवायश्च सर्वप्रशासितुः सङ्कल्पाद् भवतीत्यपि वाक्यादवगतः। अवान्तरदेवताबुद्धिवृत्तिविशेषस्तु सद्वारकयजने श्राद्धभोजिपुरुषप्रीत्यादिवत् आनुषङ्गिकः, अन्यथा कल्पान्तरादिषु प्रलीनप्राचीनदेवतागणेषु पूर्वकल्पानुष्ठितकर्मफलानुत्पत्तिप्रसङ्गात्। अत एव ह्येकस्यैव श्रुतिराज्ञा; अन्येषां चाऽऽराधकत्ववदाराध्यत्वमपि तदायत्तमिति ॥

नारायणार्यैस्त्वेवमुक्तम्—

"आप्तस्य हितकामस्य नियोगं केचिदूचिरे। भाष्यकारोऽपि भगवानेतदेवान्वमन्यत ॥" इति ॥

अत्र च "स्वशासनावबोधि शास्त्रं च प्रदिश्य" इति भाष्यमभिसंहितम्। इदं च

---

वायुर्वै क्षेपिष्ठेति देवतान्तरप्रीतिः किल श्रूयत इत्यत्राह अवान्तरेति। तदेवाग्निस्तद्वायुरिति वाक्यान्तरात् सर्वत्र परमात्मप्रीतिः सिद्धेति तत एव फलम्। सद्वारकयजने=वाय्वादितत्तद्देवताविशिष्टपरमात्मयजने। आनुषंगिक इति। तर्हि वाय्वादिमात्राराधने कथमिति चेत्—वाय्वादिदेवतामप्यविज्ञायाऽऽराधने वाय्वादेः प्रीतिवत् अन्तर्याम्यज्ञानेनाराधनेऽपि वचनबलात्, राजकञ्चुकमालालंकरणन्यायाच्च परमात्मा प्रीत एव। वस्तुतः श्राद्धे ब्राह्मणतृप्तेरेव दृश्यत्वेऽपि ब्राह्मणेषु पित्रावाहनबलात् पित्रादितृप्तिसद्भावात् ब्राह्मणतृप्तेरप्राधान्यम्। तद्वत् वचनबलादन्तर्यामिप्रीतेः प्राधान्यमावश्यकम्। अन्यथा परमात्मप्रीत्यस्वीकारे, वाय्वादिषु कल्पान्ते नष्टेषु पूर्वकल्पकर्मफलानि कर्तृभिर्न लभ्येरन्। तत्रेयं स्थितिः—तत्तद्देवतापरमात्मोभयोद्देशेन केचित् कुर्युः। काम्यकर्मसु देवतान्तरनिर्देशवत्सु तेषामुद्देश्यत्वमपरित्याज्यम्। अन्यत्र परमैकान्तिभिः परमात्मोद्देशेनैवानुष्ठानात्, देवर्षिभूतात्मनृणां पितृणां न किंकरा इम इति न देवतान्तरप्रीतिरानुषंगिक्यपि। प्रत्यक्षतो देवतान्तरे प्राप्ते तच्छरीरेष्वर्पणेन कर्तव्यतायां प्राप्तायां भूतबलिवायसबल्यादिष्विवानुद्देशेऽप्यवर्जनीया देवतान्तरप्रीतिर्न निवार्यते। भोक्तॄन् निमन्त्रितान् अनुद्दिश्य पित्रादिमात्रोद्देशेऽपि तेषां तृप्तिवत्। सर्वथा यागफलप्राप्तिः परमात्मतो नियतेति। अत एवेति। देवतान्तरकृताज्ञाबलात् देवतान्तरयजनमिति चेत्—ईश्वरेण तत्रौदासीन्यस्यापि स्वीकारसंभवात् फलप्राप्तावनिश्चय एव; ईश्वराज्ञात्वाविशेषाच्च स सर्वस्य साफल्यं स्वयमवश्यं संपादयेदित्यत इत्यर्थः। लिङादिबोधित कृतिसाध्यत्वं यत्र यत्र तत्र किञ्चित्पुरुषीयाज्ञाविषयत्वमित्यस्य दर्शनात् वेदेऽपि तद्विमर्शे, कर्तृपुरुषाज्ञाया अनवकाशात्, विहितकर्माराध्यत्वं यस्य तदाज्ञाविषयत्वे उचिते प्रतीते, तत्तद्देवतोद्देश्यककर्मविषये तत्तदाज्ञेत्युक्तौ तत्तद्देवताविलये फलहानिप्रसंगात् एकशाश्वतपुरुषाज्ञारूपत्वौचित्यं तस्यैव सर्वकर्मसमाराध्यत्वञ्च दृश्यत इति सुस्थमीश्वराज्ञारूपत्वमिति भावः ॥

एवं कृतिसाध्यत्वार्थकत्वेऽप्याज्ञात्वमुपपादितम्। अथ साक्षादाज्ञैव विध्यर्थ इति पक्षान्तरमपि सिद्धान्तेऽस्तीत्याह नारायणार्यैस्त्विति। केचित्=उदयनाचार्याः न्यायकुसुमाञ्जलौ। आप्तसमवेततदुपायानुष्ठानविषयकेच्छैव लिङाद्यर्थ इति तन्मतम्। अन्वमन्यत, परमात्मशासनावबोधित्वस्योक्त्वादिति भावः।

विधिनिषेधानुवर्तनातिवर्तनप्रयुक्तनिग्रहानुग्रहदर्शनबलात् सिद्धम् ।
"श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥"
इति । 'विधिः प्रेरणम्' इति च व्याकारि वैयाकरणैः । प्रेरणं च शासनमेव ।
तत्त्वरत्नाकरकारैश्चैवमुक्तम्—

"क्रिया तच्छक्तिर्वा किमपि तदपूर्वं पितृसुरप्रसादो वा कर्तुः फलद इति रङ्गेश कुदृशः ।
त्वदर्चेष्टापूर्ते फलमपि भवत्तीतिजमिति त्रयी वृद्धास्तत्तद्विधिरपि भवत्प्रेरणमति ॥"

(श्रीरंगराजस्तवे 2-20) इति । नित्यनैमित्तिकादिविधिभेदेषु च प्रशासितुरभिप्रायविशेषाः व्यञ्जिताः—(श्रीरंग-2-21)

"आज्ञा ते सनिमित्तनित्यविषयः स्वर्गादिकाम्यद्विधिः
सोऽनुज्ञा शठचित्तशास्त्रवशतोपायोऽभिचारश्रुतिः ।
सर्वीयस्य (सर्वा यस्य) समस्तशासितुरहो श्रीरङ्गराजस्य ते
रक्षाकूतनिवेदिनी श्रुतिरपि त्वन्नित्यशास्तिस्ततः ॥" इति ।

अपि च वेदार्थसङ्ग्रहेऽप्युपात्तं द्रमिडभाष्यम्—"स्वशासनानुवर्तिनो ज्ञात्वा कारुण्यात्

---

तथोक्तेर्मूलं किमित्यत्राह इदञ्चेति । कण्ठोक्तिमप्याह श्रुतिरिति । कृतिसाध्यत्वमनुशासनसिद्धमिति भाष्ये उक्तत्वात् इदं व्याकरणाननुमतमित्यत्राह विधिरिति । विधिनिमन्त्रणेति सूत्रे सर्वार्थानुगतं प्रेरणमिति तस्य वाच्यत्वमुक्तमित्यर्थः । अत्र भट्टारकसंमतिमप्याह तत्त्वरत्नाकरेति । किमपि=आक्षिप्तं वा लिङादिवाच्यत्वेनापीष्टं वा तदपूर्वं क्रियाजन्यं कर्तृनिष्ठं पुण्यादिरूपमदृष्टम् । प्रसादः प्रीतिः तत्तद्देवतागतेति अर्थवादाधिगतमिति वेदान्त्येकदेशिनः । कुदृशः शबरकुमारिलप्रभाकरवेदान्त्येकदेशिनः । इष्टापूर्ते त्वदर्चेति सामान्ये एकवचनम् । व्यञ्जिता, तत्रैव श्रीरंगराजस्तवे । आज्ञेति त्रिविधिः विधिः नित्यो नैमित्तिकः काम्यश्च । आद्यौ अकरणे प्रत्यवायजनकत्वादाज्ञारूपौ । स्वर्गादिकं काम्यं = कामयमानान् उद्दिश्य विधिस्तृतीयः । स चानुज्ञारूपः फलेच्छायामेव कर्तव्यत्वप्रदर्शी । तद्वत्तद्भूतः अभिचारविधिरपि । कथमनिष्टसाधनमनुज्ञायत इत्यत्राह शठचित्तेति । शत्रुवधे तीव्रप्रवृत्तस्य लौकिकोपायान्तरादिनिवर्त्य एतदुपाये प्रेरणम् तदिष्टसिद्धौ स शास्त्रे विश्वासात् आज्ञादिकमपि क्रमेण तीर्णः स्यादित्यनुग्रहबुद्ध्या तदनुज्ञानमित्यर्थः । स्वर्गादिकाम्यविषये प्रेरणं प्रकारान्तरेण परमात्मलाभमात्रस्य तदर्थं क्रियमाणम् । अभिचारे तु लौकिकोपायान्तरे फलार्थं प्रवृत्तस्य ततो निवारणेनापूर्वोपायप्रदर्शनेन प्रवर्तनरूपम् । उत्तरार्धमेकवाक्यम् । तत् इति वाक्यारम्भः । सर्वीयस्य=सर्वजनहितस्य ते रक्षाकूतं यत् तन्निवेदिनी श्रुतिस्त्वदीयनित्यशासनरूपेत्यर्थः । सर्वा यस्येति पाठो (बहुक्लेशकरो) न शुद्धः । अत्र प्राचीनद्रमिडाचार्यसंमतिमपि दर्शयति अपिचेति । आद्यो वेदार्थसंग्रहपाठः । कुण्डलितयोराद्यो

स भगवान् वर्धयेत (स्वभावाद्वर्धयेत्) (स्वभावाच्च वर्धयेत) विद्वान् धर्मदक्षः" इति। अनन्तरं चायमेवार्थो भगवद्गीतयाऽपि दर्शितः ।

"ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः। श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्। सर्वज्ञानविमूढांस्तान् विद्धि नष्टान् अचेतसः ॥" इति स्वाज्ञानुवर्तिनः प्रशस्य, विपरीतान् विनिन्द्य, पुनरपि स्वाज्ञानुपालनमकुर्वतामासुरप्रकृत्यन्तर्भावमभिधाय, अधमा गतिश्चोक्ता, तानहं द्विषतः......यान्त्यधमां गतिम्" इति। "ईदृश एव विधिशब्दार्थो वेदान्तिभिः स्वीकृतः" इति परेऽपि केचिदन्ववादिषुः । अतो मूलस्कन्धीकृतनियोगं धात्वर्थस्य कर्तृव्यापारसाध्यत्वं वा, निर्विषयप्रेरणासंभवात्

---

मुद्रितकोशे। अन्यो न्यायपरिशुद्धितालकोशे। अपूर्वरूपकार्यखण्डनानन्तरमिदं तत्र; तत्रैव वाक्यान्तरं प्रदीतुमाह अनन्तरञ्चेति। अत्राप्याज्ञाशब्दप्रयोगात् आप्तेच्छा लिङर्थ इति सिध्यति। एवं भाष्यकारकण्ठोक्तं कृतिसाध्यत्वं तत्सूक्तिगमितमाप्तेच्छारूपञ्चार्थमुपपाद्य निगमयति अत इति। एकतरस्वीकारे अन्यतरभाष्यत्यागः स्यादिति न मन्तव्यम्; एकतरमध्येऽन्यतरस्य निविष्टत्वे नोभयविधसूक्त्योरप्येकस्मिन्नर्थ एव तात्पर्यादित्याह मूलेति। एतद्वाक्यार्थोऽस्माभिः (456) 'सन्ति ह्यन्ये' इति श्लोके सर्वार्थसिद्धिव्याख्याने अलभ्यलाभे विशदं वर्णितः। अत्र संगृह्यत एवम्—कृतिसाध्यत्वमर्थ इति पक्षे, 'न कलञ्जं भक्षयेत्' इति निषेधवाक्यार्थवर्णनासंभवः कुसुमाञ्जलावुपपादितः कथं परिह्रियते । 'उक्तमेव ह्यधस्तात्; "यद्यपि परमतेऽस्त्युदयनोक्ता निषेधानुपपत्तिः, तथाऽपि न साऽस्मत्पक्षमवगाहते" इति' इति चेत्—तदेव विचार्यम्। सत्यम्, कलञ्जभक्षणं न कर्तव्यमिति वाक्यप्रयोगः समञ्जस एवेति। तत्र कर्तव्यपदेन कोऽर्थोऽभिमतः; उच्यताम्। कृतिसाध्यमित्येवेति चेत्—तदेव किम्? कृत्यधीनात्मलाभमिति (456) सर्वार्थसिद्धावुक्तमेवेति चेत्—कलञ्जभक्षणे कृतिजन्यत्वस्य प्रत्यक्षसिद्धत्वात् तदभाववचनं बाधितम्। एवं कर्तुं शक्यत्वम्, कर्तुरुपकारकत्वम्, कर्तुमर्हत्वमित्यर्थविवक्षायामपि तदभावो बाधितः॥ कर्तुमर्हत्वमनिष्टाननुबन्धित्वरूपमिति चेत्—तस्य विशिष्य लिङर्थत्वे सामान्यतः कृतिसाध्यत्वमर्थ इति भाष्यस्वारस्यं त्यक्तं स्यात्। इष्टसाधनत्वज्ञानानन्तरभाविकृतिसाध्यताज्ञानस्यैव प्रवर्तकत्वात् कृतिसाध्यत्वमेव लिङर्थ इति ह्युक्तम्। सामान्याकारेण तस्यार्थत्वे च कृतिजन्यत्वरूपकिञ्चिदाकारसत्वात् कलञ्जभक्षणे तन्निषेधो दुष्करः। श्येनयागादौ बलवदनिष्टाननुबन्धित्वानन्वयश्च—इत्याशंकायां कृतिसाध्यत्वमित्यनेन विवक्षितं दर्शितं मूलस्कन्धीकृतनियोगमिति। नियोगस्य=आप्तेच्छाया वाच्यार्थत्वाभावेऽपि वस्तुतो नियोगजन्यता यस्याः कृतेः, तत्साध्यत्वमेव लिङर्थः। यथा मीमांसकैः प्रेरणाजन्यतावच्छेदकतया यत्नत्वं कृतित्वरूपसामान्यधर्मव्याप्यं वैजात्यं कृतिविशेषेऽस्तीत्युच्यते, तथा आप्तप्रेरणाप्रयोज्यतावच्छेदकः कृतिसाध्यतात्वविशेष एव लिङ्शक्यतावच्छेदक इति तादृशकृतिसाध्यत्वाभावः कलञ्जभक्षणे सुवचः द्वितीयपक्षे च प्रेषणस्य

तत्साध्यत्वपर्यन्तं प्रेषणमेव वा लिङाद्यसाधारणार्थः इति स्थिते, "विधिनिमन्त्रणाऽऽमन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्" इति समभिव्याहृतनिमन्त्रणादिसमानयोगक्षेमतया विधिशब्दार्थतया व्याकृतस्य प्रेषणस्यैव लिङादिशब्दवाच्यत्वं युक्तमिति । अन्यथापि प्रेषणमन्तर्गतमेवेत्यारे ॥

इदं च विधिवाक्यानामीश्वरशासनात्मकत्वं जैमिनिनापि सूचितमेव—"चोदनालक्षणोऽर्थो धर्मः" इति । चोदनाशब्दो हि चोदकं कंचित् पुरुषं सूचयति । अहृदयादपि शाबरोदाहरणादिदं व्यज्यते—"आचार्यचोदितः करोमीति हि दृश्यते" इति ॥ एवं चोदनाशब्दसूचितश्च पुरुषः स्ववाक्येन प्रागेव विशेषतो दर्शितः । अपिच औत्पत्तिकसूत्रे "तस्य ज्ञानमुपदेशः" इत्यसूत्रयत् । उपदेशोऽपि हि उपदेष्टारमाक्षिपति । "तत् प्रमाणं बादरा-

---

निर्विषयकत्वाभावात् धात्वर्थविशेष्यक—कृतिजन्यत्वप्रकारकाप्तेच्छैव तदर्थ इति तत्र कृतिसाध्यत्वं घटकमेव । तर्हि कतरः पक्षो युक्त इति चेत्—विधिनिमन्त्रणेति स्पष्टप्रतीतेच्छैवेत्याह विधीति । सर्वार्थसिद्धौ पक्षद्वये कृतिसाध्यत्वपक्षमादरेण प्रदर्श्य, 'आप्तेच्छापक्षमपि न प्रतिक्षिपाम.' इत्युक्तम । तथैवात्रापि **युक्तमिती**त्यन्तेनोभयमुपन्यस्तम् । प्रथमपक्षमेव परिष्कृत्य तृतीयं पक्षमाह **अन्यथाऽपी**ति । आख्यातसामान्यस्य कृतिरर्थः । तद्विषयत्वरूपं कृतिजन्यत्वं धात्वर्थे सर्वाख्यातलभ्यमेव । सैव कृतिः लिङ्प्रयोगे स्वजन्यत्वप्रकारकाप्तेच्छाविषयत्वरूपसंबन्धेनापि धात्वर्थेऽन्वेति । इदमेव कृतिसाध्यत्वं लिङर्थ इत्यत्र विवक्षितम् । प्रथमपक्षे नियोगस्य न शब्दबोधे भानम् ; अत्र तु भानमिति विशेष. । अथवा कृतिसाध्यत्वं नाम कृत्यधीनोत्पत्तिकत्वार्हत्वम् । अर्हत्वञ्चापेक्षितयावदाकारसमुदायः इत्यस्तु । एतदर्थशोधनविस्तरोऽलभ्यलाभ एव द्रष्टव्यः ॥

लिङर्थः साक्षात् शासनमेव वा कर्तव्यत्वं वेत्यास्तामेतत् । सर्वथेश्वरशासनत्वं **सिद्धमेव** । तत् जैमिनीष्टमित्यपि प्रपञ्चयति **इदञ्चे**ति । **चोदना** प्रेरणा प्रेरकाभावे कथं स्यादिति । **आचार्ये**ति वाक्यं शाबरस्थितम् । **अहृदया**दित्यनेन शबरस्य निरीश्वरवादाभिमतिः सूच्यते अत एव, "इति शाबरमुत्स्वप्नायितम्' इति **सेश्वरमीमांसाया**मुक्तम् । **स्ववाक्येने**ति अत्र स्वपदार्थः कः । न शबरः, तेन पूर्वं विशिष्यानुक्तेः । न जैमिनिः ; चोदनासूत्रस्य मीमांसायां द्वितीयसूत्रत्वात् प्रथमसूत्रे ईश्वरानुक्तेरिति चेत्—तर्हि अस्माभिः स्ववाक्येन स नारायण इति स्पष्टमुक्त इत्यर्थोऽस्तु यद्वा शबरेणैव आचार्यत्वेन रूपेण चोदक उक्त इत्यर्थः । प्रागेवेत्यस्य अपूर्वस्थापनात्प्रागेवेत्यर्थः । अथवा जैमिनेरीश्वरसंमतेरेवोपरि प्रपञ्चनात् अत्र स्वपदार्थः जैमिनिरेव, । तेन प्रथमसूत्रे **धर्म**पदेन धर्मत्वरूपविशेषाकारेण स एव, 'कृष्णं धर्मं सनातनम्' इति प्रसिद्धो दर्शित इत्यर्थोऽस्तु । वस्तुतः सेश्वरमीमांसायां शबरोक्तवचनन्तरोक्तमेव समानस्थानादत्राप्युच्यते । तथा च, पुरुषः परमात्मा **स्ववाक्येन**, 'श्रुतिस्मृती ममैवाज्ञा' इति तदीयवाक्योदाहरणेन पूर्वमेवेह दर्शित इत्यर्थः । **काचित्क** इति । 'धर्मे जैमिनिरत एव', शेषत्वात् पुरुषार्थवादो

यणस्य" इति सूत्रखण्डे च स्वस्य स्वाचार्यभूतबादरायणसमानाभिप्रायत्वं व्यञ्जितम्। स च बादरायणो जैमिनिं स्वशिष्यमभ्युपगतेश्वरादितत्त्वम्, "साक्षादप्यविरोधं जैमिनिः" इत्यादिषु बहुषु सूत्रेष्वदर्शयत्। प्रतिक्षेपस्तु काचित्कः अन्यपरोक्त्यापातप्रतीतार्थमन्दमतिमोहनिरासार्थो वा क्षुद्रप्रमादमात्रस्याप्युद्धारार्थो वेति न प्रधानविरोधकल्पनलिङ्गम्। अर्थवादाधिकरणे च, "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इति प्रेरणरूपविधिप्रतिपादकलिङाद्यवयवद्वारा समुदायभूतं विध्युद्देशवाक्यं लक्षयित्वा तदेकवाक्यत्वमर्थवादानां वदन् कृत्स्नस्य वेदस्येश्वराज्ञारूपविधिप्रतिपादकत्वं तद्वाक्यकण्ठोक्तमसूचयत्। एवमन्यत्रापि भाव्यम्।

एवं श्रुतिस्तावदीश्वराज्ञा; तदनुविधानात् स्मृतिरपि। ब्राह्मणमन्त्रार्थवादमया ह्यनन्ता वेदाः सङ्कीर्णा विकीर्णाः क्वचित् कदाचिदुत्सन्नाश्च। तत्र कृत्स्नवेदिनो मन्वादयस्तत्तद्देशकालविशेषेष्वकृत्स्नवेदिनां तत्त्वानुष्ठानविप्लवप्रशमनाय स्वानुभूतान् वेदार्थान् यथावन्निबध्नन्ति; अतस्तन्मूलोऽनादिवाचामर्थनिर्णयः। श्रुतिस्मृतिविरोधे तु स्मृत्या मूलान्तरानुमानादनुष्ठानविकल्पं केचिदाहुः। सर्वेषां गुणत्रयवतामाप्ततमत्वेऽपि काचित्कभ्रमसंभवाच्छ्रुत्या स्मृतिबाधः इत्यपरे। तत्त्वविषये तु विरोधे बाध एव; आन्यपर्यं वा; वस्तुनि विकल्पासंभवात्। स्मृतिद्वयविरोधे तु परिग्रहतारतम्यादिभिर्व्यवस्था। न च क्वचित् स्मृतीनामप्रामाण्ये सर्वत्रानाश्वासः; बाधकादर्शनात्। कारणदोषक्लृप्तेश्च नियतलिङ्गाभावात्, संवाद-

---

यथाऽन्येष्विति जैमिनिः' इत्यत्र प्रतीत इत्यर्थः। लक्षयित्वेति। कृतिसाध्यत्वमाप्तेच्छा वा विधिशब्दमुख्यार्थः। तद्वाचके लिङादौ विधिशब्दप्रयोगो लक्षणया। तद्घटितं यजेत स्वर्गकाम इत्यादिवाक्यमपि विधिशब्दलक्ष्यम्। इदमेव विध्युद्देशवाक्यमित्युच्यते। उद्देशशब्दः अर्थवादपृथक्कारेण विधिप्रदेशमात्रग्रहणार्थः। विधिनात्वेकवाक्येति सूत्रे विधिपदमेतद्वाक्यांशपरमिति। तद्वाक्यकण्ठोक्तम्— चोदनालक्षणः, ज्ञानमुपदेश इति पूर्ववाक्यकण्ठोक्तम्; श्रुतिस्मृती ममैवाज्ञेति ईश्वरवाक्यकण्ठोक्तमिति वा।

मन्त्रार्थवादविधिरूपेण वेदं विभज्य निरूप्य तत्र विधिवाक्ये प्रयुज्यमानस्य विधिशब्दस्य मुख्यार्थः क इति विचार्य गुरुभट्टमतनिरसनेन वेदान्तिमतमुक्तम्। एवं वेदो विचारितः अथ स्मृतिरूपं शब्दमाह एवमिति। स्मृतीनामुत्पत्तिः कुत इत्यत्राह ब्राह्मणेति। वेदानामनन्तत्वात् सर्वग्रहणायोगात् विभिन्नस्थलोपयोगिकर्मणां दुष्करविभागतया क्वचित् संकीर्णत्वात्, तत्र तत्र विशकलिततया धर्मोक्तीनां, अस्माभिः क्रोडीकारायोगात्, तदा तदा कतिपयवेदभागानामप्रचाररूपोत्सादर्शनाच्च सर्वशाखाप्रत्ययानां निष्कृष्य निरूपणं स्मर्तृभिराढमित्यर्थः। आन्यपर्यं वेति। अत्यन्ताप्तत्वे सिंहो माणवक इत्यत्रेव वाच्यार्थे तात्पर्याभाव इत्यर्थः। तारतम्येति। मनुस्मृतेरन्यापेक्षयोत्कर्षस्य सिद्धत्वात्, कलौ पाराशरस्मृतिः इत्यादितोऽधिकारिभेदवचनाच्च तारतम्यसिद्धिः। क्लृप्तेश्चनियतलिंगेति। क्लृप्तिसाधकहे-

भूयस्त्वादिभिः परिग्रहान्यथानुपपत्त्या च श्रुतेरेव मूलत्वकल्पनोपपत्तेः ; अन्यथा पौरुषेयवाक्यस्य सर्वस्याप्रामाण्यप्रसङ्गे विलीनमागमेन न चैतन्नानिष्टमिति वक्तुं शक्यम्, पित्राद्यासवाक्यं प्रमाणीकृत्य चार्वाकस्य प्रवृत्तिदर्शनात् । न च काचित्कसंवादमात्रेण बाह्यागमेष्वपि विस्रम्भावकाशः; प्रत्यक्षश्रुति-विरोधभूयस्त्वेन, वैदिकपरिग्रहाभावेन, वेदबाह्यत्वप्रसिद्ध्या, वेदप्रतिक्षेपाच्च वेदाख्यमूलकल्पनस्याशक्यत्वात् । न चालौकिके प्रत्यक्षादिमूलत्वसंभवः । योगजसाक्षात्कारमूलत्वक्लृप्तिरपि वेदाविरुद्धस्थले स्यात् ; न च तत्रापि निश्चयः; विपरीतोपलम्भस्यापि संभवादिति ।

ततश्च (ताश्च ?) वेदमूलाः स्मृतयस्त्रिविधाः—धर्मशास्त्रेतिहासपुराणभेदात् । तत्राद्य(न्त्य ?)यो-रदूरविप्रकर्षादेकविद्यास्थाननिवेशः अत्र चाधिकृतानधिकृतविभागेन बलाबलनियतिराभासाह्निके दर्शिता ; पुराणेष्वपि सात्त्विकराजसादिविभागश्च ॥ (ततश्च वेदमूलान्येव सर्वाण्यपि धर्मशास्त्राणि ।) यानि पुनः सांख्ययोगपाशुपतपञ्चरात्राणि, तान्यपि धर्मशास्त्रभेदा एव ; परिशुद्धात्मचिन्तनरूपज्ञानयोगप्रदर्शनाधिकृतं शास्त्रं सांख्यम् ; समाधिपर्यन्तकर्मयोगनिष्ठं शास्त्रं योगः ; प्रतिबुद्धेतरविषयपशुपतिभजनप्रतिपादकं पाशुपतम् ; प्रतिबुद्धविषयभगवदनन्यभजनोद्देशप्रवृत्तं तु शास्त्रं पञ्चरात्रम् । एतानि च क्वचित् क्वचिदंशे परस्परोपजीवीनि । परस्परविरोधे तु वेदानुसारेण बलाबलव्यवस्था, वेदविरुद्धे त्वंशे बाधः । प्रमादस्या-नीश्वरेषु सर्वेषु संभवात् । विप्रलम्भस्य तु असुरादिव्यामोहनोद्यते साक्षादीश्वरेऽपि । यथोक्तं भगवतैव—

"त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय । अल्पायासं दर्शयित्वा फलं शीघ्रं प्रदर्शय ॥
अहं मोहं करिष्यामि यो जनं मोहयिष्यति ।" इति ॥

अतो यत् सांख्ये ईश्वरानधिष्ठितप्रधानादिप्रतिपादनम्, यच्चेश्वरमभ्युपगम्य केवलनिमित्तकारणत्व-प्रतिफलनकल्पैश्वर्यवर्णनं योगे, यच्च पाशुपते परावरतत्त्वव्यत्ययवेदविरुद्धाचारादिकल्पनम्, तत् सर्वं व्यपोह्य शिष्टांशे प्रामाण्यं ग्राह्यम् । न चैतत् तुषतण्डुलविभागवदल्पज्ञैः शक्यम् । अतो हि शारीरके त्रयाणां निरासः ।

पञ्चरात्रं तु कृत्स्नं श्रुतिवत् स्मृतिवद्वा प्रमाणम्, प्रत्यक्षश्रुत्यादिविरोधाभावात् । महाभारते

---

त्वित्यर्थः । प्रत्यक्षमात्रप्रामाण्यवादिनश्चार्वाकस्येदमिष्टमित्यत्राह न चैतदिति ।

स्मृतिं विभजते । ततश्चेत्यत्र ताश्चेति पाठो युक्तः । तालकोशपाठे तु कुण्डलिते ततश्चेति युक्तम् । तत्र वेदमूला इत्यादि विभागश्चेत्यन्तं नास्ति तत्स्थाने उपरि मुद्रितः पाठः । आद्ययोरित्येतत् अन्त्ययोरिति शोधनीयम् । अधिकृतेति । यद्धर्ममधिकृत्य यत् प्राधान्येन प्रवृत्तं तत्र तत् अधिकृतम् । धर्मशास्त्रभेदा एवेति । अत एव स्मृतिपादे तदप्रामाण्यनिरूपणं न मीमांसकैः कृतमिति भावः । अहमिति भगवान् उच्यते । मोहं मोहकं शास्त्रं पुरुषं च । आंशिकप्रामाण्यस्य ग्राह्यत्वे कथं त्रयाणां बाह्यागमतर्कशास्त्रयोरिव शारीरके निरास इत्यत्राह न चैतदिति । स्मृतिवत् विष्णुस्मृत्यादिवत् ।

च आततममानवधर्मशास्त्रस्यापि तन्मूलत्वोक्तेः ; अत्यादरेण व्यासादिपरिग्रहविशेषात् ; ईश्वरदयामूलत्वेन च कारणदोषप्रसङ्गाभावात् । "वेदान्तेषु यथासारं संगृह्य भगवान् हरिः । भक्तानुकम्पया विद्वान् संचिक्षेप यथासुखम् ॥" इति च तत्रैव व्यक्तेः । वेदप्रामाण्याङ्गीकार.तदर्थोक्तिभूयस्त्व.तद्द्वैशद्यहेतुत्ववचन.साधुपरित्राणार्थत्व.सत्त्वोत्तरनारदादिश्रोतृकत्वादिनिबन्धेन स्पष्टप्रामाण्यत्वात् । न च विप्रलम्भार्थं तथा निबन्धः, अन्यत्रापि प्रसङ्गात् । "अधीता भगवन् वेदाः" इत्यादेर्दुर्ग्रहत्वमात्रतात्पर्येण वेदनिन्दादिरूपत्वाभावात् । निन्दारूपत्वेऽप्युदितहोमनिन्दावन्निन्दितेतरप्रशंसनप्रवृत्तेः । "सङ्कर्षणो नाम जीवो जायते" इत्यादेरवतारादिगोचरत्वस्य तत्रैव सिद्धेः । शारीरके च—"उत्पत्त्यसंभवात्" "न च कर्तुः करणम्" इति सूत्रद्वयेन पूर्वपक्षं कृत्वा, "विज्ञानादिभावे वा तदप्रतिषेधः" "विप्रतिषेधाच्च" इति तत्प्रामाण्यप्रतिषेधः परिहृतः । तथा निर्मूलत्व—असत्परिग्रह.सत्परिग्रहाभाव.वैदिकसंस्कारवर्जन—अवैदिकसंस्कारविधान.विद्यास्थानपरिगणनाभाव.क्षुद्रविद्याबाहुल्यादिमन्दशङ्कानां भगवद्यामुनमुनिभिः परिहारः प्रपञ्चित इति नेह प्रतन्यते ।

एवं साक्षादीश्वरदयामूलत्वान्मन्वादिनिबन्धनेभ्योऽस्यातिरेकः । तेषां श्रुतिविरोधे सति बाध्यत्वमपि संभवेत् । गुणत्रयवश्यतया कादाचित्कभ्रमादिसंभवात् । स्मृत्यादीनां हि श्रुतिमूलतयैव प्रामाण्यमिति भाष्येऽप्युक्तम्, "तदुपर्यपि" इत्यधिकरणे—"सङ्कीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेतिहासपुराणेषु" इति ॥ तत एव चैषां विप्रकीर्णशाखामूलत्वं सिद्धान्तः इत्यपि सूचितम् । 'क्वचित् कदाचित् केषांचिच्छाखाविशेषाणामुच्छेदः ; ते च पुनर्व्यासादिभिः क्वचित् कदाचित् प्रवर्त्यन्ते,' इत्येतावता उच्छिन्नशाखामूलत्वमस्तु । उक्तं च भगवता आपस्तम्बेन—"तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते" इति । मन्वादिवचनप्रामाण्यं न्यायमन्तरेणापि श्रुत्यैव सिद्धम्—"यद्वै किञ्च मनुरवदत् तद्भेषजम्" इत्यादिभिः ।

एवं शिष्टाचारस्यापि—"यथा ते तत्र वर्तेरन्, तथा तत्र वर्तेथाः", "यान्यस्माकं सुचरितानि, तानि त्वयोपास्यानि" इत्यादिभिः । स्मृतिश्च—"स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनाम्" इत्यादि । श्रुत्यैव धर्मनिर्णये संभवति किं धर्मशास्त्रेण इत्याशङ्क्याह मरीचिः—
"दुर्बोधा वैदिकाः शब्दाः प्रकीर्णत्वाच्च ये खिलाः । तज्ज्ञैस्त एव स्पष्टार्थाः स्मृतितन्त्रे प्रतिष्ठिताः ॥" इति ।

**सत्यपि धर्मशास्त्रे गृह्यापेक्षां दर्शयति देवलः—**
**"मन्वादयः प्रयोक्तारो धर्मशास्त्रस्य कीर्तिताः । तत्प्रयुक्तप्रयोक्तारो गृह्यकाराः स्वमन्त्रतः ॥" इति । अतो धर्मशास्त्रगृह्यादिसापेक्षत्वं वेदार्थनिर्णयस्य । विरोधे च यथायोगं**

---

**तत्रैव**=पञ्चरात्र एव । **तत एव**=संकीर्णेति भाष्यत एव । **विप्रकीर्णेति** । न तु नित्यानुमेयो वा अत्यन्तोच्छिन्नो वा वेदो मूलमिति भावः । श्रुत्यर्थानुभवजनितस्मरणात्मकज्ञानाधीनग्रन्थानां स्मृतिशब्दितानामिव तदाचारग्रन्थानापि प्रामाण्यं विवक्षन् आह **एवं शिष्टेति** । **गृह्यापेक्षां** गृह्यग्रन्थापेक्षाम् । **तत्प्रयुक्तप्रयोक्तारः** मन्वाद्यनुष्ठितानुष्ठातारः । **यथायथम् (योगम्)** श्रुतितः स्मृतिर्दुर्बला; स्मृतितो गृह्यग्रन्थः । तथा धर्मशास्त्रेषु

बलाबलव्यवस्था सिद्धा ।

भगवद्धर्मशास्त्रस्य तु पञ्चरात्रस्य श्रुत्यादिविरोधे षोडशिग्रहणादेरिव देशकालाधिकार्यवस्थाविशेषविषयतया विकल्प एव, श्रुतेरिवास्यापि दोषसंभावनाविरहादिसिद्धेः । आहुश्चैवमभियुक्ताः—"वेदे कर्त्राद्यभावात्" इत्यारभ्य,

"तस्मात् सांख्यं सयोगं सपशुपतिमतं कुत्रचित्, पञ्चरात्रं
सर्वत्रैव प्रमाणं, तदिदमवगतं पञ्चमादेव वेदात् ॥" इति ।

अन्यत्र च, "उपनिषदि तु बह्वयां व्यावघोष्यामदोषप्रतिह त(भट)गुणराशिर्घुष्यते ताक्ष्र्यकेतुः ।
श्रुतिरपि तदुपज्ञैः पञ्चरात्रैर्विकल्पं न लभत इति सूक्तं भाष्यकृद्यामुनार्यैः ॥" इति ।

तदेतत् यामुनाचार्यैरागमप्रामाण्ये संभावितसमस्तपूर्वपक्षयुक्तिनिराकरणेन प्रपञ्चितम् । तदनुसारेणैव भाष्यकारैः श्रीपाञ्चरात्राधिकरणं व्याख्यातम् ।

"श्रुतिमूलमिदं तन्त्रं प्रमाणं कल्पसूत्रवत् ।" इत्यादिवचनं तु त्रय्यन्तमूलतया एकायनश्रुतिमूलतया च योज्यम् । न चात्र वेदत्वे सन्देग्धव्यम्, "यं वाकेष्वनुवाकेषु

---

मन्वादिग्रन्थात् सांख्यादिर्दुर्बलः । तदिदं स्मृत्यनवकाशेत्यधिकरणसिद्धम् ।

एवं स्मृतिप्रामाण्यपरिस्थितिमुपपाद्य **एवं साक्षादीश्वरदयेत्या**रब्धं विशेषं विशदयति **भगवद्धर्मशास्त्रस्यत्विति** । **षोडशिग्रहणेति** । "अतिरात्रे षोडशिनं गृह्णाति इति अतिरात्रसंस्थाकज्योतिष्टोम एव षोडशिनामकस्य सोमरसग्रहपात्रस्य ग्रहणं विहितम् ; तत्रैव, 'नातिरात्रे षोडशिनं गृह्णाति' इति प्रतिषिद्धम् । उभयोरपि श्रुतित्वाविशेषात् विकल्प इत्युक्तम् । (तर्हि कस्तदनुतिष्ठेदिति चेत्—षोडशिग्रहणरूपांगं विनाऽपि कर्मसाद्गुण्यान्न फलहानिः, कृते तु तस्मिन् फलातिशय इति निर्वाहः कृतः।) तद्वदिहापि विकल्पः । **व्यावघोष्यामिति । व्यावघोषी**=व्यावक्रोशी; मिथः कलहः । शिवहिरण्यगर्भाद्यनेकोक्त्या विवादस्यावकाशे सत्यपि भगवद्बादरायणदर्शितैस्तर्कैः **ताक्ष्र्यकेतुः** छन्दोमयसुपर्णध्वजो नारायण एव तत्र सार्वभौमत्वेन घुष्यते । **अदोषप्रतिभटेति** । दोषाः **प्रतिभटाः** निरोधकाः यस्य स दोषप्रतिभटः, तथा न भवति । निरोधकदोषरहितो गुणराशिर्यस्य सः । पाठान्तरे दोषाप्रतिहतो गुणराशिर्यस्येति । **तदुपज्ञैः** ताक्ष्र्यकेतुमुखोद्गतैः । पञ्चरात्राणां भगवदुपज्ञत्वात् तस्य च सर्वज्ञत्वात् उपनिषदां वैयाकुलीहेतूपन्यासरूपत्वेऽपि पाञ्चरात्रे स्पष्टं नारायणपारम्यप्रपञ्चनात् न्यायैस्तदैकार्थ्यावधारणात् विकल्पं विमतिं न भजति श्रुतिः ।

ननु श्रुतिमूलमिदं तन्त्रमिति वाक्येन पञ्चरात्रस्यापि मन्वादिधर्मशास्त्रवत् प्रसिद्धवेदमूलकत्वात् तद्विरोधे दौर्बल्यमेवेत्यत्राह **श्रुतिमूलमिति** । एकान्तिधर्ममयस्य पञ्चरात्रस्य देवतान्तरयजनप्रधानकर्मकाण्डमूलकत्वं न भवितुमर्हति । वचनञ्चैकायनश्रुतिमूलकत्वेऽस्तीति भावः । **यमिति** । 'गृणन्ति सत्यधर्माणः सत्यं सत्येषु सामसु' इत्युत्तरार्धम् । अत्र वाकनिषत्पदे एकायनशाखान्तर्गतभागपरे ;

निषत्स्वपनिषत्सु च।", "महतो वेदवृक्षस्य मूलभूतो महान् अयम् ॥ स्कन्धभूता ऋगाद्यास्ते शाखाभूतास्तथा मुने" इत्यादिवचनात्। तथा "ऋग्वेदपाठे पठितं व्रतमेतत् सुदुश्चरम्" इति संवादप्रदर्शनात्, वेदशाखान्यासदशायां निरुक्तशाखाया अपि गणितत्वात्। भगवच्छास्त्रसारभूतसात्त्वतपौष्करादिषु रहस्याम्नायविधाने—"एकायनीयशाखोक्तैर्मन्त्रैः परमपावनैः।" इत्यादिभिः तच्छ्रुतित्वप्रतिपादनात्। अत्र भगवद्यामुनमुनिभिरेवोक्तो ग्रन्थो लिख्यते—

''यदप्युक्तम्—'गर्भाधानादिदाहान्तसंस्कारान्तरसेवनात् भागवतानामब्राह्मण्यम्' इति, तत्राप्यज्ञानमेवापराध्यति; न पुनरायुष्मतो दोषः; यत एते वंशपरम्परया वाजसनेयशाखामधीयानाः कात्यायनादिगृह्योक्तमार्गेण गर्भाधानादिसंस्कारान् कुर्वते। ये पुनः सावित्र्यनुवचनप्रभृति त्रयीधर्मात्यागेन एकायनश्रुतिविहितानेव चत्वारिंशत् संस्कारान् कुर्वते, तेऽपि स्वशाखागृह्योक्तधर्मं यथावदनुतिष्ठमाना(?)न शाखान्तरीयकर्माननुष्ठानात् ब्राह्मण्यात् प्रच्यवन्ते। अन्येषामपि परस्परशाखाविहितकर्माननुष्ठाननिमित्ताब्राह्मण्यप्रसङ्गात्; सर्वत्र हि जातिचरणगोत्राधिकारादिव्यवस्थिता एव समयाचारा उपलभ्यन्ते। यद्यपि सर्वशाखाप्रत्ययमेकं कर्म, तथापि न परस्परविलक्षणाधिकारिसम्बद्धा धर्माः क्वचित् समुच्चीयन्ते। विलक्षणास्त्रयीविहितस्वर्गपुत्रादिविषयोपभोगसाधनैन्द्राग्नेयादिकर्माधिकारिभ्यो द्विजेभ्यस्त्र्यन्तैकायनश्रुतिविहितविज्ञानाभिगमनोपादानेज्याप्रभृतिभगवत्प्राप्त्येकोपायकर्माधिकारिणो मुमुक्षवो ब्राह्मणाः इति नोभयेषामप्यन्योन्यशाखाविहितकर्माननुष्ठानमब्राह्मण्यमापादयति। यथा च एकायनशाखाया अपौरुषेयत्वम्, तथा काश्मीरागमप्रामाण्य एव प्रपञ्चितमिति नेह प्रस्तूयते।

---

अनुवाकोपनिषत्पदे त्रयीघटकभागपरे इति भावः। यथा, 'स्थापितं मनुजेन्द्रैस्तु निषद्वाकादिकोविदैः' इति। श्रीपाञ्चरात्ररक्षायाञ्च प्रथमेऽधिकारे उपात्तं भोजराजवाक्यम्, "यो वेदवृक्षं बहुमूलशाखं नानाफलार्थिद्विजसंघसेव्यम्। पूर्वश्रवानुश्रवभेदभिन्नमारोपयत् तं पुरुषं प्रपद्ये॥" इति। महान् अयम् इति एकायनवेदोक्तिः। ऋग्वेदेति एवं श्रुतप्रकाशिकोक्तम् "ऋग्वेदं पूर्वदिग्भागे यजुर्वेदं तु दक्षिणे। पश्चिमे सामवेदं स्यात् आथर्वञ्चोत्तरे भवेत्। एकयानीयशाखोक्तान् मन्त्रान् सर्वासु दिक्षु च' इति श्रीकालोतरवचनादिकमपि ग्राह्यम्। यत एत इति। काञ्च्यादिषु भगवदाराधकया प्रत्यक्षसिद्धा एते। वंशेति। औत्तरविप्रवत्। एतदन्यान् चतुर्विधपाञ्चरात्रसिद्धान्तनिष्ठान् शास्त्रसिद्धान् आह ये पुनरिति। स्वेति पदं शाखागृह्योभयान्वयि। विहितविज्ञानाभिगमनेति। विहितपदं कर्मपदान्वयि। अभिगमनादिकं तत्कर्मशेषतयेव वैदिककर्मशेषतयाऽपि स्यादिति सामान्यभूतस्यापि तत्कर्मार्थत्वं तदिष्टम्। विज्ञानाभिगमनेत्यादिपदेन ब्रह्मसूत्रे 'विज्ञानादिभावे वा' इत्यत्र विज्ञानादिपदमेतावदर्थकमपि स्यादिति सूच्यते।

प्रकृतानां तु भागवतानां सावित्र्यनुवचनादित्रयीसम्बन्धस्य स्फुटतरमुपलब्धिर्न तत्त्यागनिमित्तव्रात्यत्वादिसंदेहं सहते" इति ॥

चतुर्विधं चेदं पञ्चरात्रम्—आगमसिद्धान्तः, दिव्य(मन्त्र)सिद्धान्तः, तन्त्रसिद्धान्तः, तन्त्रान्तरसिद्धान्तश्चेति। चतुर्विधं चेदं वेदमूलभूतांशस्योपबृंहणम्; तदभिप्रायेण ह्युक्तं महाभारते "महतो वेदवृक्षस्य मूलभूतो महान् अयम्।" इत्यादि। चतुर्णां चैषां लक्षणादिकं श्रीपौष्करादिषु भगवतैव दर्शितम्। यत्त्व तेषु चतुर्षु साधारण्यासाधारण्यां अर्चोपसंहार्यानुपसंहार्यादिकं वक्तव्यम्, तत् सर्वं श्रीपाञ्चरात्ररक्षासिद्धान्तव्यवस्थायां सर्वपरामर्शेन साधितमस्माभिरिति तत्रैव तद्विस्तरः सात्त्वतधर्मगोप्तुरनन्यैरनुसन्धेय इति नात्र प्रक्रमः।

एवं स्थिते केचिद् बाह्लीकप्रायाः आगमबाह्याः श्रीमद्वैखानसप्रामाण्ये विशेरते; तत्र तावत् कल्पसूत्रं नाप्रमाणम्, इतरवदेव कल्पसूत्रत्वात्। तत्कर्तुश्च कल्पसूत्रकारत्वप्रसिद्धेः। वेदाविरुद्धत्वात्। वैदिकमन्त्रैरेव सकलधर्मविधानात्। सूत्रान्तराणामपि कुण्डसन्निवेशलक्षणादिषु क्वचित् क्वचित् तदुपजीवनात्, वर्णाश्रमधर्माणामनुकूलं नारायणपरत्वप्रतिपादनादेरपि सत्त्वमूलत्वेन प्रामाण्यैकहेतुत्वात्। "हरिमेव स्मरेन्नित्यं कर्मपूर्वापरेष्वपि", "ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु ॥" इत्यादिना शौनकादिभिरपि तथैव विधानात्, वंशपरम्परया च वैखानसैरधीयमानतया विप्लवस्याप्यनवकाशत्वात् ॥ अस्तु किमपि तत्, इदं तदिति किं नियामकमिति चेत्—इतरानुपलम्भः, तदुपलम्भश्च। अन्यथा सर्वत्र श्रुतिस्मृत्यादीनां तथा तथा संशयप्रसङ्गात् ॥ अस्त्विदमेव तत्; प्रमाणं च; तथापि भार्गवादिचतुष्कस्य कथं प्रामाण्यमिति चेन्न, उक्तोत्तरत्वात्, महर्षिप्रणीतत्व-वेदाविरुद्धत्वादेः समत्वात् ॥ पञ्चरात्रविरोधोऽस्तीति चेन्न, तत्त्वे तदभावात्, कर्तव्यक्रियादिभेदस्यापि प्रतिनियताधिकारिविषयत्वेनैवोपपत्तेः, कल्पसूत्रप्रक्रियाभेदवत्, आगम.दिव्य-तन्त्र.तन्त्रान्तररूपपञ्चरात्रावान्तरचतुष्कक्रियादिविभागवच्च। आश्वमेधिके श्रीवैष्णवधर्मशास्त्रे द्वितयमपि समप्रामाण्य(सह प्रमाण)तयोपात्तम्। द्वयोरपि परस्परप्रामाण्यम् "विष्णोस्तन्त्रं द्विधा प्रोक्तम्" इत्यादिषु व्यञ्जितम्। परस्पराक्षेपवचनानि तु इक्षुभक्षकृतिचिकीर्षुभिरसहिष्णुभिरुपक्षिप्तानि वा स्वशास्त्रप्रशंसार्थ-

---

प्रकृतानां त्विति। यत एतेवंशपरम्परयेत्युक्तानामित्यर्थः।

सूत्रान्तराणामिति। सूत्रान्तरैरित्यर्थः। कुण्डसंनिवेशेति। मरीचिसंहितायामग्निकुण्डलक्षणं प्रक्रम्य स्वर्गलोकस्य चतुरश्रत्वादाहवनीयकुण्डं चतुरश्रमित्यादिकमुक्तम्, सर्वश्रेयस्कराहुतिविशेषस्थानभूतासाधारण पौण्डरीकाग्निविषयम्, अग्निमूर्तीनां भगवन्मूर्तिविशेषाधिष्ठितत्वमित्यादि च वैखानसविजयग्रन्थान्ते वयमवोचाम; तादृशमत्र ग्राह्यम्। कर्मपूर्वापरेषु कर्मारम्भावसानेषु। भार्गवादिचतुष्कस्येति। आत्रेयः काश्यपीयश्च मारीचो भार्गवस्तथेति अत्रिभृगुमरीचिकाश्यपकृतवैखानसविधिचतुष्टयस्येत्यर्थः।

वादरूपाणि वेति न ततो विरोधः ॥

ननु भार्गवादीनि न तावत् कल्पसूत्राणि, तथाऽनभ्युपगमात्, अप्रसिद्धेः, अयुक्तेश्च, । न स्मृत्यन्तराणि, मन्वादिष्वपाठात्; तद्वत् तत्प्रसिद्ध्याद्यभावाच्च । न च स्वतन्त्रतन्त्रान्तराणि, सांख्ययोगादि-सहपाठादर्शनात्, वैखानसानुवर्तनाच्च । तत् कतमां विधामवलम्ब्यामीषां प्रामाण्यम् ॥ उच्यते । मन्वत्रिभार्गवादि[स्मृति?]वत् नारदीयादिवच्च धर्मशास्त्रतयैव तेषामपि प्रामाण्यम्; अष्टादशादिपरिगणनस्य उप-लक्षणतायाः प्रामाणिकैरभ्युपगमात् ॥ स्मृत्यन्तरेषु देवोत्सवादिप्रपञ्चनं नास्तीति चेत्, मा भूत् प्रपञ्चनम्; स्वरूपं तावदनुज्ञातम् । तत्प्रपञ्चनपराणाम् तदुपजीवि(थापि जीवा)नामन्ततोऽन्योन्यवैषम्यमात्रस्य च सार्वत्रिकत्वात् ॥ निकृष्टाधिकारिकाणि तानीति चेन्न, तेष्वन्येषु च ब्राह्मण्यैकप्रधानत्ववचनात्, तथोपलब्धेश्च॥ कथं तेषां ब्राह्मण्यमिति चेत्, शान्तं पापम् । श्रवसी पिदधीमहि । तथापि च वक्तव्यम् । दृश्यन्ते ह्येते वंशपरम्परया वेदमधीयाना वैखानससूत्रोक्तवैदिकसकलसंस्कारशालिनो वर्णाश्रमधर्मकर्मठा भगवदे-कान्ताः ब्राह्मणाः । नूनममीषां ब्राह्मण्यैककारणेन भागवतत्वेनैव विपरीतं बम्भ्रमीति ब्राह्मणगर्दभः ; अन्यथा वैखानसकल्पस्यापि निरधिकारित्वेनाप्रामाण्यप्रसङ्गः ॥ अस्तु तत्प्रामाण्यम्; सन्तु च देशान्तरे कालान्तरे वा तदधिकारिणः ; अमी तु कतमे(न ते) इति चेत्—न ; देशान्तरादावप्येवं वक्तुं शक्यत्वात् ; विपरीतं वा कस्मान्न स्यात्?; एवं च सति सूत्रान्तरादिष्वपि कः समाश्वासः? ॥ वैखानसानां निकृष्टजातित्ववचनविवादाभ्यां सन्देहविषयत्वमिति चेत्, आप्तग्रन्थस्थतादृशवचनाभावात्; भावेऽप्येतेषां निकृष्टजातित्वे प्रमाणाभावात्; आगमप्रामाण्योक्तसात्वतादिसमाख्यानिर्वाहसमत्वात्; न ह्यनेकार्थः शब्दो नास्ति, न च शब्दैक्यादर्थैक्यम्; शब्दभेदेनार्थभेदो वा । अन्यथा विलीनं तृती-याश्रमेणापि ॥ विवादस्य तु भवादृशजिह्वास्पन्दमात्राधीनस्य सूत्रगोत्रादावपि सुशकत्वात् ॥ इतः पूर्वं तावन्नास्तीति चेन्न; अस्यापि विवादस्यानादित्वायोगात्; ततः पूर्वमभावात्; तथाच भवतो भविष्यतो वा विवादस्य विवादत्वाविशेषात् ततः परं तेषामनाश्वासप्रसङ्गात् ॥ अस्माकं तावत् तेषु संशयो नास्तीति

---

**तत्त्वे तदभावात्**=तत्त्वं क्रियेत्युभयोर्मध्ये तत्त्वविषये विरोधाभावात् । **इक्षुभक्षकृती**ति । **श्रीपाञ्च-रात्ररक्षायाम**पि सिद्धान्तव्यवस्थापनाधिकारे **इक्षुभक्ष...चिकीर्षुभि**रिति प्रयुक्तम् । यथा **इक्षुभक्षण-**प्रवृत्ताः इक्षुरसग्रहणाय दन्तैः खादनानुकूलमत्यन्तं तत्खण्डने यतन्ते । तथा सर्वं छिन्नं भिन्नं चिकीर्षद्भि-रित्थमुपक्षिप्यत इत्यर्थः । **तत्प्रसिद्धी**ति । स्मृतित्वप्रसिद्धीत्यर्थः । वचनविवादयोर्वचनं निरस्यति **आप्ते**ति । विवादं निरसिष्यति **विवादस्यत्वि**ति । **वचनाभावादि**ति वैखानसपदस्य निकृष्टजातिवचनत्वाभावा-दित्यर्थः । **भावेऽपि** । तत्पदस्य तदर्थकत्वसत्त्वेऽपि **एतेषां** प्रकृतब्राह्मणानां निकृष्टजातिकत्वे माना-भावात् । **तृतीयाश्रमेणापी**ति । वानप्रस्थे **वैखान**सपदप्रयोगात् तत्र निकृष्टजातिविवक्षायां विप्रस्य वानप्रस्थाश्रमपरं वाक्यमेव न स्यादित्यर्थः । **नास्ती**ति । सूत्रगोत्रादाविति शेषः ।

चेत्, अस्माकं वा किमस्त्यमीषु?। क तर्हि निकृष्टजात्यन्तरम्?। किमस्मासु तत् न्यासीकृतम्? ; येनास्माभिः प्रदर्शनीयम्। न चास्माभिरनन्ता देशा द्रष्टुं शक्याः। सम्भवति चोच्छेदः, इदानीं क्षत्रियवैश्यमाहिष्यादिवत्॥ तेषां केषां चित्रामसाम्यमात्रादत्रानुप्रवेशः संभवतीति चेन्न, अस्या अपि शङ्काया. सर्वत्र सुलभत्वात्; अस्ति च वर्णित्वभिक्षुत्वादीनां(दिना?) साम्य(वर्णत्वा.नामसाम्य) मन्यत्रापि। यश्चैवमतिशङ्कया दूयते, स तु स्वमातापितृचरितानवधारणेन स्वब्राह्मण्यमपि यथार्हमतिशङ्केतेति जितं लोकायतेन। उक्तं च भगवता—"अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति, नायं लोकोऽस्ति न परो न सुखं संशयात्मनः॥" इति। तत् सिद्धं विशिष्टाधिकारिकं वेदाविरुद्धं वैखानसादिस्मरणं प्रमाणमिति। यच्च धर्मशास्त्रादिषु अष्टादशादिपरिसंख्यानम्, न तत् अधिकसंख्याव्यवच्छेदपरम्, अन्येषामपि शिष्टपरिग्रहादेरविशिष्टत्वात्, अनुक्तांशदशनादिना उपजीव्यत्वाच्चेति।

एवं सपरिकरो वेदः प्रमाणमिति सिद्धम्॥

"छन्दः पादौ शब्दशास्त्रं च वक्त्रं कल्पः पाणी ज्यौतिषं चक्षुषी च।
शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं वेदस्याङ्गान्याहुरेतानि षट् च॥"

एवं सपरिकरवेदार्थतत्त्वनिर्णयविषया "अथातो धर्मजिज्ञासा" इत्यारभ्य "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" इत्येवमन्ता विंशतिलक्षणी मीमांसा। "तत्र च संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः" इति भाष्योपात्तो वृत्तिग्रन्थः॥

तत्त्वरत्नाकरे त्वेवमुक्तम्—

'कर्म.देवता.ब्रह्मगोचरा सा त्रिधोद्भौ सूत्रकारतः। जैमिनेर्मुनेः काशकृत्स्नतो बादरायणादित्यतः(दः) क्रमात्॥' इति। अनयोर्देवताकाण्डस्य जैमिनीयत्वकाशकृत्स्नीयत्वोक्ती तादधीन्यादिविवक्षया समानार्थे गमयितव्ये। तत्र कर्मकाण्डार्थमेवं संजगृहुः—

---

**माहिष्यः**। "माहिष्योग्रौ प्रजायेते विट्शूद्रांगनयोर्नृपात्" इत्युक्त्या क्षत्रियात् वैश्यायामुत्पन्नः जातिविशेषः। **सपरिकरे**त्यत्र परिकरशब्दविवक्षितानि अंगान्याह **छन्द** इति। शरीरैकैकदेशरूपमङ्गत्वमप्याह **पादा**वित्यादिना। छन्दसः पादबद्धत्वात्, शब्दस्य मुखाज्जायमानत्वात्, **कल्पस्य**=अनुष्ठानस्य हस्तसाध्यत्वात्, ज्यौतिषस्य तेजःप्रचुरत्वात् दूरदर्शित्वाच्च, शिक्षायां स्वरादेः घ्राणप्राणापेक्षत्वात् सर्वस्य शब्दरूपतया श्रोत्रस्य त्यागायोगात् एवमादिचिन्तया तत्तदंगत्वोक्तिः। अथ "धर्मे प्रमीयमाणे तु वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसा पूरयिष्यति" इत्युक्तदिशा पदतदर्थादिनिर्णायकपूर्वोक्तांगापेक्षया सकलवेदवाक्यार्थनिर्णयोपयोगिसत्तर्कप्रदर्शनात्मकतया प्रधानोपकारकं पूर्णं मीमांसाशास्त्रमाह **एव**मिति। प्रकृतग्रन्थस्यैव न्यायविस्तरान्तर्भावात् तदंगत्वं सुज्ञातम्। **षोडशलक्षणेन** षोडशाध्यायात्मकप्रथमभागेन॥ वृत्तिभाष्ययोः पूर्वभागस्य जैमिनिमात्रकर्तृकत्वं स्वरसप्रतीतम्। **तादधीन्यादी**ति। आधिकरणसारावलौ द्रष्टव्यम्।

"धर्मधीर्मानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः । सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः ॥" इति । "वेदार्थे न्यायचिन्त्ये प्रथममवसितं कर्म तद्देवता चाथातः शारीरकांशे निरवधिकफलब्रह्मचिन्ता त्वमूद्धि । तत्राध्याये परस्मिन् स्वयमुपनिषदामन्वयोऽस्याविरोधो मोक्षोपायोऽथ मुक्तिर्विषयविषयिणौ सिद्धसाध्यौ द्विकार्थौ ॥" "तत्राद्येऽत्यन्तगूढाविशदविशदतच्छायजीवादिवाचः पश्चात्स्मृत्यादिकैरक्षतिरहितहतिः कार्यताऽभ्रेन्द्रियादेः । दोषादोषौ तृतीयेऽप्यवरपरगतौ भक्तिरङ्गानि चाथोपासानुष्ठाप्रभावोत्क्रमसरणिफलान्यन्तिमे चिन्तितानि ॥

विचारात् पूर्वमेवात्र प्राप्तमध्ययनं विधेः । अतोऽनधीतवेदस्य विचारः शास्त्रबाधितः ॥

क्रमो विंशतिलक्षण्या न वैधः किंतु यौक्तिकः । अतो व्युत्क्रमचिन्तायामनौचित्यं प्रशिष्यते ॥

एवं विंशतिलक्षणीश्रवणमननाभ्यां सुप्रतिष्ठितसमस्तशास्त्रार्थस्य मोक्षसाधनतया विधेयं निदिध्यासनं न वाक्यार्थज्ञानमात्रम्, तस्य रागप्राप्तश्रवणादिसिद्धत्वात् । अत एव च तस्मिन् विशेषे वेदनादि-सामान्यशब्दपर्यवसानम् । न च—निदिध्यासनादिकं निषिद्धम्, वरणीयत्वमेव विहितमिति वाच्यम्; स्वतन्त्रान्यकर्तृकवरणकर्मीभावस्यापुरुषतन्त्रत्वेनाविधेयत्वात् । अतस्तद्धेतुना प्रीतिरूपत्वेन उपासनमेव विशिष्यते; तथा सति "भक्त्या त्वनन्यया" इति स्मृत्यविरोधश्च । तदेव च निदिध्यासनं प्रीतिरूपं प्रकरणविशेषात् समाधिः । स चाष्टाङ्गः शास्त्रेषु शिष्यते । तावति च पातञ्जलप्रामाण्यमपि । आगमशीलनं च आफलान्मात्रया अनुवर्तनीयम् । स्मरन्ति च—

'स्वाध्यायात् योगमासीत योगात् स्वाध्यायमामनेत् । स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते" इति । 'यत् पुनः श्रूयते—"ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः पलालमिव धान्यार्थी त्यजेद् ग्रन्थमशेषतः ॥" इति, तत् कौशल्यागाभिप्रायम्; न च सादरपटुसंस्कारप्रचयसंसिद्धमेधासंपदः पुरुषस्य कोशेन किंचित्

---

धर्मधीरिति । मीमांसायां द्वादशभिरध्यायैर्धर्मनिर्णयः क्रियते, प्रमाण—कर्मभेद—तदङ्ग-प्रयोजकत्व-पौर्वापर्य—कर्मकर्तृपुरुषैः पूर्वषट्कविचारितैः उत्तरषट्कविचारितसामान्यातिदेश, विशेषातिदेश, ऊह-बाध—बहर्थसकृद-नुष्ठान, अन्यार्थानुष्ठानाधीनार्थिकसिद्धिरूपांशसहितैरित्यर्थः **वेदार्थे** इति । वेदस्य कृत्स्नस्यार्थः पूर्णमीमांसावेद्यः । कर्म द्वादशभिः, देवता च परैश्चतुर्भिरवासीयत । अथ तद्विचारमेव वृत्तं हेतूकृत्य शारीरकरूपे तृतीकाण्डे निरवधिकानन्दभूतं ब्रह्म व्यचारि । तत्र चत्वारोऽध्यायाः अध्यायार्थास्तु **परस्मिन्**=परमात्मनि उपनिषदां समन्वयः, स्मृतितर्काद्यविरुद्धता, उपायः, फलञ्च । अध्यायद्विकद्विके प्रथमद्विकं विषयभूत-सिद्धब्रह्मप्रदर्शि । उत्तरद्विकं तद्विषयकज्ञानरूपसाध्यार्थदर्शि । तत्रेति श्लोकोऽधिकरणसारावलौ व्याख्यातोऽस्माभिरपि **सारार्थरत्नप्रभया । अवरपरगतौ** अवरं जीवात्मानं गतो दोषः । **वरं** परमदोषः उपासानुष्ठेत्यत्रोपासारोहेति तत्र पाठः । तत्स्वारस्यं तत्रास्मद्व्याख्याने द्रष्टव्यम् । **अनौचित्यमिति** न तु प्रत्यवाय इत्यर्थः । **निषिद्धम्**; नायमात्मा प्रवचनेनेति श्रुत्या । **विशिष्यते**=विशेषणवत् क्रियते । **ज्ञानविज्ञानतत्परः** पाण्डित्य, समाधिरूपज्ञानद्वयपरः ।

साध्यम् । मेधावीति च विशेष्यते । "धीर्धारणावती मेधा" इति च नैघण्टुकाः । अधीमहे च— 'मेधामनीषे मा विशतां समीची भूतस्य भव्यस्यावरुध्यै" इति । यद्वा मुक्तप्रायात्यन्तनिष्पन्नयोगपुरुषविषयमेतत् ; न हि तस्य शास्त्रेण ज्ञातव्यं तदानीमस्ति, साक्षात्कृतसमस्ततत्त्वार्थत्वात् । यत्तु स्मर्यते— "शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम् । उपदेशाद्धरिं बुद्ध्वा विरमेत् सर्वकर्मसु ॥" इति,— इदं तु तीव्रसंवेगिनाम् अलसास्तिकानां च ग्राह्यम् ; बुद्धिचलनहेतूनामसच्छास्त्राणां त्यागार्थं वा ; तदा विशेषणसाफल्यम् । धर्मविद्यास्थानेष्वपि हि बहिर्दलेष्वतिसंरम्भो मुमुक्षोरपोद्यते—

"न शब्दशास्त्राभिरतस्य मोक्षो न चैव रम्यावसथप्रियस्य । न भोजनाच्छादनतत्परस्य न लोकचित्तग्रहणे रतस्य ॥" इति ॥ तत् एतत् शाब्दं प्रमेयतत्त्वमधिजिगमिषतां प्रमाणेषु सारम् , तदभावे पुंसः पशुभिः समत्वप्रसङ्गादिति ।

यस्याज्ञा निगमैकहर्म्यवलभीवास्तव्यपारावती यद्भ्रूलास्यवशंवदा विधिशिवस्वस्थानसुस्थासिका ।
यः सर्वत्र यथापुरं वितनुते नामानि विश्वाकृतिर्नित्यं नः प्रतिभातु सर्ववचसां निष्ठा स नारायणः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ शब्दाध्याये द्वितीयमाह्निकम् । समाप्तश्च तृतीयोऽध्यायः ॥

—o—o—

---

**मेधामनीषे** इति । अनुभूतार्थधारणं मेधा, अनुभाव्यार्थधारणं मनीषेति स्यात् । **एतत्**= ग्रन्थमभ्यस्येति वचनम् **शब्दशास्त्रे**ति । सर्वमपि शास्त्रं परमार्थभूतपरमात्मपर्यवसानाग्रहणे शब्दशास्त्रमेव । अत एवाह—सोऽहं शब्दविदेवास्मि, नात्मविदिति । **रम्यावसथे**ति भोगस्थानेऽभिमानः । **भोजने**ति भोग्यभोगोपकरणाभिमानः **तदेतदि**ति । **एतत्** वेदवैदिकजातम् । भगवतो मनःकायवाग्व्यापारा वर्ण्यन्ते **यस्ये**ति । यद्वा शब्दाध्यायविषयेषु शब्देषु कचित् तदाज्ञास्थितिः, किञ्चिन्मानसशब्दव्यञ्जकमिङ्गितम्, अन्ये च केचित् तेन व्याक्रियन्ते, तथा सर्ववचस्संबन्धश्च तस्यास्तीति विविधशब्दसंबन्धो भगवानेवात्रानुसंहितः ॥ निगम एव हर्म्यम् । तत्र वलभी लिङादिः । तत्र **वास्तव्या**=वसन्ती **पारावती** कपोती भगवदाज्ञा । आज्ञेच्छा हि विध्यर्थः । वेदस्यापौरुषेयत्वेऽपि परमात्मसंबन्धः पुष्कलोऽस्तीति भावः । अनेन प्राभाकरकौमारिलविध्यर्थनिरासः । स्वस्थाने सुस्था **आसिका**=आसनम् । **लास्ये**ति चेष्टोक्त्या चेष्टाया अपि शब्देऽन्तार्भावः सूच्यते ।

शब्दो मानं तृतीयं बहुभिरुपगतं त्वन्वितस्याभिधानम्
वाचश्शक्तिर्विशिष्टे तदिह सुघटितं तत्त्वमस्यादिवाक्यम् ।
प्रामाण्यं च स्वतः स्यात् श्रुतिषु न घटते पौरुषेयत्वयुक्तिः
तत्तुल्यं पञ्चरात्रं स्मृतिसमबहुमत्यस्ति वैखानसञ्च ॥

**इति अभिनवदेशिक वात्स्यचक्रवर्ति वीरराघवाचार्यकृतिषु न्यायतत्त्वप्रकाशिकायां शब्दाध्यायस्तृतीयः ॥**

4. स्मृत्यध्यायः(शिष्टप्रमाणाध्यायः ?) प्रथममाह्निकम्

अथ स्मृतिर्निरूप्यते—संस्कारमात्रजं ज्ञानं स्मृतिरिति तल्लक्षणम् ॥ ननु स्मृतिर्न प्रमाणम्, अविद्यमानविषयत्वात्[1], अननुभूतित्वात्[2], [3]भ्रमसम्भवाच्चेति चेन्न; स्मृतिमात्राप्रामाण्यस्य प्रथमाह्निके प्रतिक्षिप्तत्वात्, अबाधितबाह्यार्थदर्शनात्, अतीतानागतविषयानुमानादिबाधप्रसङ्गात्, सर्वलोकविरोधात्, अननुभूते अर्थान्तरेऽपि स्मृतिप्रसङ्गात्, स्मृतेरपि स्वप्रकाशत्वेऽपि वेद्याकारे संस्कारादिसापेक्षत्वात् ।

[4]अथ पूर्वानुभवपुरस्कारेणैव ग्रहणादप्रामाण्यमिति चेन्न, स्मृतिप्रमोषे तदभावात्; प्रमाणतया संमतायां प्रत्यभिज्ञायां भावाच्च ।

[5]परतन्त्रत्वादप्रामाण्यमिति चेन्न; स्वहेतुपारतन्त्र्यमात्रस्य सार्वत्रिकत्वात् । अनुभवमूलत्वस्य प्रमाणमूलत्वस्य च सविकल्पकादिभिरनैकान्तिकत्वात् । संस्कारमात्रजन्यत्वस्यासाधारणत्वात् । स्वविषयप्रकाशव्यवहारयोस्तु स्मृतेरपि स्वतन्त्रत्वात् । इच्छादिवत्

---

प्रमाणचतुष्टये त्रयं त्रिभिरध्यायैर्न्यरूपि । चतुर्थमथ चतुर्थे निरूप्यते । **संस्कारमात्रे**ति । मात्रपदं सविकल्पकप्रत्यक्षस्यापि संस्कारजन्यतया तत्रातिव्याप्तिवारणाय । तार्किकादिभिः स्मृतेः प्रामाण्य न स्वीकृतम् । तत् अष्टभिर्हेतुभिरप्रामाण्यमाशंक्य परिहरिष्यति । प्रथमं हेतुत्रयमेकहेलया निरसितुमुपक्षिपति **अविद्यमाने**ति । अतीतानागतयोरपि स्मृतिदर्शनात् अविद्यमानविषयत्वम् । **भ्रमे**ति । अनुभवस्य भ्रमात्मकत्वे तदधीनस्मृतेरपि हि तथात्वमेव । **अतो न प्रमाणम्** न प्रमाणपदवाच्या स्मृतिः । **स्मृतिमात्रे**ति । स्मृतिसामान्येत्यर्थः । **दर्शनादि**ति । स्मृत्वा हि ग्रहीतुं गच्छन् पश्यति । एवमबाधितत्वे कथमप्रामाण्यम् । **अनुमानादी**ति **आदि**पदेन शब्दग्रहणम् । स्मृतिप्रामाण्याप्रामाण्ये अनुभवप्रामाण्याप्रामाण्यानुविधायिनी इतीष्टम् । अनुभवं विना जायमानचिन्तादौ कथं तदुपपादनमित्यत्र—तादृशस्मरणमेव न; तथासति घटादिकमप्यननुभूतं स्मर्यतामित्याह **अननुभूत** इति । ननु स्मृतिः सर्वथा संस्कारसापेक्षेति न वक्तुं शक्यते; स्मृतिस्वरूपस्य अनुभवं विनैव स्मृत्या ग्रहणादित्यत्राह **स्मृतेर**पीति । स्मृतिविषयः भूतः सर्वोऽप्यपेक्षते संस्कारम् । स्मृतिस्तु न स्वविषयः, किंतु स्वप्रकाशतया व्यवहारपदं भवतीत्यर्थः ।

चतुर्थं हेतुं निरस्यति **अथे**ति । **अनुभवपुरस्कारेण**=इदमहं पूर्वमन्वभवमिति अनुभवेन सहैव **ग्रहणात्** विषयग्राहित्वादित्यर्थः । **स्मृतिप्रमोषे**—अनुभवांशमविषयीकृत्य कतिपयानुभूतांशमात्रग्रहणे । **प्रत्यभिज्ञान**मिति । पूर्वानुभूतं पुरुषमिदानीमपि पश्यामीति प्रत्यभिज्ञाप्रत्यक्षे पूर्वानुभवपुरस्कारे सत्यपि प्रमाणत्वसद्भावात् हेतुरनेकान्त इत्यर्थः । पञ्चमं निरस्यति **परतन्त्रे**ति । पारतन्त्र्यमिदं किं सामान्यतः कारणाधीनत्वम्, अनुभवमूलकत्वं वेत्येवं बहुधा विकल्प्य निरस्यति **स्वहेत्वि**ति । **असाधारणत्वा**दिति । संस्कारमात्रजन्यत्वं हेतुर्न भवति, पक्षमात्रवर्तितया दृष्टान्तालाभेनासाधारणहेत्वाभासत्वादित्यर्थः । पारत-

विषयनियमेऽपि पारतन्त्र्यमस्तीति चेन्न, तद्वदेवाज्ञानत्वप्रसङ्गात् ; ज्ञानमेव हि स्वतो विषयप्रवणमिच्छसि ; अत एव हि नित्ययोरपि ईश्वरचिकीर्षाप्रयत्नयोर्विषयनियमाय ज्ञानापेक्षां ब्रूषे। इच्छादीनामपि स्वतो विषयप्रावण्यं ज्ञानत्वं चास्माभिः स्वीकृतम्। ननु संस्कारवदिति चेन्न, तस्यापि स्वहेतुसमानविषयज्ञानोत्पादनशक्तस्वभावत्वात्। अतो हेतुनियतविषयत्वमेव फलितम्। तच्च अनुभवेऽपि समम्। तथाच समानविषयानुभवजन्यत्वतदभावाभ्यां स्मृत्यनुभवयोः पारतन्त्र्यस्वातन्त्र्यव्यवहारो मन्दानाम्। स्वप्रामाण्यनिर्णयादावपि नानुभवापेक्षत्वनिर्बन्धः, स्वविषयप्रकाशनबाधविरहादिभिस्तत्सिद्धेः, ।

[6]गृहीतमात्रग्राहित्वस्यासाधारणत्वात्। प्राभाकराणामनुमानादौ, नैयायिकादीनां धारावाहिकादौ, योगसिद्धसर्वज्ञवादिनां द्वितीययोगप्रत्यक्षादौ, केषांचिदीश्वरवादिनामनित्येश्वरज्ञाने च व्यभिचाराच्च।

[7]निष्प्रयोजनत्वादप्रामाण्यमिति चेन्न—तृणादिविषयप्रत्यक्षादिनाऽनैकान्त्यात्। असिद्धेश्च ; स्मृत्यैव हि जगतां कृताकृतप्रत्यवेक्षणादिसिद्धिः ; स्मृत्यैव हि कवयः काव्यानि कवयन्ति ; स्मृत्यैव हि शब्दानुमानयोः प्रवृत्तिः ; परभक्त्यादिनिष्पत्तिश्च। पूर्वानुभवस्यैव तानि प्रयोजनानीति चेत्, सर्वजगदादिकारणस्य ब्रह्मसंकल्पस्यैव किं न स्युः?। एवंचानुभवस्यापि न तत्सिद्धिः, तत्कारणस्येति वक्तुं शक्यत्वात्। यदुक्तं प्रज्ञापरित्राणे—
"ज्ञातात्मज्ञानरूपत्वात् स्वप्रमेयप्रहाणतः। विषयाव्यभिचारित्वेऽप्यप्रामाण्यं स्मृतेर्मतम्॥"

---

न्त्र्यं नाम स्वातन्त्र्याभाव इत्यत्राह **स्वविषये**ति। स्मृतेरपि स्वातन्त्र्यसत्त्वादसिद्धिरित्यर्थः। यत् ज्ञायते तदेवेष्यत इति ज्ञानविषयत्वाधीनैवेच्छाविषयता, तथाऽनुभवविषयत्वाधीनैव स्मृतिविषयतेति इदमेवास्वातन्त्र्यमिति चेत्—तर्हि स्मृतेरिच्छाया इव ज्ञानत्वाभावः स्यादित्याह **इच्छादी**ति। आदिना कृतिपरिग्रहः। **ब्रूषे** इति उदयनं प्रति। पञ्चमस्तबके तेन तथोक्तेः। इच्छां विहाय संस्कारं दृष्टान्तयन् पृच्छति **नन्वि**ति। **समानविषयक**त्वमनुभवान्यूनानतिरिक्तविषयकत्वम्। **मन्दाना**मित्यनेन स्मृतिप्रमोषे न्यूनविषयकत्वस्य, अनेकानुभवविषयाणामेकस्मृत्या ग्रहणेऽधिकविषयकत्वस्य, अनुभवस्यापि जातस्य स्मृतिविषयत्वेऽधिकविषयकत्वस्य सत्त्वात् समानविषयकत्वं नेत्याशयेन **स्वे**ति। स्मृतिः स्वयाथार्थ्ये अनुभवयाथार्थ्यमनुविधत्ते इति स्वीकृतम् ; अनुभवयाथार्थ्यज्ञाने सत्येव स्मृतियाथार्थ्यज्ञानमिति तु न स्वीकृतम्। अतः ज्ञानसापेक्षत्ववादो न युक्त इत्यर्थः। षष्ठं निरस्यति **गृही**तेति। ज्ञातार्थमात्रविषयकत्वं पक्षमात्रे, अतोऽसाधारणहेत्वाभासत्वम्। **अनुमाने**ति। योयो धूमवान् सोऽग्निमानित्यत्र स इत्यनेन महानसत्वादिना महानसादिवत् पर्वतत्वेन पर्वतोऽपि भासते इति पक्षे इदम्। सप्तमं निरस्यति **निष्प्रयोजने**ति। निष्प्रयोजनत्वं स्मृतावसिद्धमित्युपपादयति **स्मृत्यैवे**ति। **कृताकृते**ति। अनुमन्त्रणमन्त्रादिकं यागादौ कृतं न वेति

इत्यादि, तदप्यनेन परिहृतम्।

प्रमाणव्यवहाराभावादप्रामाण्यमिति चेन्न; पामरव्यवहाराभावस्यानैकान्तिकत्वात्, एवं परीक्षकव्यवहाराभावस्यापि विगीतत्वाच्च; सर्वपरीक्षकव्यवहाराभावस्य चासिद्धेः; मानमनोहरादौ वागीश्वरादिभिस्तत्प्रामाण्यस्योक्तत्वात्। कतिपयपरीक्षकव्यवहाराभावस्य चातिप्रसञ्जकत्वात्। अक्षपादादिव्यवहाराव्यवहारयोर्बृहस्पत्यादिव्यवहार(रादि? वदस्मा.भर्ना-तीवाऽऽदरणात्, इन्द्रपाणिन्यादीनां तु सर्वसंप्रतिपत्तेः अबाधाच्चाऽऽदरात्। पाराशर्यादीनां प्रमाणपरिगणनानधिकृतत्वेन तदनुक्तेरप्रयोजकत्वात्। आगमः प्रमाणमित्यपि व्यवहारा-भावात्। "प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम्" इत्यादिषु च प्रत्यक्षादिमूलस्मृतेः प्रत्यक्षादिसमानचर्चत्वेन पृथग्व्यवहाराभावोपपत्तेः प्रमाणहेतुका स्मृतिः प्रमाणमेव, अविसंवादादिति। उक्तं च न्यायतत्त्वे स्मृत्युदासीनभेदके चतुर्थेऽधिकरणे—"अप्रमाणमूलत्व तु उभयोरपि नास्ति, व्यभिचाराभावेनानधिगतार्थं प्रमाणमिति विशेषणस्यायुक्तत्वात्। प्रमिते प्रमित्यनुपपत्तिः क्व दृष्टा? । स्मृतौ चेत्, प्रतिज्ञैव दृष्टान्तः स्यात्; ज्ञानान्तरे चेत्, न तु जानामि" इत्यादि।

तत्त्वरत्नाकरे च—"यथार्थनिश्चयो मानं तद्धेतुश्चेति सूरयः। नातिव्याप्तिः स्मृतौ व्याप्तिर्यथार्थेन(र्याथार्थ्येन?) हि सा प्रमा" इत्युक्त्वा अस्योत्तरार्धविवरणेऽप्युक्तम्—"अनुभूतविषया-संप्रमोषः स्मृतिः; यथा—स घट इति। ननु तामपि व्याप्नोति लक्षणम्; सत्यम्; तद्व्याप्तौ नातिव्याप्तिः, तस्या(स्या अ?)पि लक्ष्यपक्षे निक्षेपात्। लक्ष्यालक्ष्ये अनालक्ष्य क्षिप्यते लक्षणं कथम्। लोकधीव्यवहारं हि लक्ष्यालक्ष्यावधिं विदुः ॥" इत्यादि।

यत्तु—"अनुभवः प्रमाणम्। स्मृतिव्यतिरिक्तं ज्ञानमनुभवः" इत्यादिना स्मृतेरप्रामाण्यमुक्तमिव

---

संदेहाद्यपाकरणे उपयुज्यते। एवं सर्वत्र। **विषयाव्यभिचारित्वेऽपि**=याथार्थ्येऽपि; तदभाववति तत्प्रकारकत्वाभावेऽपि। अष्टमं निरस्यति **प्रमाणेति**। **अभावस्यापीति**। किञ्चित्परीक्षकव्यवहाराभावस्या-नैकान्तिकत्वात्। यत्परीक्षकव्यवहारोऽस्ति, तदीयव्यवहाराभावस्य **विगीतत्वात्**=विरोधादुक्तद्वयोगात्। सामान्यतस्तदभावश्च तत एवासिद्धः। **अतिप्रसञ्जकत्वा**दिति। अनुभवप्रामाण्यमपि न स्यात्। किमपि वस्तु न सिध्येत्; सर्वांगीकारस्य दुर्वचत्वादिति। **विशेषणस्येति**। **अनधिगतार्थ**मिति विशेषणं व्यर्थम्। ज्ञातार्थकत्वेऽपि प्रामाण्यस्थितेरिति भावः। **नातीति**। स्मृतौ लक्षणस्य व्याप्तिः व्यापनं अतिव्याप्तिरूपा न भवति, लक्ष्य एव सत्त्वं हि तदिति भावः ॥

स्मृतिप्रमाण्ये तत्त्वरत्नाकररूपसंप्रदायोक्तिरपि दर्शिता। श्रीविष्णुचित्तवरदविष्णुमिश्रग्रन्थविरोधं परिहर्तुमाह यत्त्विति। अत्र विष्णुचित्तवाक्ये स्मृतिव्यतिरिक्तमिति वाक्यमनुभवलक्षणपरम्; न तु

**श्रीविष्णुचित्तैः,** तन्नूनं परमतान्वारोहेण । अत एव हि तैः स्वतःप्रामाण्यनिर्णयदशायामन्यथा व्यवहृतम् । तथाहि—"तस्मात् सिद्धमेतत् प्रमाणानां यथार्थत्वलक्षणं प्रामाण्यं गुणज्ञानानपेक्षात् स्वप्रमाणादेवावसीयते, स्वकीयात् कारणादेव ज्ञायत इति च" इति । तथा "अर्थतथात्वं गुणसंवाद-ज्ञानानपेक्षज्ञप्ति, तदभावेऽपि ज्ञायमानत्वात्" इत्यादौ । "न च हेतोरसिद्धत्वम्; तथाहि—रजतज्ञानस्यार्थतथात्वं नाम रजतविषयत्वम्; तच्चासति बाधके रजतग्राहिणैव ज्ञानेनावगम्यते" इत्यादि, "अतो यथावस्थितवस्तुनिश्चयात्मकत्वमेव प्रामाण्यं प्रमाणज्ञानानामात्मीयात् कारणाज्ज्ञायते, न गुणसंवादज्ञानमपेक्षते" इति । तथा, "प्रमाणानां यथावस्थितवस्तुनिश्चयात्मकत्वमेव प्रामाण्यम् । तदाभासयुक्तयः पूर्वपक्षिणोच्यन्ते । सिद्धान्तेऽपि विवेकप्रदर्शनमेव" इति ।

यदि चानुभव एव प्रमाणम्, तन्न युक्तमुपयुक्तं वा । न च सर्वमनुभवं प्रमाणतया व्यवहरन्ति, पीतशंखभ्रमादिष्वदर्शनात् । नापि सर्वां स्मृतिमप्रमाणतया; प्रमाणमूलस्मृतिषु तदभावात् ।

"अगृहीतग्रहणशक्तं प्रमाणम्" इति **वरदविष्णुमिश्रो**क्तिरपि परमतान्वारोहेण नेतव्या ।

यत्तु **आगमप्रामाण्ये** प्रोक्तम्—"प्रमाणान्तरदृष्टार्थविषयव्यापिशेमुषी । प्रमाणमेव तत्पूर्वं न चेत् स्वार्थं विगाहते ॥" इति, इदमप्यनुवादवाक्यस्यान्यपरतया स्वार्थप्रामाण्यव्यवच्छेदार्थम्; अन्यथा स्मृतिप्रमोषे प्रमुषिततदंशे पूर्वानुभवपुरस्कारेण स्वार्थावगाहनासिद्धेः कथं तत्र स्मृतित्वनिबन्धनमप्रामाण्यं भविष्यति? ॥

---

स्मृतेः प्रामाण्यव्यवच्छेदतात्पर्यकम् । तदीयबहुवाक्यविरोधात् । तान्येव वाक्यानि उदाहरत्युपरि तत्र यथार्थत्वमेव प्रामाण्यमिति कथनात् तस्य च स्मृतौ स्पष्टत्वात् तत्प्रामाण्यमिष्टमेवेति । **गुणज्ञाने**ति । प्रामाण्यस्योत्पत्तिः प्रमाकारणात् गुणात्; गुणज्ञाने सति च प्रामाण्यनिश्चय इति तार्किकाः । तथा **सवादज्ञानं** सफलप्रवृत्तिजनक(निश्चितप्रामाण्यक)ज्ञानजातीयत्वज्ञानमपि प्रामाण्यज्ञानकारणमिति । स्वत एव ज्ञायते; स्वोत्पादककारणमेव प्रामाण्यज्ञानमपि जनयतीत्यस्मन्मतम् । **इत्यादौ** इत्यस्य **व्यवहृत**मिति पूर्वत्रान्वयः । मध्ये बहुवाक्यसत्वात् **इत्यादि** इति निर्दिश्यान्तिमवाक्यमाह **अत** इत्यादि । **अनुभवः प्रमाण**मिति उपक्रमदर्शित विष्णुचित्तवाक्यं नानुभवमात्रप्रामाण्यं नानुभवसामान्यप्रामाण्यं वा बोधयितुं क्षममित्याह **यदि चे**ति । अनुभूतिः प्रमेति प्रभाकरपक्षः; तन्मते अयथार्थज्ञानास्वीकारात्

मिश्रवाक्यं परमतानुवाद इत्याह **अगृहीते**ति । **प्रमाणान्तरे**ति । ज्ञानान्तरगृहीतार्थविषयकज्ञानमपि प्रमाणमेव, ज्ञानान्तरगृहीतत्वेन रूपेण तदर्थग्राहकं न भवेच्चेत् इति तदर्थः । अत्र गृहीतग्राहिज्ञानस्याप्रामाण्यं नाभिमतम् । अपितु गृहीतग्राहिज्ञानजनकवाक्यं वेदस्थितं न स्वार्थे विश्राम्यति. किंतु तदनुवादेन अन्यार्थविधाने इति ज्ञाप्यत इत्यर्थः । यदि अप्रामाण्यं विवक्षितम्, तर्हि इदमहं पूर्वमन्वभवमिति अनुभूतत्वेन ग्रहणरूपस्मृतौ अप्रामाण्यसिद्धावपि स्मृतिप्रमोषे तदसिद्ध्या किञ्चित्स्मृतिप्रामाण्यमेव स्यादित्याह **अन्यथे**ति । यत्र स घट इति न स्मरति, किंतु तत्तांशं विहाय घटमात्रं स्मृत्वा दर्शनादि कामयते,

यत्तु भाष्ये सन्मात्रग्राहिप्रत्यक्षनिराकरणदशायमुक्तम्—"अश्वे हस्तिनि च संवेदनयोरेकविषयत्वेनोपरितनस्य गृहीतग्राहित्वाद् विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात्" इति—न तत्र स्मृतेरप्रामाण्यं सूचितम्, प्रकारान्तरेणापि वैलक्षण्यसिद्धेः, तदपेक्षया च प्रसङ्गोपपत्तेः।

यच्चापरं भाष्यम्—"इन्द्रियजन्मनः प्रत्यक्षस्य ह्येष स्वभावनियमः, यत् स्वसमकालवर्तिनः पदार्थस्य ग्राहकत्वम्; न तु सर्वेषां ज्ञानानां प्रमाणानां च; स्मरणानुमानागमयोगिप्रत्यक्षादिषु कालान्तरवर्तिनोपि ग्रहणदर्शनात्" इत्यादि—तत्रापि परस्यानिष्टप्रसङ्गाय तदभिप्रायानुधावनेन विभज्योदाहरणं युक्तम्।

यच्च शास्त्रयोन्यधिकरणे भाषितम्—"भावनाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभूतविषयस्मृतिमात्रत्वान्न प्रामाण्यमिति कुतः प्रत्यक्षता ?" इति—इदमपि न साक्षात् सिद्धान्तस्थम्; न च याथार्थ्यं तत्र प्रतिक्षिप्तम्। एवमन्यदपि भाव्यम्।

स्मृत्यप्रामाण्यवादिनोपि वैशेषिकास्तां याथार्थ्यात् विद्याकोटौ पठन्ति, तत एव च तदेकदेशिभिरपि तत्प्रामाण्यं स्वीकृतमिति ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ स्मृत्यध्याये प्रथममाह्निकम् ॥ (शिष्टप्रमाणाध्याये स्मृत्याह्निकम् ?)

---

तत्रेत्यर्थः। **स्मृतिवैलक्षण्य**मिति। संस्काराजन्यतया संवेदनस्य स्मृतित्वाभावो युक्तः; स्मृतिवैलक्षण्यं यदस्ति, तदपि न स्यादिति। **प्रकारान्तरेणे**ति। यथा ज्ञातत्वात् उपर्युपरि तत्स्मृताव्प्रवृत्तिः, किंतु कार्यान्तरे, तथा अश्वसंवेदने जाते हस्तिसंवेदनार्थमपि प्रवृत्तिर्न स्यादित्यादिविवक्षेति भावः। **तत्रापी**ति। **ज्ञानाना**मिति ज्ञानत्वस्य **प्रमाणाना**मिति प्रमाणत्वस्य तथा **चकारेण** प्रत्यक्षाणामिति विवक्षणात् प्रत्यक्षत्वस्य च समकालवर्तिग्राहित्वे प्रयोजकत्वमाशंक्य निरस्यते **स्मरणे**त्यादिना। स्मरणस्यातीतादिग्राहिणो दर्शनात् न ज्ञानत्वं प्रयोजकम्। **अनुमा**नागमेति प्रमाणत्वाप्रयोजकत्वप्रदर्शनम् योगिप्रत्यक्ष.मुक्तप्रत्यक्षादिवचनं प्रत्यक्षत्वस्याप्रयोजकत्वप्रदर्शनाय। अत्र प्रमाणपार्थक्येन ज्ञानेति स्मरणग्रहणात् स्मरणे प्रामाण्यं भाष्यासंमतमिति शंका। सामान्यमारभ्य क्रमेण विशेषपर्यन्तस्याप्रयोजकत्वकथने तात्पर्यम्; अन्यत् अविवक्षितम्; स्मरणेऽनुमानादौ योगिप्रत्यक्षे च याथार्थ्यायाथार्थ्ययोर्यथायथं दर्शनात् ज्ञानत्वप्रमाणत्वप्रत्यक्षत्वानामेकत्र योगिप्रत्यक्षेऽपि सुवचत्वाच्च। अतः स्मरणे प्रमाणभिन्नत्वस्य प्रतिवादीष्टत्वेऽपि न भाष्यकृतस्तदिष्टिः। स्मृतेरप्रमाणत्वं भाष्यान्तरे स्पष्टमिति शंकां परिहरति **यच्च शास्त्रे**ति। तत्र **न प्रामाण्य**मित्यनेन न याथार्थ्यव्यवच्छेदः। अनुभवयाथार्थ्ये तदधीनस्मृतौ तद्व्यवच्छेदायोगात्। स्मृतिमूलभूतेनानुभवेन साधितमेव हि स्मृत्या साधनीयम्; अतः सिद्धसाधनात् साधकत्वायोग उच्यते; अतः पूर्वानुभव एव कीदृश इति विचार्यमिति भावः। अस्य च भाष्यस्य तार्किकोक्तिरूपत्वात् तन्मतरीत्या अप्रामाण्योक्तिरपि युक्ता। प्रत्यक्षस्यानुभवरूपत्वात् तदयोगोऽप्युच्यते **कुतः प्रत्यक्षते**ति। **विद्याकोटा**विति। **वैशेषिकदर्शने**

## 4. द्वितीयमाह्निकम्

एवं तावत् विवेचितं प्रमाणम्। चार्वाकास्तु प्रत्यक्षमेकं प्रमाणमित्याहुः। तेष्वेव केचित् अनुमानस्य प्रत्यक्षे अन्तर्भावमिच्छन्ति; केचित्तु अप्रामाण्यम्; प्रत्यक्षमनुमानं च काणादाः सौगताश्च। तत्र पूर्वे शब्दस्यानुमानेऽन्तर्भावमाहुः ; परे तु केचित् अन्तर्भावम् केचिदप्रामाण्यम्। ते चाऽऽगमं च सांख्याः, भूषणमतानुवर्तिनश्च। तत्र वेदस्यानादित्वं पूर्वे परिजगृहुः ; उत्तरे त्वीश्वरसृष्टताम् ; तानि च स्मृतिं च वैशेषिकैकदेशिनोऽस्मत्सिद्धान्तैकदेशिनश्च ; स्मृतिरहितानि सोपमानानि तान्यक्षपादसूत्रस्वारस्यानुसारिणः ; तान्येव सार्थापत्तिकानि प्राभाकराः ; अनुपलब्धिषष्ठानि तान्येव तौतातिताः, तत्प्रलोभनरुचयो मायावादिनश्च ; तान्येव संभवैतिह्ययुक्तानि पुराणशरणाः। अद्यतनप्रमाणपरिग्रहोपलम्भप्रक्रियेयम्। अनन्ते पूर्वापरकाले कः किमङ्गीकुर्यात्, किं वा बहिष्कुर्यात् इति को जानात्यन्यत्र कल्पसाक्षात्कारिणस्तस्मादेकस्मात् देवात्। इह च न्यूनवादिनस्तदवसरे निरस्ताः। अधिकतया पराभिमतानां

---

(9-2-10—35 *) "इन्द्रियदोषात् संस्कारदोषाच्चाविद्या" इति सूत्रम्। प्रत्यक्षलैङ्गिकस्मृतिस्वप्नान् पूर्वं निरूप्य तत्र विद्याचाविद्याचेति द्वैविध्यं प्रदर्शयता प्रथममविद्योच्यते। तत्र पूर्वानुभूतस्य रजतस्य यथावत्=यद्देशकालस्थतयाऽनुभवो जातः, तद्देशकालसंबन्धित्वांशग्रहः **संस्कारदोषात्**=संस्कारमोषात् यदि न भवेत्, तदा स्मृतिप्रमोषात् रजतमात्रस्मरणे शुक्तौ तद्भ्रमो भवतीत्युच्यते। एवञ्च संस्कारदोषाभावे यथावत् स्मृतौ विद्यात्वं सिद्धम्। अत एव अदुष्टं विद्येति उपरि सूत्रयामास। विद्याशब्दस्य ज्ञानसामान्यवाचित्वभ्रमव्युदासायाविद्यां निरूप्य तद्भिन्ना भवति विद्येत्युक्तम्। अतो याथार्थ्यरूपप्रामाण्यमिष्टम्। गौतमेन प्रमाणविभागावसरे स्मृतिकरणस्यापि प्रमाणत्वेनापरिगणनात् अनुभवत्वमपि प्रमालक्षणे व्याख्यातारो न्यवेशयन्। तावताऽनुभवत्वघटितलक्षणाभावेऽपि केवलं याथार्थ्यं न वार्यते। मीमांसकास्तु शास्त्रस्य मानान्तरगृहीतार्थकथनरूपत्वे वैयर्थ्यात् अप्राप्ते शास्त्रमर्थवदिति विमृश्य तदुपयोगितया अगृहीतार्थग्राहकत्वं प्रामाण्यमित्यभ्यधुः। स न सर्वसंमतप्रमाणशब्दार्थः। तद्वदेव तार्किकपरिभाषितमपि। अतः स्मृतिः प्रत्यक्षमैतिह्यमनुमानमिति चातुर्विध्यं प्रमाणारूढमेवाद्यत्य यथार्थज्ञानं प्रमेत्येव युक्तमिति भावः। श्री.।

प्रत्यक्षादित्रयातिरिक्तप्रमाणविचारश्चतुर्थे। तत्र स्मृत्यात्मकं तुरीयाद्ये न्यरूपि। एतावदतिरिक्तप्रमाणविचार इह द्वितीयाह्निके। तत्रापि प्रमाणत्वमिष्टम्, न तु प्रमाणान्तरत्वम्। तत्र मतभेदं दर्शयति **चार्वाका**स्त्वित्यादिना। **केचित्** सौगतैकदेशिनः। **ते चे**ति। प्रत्यक्षानुमानद्वयं चेत्यर्थः। **भूषण**शब्देन भूषणग्रन्थकारो नैयायिको भासर्वज्ञ उच्यते। **पूर्वे** सांख्याः। कल्पादिषु महर्षयः सिद्धाः प्रवक्तार इति तदाशयः। **अस्मत्सिद्धान्तैकदेशिन** इत्येकदेशिपदेन स्मृत्यप्रामाण्यं कैश्चिदुक्तमिति सूचनमात्रम्। तत्त्वरत्नाकाराद्यभिमतं चतुष्ट्वमेव स्वेष्टम्। **स्वारस्ये**ति। प्रमाणविभागसूत्रस्वारस्येत्यर्थः। **तौतातिताः** कौमारिलाः। **तुतात** इति कुमारिलः ख्यातः। सिद्धित्रये एतत्पदार्थोऽस्मद्

तु अन्तर्भावो वक्तव्यः। तत्र यथा प्रत्यभिज्ञादीनां प्रत्यक्षादिष्वेव निवेश इष्यते, एवमन्येषामपि।

प्रत्यभिज्ञा तावत् ग्रहणात्मिकैवेत्येके ; तथाहि—"प्रत्यभिज्ञायामपि स्मृतिरनुभव इत्यंशभेदोऽस्ति चेत्" इत्याशङ्क्य प्रत्युक्तं **श्रीविष्णुचित्तैः**—"यदि विषयभेदः, तदा अंशभेदः संभवेत् ; ऐक्यमेव हि निरंशं प्रत्यभिज्ञाप्रत्यक्षविषयः ॥ कथं संस्कारः अपरोक्षधीजनकः इति चेत् , न, चक्षुरादीन्द्रियसहकृतस्य संस्कारस्य ज्ञातुरैक्यात् तदिदमित्यपरोक्षधीहेतुत्वोपपत्तेः। ..............अपरोक्षार्थैक्यसाधिका। सा प्रत्यभिज्ञा सोऽयं वै पुमानित्येवमात्मिका। संस्कारमात्रजन्यत्वान्न स्मृतिर्मानमेव तत् ॥" इति। दीपे च 'अनुस्मृतेश्च' इति सूत्रे भाषितम्—"प्रत्यभिज्ञानाच्च न पटादेः क्षणिकत्वम् ; तदेवेदमिति प्रत्यभिज्ञायते। प्रत्यभिज्ञा हि नाम अतीतवर्तमानकालवर्त्यैकवस्तुविषयमेकं प्रत्यक्षज्ञानम्। तस्य कालद्वयसम्बन्धविशिष्टमेकमेव वस्तु विषयः। न च—तदित्यंशः स्मरणम्, इदमंशश्च ग्रहणम्, अतीतसम्बन्धिनीन्द्रियसंप्रयोगाभावात्—इति वाच्यम् ; तदिदमिति सामानाधिकरण्येन ग्रहणस्यैकत्वस्फुरणात्। पूर्वानुभवजनितसंस्कारसचिवेन्द्रियसंप्रयोगयुक्तस्य पुरुषस्य तथा ग्रहणमुपपद्यत एव अन्वयव्यतिरेकाधीनं हि सर्वत्र सामग्रीपरिकल्पनम्" इति ॥ अन्ये तु अत्र धीभेदबाध्यपरिहारौ मत्वा तदिदमंशयोस्तदंशे संस्कारान्वयव्यतिरेकानुविधानदर्शनात् परोक्षरूपतया इदमंशे च प्रत्यक्षरूपतया चोभयात्मकत्वमाहुः। तन्मते संस्काराधीनप्रकाशा स्मृतिरिति लक्षणम्, अपरोक्षज्ञानं प्रत्यक्षम्, उभयलक्षणयोगात् प्रत्यभिज्ञायामुभयात्मकत्वमिति। अभ्युपगन्तव्यं चास्मत्सिद्धान्तिभिः सर्वैः प्रत्यक्षेतरज्ञानानां परोक्षापरोक्षरूपत्वम्, स्वयंप्रकाशत्वात्, सर्वज्ञानानां वेद्येतरांशापेक्षया च प्रत्यक्षत्वात्। उक्तं चेदं **श्रीविष्णुचित्तैरपि**—"स्वप्रकाशकं विषयप्रकाशकं चैकमेव ज्ञानम् ; तत्र स्मृतिरनुभूतिरिति कुतो भेदः?" इति परिचोद्य, "प्रकाशमानभेदादिति ब्रूमः ; यथा—गौरयमित्येकस्मिन्नेव ज्ञाने प्रकारिप्रकारविषयभेदेन ज्ञानांशभेदः ; यथा च घटपटावित्येकस्मिन्नेव ज्ञाने अंशभेदः ; यथा वा पराभ्युपगतभ्रमज्ञानेऽधिष्ठानांशे प्रामाण्यम्, इतरत्राप्रामाण्यं च" इति परिहारात्। तथा "स्मृतेः स्वप्रकाशांशोऽपि संस्कारमात्रज एव ; इन्द्रियादिप्रतिनियतकारणान्तराभावात्" इति परिचोद्य, "नैवम्, ज्ञानानां प्रकाशमानत्वस्य स्वाभाविक-

---

व्याख्याने द्रष्टव्यः। **प्रमाणपरिग्रहेति**। प्रमाणत्वव्याप्य परस्परासमानाधिकरणधर्मावच्छिन्नमानसंख्याने—त्यर्थः। **अन्येषामपि**=उपमानार्थापत्तिसंभवैतिह्यानामपि। **प्रत्यभिज्ञादीना**मिति आदिपदेन प्रक्षिसंधानसंवादपरिग्रहः।

प्रत्यभिज्ञाविषयं विचारं विस्तृणीते **प्रत्यभिज्ञा ताव**दित्यादिना। **धीभेदबाध्यपरिहारौ**। अनया धिया बाध्यं यत् अनेकत्वं तत्परिहारकांशद्वयम्। **अन्येत्वि**त्येतत्पक्षोपबृंहणमेव क्रियते, **तन्मते** इत्यारभ्य **प्रत्यभिज्ञाऽप्युभयात्मिकेति** इत्यन्तेन। **कुतो भेद** इति। स्मृतिरप्यनुभूतिरेवेति भावः। स्वरूपांशेऽनुभूतित्वेऽपि विषयांशे स्मृतित्वमिति परिहारः। प्रत्यभिज्ञायां तु विषयांशयोरेवैकत्र स्मृतित्वमन्यत्रानुभूति-

स्यात्" इति परिहाराच्च । तस्मात् सर्वत्र विषयापेक्षयैव अपरोक्षत्वानुमितित्वस्मृतित्वादिविभागः । जातिसंकरासंकरादि तु दर्शनादर्शनाभ्यां व्यवस्थाप्यम्, औपाधिकसंकरादिवच्च । तदेवमुभयात्मकत्वोपपत्तेः प्रत्यभिज्ञाऽप्युभयात्मिका—इति ॥

प्रत्यभिज्ञाऽप्यभिज्ञावत् त्रिधा चाक्षादिभेदतः । तत्तत्संस्कारसंभेदमूलत्वान्नवधा भवेत् ॥
प्रत्यक्षतोक्तिर्दीपादौ प्रदर्शनपरेष्यताम् । न हि लिङ्गादिभि सोऽयमिति ज्ञानं न जायते ॥
शब्दजं प्रत्यभिज्ञानमुपजीव्य प्रवर्तते । शाखान्तराधिकरणन्यायश्च क्रतुविद्ययोः ॥
दीपादिष्विव सर्वत्र बाधकादेरसंभवात् । विगीतं प्रत्यभिज्ञानं प्रमाणं सविकल्पवत् ॥
करणाकरणादीनां कालभेदाद्युपाधितः । अविरोधान्न बीजादौ शक्यते भेदकल्पनम् ॥
अन्यथा देशभेदेन करणाकरणादिभिः । एकं जगति नैव स्यादिति स्यात् सर्वशून्यता ॥
तस्माद् विरुद्धसंस्पृष्टविषयप्रत्यभिज्ञया । स्थिरत्वमात्मनां सिद्धं बाह्यानामपि वास्तवम् ॥

प्रतिसन्धानमप्यात्मगोचरं प्रत्यभिज्ञाविशेष एव; योऽहमद्राक्षम्, स एव स्पृशामि इत्येवमादिरूप-

---

त्वमिति भेदः । **औपाधिके**ति । तार्किकैरपि जातिसंकरमनिच्छद्भिरुपाधिसंकर इष्टः । यथा पृथक्स्थितयोर्हेत्वाभासदोषयोरेकत्र हेतौ समावेशः, यथा च भूतत्वमूर्तत्वयोः पृथिव्यादौ । अथ प्रत्यभिज्ञा नाम स्मृतानुभूयमानैक्यावगाहिप्रत्यक्षमिति प्रसिद्धावपि तत्र प्रत्यक्षमित्यनुक्त्वा ज्ञानमित्येव निवेश्यम्; अनुमितिशाब्दबोधयोरपि प्रत्यभिज्ञात्वसंभवादिति कारिकाभिराह **प्रत्यभिज्ञाऽपी**ति । **दीपादा**विति । 'सेयं दीपज्वाले'त्यादिप्रत्यभिज्ञायां प्रत्यक्षतोक्तिः **प्रदर्शनपरा**=अनुमित्याद्यात्मकप्रत्यभिज्ञाया अप्युपलक्षिकेत्यर्थः । **नही**ति । ननु सोऽयमित्यस्यानुमित्याकारत्वे स इति पक्षनिर्देशः इदन्त्वं विधेयमिति तस्येदन्त्वव्याप्यवान् स इति परामर्शजन्यतया पूर्वमेव स इति गृहीतस्यानुमितौ संस्काराधीनभानं कथम्; तदभावे कथं प्रत्यभिज्ञात्वम् । एवं सोऽयमिति पदजन्यपदार्थस्मृत्यधीनबोधे स इत्यस्य कथं संस्काराधीनतेति चेत्—परामर्शात् पदजाताच्च किञ्चिदुद्देश्यककिञ्चिद्विधेयकज्ञाने जायमाने संस्कारबलादुद्देश्यांशे विधेयांशे वा तत्ताभाने प्रत्यभिज्ञात्वमिति भावः । **क्रतुविद्ययो**रिति । सर्वशाखाप्रत्ययमेकमग्निहोत्रादिकर्मेति जैमिन्युक्तम्; तदिदमिति प्रत्यभिज्ञानात् । भक्तिविद्यादिविषये सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादिति बादरायणोक्तम् । **सविकल्पवत्**=अयमपि गौरिति प्रत्यक्षवत् । ननु तदेवेदं बीजमिति प्रत्यभिज्ञया बीजैक्यस्वीकारे तस्य पूर्वमङ्कुरकरणाभावः अथांकुरकारित्वमिति विरुद्धधर्मसमावेशापत्तिः । अतः क्षणभेदेन बीजभेद इति बौद्धशंकायां स्थिरत्ववाद्यभिमतं समाधानमाह **करणे**त्यादिना । **अन्यथे**ति । विभिन्नकालिककरणाकरणयोर्बीजभेदप्रयोजकत्वे, तदेव बीजक्षणभूतमेतद्देशे करोति, देशान्तरे न करोतीति देशभेदेन करणाकरणोभयसमावेशस्याङ्कुरे विरोधात् क्षणोऽपि क्षुद्यताम्; क्षणस्याप्येवमसिद्धौ शून्यवाद एव स्यादिति ।

प्रतिसंधानसंवादयोः पार्थक्यं परिहरति **प्रतिसंधान**मित्यादिना । स्मरणसामान्ये प्रतिसंधानपदप्रयो-

त्वात् । प्रतिसन्धिरर्थद्वयविषयैकबुद्धिरित्येके । तत्रापि पृथगनुभूतानेकार्थगोचरैककर्तृकैकबुद्धिरिति पूरणीयमिति ।

संवादो नाम ज्ञानजात्यन्तरमिति केचित्; तदयुक्तम्, संख्यान्तरासंभवात् । यत्तु वरद-विष्णुमिश्रैरुक्तम्—"गृहीतार्थविषयं शब्दकारणकं ज्ञानं संवादः" इति, तदपि शाब्दावान्तरभेदे संज्ञाविशेषनिवेशमात्रपरम्; न हि गृहीतार्थविषयत्वे शब्दशक्तिप्रसूतत्वमपैति; गृहीतमात्रगोचरप्रमाणान्तरेऽपि तदन्यत्वप्रसङ्गात्; भवति हि पर्वतोऽयमग्निमानिति शब्दश्रवणानन्तरं धूमं परामृशतोऽपि तादृशी बुद्धिः । तथा द्वितीययोगिप्रत्यक्षादावपि द्रष्टव्यम् । अनपेक्षितत्वादिकमपि श्रुतविषयानुमानादौ समम् । न चापेक्षायत्तं(युक्तं) प्रामाण्यं भेदोऽभेदो वा, तृणादिप्रत्यक्षस्यापि तथा प्रसङ्गादित्युक्तम् ॥ किमर्थं तर्हि वेदानां वेदान्तानां चाप्राप्तविषयत्वं समर्थ्यते इति चेत्, अतथाप्राप्तौ साक्षादप्रामाण्यप्रसङ्गात्; तथाप्राप्तावपि अनपेक्षिततया प्रेक्षावद्भिर्निरर्थकप्रयासभीरुभिस्त्याज्यत्वापातेन फलतोऽप्रामाण्यप्रसङ्गादिति पश्य ॥

उपमानमपि यदि गृह्यमाणपदार्थगतसादृश्यविज्ञानात् स्मर्यमाणपदार्थगतसादृश्यविज्ञानम्, तदा स्मृतिः; तत्तद्वस्तुसंस्थानविशेषाद्यतिरिक्तस्य सादृश्यस्याभावात् । तस्य च पूर्वदृष्टत्वात्, स्मर्यमाणत्वाच्च । व्यवहारोऽप्यस्त्वपूर्वः तत्तद्व्यवहारवत् प्रतिसम्बन्धविशेषपरामर्शोपाधिकः । यद्वा यो यत्सदृशः, स

---

गोऽप्यस्तु । इह प्रत्येकानुभूतार्थद्वयविषयकज्ञानं प्रतिसंधानमित्यर्थः । पूर्वानुभवप्रकृतज्ञानोभयाश्रयस्यैकत्व एव प्रतिसंधानपदप्रयोग इत्याह **तत्रापी**ति । **संवादो** नाम प्रमाणान्तरजन्यं वा प्रमात्रन्तरगतं वा प्रमाणत्वेनावधृतं समानविषयकं ज्ञानम् । **संख्यान्तरम्** प्रत्यक्षानुमितिशाब्दबोधत्रयाधिकता **प्रसंगादित्युक्त**मिति । पूर्वाह्निके, "निष्प्रयोजनत्वादप्रामाण्यमिति चेन्न ; तृणादिविषयप्रत्यक्षादि" इति वाक्ये इति भाव्यम् । **अतथाप्राप्ता**विति । ताद्रूप्येण परिच्छित्तिः तद्विपर्ययतः परिच्छित्तिश्च यत्र न, तद्विषयत्वं वेदानाम् । तत्र द्वितीये बाधितत्वादप्रामाण्यमित्यर्थः । तथाप्राप्तौ तु पौनरुक्त्यम् । अत एवानुवादतया विधेयान्तरशेषत्वेन प्राप्तविषयवाक्यसार्थक्योक्तिः ।

अथ तत्तद्वादिपरिगणितानां उपमान-अर्थापत्ति-अभाव-संभव-ऐतिह्यानाम्, गणनप्रसिद्धिरहितानां चेष्टा, लिपि. प्रतिभानाञ्च क्लृप्तप्रमाणान्तर्भावमुपपादयति **उपमानमपी**त्यादिना । **गृह्यमाणे**ति । अरण्ये गृह्यमाणे गवये तद्गतं गोसादृश्यं दृष्टवतः पुंसः तत एव सादृश्यदर्शनात् करणात् एतत्सदृशो गौरिति असंनिकृष्टे गवि गवयसादृश्यज्ञानं जायमानमुपमितिरिति भाट्टाः । अस्य स्मृतित्वादनुभवत्वमेव नास्ति; कुतः प्रमितिविशेषतेत्यर्थः । ननु सादृश्यं सप्रतिसंबन्धिकम्, संस्थानं तु न तथा ; कथमैक्यम् । अत एतत्सदृश इति व्यवहारविषयो विलक्षण एवेत्यत्राह **व्यवे**ति । गोत्वाश्वत्वाभावयोरेकत्वेऽपि अभावत्वेन व्यवहारे प्रतिसंबन्धिसापेक्षत्ववत् संस्थानस्यैव सादृश्यत्वेन व्यवहारे गवयाद्यपेक्षेति भावः । अथाप्येवंरूपेण पूर्वमग्रहणान्न स्मृतित्वमित्यत्रान्यदाह **यद्वे**ति । "साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते । अर्थापत्ति-

तद्गतसादृश्यप्रतियोगी ; यथा मिथः सहस्तौ इति व्याप्तिसिद्धौ, 'गौरेतत्सदृशः, एतद्गतसादृश्यप्रतियोगित्वात्' इत्यनुमानात् स्मर्यमाणगतसादृश्यसिद्धिः। अन्यथा गृह्यमाणगतवैसादृश्यज्ञानात् स्मर्यमाणगतवैसादृश्यप्रतीतिरपि मानान्तरं स्यात्। सा चेत् अर्थापत्तिः, सादृश्यधीरपि तथा किं न स्यादिति। अथवा युगपदेव तत्सदृशोऽयमिति प्रत्ययेनैवोभयवृत्तिसादृश्यस्फुरणान्न तद्धेतुकम्। अन्यथा पृथगनुभूतयोस्तदानीमप्रतीतसादृश्ययोः परस्तात् युगपत् स्मर्यमाणयोर्युगपदेव प्रतीयमानसादृश्ययोः को निर्वाहः?, तत्रापि (अत्रापि) वा प्रमाणान्तरं कल्प्यते? यथा गौः तथा गवयः, गोवद् द्विशफो न भवत्यश्वः, दीर्घग्रीवः प्रलम्बोष्ठो विकटाकृतिः पशुः क्रमेलकः इति तु साधर्म्यवैधर्म्यधर्ममात्रविषयम्। त्रिविधमप्यतिदेशवाक्यमागम एव।

**यत्तु—"श्रुतातिदेशवाक्यस्य गवयादावतिदेशवाक्यार्थप्रत्यभिज्ञानमुपमानम्, तच्च व्युत्पत्तिफलकम्" इति—तदप्यनुपपन्नम्, प्रागेव व्युत्पत्तिसिद्धेः। यत्तु—**

**"सादृश्यस्यानिमित्तत्वात् निमित्तस्याप्रतीतितः। समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा॥"**

**इति—तत्र, 'निमित्तस्याप्रतीतितः' इति त्वसिद्धम्, गवयत्वादेरेव जातिविशेषस्य गोसादृश्याकारोपलक्षितस्य प्रथममेव वाक्यार्थतया प्रतीतेः; गोसादृश्योपलक्षितः कश्चिदर्थविशेषो गवय इति हि प्रतीतिः। पश्चात् प्रत्यक्षितगवयस्य तद्वैशद्यमात्रमेव; उक्तं च**

---

रसौ व्यक्तमिति चेत्, प्रकृतं न किम्?' इति उदयनोक्तं दोषमाह **अन्यथेति**। स्वयं पक्षान्तरमाह **अथवेति**। समानसंवित्संवेद्येषु एकरूपेण ज्ञानमेवान्यरूपेण ज्ञानमपीति भावः। तर्हि भवत्पक्षेऽस्य कुत्रान्तर्भाव इत्यत्र शब्द एवेत्याह **यथा गौरिति**। **धर्ममात्रेति**। धर्मसामान्येत्यर्थः; दीर्घग्रीवत्वादिवैधर्म्य,पशुत्वरूपसाधर्म्यकथनात्।

भाट्टपक्षं प्रतिक्षिप्य तार्किकपक्षं पराकरोति **यत्त्विति**। गोसदृशो गवय इति वाक्यार्थस्मरणमुपमितिकरणम्; अयं गवयो गवयपदवाच्य इति गवयत्वावच्छिन्ने गवयपदवाच्यत्वज्ञानं शब्दार्थसंबन्धज्ञानमुपमितिरूपफलमिति ह्युदयनोक्तम्। तन्न; अतिदेशवाक्यश्रवणकाल एव शब्दार्थसंबन्धग्रहणसंभवात् गवयदर्शनस्य तदर्थमनपेक्षितत्वात्। अत्रोदयनकारिकामनूद्य निरस्यति **यत्त्विति**। **सादृश्यस्येति**। अतिदेशवाक्यात् गोसादृश्यमेव प्रतीतम्, न तु गवयत्वम्। सादृश्यं तु न प्रवृत्तिनिमित्तम्। गोसादृश्यस्य गवयपदशक्यतावच्छेदकत्वे अज्ञातगोव्यक्तेरारण्यकस्य गवयशब्दव्युत्पत्त्यभावप्रसंगात्। गोपदस्य गवयसादृश्यं प्रवृत्तिनिमित्तमस्तु इति प्रतिबन्द्यापत्तेश्च। अतो गवयत्वं प्रवृत्तिनिमित्तम्। तत्तु गवयदर्शनात् प्राक् न प्रतीतम्। अतः **समयः**=शब्दार्थसंकेतः पूर्वं शब्दप्रमाणेन वा शब्दमूलकानुमानेन वा दुर्ग्रह इति तदुक्तिः॥ तन्न; अतिदेशवाक्यश्रवणकाले गवयशब्दवाच्यः किञ्चिदसाधारणधर्मविशिष्टः गवादिवत् प्राणिविशेषत्वादित्यादिना धर्मानुमानसंभवात् तस्य लाघवेन प्रवृत्तिनिमित्तत्वस्य

श्रीविष्णुचित्तैः—"गोसदृशो गवयः इति गोसादृश्यैकाधिकरणं सामान्यं वाच्यमिति व्युत्पन्नम्, प्रथमं वाक्यार्थतया प्रतीतेः। गोसादृश्योपलक्षितस्यानिर्णये पश्चादप्यनिर्णयः। अन्यथानिर्णये तथा पश्चादपि। ततो वाक्यश्रवणवेलायामेव निर्णीतम्" इति। एवं चानभ्युपगमे कथमिन्द्रादिशब्दव्युत्पत्तिः? न ह्यत्र निमित्तभूतसंस्थानविशेषादिदृष्टिः। न च नित्यं तत्राव्युत्पत्तिः, तदर्थविशिष्टवाक्यार्थबोधापातात्। एवं नित्यातीन्द्रियविषयसंस्कारादिशब्दानामपि नित्यमव्युत्पत्तिरेव स्यात्। तत्र चेत् कथंचिन्निर्वाहः, तथाऽत्रापि। तत् सिद्धं नोपमानमतिरिक्तम् इति॥

अर्थापत्तिस्त्वनुमानमेव; तथाहि—अनुपपद्यमानदर्शनादुपपादककल्पनं नाम व्याप्यात् व्यापकज्ञानम्; अव्याप्यस्य तेन विना अनुपपद्यमानत्वाभावात्, अव्यापकस्य च तदुपपादकत्वायोगादिति।

प्रमाणद्वयविरोधे सति विषयव्यवस्थापनमर्थापत्तिरित्यपि न वाच्यम्; प्रमाणयोः सतोर्विरोधाभावात्; विरुद्धयोरपि प्रामाण्यायोगात्। ननु देवदत्तस्य जीवने कुतश्चित् प्रमाणात् प्रमिते, जीवता क्वचित् स्यातव्यमित्यविशेषेण देशसामान्यसम्बन्धावगतौ गृहमप्यास्कन्दन्त्यां सत्याम्, प्रत्यक्षे च गृहे तदभावं प्रतिपादयति, स्पष्टो विरोधः; अतस्तच्छान्त्यै बहिर्भावकल्पनमर्थापत्तिरिति—मैवम्; क्वचिदिति विदितस्य जीवनस्य नियमाभावात् बहिर्विद्यमानतासंदेहे, निश्चयरूपेण गृहाभावप्रत्यक्षेण प्रतिस्पर्धितुमसामर्थ्यात्। न च विरुद्धविषययोर्वास्तवं कुत्रापि समबलत्वं समस्ति; उभयाप्रामाण्ये तु कथंचित् स्यात्। आभिमानिकबलसाम्येऽपि तथैव। यदा वैषम्यग्रहः, तदा तत एव बलाबलसिद्धौ किमर्थापत्त्या साध्यम्? अतः केवलनिरवकाशविरोधिविशेषसन्निधौ सति सावकाशं सामान्यं संकोचयितव्यमिति व्यवस्था स्यात्। साऽपि च, तथैव व्याप्तिरित्यनुमानफलमेव।

---

तदैव बुद्धेः। एवमेव हि इन्द्रादिशब्दात् अतीन्द्रियवस्तुव्युत्पत्तिरिति॥

**अनुपपद्यमाने**ति। भोजनं विना अनुपपद्यमानस्य पीनत्वस्य दर्शनात् उपपादकस्य भोजनस्य कल्पनम् व्याप्येन व्यापकस्यानुमानमेव। तत्र दिवाभोजनबाधात् रात्रिभोजनपरिशेषः। प्रकारान्तरेणार्थापत्तिरुपपादिता मीमांसकैः पार्थसारथिमिश्रादिभिः; तन्निरस्यति **प्रमाणद्वये**ति। मानद्वयविरोधज्ञानमर्थापत्तिप्रमाणम्। अविरोधनिश्चयः अर्थापत्तिप्रमितिरिति न वाच्यमित्यर्थः। प्रमाणविरोधस्य प्रामाण्यस्य च सामानाधिकरण्यमेव न भवतीति। **नन्वि**ति। जीवनं नाम सप्राणतया सत्त्वम्। सत्त्वञ्च देशसापेक्षम्, क्वचिदस्ति, गृहे नास्ति इति वाक्यद्वये प्रथमवाक्ये क्वचित्पदं सामान्येन गृहदेशमपि गृह्णीयात्। प्रत्यक्षं च गृहे तदभावप्रतिपादकम्; तदा गृहसत्त्वगृहासत्त्वोभयप्रतीत्या विरोध इति न; क्वचित्पदं गृहार्थकं

अन्यथा विरोधिविषयत्याग इवाविरोधिविशेषपर्यवसानादावपि मानान्तरक्लृप्तिः किं न स्यात् ?

एवमनभ्युपगमे च धूमानुमानादावप्यर्थापत्तित्वप्रसङ्गः। अग्निं विना अनुपपद्यमानत्वस्य लिङ्गप्रत्यक्षरूपप्रमाणद्वयविरोधस्य च वक्तुं शक्यत्वात्। धूमो हि कारणभूतं वह्निमाक्षिपति, प्रतिक्षिपति तु प्रत्यक्षम्—इति विरोधे, पर्वतावाग्भागे वह्निरिति व्यवस्थाकल्पनस्यार्थापत्तित्वं स्यात्। व्याप्तिनिरूपणमन्तरेण गमकता, गमकस्यैव धर्मान्तरयोगितया गम्यतेत्यादिभेदास्त्वाशामात्रकल्पिताः इति। उक्तं च श्रीविष्णुचित्तैः, "अर्थापत्तिरनुमानम्" इत्यादि।

**केचित्तु केवलव्यतिरेकिणि अर्थापत्तिसंज्ञां निवेशयन्ति। तस्य प्रागेव निरासान्न प्रमाणवर्गानुप्रवेशः। अनुप्रवेशेऽपि वा न पृथक्त्वम्॥**

यत्तु आगमप्रामाण्ये "अनुभवश्चेन्द्रिय.लिङ्ग.शब्द.सदृश-अन्यथानुपपद्यमानार्थपूर्वकः" इत्यादिषु उपमानार्थापत्तिपरिग्रहः प्रतिभाति, तदपि पूर्वपक्षप्रदेशगतत्वान्न सिद्धान्तत्वाय कल्पते॥

अभावस्त्वस्मन्मते भावान्तरात्मा। स चाक्षादिभिर्यथासंभवं सिध्यति। अभावात्मना तु ग्रहणेऽपि प्रतियोगिस्मरणादिसहकारिसहितानि तान्येव प्रमाणानीति न तदतिरिक्तकल्प-

---

वा बहिरर्थकं वेति संदेहे गृहाभावप्रत्यक्षतो गृहकोटिव्युदासात् बहिरर्थत्वनिश्चयादित्यर्थः। **सेति** व्यवस्थेत्यर्थः। **विरोधिविषयत्यागः** उत्सर्गापवादस्थले। **अविरोधिविशेषेति** सामान्यविशेषन्यायोऽभिमतः। "न मानयोर्विरोधोऽस्ति" इत्युदयनोक्तमेतावतोपपादितम्। "प्रसिद्धे वाऽप्यसौ सम." इति तदुक्तमुपपादयति **एवमनभ्युपगमेचेति**। **लिङ्गप्रत्यक्षेति**। लिंगमग्निसाधकम्, प्रत्यक्षं तदभावसाधकम्। **प्रतिक्षिपतीति**। वह्निमिति शेषः। कथं प्रत्यक्षबाधे सति अनुमानोदय इत्यत्र तत्संभवं दर्शयति **पर्वतावाग्भाग इति**। 'अर्थापत्त्यनुमानयोः प्रकारान्तरेण वैलक्षण्यशंकां परिहरति **व्याप्तीति**। धूमो व्याप्तिज्ञानमुखेनाग्निं ज्ञापयति। अर्थापत्तिस्थले व्याप्तिज्ञानं नानुभूयते इति कश्चित्। अग्निधूमयोर्गम्यगमकयोर्भेदोऽस्ति ; अर्थापत्तिस्थले तु जीवद्देवदत्त एव गृहाभावविशिष्टो गमकः, बहिस्सत्वरूपधर्मान्तरविशिष्टः स एव गम्य इत्यन्यः। धूमो निश्चितो गमकः, गृहावर्तिगतजीवनं संदिग्धं सत् बहिस्सत्त्वगमकमित्यपरः। अर्थापत्तौ लिङ्गे पक्षधर्मताज्ञानमनपेक्षितम् ; अनुमाने तु न तथेतीतरः। सर्वमिदमनुपपन्नमिति भावः। शास्त्रदीपिकादिकं द्रष्टव्यम्। **तस्य**=केवलव्यतिरेकिणः।

अभावाख्यमनुपलब्धिरूपं प्रमाणान्तरं प्रतिक्षिपति **अभावस्त्विति**। भाव एवाभाव इति पक्षो वा अभावोऽर्थान्तरमिति वा। उभयथाऽपि नातिरिक्तप्रमाणतेत्याह क्रमेण। **भावान्तरात्मेति**। अश्वत्वाद्यभावो हि गोत्वादिरूपधर्म एवेति भावः। **स चेति**। अयमाशयः—अभावः प्रमाणान्तरमिति वदता किमभावग्राहकं प्रमाणमन्यदित्युच्यते, उत नास्ति घट. अनुपलब्धेरिति अनुपलब्धिरूपोपलब्ध्य-

नावकाशः। अत एव हि प्रातर्गजाभावादिज्ञानमपि निर्व्यूढम् ; दृष्ट एव हि देशकालादिसंसर्गादिविशेषः पश्चात् प्रतियोगिस्मरणादिमतः पुरुषस्य तदभावात्मना धियमधिरोहति। स्मर्तव्यस्य स्मरणाभावाद्वा तत्र तदभावानुमानम्। एवमतिरिक्ताभावपक्षेपि निर्मूला प्रमाणान्तरक्लृप्तिः ; सघटं भूतलमितिवत् अघटं भूतलमित्यपि ह्यपरोक्षा प्रतीतिः। न चाधिकरणग्रहणोपक्षीणमिन्द्रियम् ; गुणादिष्वपि प्रसङ्गात्। अतिरेकवत् अनतिरेकेप्यज्ञात-

---

भावेन घटाभावग्रहणात् अभावरूपं प्रमाणमन्यदिति। आद्यः, अभावरूप एवाभाव इति मतेन वा, अभावोऽतिरिक्त इति तार्किकमतेन वा। तत्राऽऽद्योऽपि तस्याभावस्य भावरूपेण ग्रहणे वा अभावरूपेण ग्रहणे वा। नाद्यः, अश्वत्वाभावरूपस्य गोत्वस्य गोत्वरूपेण हि ग्रहणे अक्षसंनिकर्ष एवालम्। क्वचित् शृंगविशेषादिना गोत्वानुमानेऽनुमानमपि प्रमाणम्। एवं शब्दोऽपि। नान्त्यः ; अश्वत्वाभावरूपेण ग्रहणे अक्षसंनिकर्षवत् अश्वत्वरूपप्रतियोगिस्मरणमपि सहकारि। चक्षुरादिनैवाश्वत्वाभावग्रह इति। ननु वर्तमानस्याभावस्याक्षसंनिकर्षेण ग्रहणं यथाकथञ्चिदस्तु। यदा प्रातश्चत्वरे संचरितवन्तं कंचित् कश्चित् मध्याह्ने पृच्छति, अपि प्रातश्चत्वरे गज आसीदिति। तस्य तु पृष्टस्य चत्वरसंचरणसमये गजादिस्मरणस्यानवकाशेऽपि, प्रातश्चत्वरे गजो नासीदिति प्रत्युत्तरं प्रवर्तते। तच्च प्रातस्तत्र गजस्यानुपलब्धत्वात् ; तत्राक्षादि विना अनुपलब्धिमात्रेणैव निर्वाह इत्यत्राह अत एव हीति। अक्षसंनिकर्षस्थले स्वरूपसती अनुपलब्धिः कारणम् ; अन्यत्र तु अनुपलब्धिर्ज्ञायमाना लिंगविधया कारणम्। गजविषयप्रश्ने कृते स चिन्तयते, गजः स्थितश्चेत्, दृष्टः स्यात्। दृष्टश्चेत्, संप्रति स्मर्येत। स्मरणाभावात् प्रातःकालिकतदनुभवाभावः। तेन तत्र गजाभावानुमानम्। भावान्तराभावपक्षे स गजाभावः किंरूप इत्यत्राह देशेति। भूतले घटाभावो नाम अभावत्वाभिमतस्य तस्य तत्र देशे यत्कालावच्छेदेन वस्तुतो ग्रहणं संभाव्यते, तद्देशतत्कालसंबन्ध एव। स एव घटाभाव इति व्यवह्रियते। तद्वत् प्रातःकालचत्वरसंसर्गविशेष एव तादात्विको गजाभावः। तस्य तद्रूपेण ग्रहणं पूर्वमासीत् ; न गजाभावरूपेण ; गजरूपप्रतियोगिनस्तदानीमुपस्थितत्वाभावात्। यस्य तु कदाचित् चत्वरसंचरणकाले गजदर्शनक्रयणादिलोलुपत्वे गजस्मरणमपि, तस्य तदभावप्रत्यक्षमपि जातमेव स्यात्। सर्वथा स देशकालसंसर्गः पश्चादप्यभावरूपेण गृह्यत इति। ननु भावातिरिक्ताभावपक्षे भावं प्रति क्लृप्तानां संयोग,संयुक्तसमवायादिसंनिकर्षाणाम् अभावग्रहानुपयोगितया अभावस्यैन्द्रियकत्वायोगात् अनुपलब्धिप्रमाणं स्वीकार्यमित्यत्राह एवमतिरिक्तेति। अभावज्ञानस्यापरोक्षत्वानुभवात् अन्धस्य रूपाभावप्रत्यक्षाभावाच्चेन्द्रियस्य करणत्वमावश्यकम्। संयोगातिरिक्त समवायरूपसंनिकर्षकल्पनवत् कार्यबलात् विशेषणत्वसंनिकर्षोऽपि कल्प्यताम्। अतोऽनुपलब्धिः सहकारिमात्रम् ; न पृथक्प्रमाणमिति भावः। "प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात्। अज्ञातकरणत्वाच्च भावावेशाच्च चेतस." इत्युदयनोक्तेषु आपरोक्ष्यरूपहेतुरुक्तः, अन्यानप्याह नचाधिकरणेत्यादिना। अनतिरेकेऽपीति।

करणत्वादीन्यनुमानानि च सुलभानीति ॥ संभवोऽप्यनुमानमेव, सहस्रे शतं संभवति इत्यादे पूर्वानुभूतसहस्रशतगतव्याप्तिबोधनत्वात् । संभवति क्षत्रिये शौर्यमित्यादेः संदेहात्मकत्वेनाप्रमाणत्वात् अविरोधनिश्चयरूपत्वेऽपि तदविरोधनिश्चायकप्रमाणान्तरे विश्रमः ।

ऐतिह्यं तु माणमूलं चेत् , आगमः ; प्रतदाभासमूलं चेत् , तदाभासः ।

एवं चेष्टालिप्यक्षरादिकमप्यभिप्राय-वर्णविशेषाद्यविनाभूतमनुमानमेव । चेष्टायां वरदनारायणभट्टारकै-रेवमुक्तम् , "शब्दस्य व्यवहारस्यानुकारश्चेष्टयाऽपि हि । क्रियते शाब्दविज्ञानयोगिनां स्वार्थबोधिका ॥

अनादिव्यवहारेषु चेष्टा विज्ञातशक्तिकाः । बोधिकाः स्युर्यथाध्यक्षमिति चेद् भवतो मतम् ॥

चेष्टा गिरो वा स्वीकार्याः परप्रत्यायनाय हि । अनादयो गिरामेवानादिता ज्यायसी तदा ॥

चेष्टा सामयिकी शाब्दव्यवहारानुसारिणी । अस्यैव बोधिकेत्येवं भरताद्यागमे स्थिता ॥

दृश्यतेऽनादिराम्नायोऽस्मर्यमाणप्रणेतृकः ।" इत्यादि । तत्त्वरत्नाकरे त्वेवमुक्तम्—"व्युत्पन्नबोध्य-बोधकनियमं चेत् चेष्टितं शाब्दम् । अनियतमपि सहदृष्ट्या स्मारकमिति न पृथगेष्टव्यम्" इति ।

लिप्यक्षरेषु तु अयं गकारः अयं घकारः इति वर्णात्मना ज्ञानमप्रमाणमेव । एतेन चिह्नेन

---

अभावस्यातिरिक्तत्व इव भावस्यैवाभावत्वेन ग्रह इत्यनतिरिक्तत्वपक्षेऽपीत्यर्थः ।

संभव इति । संभवः, किमन्तर्भावः, किं वा संभावना, आहो अविरोधः इति विकल्पः । अन्तर्भावस्य व्याप्तिरूपत्वात् अनुमानत्वं सिद्धम् । संभावना तु संदेहविशेषः ; तत्कारणस्य न प्रमाणता । अविरोधश्च येन प्रत्यक्षादिना गृह्यते, तदेव प्रमाणम् , न तत् अतिरिक्तमिति ।

चेष्टादिकं पृथक्प्रमाणत्वेन कैरपि नेष्टम् , अथापि कुत्रान्तर्भाव इत्यत्राभिप्रायमेद इति दर्शयितुं स्वपक्षमाह एवमिति । अनुमानमेवेति । क्वचित् चेष्टया विशिष्टार्थज्ञानमुत्पद्यते, हस्तचेष्टायाम् अत्र त्वया समागन्तव्यमिति ज्ञानात् । अनेकचेष्टास्थले च विशकलितार्थज्ञानानन्तरं विशिष्टज्ञानम् पदजातात् विशिष्टार्थज्ञानवत् । अत्र चेष्टया शब्दानुमानम् , ततोऽर्थज्ञानमिति चेत्—एडमूकस्य का गतिः ? अतो हस्तचेष्टां दृष्ट्वा तत्समीपमागते जने, तदुद्देश्यकेयं चेष्टा तदागमनार्थेति विज्ञाय, इयं मदाह्वा-नाभिप्राया तादृशहस्तचेष्टात्वात् पूर्ववदिति अनुमिनोतीति । वरदनारायणार्यपक्षमाह शब्दस्येति । चेष्टायाः पृथक्प्रमाणत्वं शंकते अनादीति । कायिकचेष्टायाः वाचिकव्यापारस्य च शब्दस्योभयोः पृथक्प्रमाणत्वे गौरवात् अन्यतरपरिशेषे गिरामनादित्वात् वेदस्य तदन्तर्गतत्वात् चेष्टायाः संकुचि-तविषयकत्वाच्च शब्दस्यैव प्रामाण्यम् । अनादित्वं शब्द एव ज्याय इति तदर्थः । तत्त्वरत्नाकरे तु चेष्टासामान्यस्य शब्दान्तर्भावो नेष्ट इत्याह तत्त्वेति । अव्युत्पन्ने शब्दोपस्थापनायोगात् साक्षादर्थस्मरणमेवेत्याह अनियतमपीति । अविशेषात् सर्वत्र तथा । तत्र परविषयकचेष्टादृष्टान्तेन स्वविषयकचेष्टयाऽर्थविज्ञानाद-नुमानत्वमेव ॥ लिपिविषये आह लिप्यक्षरेष्विति । नन्वेडमूकोऽपि लिपीः शिक्षते । तत्र यथाऽस्मभ्यं

इदमक्षरं जानीहीत्यभिप्रायेण लिप्यक्षरसंबन्धग्राहकाणां प्रवृत्तिः। ततश्च व्याप्तिसिद्धिः। एषा लिपि. एतद्वर्णविशेषाभिप्रायपूर्विका, भ्रमादिरहितवर्णाभिप्रायवत्पुरुषलिखितैतल्लिपित्वात्, संप्रतिपन्नव्युत्पत्तिकाल-लिपिवत् इत्यादिरूपः प्रयोगो द्रष्टव्यः।

यत्तु प्रतिभायामुक्तं तत्त्वरत्नाकरे—

"ननु च प्रतिभा काचिद् यथार्था मानमिष्यताम्। बाह्यार्थनैरपेक्ष्येण बाह्यज्ञानक्षमाऽस्तु सा॥
विशिष्टकालपुरुषाद्यपेक्षोत्कर्षसंभवा॥ सत्यं, कालादिभेदस्तु दुर्विवेचोऽस्मदादिभिः॥
सन्नप्यसौ व्यवहृतौ नोपयोगीत्युपेक्ष्यते। प्रतिभायाः फलं दृष्टं यदा प्रामाण्यनिश्चयः॥
तदन्यतः कृतार्थत्वात् प्रेक्ष्यते न परीक्षकैः। पुण्येषु पुरुषेष्वेषा भूयिष्ठं सत्यदर्शिनी॥
तस्मात् पतञ्जलिः प्राह प्रतिभा चेति तां प्रमाम्॥" इति—

तदपि प्रागुक्तयोगिप्रत्यक्षविशेषविषयमेव॥

नन्वेवं, तदपि प्रमाणत्रित्वं चतुष्ट्वं वाऽनुपपन्नम्, प्रत्यक्षपरोक्षरूपेण द्वित्वस्यैव युक्तत्वादिति चेन्न; अतिप्रसङ्गात्। तथाहि—

बहुष्वेकैकमुद्धृत्य तदन्येष्वैकराश्यतः। द्वैधक्लृप्तौ घटादावप्येवमेव प्रसज्यते॥
अनुमानानुमानत्व.शब्दाशब्दविभागतः। प्रमाणद्वित्वमेवं ते वद किं वा न रोचते॥
प्रत्यक्षस्य तदन्याभ्यां वैजात्यग्रहणात् यदि। तयोरपि स्वेतराभ्यां वैजात्यं स्फुटमेव नः॥
अतोऽक्षलिङ्गशब्दाख्यासाधारणनिदानतः। उपलक्ष्यं प्रमात्रित्वं चतुष्ट्वं वापि संस्मृतेः॥
स्पष्टमस्पष्टमिति च जैना यद् द्वैधमूचिरे। तत् प्रत्यक्षपरोक्षत्वविभागान्न विशिष्यते॥
अतो न तावति द्वैधे साधिते विवदामहे। परोक्षस्यैकमानत्वं दुर्वचं भेदसाधनात्॥
नन्वध्यक्षेऽपि भेदोऽस्ति बाह्यान्तरविभागतः। दिव्यादिव्यतया चक्षुश्श्रोत्रादिभिदयाऽपि च॥
तद्वत् परोक्षस्यैकस्य प्रमाणस्य विभागतः। अनुमानागमभिदा कथं नाभ्युपगम्यते॥

---

लिपिशब्दयोः संकेते पूर्वैः कृते लिपेः शब्दस्मरणम्—तद्वत् तं प्रति लिपिं विलिख्य अर्थमपि प्रदर्श्य संकेते कृते लिपेरर्थस्मरणमेव भवति, शिक्षकाभिप्रायस्य ज्ञानात्। शब्दव्युत्पत्त्यविषये तु शब्दग्राहकत्वं स्यात् लिपेः। वैशेषिकरसायने अस्मदीये (349.सू) सर्वं द्रष्टव्यम्।

प्रतिभां प्रमाणभूतां योगिप्रत्यक्षेऽन्तर्भावयति। योगशब्दो विलक्षणपुण्यकर्मदेवतानुग्रहादेरुपलक्षकः। योगिप्रत्यक्षे योगविषयप्रयत्नोऽपि तदा भवतीति चेत्—अत्रापि कदाचित् भवेत; मा वा; किं तेन?

प्रमाणद्वित्वमेव लाघवात् युक्तमित्याशंक्य दूषयति नन्वेवमिति। बहूनां सामान्याकारेण क्रोडीकारे यत् द्वित्वम्, तत् प्रमाणसंख्येयत्तां न निश्चाययेत्। अष्टसु प्रमाणेषु अन्यस्वीकृतेषु अवर्जनीयः कियान् विभाग इति विचारे परोक्षापरोक्षादिविभागो न निर्णयमादध्यादिति। संस्मृतेः=समीचीनस्मृतेः।

दत्तोत्तरमिदं किंचिद् दृष्टमेतच्छ्रुतं त्विदम् । एतत्त्वनुमितं चेति लोकोक्तिरिह साक्षिणी ॥

यतः कुतश्चिद् वैधर्म्यं साधर्म्यमपि केनचित् । सर्वत्र सुलभं काममिहापि परिगृह्यते ॥

अतः स्मृत्यनुभूत्याख्याविभागादपि नोचितम् । प्रमाणद्वित्वमित्येवं प्रागुक्तैव सुपद्धतिः ॥

त्रिविधोऽनुभवश्चैव तन्मूला च तथा स्मृतिः । इति षोढा विभागे तु न विमन्यामहे वयम् ॥

अनुभूतिविभागेन तन्मूलायाः स्मृतेरपि । विभागस्य गतार्थत्वादैकराश्यमुदाहृतम्(मिहाऽऽदृतम्?) ॥

अतो हि तस्यास्तन्मूले त्वन्तर्भावविवक्षया । प्रमाणवर्गे त्रित्वेन प्राज्ञः केचिद्विविञ्चते ॥

एवमन्यदपि चिन्त्यमिति ॥ नन्वनेन किं प्रमाणचिन्ताक्लेशेन ? अविमृश्यापि प्रमाणवर्गमुपलम्भान्वय-व्यतिरेकादिवशात् पश्वादीनामिव मनुष्यादीनामपि लौकिकेष्वर्थेषु प्रवृत्तिनिवृत्तितत्प्रयोजनादिकं निरुपद्रवं सिध्यति । अलौकिकेष्वपि तत्तद्विधायकैस्तदनुग्राहकैश्च कल्पसूत्रादिभिश्चरितार्थधियां किमनेन पिष्टपेषणादिकल्पेन वृथाविमर्शेनेति चेत्—मैवम् ;

अवकाशोपरोधाय तत्त्वोपप्लवमिच्छताम् । अविपर्याससिद्ध्यै च विशोध्या मानपद्धतिः ॥

प्रतिसंधाय च फलं प्रारम्भाह्निकदर्शितम् । साध्यप्रमेयसंशुद्ध्यै साङ्गे माने परिश्रमः ॥

प्रत्यक्षितसमस्तार्थैर्योगीन्द्रैरपि लङ्घ्यते । प्रमाणप्लवमालम्ब्य तत्त्वविप्लवसागरः ॥

तस्मादुक्तरीत्या शुद्धिः कर्तव्येति ॥

शुद्धन्यायनिषेविता श्रुतिशिरश्शुद्धान्तसिद्धान्तिनी भद्राणां प्रतिपादनाय भजतु प्रत्यक्षतामक्षताम् ।
पत्यौ नित्यरसे समं करुणया पातिव्रतीं बिभ्रती सर्वग्रन्थिविमोचनी भगवती सा मे समीची स्मृतिः॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ स्मृत्यध्याये
**द्वितीयमाह्निकम् । समाप्तश्च चतुर्थोऽध्यायः ॥**

—o—o—

---

ननु स्मृतिरनुभूतिश्चेति प्रमाणद्वैधमस्त्वित्यत्र पूर्वोक्तमेवाह **अतः स्मृतीति** । **तथा स्मृतिरिति** । स्मृतिरपि त्रिविधेत्यर्थः । **अवकाशेति** । तत्त्वोपप्लवमिच्छतामवकाशोऽत्र मा भूदिति मानशोधनम् ; प्रमासिद्ध्ये च । मानाधीना मेयसिद्धिरिति प्रसिद्धम् । **प्रमाणप्लवम्** सत्तर्कसचिवं शास्त्रम् । तस्य योगं प्रति मूलत्वात् शास्त्रविरोधे योगो विपरीतविषयक इत्यश्रद्धेयः । **भजत्विति** । स्मृतिरिति कर्तृ । स्मृत्यध्यायत्वात् स्मृतिरिति पाठ एव युक्तः । **सा**=द्वितीयाह्निकोक्तोपमानार्थापत्त्यादिजन्याऽपि । **समीचीति** प्रामाण्यनिगमनम् ॥

चार्वाकोऽध्यक्षमेकं मितिमथ कणभुक्सौगतावाक्षलैङ्गे सांख्यः शब्दाक्षलिङ्गान्युपमितिघटनादक्षपादश्चतुष्कम् । पञ्चार्थापत्तिवादी गुरुरभणदभावेन षड् भट्ट एके त्वैतिह्यं संभवञ्च स्मृतिरपि मितिरस्त्वस्तु सांख्यत्रिकञ्च ॥

**इति अभिनवदेशिकन्यायतत्त्वप्रकाशिकायां चतुर्थोऽध्यायः । श्रीः ॥**

॥ प्रमेयाध्याये प्रथममाह्निकम् ॥

एवं सपरिकरं प्रमाणं विशोधितम् । अथ प्रमेयं प्रदर्शयामः । तत्र, यत् पुनः षट्सप्तादिरूपेण पदार्थान् विभज्य वैशेषिकादयश्चिन्तयन्ति, तत् न साक्षादपवर्गाङ्गमिति तैरेवाभ्युपेतम् । अपिच—

विद्यमानपरित्यागादसतां च परिग्रहात् । व्यामोहना विमर्शास्ते बहिष्कार्या मुमुक्षुभिः ।
सावान्तरविभागेषु तत्त्वचिन्ताश्रमेष्विह । अविस्तराय दिङ्मात्रं दोषाणामभिदध्महे ॥

यत् तत्राहुः—"अभिधेयः पदार्थः । स च भावाभावभेदेन द्विधा" इति—तत् तावत् "असद्व्यपदेशान्नेति चेन्न, धर्मान्तरेण वाक्यशेषात् युक्तेः, शब्दान्तराच्च" इत्यारम्भणाधिकरणसूत्रेणाभावस्य, पराभ्युपगताभावाभावस्येव, भावान्तरत्वसमर्थनात् प्रतिक्षिप्तम् ।

---

पञ्चमः प्रमेयाध्यायः

न्यायदर्शने गौतमेन प्रमाणविचारैदम्परेणापि मानविचारस्य मेयार्थतया मोक्षार्थमेयज्ञानस्यैव प्राधान्यं प्रदर्शयितुं तदुपयोगि द्वादशविधं प्रमेयं पर्यगणि । आत्मशरीरेन्द्रियादि-तत्परिगणितद्वादशकं सर्वमपि मुमुक्षुभिरवश्यमेव परिशीलनीयमिति तदाशयः । अन्यानि तत्त्वानि तत्रार्थपदार्थे कथञ्चिद् घटकान्यपि विशिष्य नातीवोपयुज्यन्त इति तत्रानादरः । एवमपि द्वादशानामेषां मध्ये कस्य केन कीदृशं साधर्म्यं वैधर्म्यञ्च ; किम् आत्मतत्त्वमन्यच्चैकद्रव्यावान्तरभेदः, केषां वाऽलैकोपादानकतेत्यादिशोधनं प्राप्तावसरं जगदन्तर्गतसर्वतत्त्वविवेचनमन्तरेण न घटत इति स एवाभिसंधाय तत्र सांख्यादिप्रक्रिया उपेक्ष्य काणादमेव तार्किकत्वातिशयेनाऽऽदृत्य तत्प्रक्रियामेव सर्वत्राभ्यधत । तेन प्रमाणनिरूपणे वेदान्तसंमततरीतिवैलक्षण्यात् तदनादरवत् प्रमेयविषयेऽपि गौतमीयमनादरणीयमापतितम् । अत एतावत् प्रमाणपरिशुद्धिं विधाय प्रमेयपरिशुद्धावपि प्रवर्तमानः कणादाभिमतसप्तपदार्थीरीतिं वेदान्तिमते स्थित्वा निरस्य वेदान्तरीत्या तत्त्वगणनां प्रथमाह्निके दर्शयति । अथ द्वितीयाह्निके मोक्षार्थावश्यज्ञेयप्रमेय-विज्ञानप्रकारमपि गौतमादतिविलक्षणं दर्शयिष्यति । विशेषतः प्रमेयविवेचनं तदर्थे पृथग्ग्रन्थे **न्याय-सिद्धाञ्जने** । तामिमां संगतिं दर्शयति **एवमिति** । **सप्तादी**ति आदिपदेन गौतमोक्तषोडशग्रहणम् । **षडि**त्युक्तिः कणादेन षण्णामेवाऽऽदौ कथनात् ; नवमाध्याय एवाभावस्यापि सप्तमस्य प्रदर्शनात् । अभावस्य सप्रतियोगिकतया अप्रतियोगिकस्यात्मनो वैलक्षण्यं सुज्ञानमिति प्रथमं तदनुक्तिः ; तावता न तदनिष्टिः । गौतमेन द्वादशप्रमेयमात्रादरगमन्येषामपवर्गानुपयोगादिति व्यक्तमदसीयभाष्यादौ । साक्षाद्वा परम्परयावोपयुज्यताम्, यावत् तात्त्विकं तावद् ज्ञापनीयमेवेति चेत्—उक्तस्य सर्वस्य वास्तविकत्वे, अनुक्तस्याभावे च सति तत् घटते; तन्न; तच्चिन्तायाः श्रममात्रत्वादित्याह **अपि चे**ति । विद्यमानं प्रकृतितद्विकार-परमपदादि ; तत्त्यागात्, असतां अभाव समवाय-विशेष-सामान्यावयविद्रव्यतद्गुणादीनां स्वीकरणात् । प्रथमतः [redacted] सप्तमं

यदपि च—द्रव्यगुणकर्मसामान्यविशेषसमवायरूपेण भावरूपाणां पदार्थानां षोढा परिसंख्यानम्, तदपि वैशेषिकाधिकरणे, "समवायाभ्युपगमाच्च साम्यादनवस्थितेः" इति सूत्रकारैरेव समवायाख्यपदार्थान्तरदूषणेन परास्तम्। अभावतदधिकरणयोर्विशेषणविशेष्यभावसंनिधिविशेषादिशब्दवाच्यसंबन्धान्तरानुमानमपि समवायदूषणच्छाययैव दूषितमेव।

यश्चान्योन्यमत्यन्ततुल्येषु मुक्तात्मादिषु मिथो व्यावृत्तधीजननाय द्रव्यत्वादिहेतुना विशेषाख्यः पदार्थः कल्प्यते, सोऽपि तुल्यन्यायतया सूत्रकारैर्दूषितप्राय एव। "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इत्यनुपपन्नपरमाणुद्व्यणुकादिप्रक्रियानिदर्शनेनान्येषामपि तदभ्युपगतानामनुपपन्नत्वस्य सूचितत्वाच्च। अपिचानित्येषु द्रव्येषु तावत् जातिगुणादिभिरेव व्यावृत्तधीः सिध्यतीति नित्येषु हि विशेषोऽन्यः कल्प्यते; यथाऽऽहुः—"नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः" इति, तथापि वेदान्तिभिर्दिक्संज्ञकविभुपदार्थान्तरानभ्युपगमात्, आकाशस्य च कार्यत्वादिश्रुतेः, प्रकृतिविकारभूतपृथिव्याद्यंशविशेषातिरिक्तपरमाणुजालप्रतिक्षेपात् तथाविधपरमाणूनां चावस्थाप्रवाहस्यानाद्यन्तत्वान्न तत्र विशेषवत्सिद्धिः। ततः कालात्मानौ परिशिष्येते। तत्रापि चेतनानां न कालतत्त्वमात्मतया भाति; क्षणलवाद्यवस्थायोगित्वपराक्त्वाचेतनत्वादिभिरेव तस्मात् स्वेषां (तेषां) स्वेभ्यश्च (तेभ्यश्च) तस्य व्यावृत्तधीसंभवात्। अन्यथा अन्येनापि कल्पितेन तदसंभवप्रसङ्गात्। अतः आत्मपरिशेषे—

तत्रापि जीवेश्वरयोरणुत्वविभुत्वनियाम्यत्वनियन्तृत्वाधेयत्वाधारत्वशेषत्वशेषित्वशरीरत्वशरीरित्वादिभिरनेकविधैर्धर्मभेदैर्व्यावृत्तधीसिद्धौ किमन्येन विशेषेण? तदत्यन्तसाम्यवत्सु मुक्तेषु नित्येष्वपि हि तत्साम्यस्यैव संरक्षणाय धर्मिग्राहकसिद्धा यावदात्मभाविनः

---

निरस्यति तत् तावदिति। अभावाभावस्येति। यथा घटाभावाभावः अभावत्वेन प्रतीतः प्रथमाभावप्रतियोग्येव, तथा प्रथमाभावोऽपि भावान्तरमेवेति। संबन्धान्तरानुमानमेकदेशिसंमतम्। वैशेषिकत्वभञ्जनया विशेषपदार्थं विशेषेण खण्डयति यश्चेत्यादिना। मुक्तात्मादयो मिथोव्यावर्तकधर्मवन्तः द्रव्यत्वात् घटादिवदित्यनुमाने धर्मान्तराभावात् विशेषसिद्धिरिति तन्मतम्। निदर्शनेनेति। यथा परिमण्डलात्=परमाणुतः द्व्यणुकोत्पत्तिः यथा च ह्रस्वात् द्व्यणुकात् त्र्यणुकोत्पत्तिरसमञ्जसेति दृष्टान्तीकरणेन, अनेकांशासामञ्जस्यस्यैव प्रथमसूत्रमुख्यार्थत्वात् विशेषाख्यवस्तुनिषेधोऽपि सिद्ध इति भावः। अथ कुत्र विशेषस्वीकारः; नाद्रव्ये, नानित्यद्रव्ये, किंतु नित्यद्रव्ये। तत्रापि किं तन्नित्यद्रव्यमिति विचार्यम्। तदभिमतमनेकनित्यद्रव्यं वस्तुतो भवत्यनित्यम्। यत् परिशिष्टम् तत्रापि तद्विशेषापेक्षा नेति विस्तरेणाऽऽह अपिचेति। तत्र=दिगाकाशपरमाणुषु। तस्मात् स्वेषां=कालात् चेतनानां व्यावृत्तधीसंभवात्, स्वेभ्यः चेतनेभ्यश्च तस्य कालस्य तत्संभवात्। तदत्यन्तसाम्येति। ईश्वरात्यन्तसाम्येत्यर्थः। तत्साम्यस्य=उक्तेश्वरसाम्यस्यैव।

तेते विशेषा न परित्यक्ताः । न चेश्वरद्वैतम् ; येनेश्वराणां मिथो व्यावृत्तप्रतीत्यै विशेषं कल्पयिष्यामः; एकस्यैव सर्वदेशकालेष्वेकातपत्रतया सर्वश्रुतिसिद्धत्वात् । अस्यैव च सामान्यशब्दैर्विशेषशब्दैश्च रूढितो योगतस्तत्तद्वस्तुविशिष्टत्वादिना च तत्तत्प्रकरणानुगुणं शारीरके प्रतिपाद्यत्वस्थापनात् । जीवेष्वपि बद्धानां मिथो भेदस्तत्तत्सुखदुःखधीच्छावैचित्र्येण व्यक्तः । बद्धमुक्तयोश्च किञ्चिज्ज्ञत्वसर्वज्ञत्वादिभिः । मुक्तानां नित्यानां च विशुद्धेरादिमत्त्वानादिमत्त्वाभ्यामेव विभक्तधीसंभवः । मुक्तदशायां नित्येभ्यः किं वैषम्यमिति चेत् , किं तेन? ॥ प्राक्तनेन तत्तदात्मवर्तितया प्रत्यक्षितेन गुणादिभेदेन तदन्यव्यावृत्तधीसिद्धेः । सिद्धेरपि तद्व्यवहारे प्राक्तनोपाधिभेदैरेव तत्तत्प्रमाणप्रमितैः प्रतिसंहितैः सर्वनिर्वाहात् । एतेन मुक्तानां मिथो विभक्तबुद्धिरपि निर्व्यूढा । न हि तेषामेकरूपः प्राक्तनः संसारः ; विषमविपाकसमयानाद्यसंख्यातकर्मप्रवाहवैचित्र्यप्रतिनियतदेशकालस्वरूपसुखदुःखतत्कारणादिसंततेरेव मिथो व्यावर्तकत्वात् । तदेतद्विभागो हि तत्कालवर्तिनैव धर्मेणेति न नियमः, अतत्कालवर्तिनाऽपि तन्निष्ठतयोपलभ्यमानेन तत्सिद्धेः । न ह्यतीतः संसारो मुक्तात्मस्वरूपमुपलभमानैर्नोपलभ्यते; उपलभ्यमानो वाऽन्यनिष्ठः प्रतिभाति ॥ अथ नित्येषु मिथः का वार्ता ? ॥ सापि कुशलैव । तेषामपि हि सत्यसंकल्पानां विचित्राः संकल्पेच्छादयः ईश्वरस्येवानियतदेशकालविषयापर्यनुयोज्यसामग्रीका अनाद्यनन्तसंतानवन्तः सन्तीति किमन्येन विशेषेण? ।

अपि च यद्दर्शने यत्र यदारोपो न भवति, स हि तस्य ततो भेदः । स एव च विशेषः । स चेत् स्वरूपभूतः अहंत्वमादिरूपेण भातः परारोपं प्रतिरुन्ध्यात् , कस्ततोऽन्यस्ततो विशेषस्तस्य? । एवमनभ्युपगमे विशेषक्लृप्तावपि का गतिर्वैशेषिकस्य? स्वपरनिर्वाहकास्ते विशेषाः इति चेत् , किं त एव ? ।

अपिच पृथक्त्वे विद्यमाने किं तैर्विशेषैः? । पृथक्त्वस्यैकजातिसंगृहीतत्वान्न ततोऽपि व्यावृत्तधीरीति चेत्, तर्हि ततो न क्वचिदपि स्यात् । विशेषेष्वपि वा विशेषत्वाक्रान्तेषु कस्ते निस्तारः? । विशेषत्वं नाम जातिर्नास्तीति चेत्, किं तत्? । उपाधिरिति चेत् , किं ततो न संग्रहः?, तथा

---

तेते=जगद्व्यापारतदभावादयः पूर्वोक्ताश्च । अतत्कालवर्तिनापीति । कुरुणा ह्यतीतेन व्यावर्त्य कुरुक्षेत्रमित्युच्यते । कुशलैवेति । त्वदिष्टविशेषमनपेक्ष्य व्यावृत्तिधियः स्थिरत्वमिति भावः । सकलविशेषगुणादिशून्या एव मुक्ता भवदिष्टाः नास्माभिः स्वीकृताः । नित्याश्च वो न सन्ति । अस्मन्मते तु नित्येषु जिज्ञासा अस्मन्मतरीत्या सुशमेति । एकैकस्याप्यात्मनः स्वस्य परस्माद् व्यावृत्तये त्वदिष्टविशेषो नापेक्षित इत्याह अपिचयदिति । स्वरूपातिरिक्तविशेषं विनापि स्वरूपव्यावृत्तिबुद्धिः शौक्ल्यादावपीष्टा ; तद्दर्शनमात्रेण

सति क्वचिदपि तन्निबन्धनानुवृत्तधीभङ्गप्रसङ्गात् ।

एवमन्योन्याभावेनापि गतार्थता दुस्तरा—इति परास्त पराभिमत(तो?)विशेषः ।

सामान्यमपि परोक्तं सूत्रकारैरेव निरस्तप्रायम् ; तथा हि—"तदनन्यत्वमारम्भणशब्दादिभ्यः—" इत्यादिभिः सूत्रैः कार्यदशायामुपादानस्यावस्थान्तरापत्तिमात्रमेव, न पुनः पराभिमतमवयव्याख्यं द्रव्यमस्तीति समर्थनाद् घटाद्यवयव्यभावे तदाश्रितघटत्वादिसामान्यम्, अवयविसमवेततयाभ्युपगतगुणादयः, तदुभयारम्भप्रक्रियाजालं च निर्मूलितम्। यच्चोपादानस्य घटत्वादिरूपमवस्थान्तरं संयोगविशेषादिरूपं, तत् परैरपि कार्यतयाभ्युपेत्यम्; उपलम्भादिभिश्च तथैव सिध्यतीति न तत्रापि नित्यत्वकल्पनावकाशः । ततः सर्वेषां द्रव्याणां स्वरूपतोऽनाद्यनन्तत्वात् कार्य(अकार्य?)द्रव्यत्वात्मत्वादिमात्रमिव(मवः) शिष्यते। गुणेषु नित्येष्ववस्थारूपेषु चानुवृत्तप्रत्ययनिमित्तं किमिति चिन्त्यम् ; तत्रैवं भाषितं शारीरकभाष्ये—"संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात्, तावतैव गोत्वादिजातिव्यवहारोपपत्तेः, अतिरेकवादेपि संस्थानस्य संप्रतिपन्नत्वाच्च संस्थानमेव जातिः। संस्थानं नाम स्वासाधारणं रूपमिति यथावस्तु संस्थानमनुसंधेयम्" इति।

एतदुक्तं भवति—किं संस्थानातिरिक्तं सामान्यं विविक्तस्फुटप्रत्यक्षाध्यवसायभेदादङ्गीक्रियते, उतोपपत्तिबलादिति। नाद्यः, असिद्धेः। नान्त्यः, अन्यथासिद्धेः ; अतिरिक्तसामान्यमभ्युपगच्छतोऽपि हि तदुपलक्षणं संस्थानमिष्टं दृष्टं च॥ प्रतिव्यक्तिनियतं संस्थानं कथमनुवृत्तप्रत्ययकारणमिति चेत्, कथं वा तज्जातीयस्य लक्षणं भवति?॥ अनुवृत्तजात्यन्तरसंगृहीतोपाधिरूपतयेति चेत्, तावतैव गवादिव्यवहारसिद्धौ किमन्येन?॥ तथाप्यन्ततोऽनुवृत्तं सामान्यं क्वचिदभ्युपगन्तव्यम्, यत्रान्यथासिद्धिः ; अन्यथोपाधिसंग्रहस्याप्यसंभवादिति चेत्, तत्रापि वा तत्र सामान्यमुपलक्षणेन संगृह्यते, न वा? पूर्वत्रान्यथासिद्धिरनवस्थितिश्च ; उत्तरत्र नियामकादर्शनात् जातेरव्यवस्था न स्यात्। व्यावृत्तानामपि स्वभावत

---

व्यावृत्तिबुद्ध्यभावे हि अन्यधर्मकल्पना स्यादिति भावः। क्वचिदपि। उपाध्याश्रयकिञ्चित्स्थलेऽपि। परास्त इति। परमतभङ्गादावपि द्रष्टव्यम्।

जातिं निरस्यति सामान्यमिति। तथाहीति। घटत्वादिजातयो घटादिरूपावयविद्रव्याणां सद्भावे स्युः। तान्येव नेति भावः। लक्षणं भवति=व्यञ्जकं भवति। आकृतिर्व्यंग्या जातिरिति हीष्यत इति भाव अनुवृत्तेति। गोत्वरूपजातिव्यञ्जिका भवत्याकृतिः। व्यञ्जकत्वञ्चोपाधिभूतानां विभिन्नानामपि तदनुवृत्तजात्यन्तरबलादिति चेत्—तर्हि तज्जातिविशिष्टोपाधिरेव गौरिति व्यवहारनिमित्तं भवतु। व्यञ्जकत्ववत् व्यवहारादिनिमित्तत्वमप्युपाधिगतजातिबलादेवेति किं गोत्वजातिरूपव्यञ्जकेनेत्यर्थः गोत्वजात्यभावेऽपि उपाधिषु जातिरिष्टैव किलेति शंकते तथापीति। समाधत्ते तत्रापीति। आकृतिरूपोपाधिग्राहक जात्यन्तरं व्यञ्जकान्तरेण व्यज्यते न वा। आद्ये तद्व्यञ्जकान्तरानुवृत्तजात्यभावे कथं व्यञ्जकत्वम्? तत्स्वीकारे मध्ये कथितं जात्यन्तरं मा भूत्। तत्कार्यस्यान्यथैव तदभावेऽपि हि सिद्धिः। एवं जातितद्व्यञ्ज-

एव कासांचित् व्यक्तीनां तद्व्यञ्जकत्वनियतिरिति चेत्, स एव स्वभावः किं न व्यवहारं नियच्छेत्। निर्विषयः कथं व्यवहारः स्यादिति चेत्,[न ?] तासामेव व्यक्तीनां विषयत्वात् ॥ व्यावृत्तानामनुवृत्तव्यवहारविषयत्वे सर्वत्र विषयव्यवस्था भज्येतेति चेत्, व्यावृत्तानामनुवृत्तव्यञ्जकत्वे सर्वत्र तद्व्यक्तिः किं न स्यात्? ॥ संबन्धासंबन्धाभ्यां नियमादिति चेन्न, संबन्धस्यापि समवायनाम्नः सार्वत्रिकत्वाभ्युपगमात् तत्राप्यभिव्यक्तिप्रतिनियमस्य मृग्यत्वात्। नानासमवायवादेऽपि व्यक्तिस्वभावनियमस्य दुस्त्यजत्वात् ॥ तथापि दृष्टैकगोव्यक्तेर्व्यक्त्यन्तरे सोऽयमिति प्रत्यभिज्ञानं कथं स्यात्? अयं गौरित्येकव्यक्तौ व्युत्पादितश्च कथं व्यक्त्यन्तरेऽपि तच्छब्दवाच्यतां प्रतीयात् इति चेत्—तत्रापि वा कथम्? ॥ एकधर्मसमवायादिति चेत्, तेनैव धर्मेण स्वतो मिलितस्य समवायस्यैव नित्यं सर्वत्र वृत्त्यभ्युपगमेन सर्वत्र सर्वव्यवहारसंकरप्रसङ्गात् ॥ कासांचिदेव व्यक्तीनां तद्व्यञ्जकत्वस्वाभाव्याद् व्यवस्थेति चेत्, तर्हि तासामेव व्यक्तीनां प्रतिसंधानव्यवहारयोर्विषयत्वमस्तु ॥ तथा सति भ्रान्तत्वं तयोः स्यादिति चेन्न, तद्व्यक्तित्वेन प्रतिसंधानादेरभावात्; अपि तर्हि तथात्वेन ॥ व्यक्तिस्वरूपातिरिक्तं तथात्वं नामान्तरेण जातिरेव स्यादिति चेत्, तज्जातिव्यञ्जकं तत्तदेकव्यक्तिस्वरूपातिरिक्तं किं न जात्यन्तरं स्यात्? ॥ उपाधिविशेष एवायं प्रतिनियताश्रय इति चेत्, एवं तर्हि प्रतिनियतप्रतियोगिकं स्वभावनियतं परस्परस्मारकत्वमुपजीव्य तज्जातीयतया प्रतिसंधानव्यवहारोपपत्तौ किमन्यकल्पनेन? ॥ तत्स्मारकतदितरविभाग कुतस्त्य इति चेत्, तद्व्यञ्जकतदितरविभागस्ते कुतस्त्यः! ॥ दर्शनादर्शनायत्त इति चेत्, तुल्यम् ॥ संबन्धसादृश्ययोरभावे

---

कपरम्परायां स्वीक्रियमाणायामनवस्था च। **उत्तरत्र** जातेर्व्यञ्जकास्वीकारे सा जातिस्तत्रैवाश्रयेऽभवति कथं नियमसिद्धिः। अथ जातिव्यञ्जकतयाऽन्यदस्वीकृत्य व्यक्तीनामननुगतानामपि व्यञ्जकत्वं स्वाभाविकमिति स्वीकर्तव्यमिति **चेत्**—तर्हि जातिमपि संत्यज्य ताभिरेव व्यक्तिभिरनुगत व्यवहारनिर्वाहोऽपि यथादर्शनं भवतीतीष्यताम्। **संबन्धे**ति। आकृतीनां व्यावृत्तत्वेऽपि तदाकृतिरहितव्यक्तौ तस्याः व्यञ्जकत्वमसंभावितम्, तत्र तत्समवायाभावादिति **चेत्**—सर्वप्रतियोगिकसमवायस्यैकतया वायौ रूपसमवायस्यापि संभववत् तदाकृतिसमवायोऽन्यत्रापि स्यात्। समवायो भिन्नभिन्न इति प्राभाकरपक्षेऽपि तद्वैलक्षण्यज्ञानं कथम्। अन्ततो व्यक्तीनामेव विशेषकत्वमिति। **तत्रापि**=अनुवृत्तैकजातिवादिनोऽपि। **सर्वत्रवृत्ती**ति। समवायस्यैकत्वात् गोत्वसमवायो ह्यश्वेऽपीति भावः। **भ्रान्तत्व**मिति। **व्यक्त्यन्तरे** सोऽयमिति ग्रहणव्यवहारयोर्बाध्यत्वं हीति भावः। सोऽयमिति न प्रतीतिः, किंतु तथाऽयमितीत्याह **तद्व्यक्ती**ति। **अपितर्ही**ति। किं तर्हीत्यर्थः। किं तत् तथात्वं तन्निष्ठजातिमत्त्वातिरिक्तमिति पृच्छति **व्यक्ती**ति। तद्व्यञ्जकस्यापि जातित्वापत्तिः तथेति व्यवहारादित्याह **तज्जाती**ति। **एवंतर्ही**ति। संस्थानानां भिन्नत्वेऽपि एकस्यापि संस्थानस्य गोसंस्थानान्तरस्मारकत्वं स्वभावः, नाश्वसंस्थानस्मारकत्वम्। एवं तदाकृतिसार्याकृतिमत्त्वमेव तज्जातीयत्वं नाम। एवमाकृतिव्यतिरिक्तोपाधिस्थलेऽपि उपाधिभिरेव तज्जातीय-

कथं स्मारकत्वमिति चेत्, तयोर्वा कथम्? ॥ सदृश.सहानुभूतदर्शनस्य संस्कारोद्बोधकत्वादिति चेत्, तदपि कुतः? ॥ कार्यदर्शनात् कल्प्यते इति चेत्, तुल्यम्; अन्यथा संबन्धं सादृश्यं वैक(संबन्ध-सादृश्ययोरेक)मुपादाय तदन्यस्य कथं स्मारकत्वमिति चोद्यस्य दुर्वारत्वात्। न चात्र सादृश्यं नाङ्गी-कुर्मः, सौसादृश्यरूपत्वाभ्युपगमात् सामान्यस्य ॥ नामान्तरेण परभिम जातिस्वीकारः इति चेत्, व्यावृत्तानां संनिवेशादीनामेव प्रतिनियतप्रतियोगिस्मारकस्वभावतया सादृश्यरूपत्वात् ॥ गवयादेरपि तर्हि गोजातीयत्वादिप्रसङ्गः इति चेन्न, सादृश्यसौसादृश्यविभागस्य साप्रत्ययिकस्य सर्वसंमतत्वादिति।

एवं सामान्यादिषु सूत्रकारादिभिर्निरस्तेषु परिशिष्टा द्रव्यगुणकर्मरूपास्त्रयः पदार्थाः इति केचिदा-चार्याः ॥ अन्ये तु मन्यन्ते—यथा तत्प्रतीतेरन्यथासिद्धतया ते पदार्था भाष्यकारादिभिर्निरस्यन्ते, तथा कर्मापि. इति। ये तावदिह सर्वत्र सूर्यपरिस्पन्दादिवत् अप्रत्यक्षं कर्म फलानुमेयमिच्छन्ति। तत्र यया सामग्र्या कर्मणः सिद्धिरभिमता-तयैव दृष्टं कर्मफलं साध्यताम्, किमन्तरा कल्पितेन कर्मणा? । तथापि चेत् क्लृप्तिः, अन्यत्रापि कालविप्रकर्षादर्शनेपि सामग्रीकार्ययोर्मध्ये अन्यस्य क्लृप्तिप्रसङ्गः; तथैव च तत्रापीत्यनवस्था स्यात्। ये च "प्रत्यक्षं कर्म" इत्याहुः, तैरपि नूनं कर्मफलत्वेनाभ्युपगत-संयोगविभागातिरिक्तं निपुणनिरीक्षणेपि नोपलभ्यत इति मन्यामहे। चलतिप्रत्ययोऽपि हि तावतैव चरितार्थः। न च वाच्यं यावत्संयोगं चलतिप्रत्ययप्रसङ्ग इति; पूर्वदेशविभागपूर्वकदेशान्तरसंयोगप्रथमक्षण-विषयत्वात् तत्प्रत्ययस्य। तत एव ह्युत्तरकाले संयोगे वर्तमानेऽपि अचलदिति भूतानुसंधानमुपपन्नम्।

---

त्वव्यवहार इति। एकमुपादायेति। संबन्धस्य व्यञ्जकत्वे सादृश्यस्य व्यञ्जकत्वं कथम्? विपरिर्ते विपरिवर्तः। उभयानुगताकाराभावे उभयक्रोडीकारः कथम्।

एवमभाव. समवाय.विशेष.सामान्यानि निराकृतानि। कर्माख्यपदार्थविषयेऽपि विवादं प्रस्तौति एवमित्यादिना। ज्ञानमतीन्द्रियं ज्ञाततयाऽनुमेयमिति भाट्टमते ज्ञानकार्यस्य व्यवहारस्य ज्ञानसामग्र्यैव सिद्धेः सुवचतया किमन्तर्गडुना ज्ञानेनेति दोष उद्भाव्यते, तथा कर्मणोऽप्रत्यक्षत्वे दोषः स्यादित्याह येतावदिति प्रत्यक्षत्वे तु नापलापः शक्यः। कालविप्रकर्षादर्शनेऽपीति। यथा कालविप्रकर्षे सति यागात् स्वर्गोत्पत्तौ मध्ये देवताप्रीत्यादिकमिष्यते, तथा तदविप्रकर्षेऽपि यदि कर्मेति किञ्चिदिष्यते, तर्हि इन्द्रियसन्निकर्ष.प्रत्यक्षयोर्मध्ये परामर्शानुमित्योर्मध्ये एवं तत्रतत्र किञ्चित्कल्प्यताम्। गौरवमिति चेत्—तुल्यमिति। संयोगेति। संयोगविभागयोरनपेक्षं कारणमिति कर्मलक्षणमुक्तं वैशेषिकदर्शने। कर्मफलत्वेनोक्तौ पूर्वदेशविभागोत्तरदेशसंयोगावेव लोके प्रत्यक्षमनुभूयेते, न कर्मेति किञ्चित्। चलतीत्यस्य च विभागपूर्वकसंयोगवदित्येवाऽर्थोऽस्त्विति। पूर्वदेशेति। कर्माभावेऽपि यदि पूर्वदेशविभागः, स प्रागेव कस्मान्नोत्पन्न इति चेत्—कर्मस्वीकारपक्षेऽपि कर्मैव कस्मात् प्राङ्नोत्पन्नमिति शङ्काव तुल्यम्। तत्सामग्र्यभावान्न कर्म, कर्माभावाच्च न विभाग इति चेत्—तत्सामग्र्यभावान्न विभाग इत्येवो-

ननु प्रवाहमध्यस्थिते स्थाणौ पूर्वसलिलस्कन्धवियोगः उत्तरसलिलस्कन्धसंयोगश्च दृश्यते, न च तत्र चलत्वमिच्छामः; व्योमादय एव स्थिरदेशत्वेन विवक्षिताः इति चेन्न, प्रवाहस्य ततो विशेषादर्शनात्; लौल्यम् विशेषः इति चेत् , तर्हि संयोगविभागातिरिक्तं लौल्यरूपं कर्म प्रत्यक्षमिति कथं तदपह्नवः—इति चेत्—

तत्राहुः—या नाम कर्मसामग्री त्वयेष्यते, सा तत्तत्कर्मफलतयाऽभिमतं संयोगविशेषमुत्पादयन्ती नियतस्वभावमेव तमुत्पादयति। अत एक एव संयोगोऽनेकनिष्ठोपि सन् क्वचिच्चलतिप्रत्ययं क्वचित् संयोगमात्रप्रत्ययं च जनयति। यथैक एव समवायो गुणगुणिभ्यामविशेषेण स्वतो मिलितोऽपि सन् क्वचिदाश्रयप्रत्ययं क्वचिदाश्रितप्रत्ययं च जनयति। न ह्याश्रयभाव आश्रितभावो वा समवायस्वरूपातिरिक्तः, तद्वदिहापीति। वयं तु ब्रूमः—अप्रत्यक्षकर्मशब्दस्तावत् प्रागुक्तदूषणादयुक्तः। प्रत्यक्षं तु कर्म स्वरूपतो दुरपह्नवम्। तत्र भाष्यादिष्वतिरेकविधिनिषेधादर्शनादर्थान्तरविरोधाभावाच्चोदासितव्यमिति।

इदं तु मन्यामहे—अतिरेकेऽपि गुणवर्गान्न राश्यन्तरं कर्म, विभाजकाभावात्, स्वेच्छाकल्पितविभाजकस्य सर्वत्र सुलभत्वेन यथाभिमतमेकं गुणमुभयं वाऽङ्गीकृत्य राश्यन्तरकल्पनप्रसङ्गात्, गुणावान्तरवैचित्र्यस्य गुणत्वविरोधाभावात्। अतो द्रव्यमद्रव्यमित्येव विभागः इति ॥

---

ध्यताम्। कर्मापि विभाग एवेति। स्कन्धेति। प्रवहत्सलिलीय पूर्वांशेऽपगते अंशान्तरयोगस्तत्र भवति। तत्र स्थाणुरचल एव। तत्रापि विभागसंयोगयोः सत्त्वात् न तत्कर्मैक्यमिति भावः। स्थाणाविति पाषाणादेरप्युपलक्षकम्। ननु प्रवहज्जलांशो यो विभक्तः स एवोपरि संयुक्तो भवति तत्र विभागसंयोगोभयाश्रयत्वात् जलं चलमित्युच्यते; न च स्थाण्वंशो विभक्तः संयुक्तो भवतीति चेत्-स्थाण्वंशोऽपि एकजलविभागवान् अन्यजलसंयोगवांश्च भवत्येव। व्योमेति। विभुनो व्योम्न इव स्थाणोरचलत्वमसंभावितमित्यर्थः। अथापि प्रवाहवैलक्षण्यं तत्र वक्तव्यम्; तत् कीदृशमिति पृच्छति प्रवाहस्येति। व्योम्नोपि प्रवहज्जलविभागसंयोगवत्त्वात् चलत्वप्रत्ययोऽस्त्वित्यापाद्यमिति च ध्येयम्। ननु स्थाणुप्रतियोगिको विभागः स्थाणुप्रतियोगिकश्च संयोगो नास्तीति चेत्—विभागसंयोगसमवायातिरिक्तं किमिदं प्रतियोगित्वं नाम। समवायस्त्वभ्युपगत एवेति। अनुभवानुरोधेन परिहरति तत्राहुरिति। अतिरेकविधिनिषेधेति। न्यायसिद्धाञ्जने न्यायतत्त्वगत संयोगानतिरेकवादम्, स्थिरास्थिरशब्दार्थभेदनिरूपणायोगात् अतिरेकवादञ्च दर्शयिष्यति। अतिरेकेऽपीति। विभागसंयोगातिरिक्तत्वेऽपि गुणत्वमेवास्तु; न तु तृतीयः पदार्थविभाजकधर्म इति। इदमपि वक्ष्यति न्यायसिद्धाञ्जने द्रव्यमद्रव्यमिति। गुण इत्युक्तौ किं तत् गुणत्वम्? दध्यादेरपि गुणत्वेन व्यवहारो मीमांसकेष्टः। लिंगसंख्याश्रयो द्रव्यमिति वैयाकरणपक्षे गुणोऽपि द्रव्यं स्यात्। अतः अवस्थाश्रयः संयोगाश्रयो वा द्रव्यमिति द्रव्ये लक्षिते तद्भिन्नत्वेनेतरनिर्देश एव युक्तः। द्रव्याश्रितत्वस्य द्रव्येऽपि सत्त्वात् सर्वस्य द्रव्यस्य परमात्माश्रितत्वात् गुणत्वापत्त्या द्रव्यत्वविरुद्धधर्मत्वस्य तत्र दुर्वचत्वादिति भावः। उत्तराह्निके व्यक्तमिदम्।

तत्र चात्मगुणतयाऽभिमतेषु सुखदुःखेच्छाद्वेषप्रयत्नाः पञ्च तत्तदुत्पादकतयाऽभिमतबुद्धिविशेषानतिरिक्ता वेदार्थसंग्रहे समर्थिताः। धर्माधर्मौ विहितनिषिद्धक्रियासाध्यतयाऽभिमतौ आज्ञावतो राज्ञ इव प्रशासितुरीश्वरस्यानुग्रहनिग्रहाख्यबुद्धिविशेषरूपौ भाष्यादिषु बहुषु प्रदेशेषु प्रपञ्चितौ। यः पुनः संस्कारः, स त बद्बुद्धिविशेषात्मना उक्तः(को युक्तः)।?? न च तत्प्रयुक्तः; ततश्चिरनष्टविप्रकृष्टाकारे क्वापि व्याप्त्यदर्शनात्। वासनानुवृत्तेश्च वाचनिकत्वात्। यद्यपि "इन्द्रियस्येन्द्रियस्यार्थे" इत्यादिगीताश्लोकेषु भाष्यकारैर्वासनाया इच्छाद्वारेणैव प्रवृत्तिहेतुत्ववचनात् ज्ञानवासनाविशेषातिरिक्ता कर्मवासना नास्ति, तथापि ज्ञानवासना दुरपह्नवा। ततश्च तदाश्रयमात्रं विचार्यम्। तत्र धर्मभूतज्ञानस्य द्रव्यत्वं न्यायतत्त्वात्मसिद्धिभाष्यादिसिद्धमनुसरतां तन्निष्ठस्मृत्याख्यविकारोत्पादकः संस्कारोऽपि तन्निष्ठः प्राप्तः; अन्तरङ्गत्वादबाधाच्च॥

ये तु परपरिभाषामनुसरन्तस्तदनुगुणं तस्य गुणत्वं गृणन्ति; तेषामात्मन्येव संस्कारः इति विशेषः। न च बुद्धेर्नित्यत्वं संकोचविकासादिदशाभेदं चाभ्युपगच्छद्भिरद्रव्यत्वं तस्याः सुवचम्; अवस्थान्तरयोगित्वमेव

---

तत्र चेति। गुणवर्गे चेत्यर्थः। अचेतनगुणान् उपरि विमृक्ष्यति। अभिमतेष्विति। नवस्विति पूरणीयम्। बुद्धिगुणत्वे सत्यपि द्रव्यत्वेन प्रागेवोक्ता, वक्ष्यते चातेति तद्विशेषत्वमेवान्येषामित्याशयः। तत्र धर्माधर्मौ न जीवबुद्धिविशेषौ, किंतु ऐशाविति विशेष। विशेषात्मनोक्त इति। बुद्धिविशेषरूपेणोक्त इत्यर्थः। विशेषात्मको युक्त इति पाठान्तरम्। अत्र सोपांति पाठाभावात् स तावदित्यारम्भात्, नचेति उपरि चकारप्रयोगात् परितनपञ्चम्यन्तस्य स्वरसान्वयादर्शनाच्च वाक्यभ्रंशो विमृश्यते। सर्वार्थसिद्धि—न्यायसिद्धाञ्जनयोः, संस्कारो न तावत् अनुभव एव, न वा स्मृतिः, नाप्युद्बोधकसादरज्ञानादिकमिति विचारितम्। तद्रीत्या कमपि स्यात्। स्थितस्यार्थस्तु—**न च तत्प्रयुक्तः**=बुद्धिरूपानुभवजन्यः बुद्ध्यतिरिक्तः कश्चिदात्मगुणोऽयं न भवति तत्र यागादिरूपबुद्धिविशेषस्य स्वयं चिरनष्टत्वेऽपि विप्रकृष्टस्वर्गादिरूपफलहेतुचिरानुवृत्तादृष्टजनकत्ववत् स्मृतिहेतुस्थायिकिञ्चिज्जनकत्वमिष्यते; स एव संस्कार इति वक्तव्यम्; तथा व्याप्तिर्न दृश्यते। यागादेरीशनिग्रहानुग्रहहेतुत्वेन जीवे पुण्यपापहेतुत्वाभावात् व्याप्त्यलाभात्, तद्दृष्टान्तेन जैवगुणान्तरसाधनायोगादिति स्यात्। चिरनष्टस्यानुभवस्य विप्रकृष्टस्य च फलस्याऽऽकारमादाय व्याप्तिर्न दृश्यत इति शब्दार्थः। अर्थान्तरं वा पाठान्तरं वाऽन्वेषणीयम्। हेत्वन्तरमाह **वासने**ति। वासना भिन्नभिन्ना जायते, यथार्हमनुवर्तते चेति ग्रन्थेषु दर्शनात् एकः स्थायी संस्कार इति न निर्बन्ध इत्यर्थः। ननु कर्मवासनायाः कर्माधिकरण इव ज्ञानवासनायाः ज्ञानाधिकरणे स्थितिर्युक्ता, तद्वासनाया अपलापे ज्ञानवासनाऽपि नेत्युच्यतामित्याशंकायाम्, कर्मवासनेति किञ्चित् ज्ञानवासनातिरिक्तेनेत तामनभ्युपगम्य ज्ञानवासनामंगीकृत्य तस्याः ज्ञानीयत्वात् संस्कारो ज्ञानीय इत्याह **यद्यपी**त्यादिना। **ये**ति वरदनारायणभट्टारका उच्यन्ते। तैः **प्रज्ञापरित्राणे**, ज्ञानस्याद्रव्यत्वं भाष्यादिविरुद्धमुक्तमिति प्रपञ्चितं न्यायसिद्धाञ्जने। **अभ्युपगच्छद्भि**रिति

रूपादिमत्त्वम्; तदेव हि द्रव्यलक्षणम्। तथापि न गुणत्वहानिः; अपृथक्सिद्धविशेषणत्वातिरिक्तगुणत्वादर्शनात्, कर्मव्यतिरिक्तजातिमात्राश्रयत्वादिरूपगुणलक्षणसंकेतस्यास्माभिरनादरणात्। न च द्रव्यस्याश्रितस्वभावत्वलक्षणमपृथक्सिद्धविशेषणत्वं विरुद्धम्, अवयविनि युष्माभिरपि स्वीकरणात्। यथा च त्वया द्रव्यत्वविशेषणत्वादिभिर्न विरोध इष्यते, एवमत्रापि; उपलम्भयुक्त्यादेः समानचर्चत्वात्। अतो ज्ञानं द्रव्यम्, तदवस्थाविशेषास्त्वद्रव्याणीति। संस्काराख्यविकारस्थितिरपि तत्रैव युक्ता। वेगाख्यस्तु संस्कारस्तदुत्पादकतयाभिमतकर्मविशेषातिरिक्तो न दृश्यते; न च युज्यते। स्थितस्थापके तु कर्मनिवृत्तावपि तदविनाभूतसंयोगविशेषत्वं वक्तुं युक्तम्॥

ये च भगवतोऽनन्ता मङ्गलगुणाः प्रकीर्त्यन्ते, ते सर्वेऽपि षाड्गुण्यविततिरूपाः इति संमतम्। यथाऽऽहुः—

"तवानन्तगुणस्यापि षडेव प्रथमे गुणाः। यैस्त्वयेव जगत् कुक्षावन्येऽप्यन्तर्निवेशिताः॥"

इति। षट्सु च गुणेषु बलं धारणसामर्थ्यम्; ऐश्वर्यं नियमनशक्तिः; विकारहेतुष्वप्यविकृतत्वं वीर्यम्; तेजः पराभिभवसामर्थ्यम्, अन्यानपेक्षता वेति लक्षितानां चतुर्णामात्ममथने ज्ञानशक्तिविततिरूपत्वं व्यक्तम्। न च ज्ञानशक्त्योरप्येवं मिथोऽनन्यभावः शक्यः, अज्ञेष्वपि द्रव्येषु शक्तिदर्शनात्, अशक्तेष्वपि ज्ञानदर्शनात्। अत एव ज्ञानविशेषः शक्तिरित्यपि निरस्तम्॥ शक्तिविशेषस्तु ज्ञानं स्यादिति चेत्, कोऽसौ शक्तिशब्दार्थः? विलक्षणो गुणविशेषः; प्रभाकरादिनयेन पदार्थान्तरं वेति चेत्—न तर्हि ज्ञानस्य तद्विशेषता सिध्येत्। अथ कार्योपयुक्तविशेषणमात्रं शक्तिरिति सर्वप्रयोगानुगतं पश्य स,

न्यायसुदर्शने तैरेव तथोक्तमित्याशयः। **कर्मव्यतिरिक्तेति।** रूपव्यतिरिक्तत्वादिघटनेन रूपादेरप्यगुणत्वकथनप्रसंगादिति भावः। कर्मव्यतिरिक्तत्वं जात्यादेरपि। **अतो** जात्याश्रयत्वम्। द्रव्यवारणाय **मात्रेति।** जातिमात्रप्रतियोगिकसमवायानुयोगित्वं द्रव्ये नास्ति, गुणानामपि सत्त्वात्। संस्कारस्त्रिविधस्तार्किकेष्टः। त्रयाणामपि पार्थक्याभाव इहोच्यते। तदर्थं **वेगेत्यादि।**

आत्मगुणैतावत्त्वं कथम्? अद्रव्यं दशधा विभज्यतेऽत्र। तद्दशत्वञ्च कथम्? ईश्वरगुणानन्त्यभंगप्रसंगादित्यत्राह **येचेति।** **त्वयेव जगदिति।** हे भगवन् यथा त्वया जगत् स्वकुक्ष्यन्तर्निवेश्यते प्रलये, तथा सर्वे त्वद्गुणाः त्वदीयषाड्गुण्यान्तरेव निवेशिता इत्यर्थः। दृष्टान्ते कुक्षिभिन्नत्वं जगतोऽस्ति; **अत्र** तु षाड्गुण्यभिन्नत्वं गुणेषु नास्ति। एवं वैलक्षण्येऽपि तदन्तर्गतत्वरूपैकशब्दवाच्यतया समानधर्मवत्त्वमभिमतम्। सूक्ष्मेक्षिकायां षाड्गुण्यमपि द्वैगुण्येऽन्तर्गतमेव। अतो ज्ञानं शक्तिरिति गुणद्वयमेवात्मनीति कथ्यते। तदिदं षाड्गुण्यशोधनादत्र क्रियमाणादेव सुज्ञानम्।

तदा न केवलं ज्ञानस्य, अपितु सर्वस्यैव शक्तित्वं प्राप्तम्, सर्वस्यापि प्रधानकारणतयाऽभिमते कस्मिंश्चिद्विशेषणत्वेनावस्थानात्। नन्वेवमुदयनादीनामिव स्वरूपसहकारिव्यतिरिक्तशक्त्यभावः प्रसक्तः इति चेत्, अनन्यथासिद्धयुक्तिवशादागमबलाद्वा तत्सिद्धेः। तच्छब्दस्तु विवक्षाविशेषात् स्यादिति ब्रूमः। शक्तिसमर्थनसंरम्भश्चाचार्याणां न्यायकुलिशे निपुणमनुसंधेयः। शक्तिमात्रकारणादिवादाश्च बाह्यानामुपलम्भयुक्त्याप्तागमादिविरहादनादरणीयाः। सा चेदुपादानम्, सूक्ष्मं द्रव्यमेवासौ स्यादिति न विवादः॥

अथाचिद्द्रव्यविशेषगुणान् पश्यामः—तत्र शब्दादयः पञ्च तत्तद्भूतवर्तिनः प्रत्यक्षादिबलादभ्युपगताः। सत्त्वरजस्तमांसि च शास्त्रानुसारेण। संयोगश्च प्रत्यक्षादिसिद्धः॥ नैरन्तर्यमात्रमेवायमिति चेत्, तत् किं द्रव्यस्वरूपम्, उतागन्तुरवस्थाविशेषः? । नाद्यः, नित्यत्वप्रसङ्गात्। न द्वितीयः, नामान्तरेण तदभिधानादिति। विभागपृथक्त्वे तु अभावोक्तन्यायेन दूषणीये। परत्वापरत्वे अपि सुखादिच्छायया; न हि तत्तदुपाध्यवच्छिन्नदेशकालविशेषसंबन्धातिरिक्ते परत्वापरत्वे पश्यामः। तत्कल्पने च प्राक्त्वप्रत्यक्त्वादयोपि हि बहवो गुणास्तुल्यन्यायाः कल्प्याः स्युः। एवं सदसद्गुणप्रदर्शनप्रक्रियया संख्यापरिमाणगुरुत्वद्रवत्वस्नेहानां तत्त्वमवसातव्यमित्यद्रव्येष्वेषा दिक्॥

अथ द्रव्याणि विमृश्यन्ते—तत्र तावत् कौमारिलाभिमतविभुशब्दाख्यद्रव्यवादः शब्दस्याचिदवस्थाविशेषत्वेन श्रुत्यादिसिद्धत्वान्निराकार्यः। आत्मसिद्धौ तु शब्दस्य धर्मप्रतिवर्तित्व.गतिमत्त्ववादस्तदाश्रयभूतावयवद्वारेणेति नेतव्यः। यत्तु—"तमः खलु चलं नीलं परापरविभागवत्। प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥" इत्याहुः, तदेतद् द्रव्यं तावद्-

---

आचार्याणामिति। अस्मद्गुरूपणां श्रीवादिहंसाम्बुवाहार्याणामित्यर्थः।

अचिद्द्रव्यविशेषेति। अचिद्रूपस्य द्रव्यविशेषस्य गुणानित्यर्थः। माऽस्तु वा विशेषपदम्। सत्त्वरजस्तमांसि चेति। वैशेषिकानुक्तान्यपीति शेषः। सौगतमतं शंकते नैरन्तर्येति। निरन्तरत्वं नैरन्तर्यम्=अन्तरम् अवकाशः; तदभावः। विभागेति। विभागः संयोगध्वंसः। स च संयोगकालोत्तरकालसंबन्ध एव। सुखादिच्छाययेति। अनुकूलादिवस्तुज्ञानातिरिक्ततज्जन्यसुखदुःखास्वीकारवत् तत्तद्देशकालसंबन्धतिरिक्तं तज्जन्यं परत्वादि न स्वीक्रियत इति। संख्यादीति। न्यायसिद्धाञ्जने सर्वं विस्तरिष्यत इति अत्र दिगित्युक्तिः। विभुशब्देति। शब्दो विभुद्रव्यविशेष इति तद्भावः। द्वारेणेति इतिशब्दो मा भूत्; अस्तु वा। नवभ्यः पृथिव्यादिद्रव्यनवकात्। ननु पृथिव्यां चलत्वादिसर्वधर्मसंभवात् तमः पृथ्वी भवेत्। अतः कथं प्रसिद्धद्रव्यवैधर्म्यमिति चेत्—उद्भूतरूपवत् पार्थिवमुद्भूतस्पर्शवत् दृष्टमिति भावः। द्रव्यं तावदिति। द्रव्यत्वमात्रे संमतिः। न तु तार्किकादृता नाना

भ्युपगच्छामः, ; तथा ह्युक्तं वरदगुरुभिस्तत्त्वसारे—"तमो नाम द्रव्यं बहुलविरलं मेचकचलं प्रतीमः केनापि क्वचिदपि न बाधश्च ददृशे। अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते निरालोकं चक्षुः प्रथयति हि तद् दर्शनवशात् ॥" इति। एतेन वियति वितताानां सूक्ष्माणां पृथिव्यवयवानां कृष्णो गुणस्तम इति पक्षोऽपि प्रतिक्षिप्तः ; साश्रयस्यैव तस्य ग्रहणविरोधाभावात्, गुणमात्रतया च कस्याप्यनुपलम्भात्। स्पर्शरूपरसानां च शब्दगन्धवद् भ्रान्तौ प्रमितौ वा निराधारग्रहणादर्शनाच्च–इति ।

एवं द्रव्यत्वे सिद्धे कृष्णवर्णस्य द्रव्यस्य पृथिवीत्वमेवाभ्युपगन्तुमुचितम्, "यत् कृष्णं तदन्नस्य" इति श्रुतेः। यद्यपि पृथिव्यां पाकविशेषवशात् शुक्लादिरूपं, नान्यत्र पाकादपि भवति ; आकाशादिषु नैल्योपलम्भोऽपि हि पञ्चीकरणमूलपृथिवीसंसर्गात्। "आकाशे चाविशेषात्" इति सूत्रे भाषितम्–"अण्डान्तर्वर्तिनश्चाऽऽकाशस्य त्रिवृत्करणोपदेशप्रदर्शितपञ्चीकरणेन रूपवत्त्वाच्चाक्षुषत्वेऽप्यविरोधः" इति। नन्वेवमाकाशमेव द्रव्यान्तरसंसर्गान्नीलं तम इत्युपलभ्यते इति स्यादिति चेत्, न स्यात् ; आकाशे तम इति पृथगुपलम्भस्वारस्यात् द्रव्यान्तरत्वे तु कल्पनागौरवात्। अन्ततोऽत्रापि पञ्चीकरणेन द्रव्यान्तरसंसर्गस्याभ्युपगतत्वाच्चेति। स्पर्शानुपलम्भस्तु इन्द्रनीलालोकदुर्दिनातपादेरिवानुद्भवादेरपि स्यात् ।

न च पार्थिवरूपस्य सर्वस्याऽऽलोकसापेक्षचक्षुर्ग्राह्यत्वनियमः कल्प्यः, करणवैचित्र्यादिव

---

कुसृतिः। तत्र संप्रदायवचनप्रदर्शनं तथाहीति। बहुलत्वात्=निबिडत्वात् विरलत्वाच्च सावयवत्वात् मेचकत्वात्—नीलत्वात् क्रियावत्त्वाच्च तमो द्रव्यमित्येव प्रतीमः। प्रतीयमाननीलत्वादेर्बाधः प्रतीतिकारणदोषश्च केनापि=पूर्वपक्षिणापि न दृष्टः एवं कार्यस्याबाधितत्वात् तदुचितं कारणमपि स्वीकार्यम् ; प्रपञ्चान्यथानुपपत्त्या प्रकृत्यादिकमिव। न केवलं सावयवत्वादिप्रत्यक्षम् ; तमस्सृष्ट्यादिश्रुतिरपि प्रमाणम्। अतः परमतं श्रुतिविरुद्धम्। द्रव्यं चेत्, तच्चाक्षुषप्रत्यक्षे आलोकस्य कारणत्वात् तमोदेशे तदभावात् तमःप्रत्यक्षमनुपपन्नं स्यादिति चेत्—आलोकाभावस्तम इति पक्षेऽपि अभावचाक्षुषेऽपि आलोकस्य कारणतयाऽनुपपत्तिस्तुल्या। आलोक.तदभावव्यतिरिक्तविषय एवाऽऽलोकसंबन्धः कारणमितीष्यत इति चेत्—तमोभिन्नविषय एवेत्युभयोस्तुल्यम। अतो निरालोकं=आलोकरहितमेव चक्षुस्तत्प्रत्यक्षे कारणम्, तथैव दर्शनादिति पद्यार्थः विस्तरस्तत्रास्मद्व्याख्यायां वात्स्यवरविस्यायां द्रष्टव्यः।

प्राभाकरपक्षं निरस्यति एतेनेति। शब्दगन्धवदिति। श्रोत्रेण शब्दः घ्राणेन गन्धश्च तदाधाराग्रहणेनैव गृह्यते, न तथा रूपादिकं चक्षुरादिनेत्यर्थः। ननु पृथिवीभिन्नमेव तमो भवतु ; कृष्णरूपं तु पाकवशात् स्यादित्यत्र भूतान्तरे पाकजगुणो नास्तीत्याह यद्यपीति। अत एवाऽऽकाशे पञ्चीकरणेनाकाशान्तर्गतः पृथिवीभागो नीलरूपवानित्युक्तं भाष्ये इत्याह आकाशे चेति।

विषयवैचित्र्यादपि व्यवस्थोपपत्तेः । दिवाभीतानाम्, विशिष्टाञ्जनरञ्जिताक्षाणां चाऽऽलोकनिरपेक्षमेव चक्षुषैव पदार्था गृह्यन्ते ।

आलोकाभावमात्रे च तमसि तमोज्योतिषोर्निवृत्तिवचनं च व्याहन्येत । प्रतिनियतनैल्यारोपकल्पनाप्रयासश्च । अतः पृथिवीविशेषत्वं तमसो युक्तम् ।

पृथिव्यादीनि पञ्च भूतानि मनश्च त्रिगुणद्रव्यपरिणतिविशेषतया श्रुत्यादिसिद्धत्वान्न पृथग्द्रव्याणि । तत्र च त्र्यणुकाख्यं भौतिकद्रव्यम्' "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादिभिः षड्भिः सूत्रैर्बुद्धिशब्दान्तरादेरन्यथासिद्धत्वाद्युपपादनेन निरस्तम् । "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इत्यादिभिश्च पराभिमतः परमाणुः । अत. परिणामविशेषादुपलम्भयोग्यत्वायोग्यत्वादिदशाविशेषयोगि प्रकृत्याख्यं द्रव्यं विचित्रव्यवस्थितक्रमसमष्टिव्यष्टिरूपमवतिष्ठते । दिक्तत्त्वमपि तत्तदुपाध्यवच्छिन्नास्तत्तद्देशविशेषा एव; अतिरिक्तकल्पकानां परापरप्रत्ययविशेषादीनामन्यथासिद्धेः । दिगुत्पत्तिश्रुतिश्च तदुपाधिकृतनिर्वाहकसृष्ट्योपपन्ना, अन्यथा (अनयाऽन्यथा)द्युपृथिव्यन्तरिक्षादिवत् त्रिगुणपरिणतिविशेषतैव स्यात्, न पृथग्द्रव्यता । न चैवं कालेऽपि प्रसङ्गः, नित्यस्य कालस्य भगवत्पराशरादिभिः पृथक्प्रसंख्यानात् । तस्य प्रकृतिपरिणतिविशेषत्वादिपक्षास्तु पूर्वापरकालावश्यम्भावात् श्रुत्यादिबलाच्च प्रत्यस्ताः । अतस्त्रिगुणकालौ आत्मा चेति त्रीणि सिद्धानि । ईश्वरस्य तु पृथक्सङ्ख्याने चत्वारि । तस्य हि चेतनत्वादिभिः संग्रहसंभवेऽपि अवान्तरवैलक्षण्यज्ञापनाय पृथक्संख्यानं प्राचामनादिवाचां च । अन्यथा प्रक्रियान्तरेणाचेतनेष्वपि संग्रहप्रसंगात् । विविक्तं च भगवता पराशरेण—

"परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥" इति ।

---

**दिवाभीतानाम्** उलूकानाम् । **विशिष्टाञ्जने**ति सिद्धादिपुरुषोक्तिः । एतेनोलूकानां नेत्रे आलोकाधिक्यात् तत्संयोगात् तमसि वस्तुप्रत्यक्षमित्युक्तावपि अञ्जनाञ्चितपुरुषनेत्रे तत् दुरुपपादमिति दर्शितम् । अत: सर्ववस्तुप्रत्यक्षचाक्षुषे नालोकः कारणम्, नापि सर्वप्राणिकर्तृकचाक्षुषे । **निवृत्ती**ति । नासीत् तम इति श्रुतिः । **बुद्धिशब्दान्तरादे**रिति । तन्तव इति बुद्धितः पट इति बुद्धिरन्या ; तन्तुव्यवहाराच्च पटव्यवहारोऽन्य. । बहवस्तन्तवः, एकः पटः इत्यादि द्रष्टव्यम् । सर्वस्यावस्थाभेदमादायैव निर्वाहान्नातिरिक्तोऽवयवी **परमाणु**रिति । निरस्त इत्यनुषंगः । **अन्यथे**ति । **अनयाऽन्यथापी**ति पाठान्तरमिव । दिशो द्रव्यान्तरत्वेऽपि अनया दिक्सृष्ट्या प्रकृतिपरिणामत्वमेव स्यात् ; न विलक्षणनित्यदिक्तत्त्वं तार्किकेष्टमित्यर्थः । **चत्वारी**ति । आत्मा प्रकृतिः काल ईश्वरश्चेति । **पृथक् संख्यानम्** ; चिदचिदीश्वरेति, भोक्ता भोग्यं प्रेरितारञ्च, विद्याविद्ये ईशते यस्तु सोऽन्यः इत्येवम् । **प्रक्रियान्तरेण** भोग्यत्वादिना प्रकारान्तरेण । जीवेश्वरयोर्मुक्तावैक्यमिति शंकां निरस्यति **विविक्तञ्चे**ति । जीवात्मपरमात्मनो**र्योगः** ऐक्यम् परमार्थ इति कैश्चिदिष्यते, एतन्मिथ्या=न तथ्यम् ; तदपेक्षयाऽन्यद् द्रव्यं कथं तेनैक्यमियात् । संसा-

एवं धर्मभूतज्ञानादन्यत् द्रव्यमजडत्वविशेषेऽपि स्फुटतरवैधर्म्यान्तरबलात् पृथक् प्रतिपन्नम्। तस्य अद्रव्यत्ववादः केषाञ्चित् नाथमुनि-यामुनमुनि-भाष्यकारादिप्रबन्धविरोधात् प्रायः परास्तः ज्ञानवत्। शुद्धसत्त्वाख्यस्य च द्रव्यान्तरस्य परविग्रहादियाथार्थ्योपदेशप्रवृत्तनिरुक्तागमसिद्धत्वात् सूक्ष्मत्रिगुणावस्थाविशेषादिपक्षा बहिष्कार्याः। अतः षडेतानि द्रव्याणि। भोक्तृभोग्यनियन्तृणां सदात्मनैकद्रव्यत्वादिपक्षा अपि निर्विशेषसन्मात्रपक्षवत् व्याघात-श्रुतिविरोधादिभिर्बहुशो भाष्यादिषु निरस्ताः। तत्र त्रिगुणशुद्धसत्त्वे स्वानुरूपैव लक्ष्ये; क्षणलवाद्यात्मा कालः; अणुर्ज्ञाता जीवः; विभुस्सर्वेश्वरः, जानातीतिव्यवहारासाधारणकारणं व्यवहार्यविशेषो मतिः। एवं त्रिगुणकालजीवेश्वरशुद्धसत्त्वमतिरूपेण षोढा द्रव्यविभागः। एवं प्रमाणसार्थघण्टापथेन द्रव्याद्रव्यरूपप्रमेयग्राममधिजिगमिषता न कुदृष्टिबाह्यकल्पितकूटयुक्तिगतानुपातः इति॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ

**प्रमेयाध्याये प्रथममाह्निकम्॥**

---

रस्यानादितया जीवपरयोरनादिर्भेदः। तस्य भेदस्य कथमपाय इति। अत ईश्वरस्य पृथक्संख्यानं युक्तमिति।

**वैधर्म्यान्तरबलात्**। धर्मत्वात् ज्ञानस्योत्पत्ति-विनाशरूपानेकावस्थावत्त्वात्, आत्मनश्च धर्मित्वात् निर्विकारत्वाच्च। **केषाञ्चित्** वरदनारायणभट्टानां **प्रज्ञापरित्राण** ग्रन्थकाराणाम्। **शुद्धसत्त्वेति**। नित्यविभूतिद्रव्यमिदम्। **परविग्रहादीति** परमात्मदिव्यमंगलविग्रहादीत्यर्थः। **सूक्ष्मत्रिगुणेति**। 'अक्षरं तमसि लीयते' इत्युक्तं तमःकार्यमक्षरमेव शुद्धसत्त्वं परमपदमिति यादवप्रकाशीयाः। सत्त्वादीनां द्रव्यरूपत्वात् मूलकारण एव रजोमात्र-सत्त्वमात्ररूपभागावपि स्तः; तदेव सत्त्वं शुद्धसत्त्वमिति केचित्। **एतानि**= आत्म-त्रिगुणेश्वर-काल-धर्मभूतज्ञानशुद्धसत्त्वानि। सदात्मना एकद्रव्यत्वं **यादवप्रकाशोक्तम्**; जीवरूपेण भेदश्च। **भास्कर**मते घटाकाशमठाकाशयोरिव जीवपरयोरप्यभेदः स्वाभाविकः; भेद औपाधिकः। उपाधिभूतमचेतनं तु कारणात्मनैकं कार्यात्मना भिन्नमिति। निर्विशेषसन्मात्रसत्यत्वं **शांकरमतम्**। **व्याघातः** भेदाभेदयोरेकत्रायोगात्। जीवसाङ्क्येऽपि जीवेश्वरैक्यं घटशरावैक्यवत् दुर्घटश्च। सकलकल्याणगुणविशिष्टेश्वरतत्त्वाधिकं सन्मात्रं किञ्चित् कदापि न भवति च। व्यष्टान्तर्भावायोगादतिरिक्तेति ज्ञापनाय शुद्धसत्त्वज्ञानयोरन्ते उक्तिः **द्रव्यविभाग** इति। अद्रव्याणां पृथग्गणने पदार्थः सप्तविधो वक्तव्यः। अद्रव्यस्य च दशधा विभाग इष्टः। एतत्क्रमेण निरूपणं **न्यायसिद्धाञ्जने** द्रष्टव्यम्॥

**इति श्रीवात्स्यवीरराघवाचार्यकृतौ न्यायतत्त्वप्रकाशिकायां पञ्चमप्रथमम्।**

## ॥ द्वितीयमाह्निकम् ॥

अत्र यद्यपि प्रमाविषयः प्रमेयमिति व्युत्पत्त्या आरोपिताकारव्यवच्छेदार्थया अनारोपितरूपं सर्वं प्रमेयम्, तथापि निःश्रेयसान्तरङ्गतया तदर्थिभिः प्रकर्षेण मेयं प्रमेयमिह विवक्षितम्। यद्विषयेण भ्रमेण संसरामः, यद्विषयेण च तत्त्वज्ञानेनापवृज्येमहि, तदिह नः प्रकर्षेण मेयं प्रमेयम्।

तच्च द्वादशविधमुक्तमाक्षपादे—"आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाः प्रमेयम्" इति। तत्र चेतन आत्मा। स द्विधा—ईश्वरोऽनीश्वर इति। जगत्कर्ता ईश्वरः; जगद्व्यापाररहितश्चेतनोऽनीश्वरः। यच्चैतन्यसमानाधिकरणं यदपृथक्सिद्धं यद् द्रव्यम्, तत् तस्य शरीरम्। तत् द्विविधम्—कर्मजम्, अकर्मजञ्चेति। आद्यमस्मदादीनाम्। द्वितीयमीश्वरादीनाम्। सात्त्विकाहङ्कारोपादानकं द्रव्यमिन्द्रियम्। तदेकादशविधम्—पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि मनश्चेति। इन्द्रियगोचरा इहार्थाः; ते च शब्दादयो गुणाः; तद्विशिष्टानि च। अर्थप्रकाशो बुद्धिः।

---

## अथ पञ्चमे द्वितीयम्

मुख्यप्रमेयनिरूपणमन्तिमे आह्निके। प्रमाविषयः **प्रमेयम्**; प्रमा नाम यथार्थज्ञानमिति व्युत्पाद्य प्रमेयनिरूपणं पूर्वाह्निके। इह प्रकर्षेण मेयं **प्रमेय**मिति व्युत्पाद्य। मेयस्य प्रकर्षो नाम, संसारहेतुभूताज्ञान.मोक्षहेतुभूततत्त्वज्ञानोभयविषयत्वम् **अपवृज्येमही**ति पाठः। अपवृक्ता भवेम, अपवर्गं मोक्षं प्राप्नुयामेत्यर्थः। गौतमपरिगणितं गृह्यते; परंतु तस्य तन्निरूपितरीत्या ग्रहणं नालमिति तत् विशोधनीयम्। आत्मा प्राधान्येन प्रथमं तेन निरदेशि। तद् युज्यते शरीरेन्द्रियादाववान्तरविभागवत्, आत्मनि जीवेश्वरभेदं प्रदर्श्य जीवात्मज्ञानमंगम्, ईश्वरविज्ञानं प्रधानमिति वक्तव्ये तद्विभागमेवाकृत्वा जीवध्यानप्राधान्याभिसंधिमत्तां स्वस्य दर्शयन् स उपेक्षणीयः संवृत्तः। शरीरशब्दस्य चान्तर्यामिब्राह्मणादिपरिशीलनेन लक्षणे निर्वचनीये कतिपयलोकप्रसिद्धलक्ष्यमात्रगतं लक्षणमेवोक्तमित्यादिर्न्यूनता द्रष्टव्या। **यच्चैतन्ये**ति। यत्पदद्वयमात्मपरम्, अस्मदीयं हि शरीरमस्मदीयचैतन्यसमानाधिकरणमस्मदपृथक्सिद्धञ्च लक्ष्यते, तथैव सर्वमिति। चैतन्यसामानाधिकरण्यञ्च चैतन्यं प्रत्येव शरीरं प्रत्यप्यात्मनोऽधिकरणत्वात्। आधेयत्वविधेयत्वशेषत्वानि हि नियतानि आत्मानं प्रति शरीरस्य। तत्सर्वोपलक्ष्यमपृथक्सिद्धद्रव्यत्वरूपं चतुर्थं लक्षणं न्यायसिद्धाञ्जने दर्शयिष्यमाणमत्र निरदेशि। आत्मापृथक्सिद्धे तदीयधर्मभूतज्ञानाख्ये द्रव्येऽतिव्याप्तिवारणाय चैतन्यनिरूपितसामानाधिकरण्योक्तिः। चैतन्ये स्वात्मक चैतन्यनिरूपितं सामानाधिकरण्यं ह्यसंभवि। भाष्ये यस्य चेतनस्येत्यादिशरीरलक्षणनिर्वचनेषु चेतनपदस्य यत् कृत्यम्, तदिदमेव। आत्मगतवस्त्वन्तरसंयोगादावतिव्याप्तिवारणाय **द्रव्यपदम्** **अस्मदादीना**मिति। बद्धानामित्यर्थः। बन्धरहितानामकर्मजम्। बाह्यज्ञानेन्द्रियमात्रवर्तितयेन्द्रियलक्षणकथनमव्याप्तिदोषादुपेक्ष्यम्। मनसः पृथङ्गणितस्यापीन्द्रियत्वं कर्मेन्द्रियाणामिवेष्टमिति अन्यथा लक्षणमाह **सात्त्विके**ति। भूततन्मात्रवारणाय

स्मृत्यादिकरणमिन्द्रियं मनः । मनोवाक्कायानां पुण्यापुण्यरूपो व्यापार इह प्रवृत्तिः । तथाविधप्रवृत्तिहेतवो दोषाः । ते च संग्रहात् रागद्वेषमोहाः । पूर्वदेहं विहायोत्तरदेहप्राप्तिः प्रेत्यभावः । प्रवृत्तिसाध्यं फलम् ; तदेव पुरुषेण प्रवृत्तिफलतयोद्दिष्टं प्रयोजनम् । प्रतिकूलवेदनीयं दुःखम् । तत्र सुख.तत्साधनादिकमपि विष-संपृक्तमधुवत् प्रभूतानर्थानुषङ्गित्वाद् दुःखमेव मुमुक्षुणा भाव्यमिति तस्यापि प्रतिकूलवेदनीयत्वम् । दुःखान्तरकारणासमानाधिकरणा दुःखनिवृत्तिरपवर्गः । स च स्वाभाविकात्मस्वरूपाविर्भावपूर्वकसमस्तविभूतिगुण-विशिष्टनिरतिशयानन्दब्रह्मानुभवगर्भः(रूपः) इति परमपुरुषार्थः । तत्पूर्वको वा तादृशब्रह्मानुभवोऽपवर्गः इति ।

एतदेव च प्रमेयं संग्रहात् चतुर्धा विभज्य केचिदनुसंदधते—'हेयम्, तस्य निर्वर्तकम्,

सात्त्विकेति । इहार्था इति । सर्वस्याप्यर्थशब्दवाच्यत्वेऽपि प्रकृते एतावद्विवक्षेति भावः इन्द्रियपद-समभिव्याहारात् अर्थशब्दः इन्द्रियविषयपरः । पृथिव्यादिद्रव्याणामिन्द्रियविषयत्वेऽपि इन्द्रियव्यवस्थाहेतुतया प्राधान्यं गुणानाम् । द्रव्यग्राहीन्द्रियाणामपि तद्विशिष्टतयैव द्रव्यग्राहकत्वम् ; घ्राणश्रोत्रादीनां द्रव्यग्राहकत्वमेव न भवति । स्मृत्यादीति । आत्मतत्समवेतगुणप्रत्यक्षं मानसमित्यस्माभिरस्वीकारात् तेषां स्वयम्प्रकाशत्वात् मनइन्द्रियकार्यं स्मृत्यादिकमेव । कथमप्रत्यक्षज्ञानहेतोरिन्द्रियत्वमिति चेत्—न हि तथा-लक्षणमस्माभिरुच्यते । इह प्रवृत्तिरिति । द्वादशविधप्रमेयमध्यनिर्दिष्टा प्रवृत्तिरित्यर्थः लोके प्रवृत्तिशब्दो व्यापारसामान्यवाची यत्नवाची यत्नसाध्यक्रियासामान्यवाची वा संमतः । अत्र तु पुण्यपापपरः । तदुक्तं तत्र भाष्ये "शरीरेण वाचा मनसा च पुण्यं पापञ्च दशविधम्" इति । द्वितीयसूत्रे च तत्र भाष्यम्= हिंसा.स्तेय. प्रतिषिद्धमैथुनानि अनृत.परुष.सूचनासंबद्धानि परद्रोह.परद्रव्याभीप्सा.नास्तिक्यानि दश पापानि; दान.परित्राण. परिचरणानि सत्य.हित.प्रिय.स्वाध्यायवचनानि अस्पृहा.दया.श्रद्धाः. पुण्यानि दशेति । प्रेत्यभावः प्रेत्य=मृत्वा भावः—उत्पत्तिः—जन्ममरणप्रबन्धः । फलं सुखं दुःखञ्च । प्रयोजनशब्देन फलतया पुरुषोद्दिष्टमुच्यते । तत् षोडशपदार्थ्यामेकम् ; न तु द्वादशप्रमेयान्तर्गतम् । प्रभूतेति । अधिकेत्यर्थः । दुःखमेव भाव्यम्=दुःखत्वेन भाववीयम् । दुःखान्तरकारणं=दुःखप्रागभावः । यदि आत्मनि उपरि कदापि दुःखं भविष्यति, तर्हि तत्प्रागभावसत्त्वात् तत्सामानाधिकरण्यमेव स्यात् । मोक्षे तु तदसामानाधिकरण्यम् । इदं गौतमोक्तमस्माकमिष्टम् । परंतु नानिष्टनिवृत्तिमात्रम्, इष्टप्राप्तिरपि शास्त्रबलादिष्टेत्याह सचेति । अनुभवगर्भ इति पाठे अनिष्टनिवृत्तेरभावरूपायाः अनुभवरूपभावादन्य-त्वकल्पनया प्रयोगः । अनुभवरूप इति पाठे भावान्तरत्वज्ञापनम् । तत्पूर्वकः=दुःखनिवृत्तिपूर्वकः । दुःखनिवृत्तेः सुखानुभव-अनुभवसामान्याभावरूपदशाद्वयसाधारण्यादनुभवाति रिक्ततेत्याशयेनैवमुक्तिः ।

न्यायभाष्ये प्रकारान्तरेण प्रमेयचातुर्विध्यमनूदितमपि संमन्यमान आह एतदेवचेति । "हेयं तस्य निर्वर्तकं हानमात्यन्तिकं तस्योपायोऽधिगन्तव्य इत्येतानि चत्वर्यर्थपदानि सम्यक् बुद्ध्वा निःश्रेयस-मधिगच्छति" इति तत्राभाषि । हेयं दुःखम्, संसारात्मकम् ; तस्य निर्वर्तकं कारणभूतं कर्मादि ;

ज्ञानम्, तस्योपायः' इति ।

ये तु कणचरणादयः षट्सप्तादिरूपेण सर्वान् पदार्थान् विभज्य परीक्षन्ते, ते सामान्यविशेष-समवायादीनां पदार्थान्तरत्वनिक्षेपेण निरस्ताः। ततश्च द्रव्यगुणकर्माणि त्रीण्येवावशिष्यन्ते। तत्रापि कर्मणः संयोगादिवत्गुणातिरिक्तत्वपक्षेऽपि संस्कारादिगुणावान्तर[वेगादि]विशेषवद् गुणान्तर्भावेऽपि द्वौ पदार्थौ। तत्र च गुणशब्दस्यापृथक्सिद्धविशेषणमात्रव्युत्पन्नस्य तथाविधेषु केषुचिद् द्रव्येष्वपि वृत्तेः द्रव्यगुणरूपेण विभागानौचित्याद् द्रव्यमद्रव्यमित्येव पदार्थविभागमाद्रियामहे

ईदृशस्य तु विचारस्यापवर्गे परम्परयोपयोगः। मुमुक्षूणां प्रधानतमं तु प्रमेयं विशिष्टं ब्रह्मैकमेवेति मन्वानो भगवान् बादरायणः—"अथातो ब्रह्मजिज्ञासा" इत्युपक्रम्य तदेव सप्रकारं निरूपितवान्; तत्प्रकारतयैवान्यत् प्रमेयम्।

केचित्तु देहात्मविवेकक्रमानुसारेण "भोक्ता भोग्यं प्रेरितारं च मत्वा" इति श्रुतिप्रक्रियया च त्रिधा तत्त्वं विभज्य चिन्तयन्ति, तत्रापि सप्रकारद्रव्यचिन्तनादद्रव्यचिन्ताऽप्यन्तर्भवति । तत्तुल्यन्यायतया कालचिन्ता च । तदभिप्रायेण—कालस्य पदार्थविशेषणतयैव समस्तवस्तुप्रतीत्यनुभावात्र पृथगस्तित्वादयो वक्तव्याः, न च परिहर्तव्याः; कालोऽस्ति नास्तीति व्यवहारो व्यवहर्तॄणां जात्याद्यस्तित्वनास्तित्वव्यवहारतुल्यः इति जैननिराकरणसमये भाष्यकारैरुक्तम्। ततश्च ब्रह्मैकमेव तत्त्वमिति वा चिदचिदीश्वरभेदेन त्रीणि तत्त्वानीति वा पश्यतां न कश्चिद्विशेषः; स्वरूपभेदस्य विशिष्टैक्यस्य चोभयेषामभिमतत्वात्। अत एव, "प्रधानपुरुषव्यक्तकालास्तु प्रविभागशः। रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः॥

---

हेयशब्दार्थे हानस्य=त्यागस्य प्रविष्टतया ज्ञातत्वात् ज्ञेयतयोक्तं तृतीयमिदं **हानं** तत्त्वज्ञानम्। करणे ल्युट्। तथाऽत्यन्तिकश्चेत्च अन्तमवसानमतिक्रम्य=अन्यूनतया जातत्वम्, यावदपेक्षितोद्भूतज्ञानं हानम्' तस्योपाय इति शास्त्रमुच्यते. केचित् कर्मैव मोक्षसाधनं मन्येरन्। तत्र भवतीति हानं किमिदमिति ज्ञातव्यम्। तस्योपायोऽपि बाह्यागमः पाशुपतं पञ्चरात्रमित्यादिबहुविकल्पे वेदस्य सपञ्चरात्रस्य प्राधान्येन उपायत्वमधिगन्तव्यम्। अन्यथा अतत्त्वज्ञानमेव स्यादिति। इदमेव मुखान्तरेण बौद्धैः चतुरार्यसत्यमित्युच्येत। **परमतभंगे** द्रष्टव्यम्। परंतु बौद्धागमो न तत्त्वज्ञानोपायः। नापि तद्धानज्ञानस्य भ्रान्तिरूपतया तत्त्वज्ञानतेत्यादि विमृश्य यथार्थोपायलाभे फलप्राप्तिरिति।

**गुणावान्तरविशेषः** वेगादिः। **विशिष्ट ब्रह्मैकमेवे**ति। अत एवेदं विशिष्टाद्वैतम्। **सप्रकारे**ति अद्रव्याणां द्रव्यप्रकारतया तैः सहैव द्रव्यं ज्ञेयमिति भावः। सर्वेन्द्रियजन्यज्ञाने कालस्य पदार्थविशेषणतया भानात् सोऽपि गुणवत् तत्तत्प्रत्ययग्रहणे गृहीत एवेति। **न च परिहर्तव्याः** इति। पृथगनुक्तिमात्रेण तदपलापोऽपि न कार्य इति भावः। **स्वरूपभेदस्ये**ति। विशेषणस्य विशेष्यस्य च स्वरूपं भिन्नम्। अत एवैकविशिष्टत्वमन्यस्येति। **व्यक्ते**ति महदादीत्यर्थः। अन्तः लयः। **व्यक्तिः**=

इत्याद्यनुसारेण चतुर्धा पञ्चधा वा विभज्य चिन्तयतां कार्यविशेषैः सह पञ्चषट्सप्तविंशत्यादिसंख्यां निवेशयतां च पूर्वाविशेष एव। श्रूयते च—

"तं षड्विंशकमित्याहुः सप्तविंशमथापरे। पुरुषं निर्गुणं सांख्यमथर्वशिरसो विदुः ॥" इति।

प्राप्यम्, प्राप्ता, प्राप्त्युपायः, निवर्त्यं, फलं चेति केचित् पञ्चधा प्रमेयं परिसंचक्षते। संबन्धविशेषेण सहान्ये षोढेति ॥

अथायमपरः प्रवृत्त्यर्थः संग्रहोऽनुष्ठान-परिहारान्तरङ्गः; तथाहि – हितमहितं च प्रकर्षेण मेयम्। तत्र लौकिकहिताहितयोरन्वयव्यतिरेकायुर्वेदनीतिशास्त्रादिकं प्रमाणम्; तदपि योगसाधनभूतशरीररक्षणार्थं मुमुक्षुणाऽपि श्रुतिस्मृत्याद्यविरोधेनानुसरणीयम्। अलौकिकहिताहितयोस्तु वेदाः प्रमाणम्। तदुपबृंहणतया स्मृतीतिहासपुराणानि च। यच्च श्रुतिविहितम्, तदखिलमपि यथाधिकारं हितम्; यच्च तन्निषिद्धम्, तदखिलमप्यहितम्।

नन्वभिचारादिकर्मणामनर्थहेतूनाम्, क्षुद्रपुरुषार्थसाधनानां च काम्यानां कर्मणां कथं हितत्वम्?; उच्यते–अधिकारिविशेषमपेक्ष्य हि सर्वो विधिर्निषेधश्च। यथोक्तम्–"त्रैगुण्यविषया वेदाः" इति। यो हि सुखं दुःखनिवृत्तिं चेच्छति, तस्य तत्साधनमपेक्षमाणस्य लौकिकेषु साधनेषु प्रवृत्तस्य तेषां निरयादिहेतुभूतानर्थहेतुत्वेन तत्परिहारायानर्थहेतुत्वरहिताः सुखाद्युपायाः प्रतिपाद्यन्ते। एवं काम्यकर्माणि पारलौकिकानि दृष्टसजातीयतदधिकफलार्थत्यागदृष्टानर्थावहसुखदुःखप्रवृत्तिप्रतिबन्धौपयिकत्वात् हितान्येव रागिणाम्। तथा ऐहलौकिकान्यपि चित्रादीनि। कारीर्यादीनि तु जगद्धितान्यपि। अभिचारकर्मणोऽपि हिंसादियुक्तस्यापि स्वरूपतो

अभिव्यक्तिः। पञ्चधात्वमीश्वरपृथक्कारे। षट् सप्तेति। षोढा विभागः प्रागुक्तः, सप्तधा विभागः (श्रीमद्रहस्य-) तत्त्वत्रयाधिकारे भगवच्छास्त्रोक्तत्वेनोल्लिखितः। वैशेषिकसाप्तविध्यं तु न ग्राह्यम्। तत्र बहूनामप्रामाणिकत्वस्योपपादितत्वात्। तं–परमात्मानम्। निर्गुणं सत्त्वरजस्तमोगुणातीतम्। सांख्यम्= संख्या बुद्धिः। तदेकविषयभूतम्। क्रियाय अगोचरम्। 'प्राप्यस्य ब्रह्मणो रूपम्' इत्याद्युक्तार्थपञ्चकप्रकारमाह प्राप्यमिति। संबन्धविशेषः शरीरात्मभावः अस्मत्सिद्धान्तप्रधानप्रतितन्त्रभूतः। अन्ये श्रीराममिश्रादयः षडर्थसंक्षेपादौ। अनुष्ठानपरिहारेति। हितमनुष्ठानविषयः; अहितं परिहारविषयः। अन्वयव्यतिरेकाभ्यामत्र हिताहितविवेको न भवति, तत्रायुर्वेदादिकमाद्रियते; अलौकिकं हितं संध्योपासन–अग्निहोत्रादि यच्चेति। इदमलौकिकमेव धर्माधर्मशब्दव्यपदेश्यम्। ननु मातापितृसहस्रतो वत्सलतरं शास्त्रं कथमहितं हितत्वेनाभिमत्य विधत्ते इत्याशंक्य मातृतुल्यत्वमेव कारणमित्याशयेनाऽऽह नन्वभिचारेति। चित्रादीनि= चित्रया यजेत पशुकामः इति विहितचित्राख्ययागादीनि। जगदिति। न तु स्वमात्रस्येत्यर्थः।

नानर्थहेतुत्वम् , तदङ्गपशुहिंसादेरग्नीषोमीयादिवत् विधिप्राप्तत्वात् ; अपितु स्वसाध्येन अप्राप्तविषयवधादिना तदपेक्षया चाभिचारो निषिध्यते । सोऽपि इह क्वचिदवश्यं कर्तव्य एव, "षट्स्वनभिचरन् पतेत्" इत्यादिदर्शनात् । अतश्च मुमुक्षोरपि रक्षकक्षत्रियाद्यभावे राक्षसाद्यभिभवे च आत्मरक्षणार्थमभिचारः कर्तव्य एव; "सर्वत एवाऽऽत्मानं गोपायेत्" इति शास्त्रात् । अन्यथा अहरहरनुष्ठेयस्याऽऽप्राय(प्रया)णादनुवर्तनीयस्य कर्मादेरुच्छेदप्रसङ्गेनोपायानिष्पत्तेर्मोक्षासिद्धिप्रसङ्गात् । वृष्ट्यन्नादिदृष्टार्थानि च सर्वाण्युपासननिष्पत्त्यौपयिकतया तत्तदपेक्षायामनुष्ठेयानि । पारलौकिकानि तु तत्फलाभिसंधिविरहेण कर्मयोगानुष्ठानदशायां नित्यनैमित्तिकैरेकीकृत्य कर्तव्यानि । नैमित्तिकानि हि सर्वाणि प्रसक्तानर्थपरिहारार्थतया सर्वहितान्येव । एवं नित्यानि ; उत्तरकर्माधिकारार्थत्वात् , अकरणनिमित्तप्रत्यवायपरिहारार्थत्वाच्च । अतः श्रुतिविहितं स्ववर्णाश्रमोचितं सर्वं हितमेव । अत एव हि स्मरन्ति—"शास्त्रं हि वत्सलतरं मातापितृसहस्रतः" इति ।

एवं स्थिते प्रवाहानादिसामग्रीचक्रवशात् अनियतसमयसमागत-सकलसैद्धान्तिकसमालम्बनीय-सुचरितपरिपाकनिवृत्तप्रतिबन्धपरमपुरुषकटाक्षविशेषसमुन्मिषितसत्त्वसामर्थ्येन-करतलामलकवदालोकितहेयोपादेयविभागस्य, अनाद्यनन्तबहुविधदुर्विषहदुःखानुषङ्गदूषिता-

---

**तदङ्गेति** । सोमयागांगतया अग्निषोमीयादिपशुहिंसावत् अभिचारप्रयोगमध्ये हिंसा कर्तव्या चेत् , सा वैधत्वान्न दोषमावहति । अभिचरन् इति पदेनाभिचारकाम इत्युक्तत्वात् काम्यः शत्रुवधरूपोऽभिचारः फलत्वादविधेयः ; किंतु विधावुद्देश्यः । **तदपेक्षया**—तदभिप्रायेण । **षट्स्विति** । "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहा, क्षेत्र-दारापहारी च षडेते ह्याततायिनः आततायिनमायान्तं हन्यादेवाविचारयन्" इत्येतेषु अभिचारः शास्त्रसंमतः । अत एतदर्थमपि शास्त्रं श्येनयागादिकमुपदिशेदिति । विधीना सर्वेषां मोक्षरूपमुख्यफलकामकार्यं यत् परमं हितम् , कथंचित तदन्वयेनापि हितत्वं सुवचमिति वक्ष्यन्नाह **मुमुक्षोरपीति** । **क्षत्रियाद्यभावे** इति । तदाह मनुः, "श्रुतीरथर्वाङ्गिरसी कुर्यादित्यविचारयन्" इति । रक्षकस्य सत्त्वे तन्मुखेन राक्षसादिपरिहारः । **सर्वत एवेति** गौतमधर्मसूत्रम् । अभिचारवत् दृष्टार्थकाम्यानामपि तदर्थमेव तदपेक्षितत्वमाह **वृष्टीति** । स्वर्गाद्यर्थं कर्मानुष्ठानायोगेऽपि तादृशकर्मणामपि भक्तिविद्याद्यंगतया भगवत्प्रीत्यर्थमनुष्ठानं शिष्टम् , "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन", "इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः" इति । अतो मुमुक्ष्वपेक्षयाऽपि तेषां हितत्वमित्याह **पारेति** । **नैमित्तिकानीति** प्रायश्चित्तानामपि ग्रहणम् । **एवं नित्यानीति** । सर्वहितान्येवेत्यर्थः । हिततममाह **एवं स्थित** इति । **सकलसैद्धान्तिकेति** । तदुक्तम् , कर्मविद्यादिचक्रे....सर्वसिद्धान्तसिद्धेति । वैधस्यसर्वस्य

ल्पास्थिरसांसारिकसुखमयविषमधुविरक्तस्य समस्तदुरितवर्गापवर्गायमाणनित्यनिरतिशयानन्द-मुकुन्दचरणारविन्दसेवामकरन्दलम्पटस्य यथाशक्ति स्ववर्णाश्रमोचितनित्यनैमित्तिकनिषिद्धपरि-हारसहकृतं दर्शनसमानाकारध्रुवानुस्मृतिरूपं भगवदुपासनं हिततमं विहितम्। तच्च सदक्षर-न्यास-वैश्वानर-मधु-भूम-दहरादिभेदेन बहुविधं त्रैवर्णिकसर्वाश्रमसाध्यम्। तस्य च महनीय-विषयनिरतिशयप्रीतिरूपत्वेन भक्तिशब्दवाच्यत्वम्।

अयमेव च परमो योगस्त्रय्यन्तानुविधायिषु सर्वेषु मोक्षशास्त्रेषु प्रतिपाद्यते; यथाऽऽह भगवान् पराशरः—"आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः। तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते॥" इति। स्मरति च भगवान् शाण्डिल्यः—

"ईदृशः परमात्माऽयं प्रत्यगात्मा तथेदृशः। तत्संबन्धानुसंधानमिति योगः प्रकीर्तितः॥" इति। तत्र चिदचिद्विवेकादिमात्रे सांख्यमुपकुरुते; यमनियमादिसमाधिपरिकरशोधने योगः; इतिकर्तव्यताविशेषे कर्मकाण्डादयः; सर्वत्रैव गीता पञ्चरात्रञ्च।

श्लो. निषिद्धकाम्यवर्गेषु व्यर्थानावश्यकेषु च। शमादिविधिरन्यत्र प्रवृत्त्या न विरुध्यते॥

सोऽयमेवंविधः परमयोगाख्यो धर्मः, "मय्येव मन आधत्स्व" इति गीयते। तदशक्तस्य, "अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्। अभ्यासयोगेन ततो मामिच्छाऽऽप्तुं धनंजय॥ अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव॥" इत्यादिना पूर्वपर्वाणि विधीयन्ते।

यः प्रीतिपूर्वं भगवदसाधारणकर्मण्यपि न समर्थः, तस्य विषयरसवैमुख्यजननाय समस्तवैषयिकसुखशेषित्वेन चिरतरमनुसंहितस्यापि स्वात्मनः सांसारिकसमस्तसुखसमधिका-नन्दस्वरूपमालोकयितुम् आन्तरचक्षुर्विरोधितिमिरपटलपाटनाय ज्ञानकर्मयोगाख्ये द्वे भेषजे। तत्राऽऽत्मचिन्तनरूपो ज्ञानयोगस्तदालोकनेऽन्तरङ्गभूतः तत्राप्यसमर्थस्य तदधिकारसिद्ध्यर्थः कर्मयोगः। तेन तत्र सिद्धाधिकारस्यापि शिष्टतया व्यपदेश्यस्यान्तर्गतात्मज्ञानः कर्मयोग एव कार्यः। अन्यथा कृत्स्नविदोऽप्यस्य ज्ञानयोगाशक्ताकृत्स्नवेदिपुरुषबुद्धिभेदजननमूलमहत्तर-दुरितवशेन ज्ञानयोगोऽपि प्रतिबध्येत तादृशेनैव च कर्मयोगेन सुकरत्वादिगुणवता चिरतरमनुष्ठितेन ज्ञानयोगव्यवधानमन्तरेणाप्यात्मावलोकनं सिध्यति।

---

हितत्वमुक्तम्। **तत्संबन्धेति**। शेषत्वादिगर्भशरीरात्मभावरूपसंबन्धो हि अहं ब्रह्मास्मीत्यनुसंधानविषयः। कर्मानुष्ठानस्य शमादेश्चाविरोधमाह **निषिद्धेति**। अशक्तस्य निकृष्टमुत्तरोत्तरं पद गीतोक्तमाह **अथेति**। इदमेव भगवदसाधारणकर्मण्यपीति विवृतम्: **इत्यादिने**त्युक्तविवरणमिदं वाक्यजातम्, 'सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्' इति वाक्याभिप्रेतम्। **अभ्यासः** आलम्बनसंशीलनेन मनसः पुनःपुनरालम्बने

कर्मयोगेऽप्यसमर्थस्तु विकलमपि कर्मयोगमारभेत ; "नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते। स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥" इत्यादिभिर्वैकल्य-विच्छेदादिसंभवेऽपि फलाविनाभावादिप्रतिपादनात् । प्रक्रममात्रेणापि प्रसन्नो भगवान् पौष्कल्यमापादयति । सर्वेषु चामीषु पर्वसु तत्तत्सामग्रीचक्रघटनाय तत्तत्फलप्रदानाय च स एव हि शरणमनुसरणीयः। तथा चाऽऽमनन्ति—"सा काष्ठा सा परा गतिः" इति। स एव परमपुरुषो वशीकार्यकाष्ठा परमप्राप्यश्चेत्यर्थः। "तस्य च वशीकरणं तच्छरणागतिरेव" इति भाष्यम् । एवं हिततमस्योपासनस्य दिङ्मात्रं दर्शितम् । फलं चापवर्गरूपं प्रागेव लक्षितम् ।

अन्येषां तु देहविच्छेदमात्र-सहस्रयुवतिसंभोग-समस्तालीकविषयविज्ञानसंतानोच्छेद-वासनात्यन्तविरामविषयोपरागवैधुर्य-नित्योर्ध्वगमन-सकललोकमस्तकोपरिनिविष्टसाधारणदेहविशेषानुप्रवेश-निरावरणत्व-स्वानन्दानुभव-स्वातन्त्र्यलाभ-शिवसारूप्य-शिवा(वता?)पत्ति-चिच्छक्तिपरिशेष-अविद्यानिवृत्त्युपाधिनिवृत्तिसकलवैशेषिकगुणोच्छेदप्रभृतयो निःश्रेयसविकल्पाः देहाद्यतिरिक्तात्मसद्भाव-बाह्यार्थपारमार्थिकत्व-तत्तदागमाप्रामाण्य-ब्रह्मनिर्विकारत्वनिर्दोषत्व-तज्ज्ञानानन्दनित्यत्वादिसमर्थकैः शारीरकपर्यन्तैः शास्त्रैः प्रतिक्षेप्या इति तत्र तत्र विस्तरो द्रष्टव्यः। इह तु प्रमाणचिन्तायाः परमप्रयोजनं दर्शयितुं प्रमेयस्य संग्रहोक्तिः ; सपरिकरप्रमाणमर्यादाप्रतिपादनपरत्वान्न्यायविस्तरशास्त्रस्येति ॥

---

स्थापनम् मत्कर्म आलयनिर्माण-देवार्चनादि । **नेहाभिक्रमे**ति । इह कर्मयोगे **अभिक्रमस्य** आरब्धांशस्य **नाशः** नैष्फल्यं नास्ति । अमुमुक्षुकार्य इव विच्छेदे वैकल्ये च व्यर्थता न भवति । यथावदकरणात् ब्रह्मरक्षस्त्वादिप्राप्तिरूपदोषोऽपि नास्ति । आरब्धस्यासमापने पापमिति **दोषो**ऽपि न । कृतांशस्य विच्छिन्नतया ह्यकृतप्रायत्वे तदातदा पुनरारम्भमात्रमिति परिसमाप्तेरनवकाश एवेति न मन्तव्यम् ; कृतं स्वल्पमपि विलम्बेन करिष्यमाणेन कर्मयोगेन साहित्यं प्राप्य फलाय भवेदित्यर्थः । विच्छेदादीत्यादिपदेन मध्येमध्ये फलान्तरकामनया काम्यकर्मणो घटनं गृह्यते । अंगप्रपत्तिरादित आरभ्य तत्रतत्राशक्यस्थले उपयुज्यते । अस्या अभावे परमहितानिष्पत्त्या अस्या अत्यन्तमान्यत्वमित्याह **सर्वेषु चे**ति । **सा काष्ठा** 'इन्द्रियेभ्यः पराः' इति वशीकार्येषु काष्ठाभूतः प्रधानभूतः पुरुषोत्तमः । **परा** गतिः परमप्राप्यश्च स एव । परमतभंग विधत्ते **अन्येषा**मिति । चार्वाकादीनामित्यर्थः । **देहविच्छेदा**दिश्चार्वाकेष्टो मोक्षः । **समस्ते**त्यादिर्बौद्धानाम् । **नित्ये**त्यादिर्जैनानाम् । **स्वानन्दे**ति मीमांसकादेः । **स्वातन्त्र्ये**त्यादिः शैवानाम् । **चिदि**त्यादिरद्वैतिनाम् । **सकले**ति वैशेषिकस्य । **तत्रतत्रे**ति । प्रमेयविस्तरभूतग्रन्थेषु तत्तद्दूषणं द्रष्टव्यम् । न्यायविस्तरे त्विह प्रमेयमसद्रूप गौतमगृहीतमुपेक्ष्य वास्तविकप्रमेयसंग्रहमात्रं कृतम् ; एतदुदाहरणेनैव न्यायस्य व्युत्पादनीयत्वादिति ॥

स्वातन्त्र्येण मितं सुखेतरतया यद्भाति जन्तोरिदं
सर्वं यस्य विभूतिरित्यवसितं स्वादं व्यनक्ति स्वयम् ।
अन्तस्स्वान्तमनन्तनन्दथुनिधिर्मदोदृशां मादृशाम्
आविर्भावयतु स्वयं स भगवान् आत्मानमात्मेश्वरः ॥

यत्रोदासत जैमिनिप्रभृतयः श्रुत्यर्थचिन्तापराः
यस्यां कन्दलयन्ति मन्दमतयः पारिप्लवान् विप्लवान् ।
विश्वेषामिह वेङ्कटेशविदुषा विश्रान्तये वादिनां
प्राची नीतिषु पर्यशोधि सरणिः प्रच्छायनिष्कण्टका ॥

शुद्धिं बिभ्रति मादृशां भणितयश्चूडान्वये केवलं
प्रान्ते मिश्रमभाणि नीतिनिपुणैः किं तेष्वमन्तव्यता ।
युक्तं वर्गयुगे विमृश्य सरघापुष्पक्रमं यौक्तिकै-
रङ्गीकर्तुमशक्यनिह्नवगुणग्रन्थो निबन्धो मम ॥

---

परमात्मन इव प्राकृतप्रमेयवर्गस्यापि तच्छेषतया दर्शने पूर्णानुकूल्याविर्भावात् अनुभाव्यान्तर्गतिः सर्वस्य घटते इति विशिष्टस्य प्रमेयत्वं पुष्कलमित्याह **स्वातन्त्र्येणे**ति । यदिदं जगत् **जन्तोः** बद्धचेतनस्य **स्वातन्त्र्येण**=परमात्मशेषत्वं विना पार्थक्येन मितत्वे, **सुखेतरतया** प्रतिकूलतया भाति, तदिदं तर्वं यस्य परमात्मनो विभूतित्वेन गृहीतं चेत्, स्वाभाविकं स्वकीयमनुकूलत्वमाविर्भावयति—अनुकूलतयैव संवेद्यते इति यावत्—स भगवान् अपरिच्छिन्नानन्दनिधिः **आत्मेश्वरः**=ईश्वरान्तररहितः मांसचक्षुषां शुद्धमनश्चक्षुर्विकलानामस्मादृशामास्तिकचेतनानां **अन्तस्स्वान्तं**=मनसि सर्वविशिष्टस्वात्मानुभवं स्वयमेवोत्पादयत्विति ॥

**यत्रे**ति यस्यामिति च प्राची सरणिरुच्यते। **कन्दलयन्ति** वर्धयन्ति। **पारिप्लवान्** परितः प्लवतः नानाभूतान् उत्तानान् अनवधानमूलान् **विप्लवान्** अन्यथाग्रहान् । न्यायप्राचीनसरणिर्न्यायप्रयोगपूर्वकनिखिलश्रुत्यर्थनिर्धारणप्रवृत्तैस्तत्तदिदम्परतया जैमिन्यादिभिर्न यथावददर्शि । तत्र बाह्याः बौद्धजैना इव वैदिका अप्यर्वाचीनाः अवैदिकप्रमेयादरणेन अन्यथाऽन्यथा वर्णने व्यग्रा अभूवन्। अतः प्राची सरणिः सा सर्वकण्टकापोहनेन पंक्तिशः पल्लपादपपरिपालनेनेव सत्तर्कव्युत्पादनेन प्रकृष्टच्छायासंपादनेन सर्ववादिपथिकसाधुविश्रमार्हतया सम्यगशोधीति । "स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्", "भोक्ता भोग्यं प्रेरितारम्" इत्याद्यागमानुरोधिप्रमाणप्रमेयपरिशीलनात् अस्याः सरणेः प्राचीनता ॥

**शुद्धि**मिति । प्राचीनसरणिपरिपालनेदम्पराणामप्यन्येषामस्मन्मतैकदेशिनां केषाञ्चिदुक्तिषु क्वचित्

निरूढनिगमत्वये निखिललोकचिन्तामणौ
प्रसत्तिमुपसेदुषि प्रणिदधानभावास्पदे ।
रतिं भजति भावना लयमिवोपयाति द्रुतं
रमावसुमतीमहाचरितधर्मणि ब्रह्मणि ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
न्यायपरिशुद्धौ
प्रमेयाध्याये द्वितीयमाह्निकम् ॥
समाप्तः पञ्चमोऽध्यायः ॥ शास्त्रं च परिसमाप्तम् ॥
श्रीमते निगमान्तमहादेशिकाय नमः ॥

—o—o—

---

अविश्वासः प्राप्तः ; तदादरणीयानां चूडाभूतानां नाथ.यामुन.यतिवरविरचित वेदान्तव्याख्यारूपप्राच्यसूक्तीनामन्वयहानेस्तत्र दर्शनात् । अस्मादृशां भाषितानि हि आर्यतमादृतपथात् प्रस्खलने परित्याज्यानि भवेयुः । कतिपयांशे साधुत्वेऽपि अन्यांशे मतान्तरवासनामिश्रतादर्शनादुपेक्षणीयता क्वचिदीक्ष्यते । अतो विवादगोचरयोर्द्वयोर्मध्ये यतरस्मिन् मधु लक्ष्यते, ततरदेव मधुमक्षिका आद्रियेरन्निति तन्न्यायेनात्रापि युक्तिकुशला विमृश्य युक्तं परिगृह्णन्तु । तदा नूनमयं निबन्धः अशक्यापलापानेकगुणरत्नप्रथनरूपत्वात् अंगीकर्तुमर्हः स्यादिति मन्महे इत्यर्थः ।

ईदृशन्यायविस्तरपरिशोधनस्य फलं परमकाष्ठाभूतमाह निरूढेति । श्रीभूमिभ्यां सहाऽऽचरितो धर्मो लोकहितरूपो यदभिमतः, तस्मिन् ब्रह्मणि नारायणे भावना रतिं भजति—तं नातिक्रामति, तस्यैव सर्वोत्कृष्टपुरुषार्थत्वादिति । सर्वेषामपि तन्त्राणां निष्ठा नारायणः पर इति प्राह भगवान् व्यासः । अतो न्यायविस्तरः नारायणे निष्ठायाः वेदान्तप्रमेयेष्वादरस्य च स्थापनोपयोगितया निर्मातव्य इति भावः ॥

1 वात्स्यायनोद्योतकरौ पुराणौ वाचस्पतिश्चोदयनश्च मान्यौ ।
बौद्धाहतक्षोभनिवारणेन यन्न्यायतन्त्रं निपुणं ररक्षुः ॥

2 तस्मिन् समैरादृत एव तन्त्रे स्मृतीतिहासादिषु मानितेन ।
श्रीगौतमेनाऽऽगमरक्षकेण मोक्षार्थमेयैकपरे कृतेऽपि ॥

3 विलोक्य वैघट्यमिहाऽऽगमान्तव्यासादितत्त्वज्ञवचोनुसारी ।
व्यशोधयत् साध्विति सर्वतन्त्रस्वतन्त्र एतन्निगमान्तसूरिः ॥

4 उपेक्ष्य काणादमुखानि तन्त्राण्यत्र आर्यैरखिलैर्गृहीतम् ।
शारीरकं ; तद् परिशुद्धिरेषा सेव्या समैस्तर्कणतत्परैश्च ॥

5 प्रतिपदमवधाय व्याकृतौ कल्पितायामतिपृथुलशरीरा स्यादुपेक्ष्याऽनवकाशात् ।
कृतिवचनयथार्थज्ञानसंपत्तये तत् दुरवगमवचोंशो व्याकृतः संग्रहेण ॥

6 हयमुखचरणारविन्दभृंगः परहयवक्त्रनिबन्धनित्यसंगः ।
व्यवृणुत परिशुद्धिमित्थमेनामभिनवदेशिक—वीरराघवार्यः ॥

इति श्रीमद्वेदान्तरामानुजमहादेशिकचरणारविन्दमकरन्दमधुव्रतस्य
श्रीमद्रंगरामानुजमहादेशिक पदनळिनयुगळपरिचरणप्रापितोभयवेदान्त-रहस्य-
सर्वार्थवैदुष्यस्य, विविधशास्त्रानेकग्रन्थनिर्माणनिर्ज्ञातस्य बहुविधबिरुदस्य
अभिनवदेशिकस्य वात्स्यसच्चक्रवर्तिनोवीरराघवाचार्यस्य कृतिषु
**न्यायपरिशुद्धिव्याख्या न्यायतत्त्वप्रकाशिका संपूर्णा ॥**

**श्रीमते निगमान्तगुरवे नमः ॥ शुभमस्तु ॥**

—o—o—

यद्व्याख्यां विशदामधीत्य विबुधाः श्रीन्यायसिद्धाञ्जन-

स्यार्थज्ञाः प्रथमं तथोपनिषदां भाष्यं विधत्ते स्म यः ।

सोऽयं षष्टिनिबन्धकृत् यतिवरः श्रीरंगरामानुजः ;

तस्याभूदवतार एव मुनिराट् श्रीरंगरामानुजः ॥

तच्छिष्यैर्यतिभिर्गृहस्थतिलकैः श्रीवैष्णवर्द्धिं मही

मेजे, तत्र महान् यतिर्गुरुवरो वेदान्तरामानुजः ।

तद्दासेन तदेकदेवतयतिश्रीरंगरामानुज-

श्रीपादप्रवणेन साधु कलिता श्रुत्यन्तमाला हि या ॥

तत्र श्रीदेशिकोद्ग्रन्थमुद्रणे व्यक्तिभागियम् ।

वेदान्तग्रन्थमालायां परिशुद्धिः सटिप्पणा ॥

श्रीरस्तु